# चक्रदत्त

## सारचन्द्रिका नामक विस्तृत हिन्दी भाषा टीका सहित

अनुवादक—रसतरङ्गिणी के प्रणेता,

### स्वर्गीय-कविराज सदानन्द शास्त्री प्राणाचार्य

यह ग्रन्थ इतना दुरूह है कि प्राचीनकाल में ही-इस ग्रन्थ की रत्नप्रभा, भानुमती, तत्त्वचन्द्रिका आदि अनेक सस्कृत व्याख्याए बन चुकीं थीं। यद्यपि ( हिन्दी, बगला आदि ) भारतीय भाषाओं में इस समय इसकी अनेक व्याख्याए मिलती हैं। किन्तु-मूलार्थ को लगाने वाली ऐसी सरल व्याख्या आजतक कोई नहीं बनी। प्राणाचार्य महोदय ने इस हिन्दी व्याख्या में मूल के ही अर्थ को सरल तथा सरस बनाने का प्रयत्न नहीं किया है, अपितु सन्दिग्ध तथा विषम स्थलों पर प्राचीन आचार्यों के विभिन्न मतों का उल्लेख कर दिया है। इस व्याख्या में एक और भी यह विशेषता है ( जो कि अन्य सस्कृत अथवा भारतीय भाषा लिखित व्याख्याओं में कहीं भी नहीं मिलती, एव जिसकी आवश्यकता पद २ पर अनिवार्य जान पड़ती है ) कि-इस व्याख्या में योगों की वर्तमान-कालोचित मात्राओं का भी उल्लेख कर दिया है। इस व्याख्या को पढ़कर विद्यार्थी परीक्षा में अनायास ही पास हो सकते हैं।

इस व्याख्या के साथ रत्नप्रभा नामक टिप्पणी भी है, जिसमें जटिल विषयों का विवेचन बड़ी सरल रीति से किया गया है। इस टिप्पणी की सहायता से अध्यापक महोदय विद्यार्थियों की शङ्काओं का समाधान बड़ी सुगमता से कर सकते हैं। भारत के भिन्न २ प्रकाशकों ने जितने भी सस्करण इस ग्रन्थ के निकाले हैं उनमें यह बड़ी भद्दी भूल रह गई है कि—मूल पाठ बहुत ही अशुद्ध छपा है। इस ग्रन्थ में ( जो पाठ जिस ग्रन्थ से उद्धृत किया गया है, उस ग्रन्थ में उस पाठ को देखकर ) मूल पाठ को भी बड़ी खोज से शुद्ध किया गया है। इन्हीं विशेषताओं के कारण इस ग्रन्थ के कलेवर को सजाने के लिए उत्तम, मसृण, सुदृढ एवं कमनीय कागज का उपयोग किया है। इस ग्रन्थ की छपाई ऐसी अनोखी है, कि बम्बई के सुप्रसिद्ध मुद्रणालयों से भी आजतक ऐसी पुस्तक नहीं निकली। इतनी विशेषताओं के होते हुए भी विद्यार्थियों की सुलभता के लिए मूल्य रक्खा है केवल ६) छः रु०। डाकखर्च अलग; राजसस्करण मूल्य १२) रु०

# आयुर्वेदीय नावनीतकम् ।

प्राचीन आयुर्वेदिक समय के बहुत ऐसे ग्रन्थ भी लुप्त हैं, जिनका हमें नाम भी ज्ञात नहीं, जिनमें से आयुर्वेदका एक १७०० वर्षका प्राचीन हस्तलिखित ग्रन्थ "नावनीतकम्" नामका भी है। जो कि १८८९ में लेफ्टीनेन्ट बावर नामक एक अंग्रेजी विद्वान्को पूर्वीय तुर्किस्तान (Eastern Turkistan) में चीन देश के निकट मिला और भारतीय गवर्नमेंट ने इस ग्रन्थको प्राचीन भाषाओं तथा लिपियोंके निपुण विद्वान् डा० हार्नले साहिबको विषय समालोचना के लिये दिया था। जिन्होंने बड़े परिश्रमसे २१ वर्ष पर्यंत ग्रन्थके मर्मका अनुसन्धान करके इसको गवर्नमेंट कापीको मौजूदा सूरतमें तैयार किया। बहुत भारी अर्थात् १५० रुपये के लगभग मूल्य होनेके कारण सर्वसाधारण को तो इसके दर्शन भी दुर्लभ थे। प्रत्युत ५ वा ६ वर्षसे तो यह भी लुप्त (out of stock) हो गई है। ऐसी दशा होने पर आयुर्वेदिक जनता तथा वैद्योंका इस पुस्तक से अपरिचित रहना बड़ी हानि और दुर्भाग्यका कारण था। इस दुःखको अनुभव करते हुए कविराज बलवन्तसिंह जी ने जो कि बहुत वर्षोंसे आयुर्वेदिक रिसर्च कर रहे हैं, इस ग्रन्थको सर्व साधारणके हितार्थ पुनः दीर्घदृष्टि से संशोधन करके विशेष टिप्पणी सहित तैयार किया है। ग्रन्थ चिकित्सा विषय पर है, बहुत औषधियों और योगोंको कल्पोंमें विभक्त करके उनके पृथक् २ प्रयोग दिखाये गए हैं, विशेषकरके वाजीकरण, रसायन, अञ्जन, मुखलेप, अगदतन्त्र, बस्तिकर्मतन्त्र सिद्ध और रसा इत्यादि विषयों पर विवरण है। संस्कृत सरल और प्रत्येक श्लोक छन्द बड़ा मनोरञ्जक है। काष्ठक चिकित्सामें इससे और उत्तम संग्रह ग्रन्थ मिलना असम्भव है। और प्राचीन ग्रन्थोंसे संग्रह होने के कारण इसका नाम भी "नावनीतक" अर्थात् "आयुर्वेद का माखन" है। प्रारम्भमें एक मनोरञ्जक भूमिकाके अन्दर ग्रन्थप्राप्तिकी कथा के अतिरिक्त ग्रंथ सम्बन्धी अन्य विशेष उपयोगी विषय पर भी विचार किया गया है। इसको छपानेके लिये कविराज जी ने बड़ी कठिनता पूर्वक गवर्नमेंटसे आज्ञा ली है। कागज और छपाई बहुत उत्तम है। साईज १८×२२ है। साधारण आवृत्ति वाली सजिल्द पुस्तकका मूल्य केवल ५)

इस पुस्तकका लायब्रेरी एडीशन पृथक् तय्यार किया गया है। जिसको कागज़ बहुत ही मोटा और सुन्दर लगवाया गया है। जिल्द अतीव सुन्दर व पक्की बंधवाई गई है। दाम ८) आठ रुपया

पता—मेहरचंद्र लछमणदास, संस्कृत पुस्तकालय
सैदमिट्ठा बाज़ार, लाहौर।

# विज्ञापनम्

अयि प्राणाभिसराः भिषग्जः !

नैतन्न विदितचर तत्रभवता भवता यदद्यावधि समुपलभ्यमानेषु प्राचीनेषु संग्रहग्रन्थेषु श्रीचक्रपाणिकृतस्य चिकित्सासारसंग्रहस्य कियानादरः। परमस्य ग्रन्थस्य कर्ता श्रीचक्रपाणिः, कस्मिन् कुले, कस्मिन् काले, कस्मिंश्च जनपदे समजनीत्येतद्विषये यदितिवृत्तमुपलभ्यते श्रूयते वा तदिह प्रतिपाद्यते। अयं हि दत्तकुलान्तर्गतलोध्रवलीसंज्ञककुलोत्पन्नः, नारायणदत्तस्य पुत्र भानुदत्तस्य च भ्राता आसीदिति ग्रन्थान्त एवोक्तादात्मवृत्तान्ताज्ज्ञायते । तथाहि—

> गौडाधिनाथरसवत्यधिकारिपात्र-
>
> नारायणस्य तनय सुनयोऽन्तरङ्गात् ।
>
> भानोरनु प्रथितलोध्रवलीकुलीनः
>
> श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥

इदमेवेतिवृत्तं स्वप्रणीतायाश्चरकतात्पर्यटीकेत्यपरपर्यायाया आयुर्वेददीपिकेत्याख्यायाश्चरकटीकाया अन्तेऽपि लिखितं तेनैव । ज्ञायते चानेनैव यदस्य पिता नयपालराज्ञो मन्त्री रसवत्या निरीक्षकश्चासीत् । " भानुदत्तश्च "भूवालराज्ये प्रधानसेनाध्यक्षपदमलङ्करोति स्म इति "हिस्ट्री ओफ दी भूवाल" नाम्नि पुस्तके ग्रन्थकर्त्रा निर्दिष्टम् । शिवदासेन च " अन्तरङ्गादितिपदव्याख्यानावसरे " विद्याकुलसम्पन्नो हि भिषगन्तरङ्ग इत्युच्यते इत्युक्तवतास्य सुभिषक्त्वमप्युपदर्शितम् ।

वङ्गान्तर्गत वीरभूमदेशवास्तव्यश्चाय चक्रपाणि ; श्रूयते तत्र हि श्री चक्रपाणिस्थापित श्रीचक्रपाणीश्वरमन्दिरोऽप्यस्तीति ।

यद्यप्यस्मिन् ग्रन्थे ग्रन्थकृता न कीर्त्तितं स्वगुरोर्नाम तथापि—

> नरदत्तगुरूद्दिष्टचरकार्थानुगामिनी ।
>
> क्रियते चक्रदत्तेन टीकायुर्वेददीपिका ॥

इति चरकटीकायामादावेवोक्तत्वादस्य गुरोर्नाम नरदत्त इति ।

# विषयानुक्रमणिका ।

| विपया. | पृष्टाङ्काः |
| --- | --- |
| अथ विरेचनाधिकारः | ७६६ |
| अभयाद्यो मोदकः | ७६७ |
| अथानुवासनाधिकारः | ७७१ |
| अथ निरूहाधिकारः | ७८३ |
| अर्द्धमात्रिकः | ७८६ |
| क्षारवस्ति | ७९१ |
| वैतरणवस्तिः | ७९२ |
| पिच्छिलवस्ति | " |
| अथ नस्याधिकारः | ७९३ |

| विपयाः | पृष्ठाङ्का. |
| --- | --- |
| अथ धूमपानाधिकारः | ७९९ |
| अथ कवलगण्डूपाधिकारः | ८०२ |
| अथाश्च्योतनाञ्जनतर्पणपुटपाकाधिकारः | ८०३ |
| अथ शिराव्यधाधिकारः | ८०९ |
| अथ सुस्थाधिकारः | ८१३ |
| दिनाचारविधि. | " |
| ऋतुचर्य्या | ८१९ |

## ज्वरचिकित्सा ।

**गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे।**
**त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥**

य सप्तवर्षदेशीयो दधार धरणीधरम् ।
कसध्वसकर वन्दे त देव देवकीसुतम् ॥
तात किमय मातेति य दृष्ट्वा दृष्टकौतुकः ।
अभूत् स्कन्देऽपि सन्देहस्त देह शिवयोर्भजे ।
टीका रत्नप्रभा चक्रदत्तनिर्मितसग्रहे ।
यद्यप्यास्ते तथाप्येष सक्षेपाय ममोद्यम ॥
विस्तरोक्तञ्च सक्षिप्य प्रतिक्षिप्य च दुर्वच ।
व्याख्यान्तरञ्च निक्षिप्य टीकेय क्रियते मया ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताक प्रारिप्सितग्रन्थसमाप्तिफलक तत्-प्रतिबन्धकविघ्नध्वसमात्रफलक वा स्वयङ्कृतमिष्टदेवतानमस्कार शिष्यशिक्षार्थमादौ निबध्नाति गुणत्रयेत्यादि—गुणत्रय सत्त्वरजस्तमोरूपम्, मूर्त्तित्रय ब्रह्महरिहर-स्वरूपम् ॥१॥

**नानायुर्वेदविख्यातसद्योगैश्चक्रपाणिना ।**
**क्रियते संग्रहो गूढवाक्यबोधकवाक्यवान् ॥२॥**

प्रेक्षावता प्रवृत्त्यर्थ सम्बन्धाभिधेयप्रयोजनमाह नानेत्यादि—सदिति सिद्ध-फलम् । गूढवाक्य गूढार्थ वचनम्, तद्बोधक तदर्थप्रतिपादक यद्वचन तद्युक्तम्, यथा—नवज्वरे षडङ्गादिभेषजविधानम्, तथा तत्रैव "न दद्यात् तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोध स्यात्, अत-स्तत्परिहारार्थ "मुख्यभेषजसम्बन्धो निषिद्ध" इत्यादि वचन निबद्धमिति । सग्रहेण सह सद्योगाना वाच्यवाचकलक्षण सम्बन्ध, सद्योगा एवाभिधेया, अवान्तरप्रयोजन चिकित्सितम्, मुख्यन्तु आरोग्यमिति ॥२॥

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥३॥

तत्र चिकित्साक्रममाह रोगमित्यादि—आदौ निदानपूर्वरूपादिभिः रोगं परीक्षेत। ततो रोगपरीक्षानन्तरमौषधं परीक्षेत। ज्ञानपूर्वमिति कर्मदर्शनजनितज्ञानपूर्वम्, ज्ञायते अनेनेति ज्ञानं शास्त्रं तत्पूर्वकमिति वा॥३॥

नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम्।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत्॥४॥

तत्र ज्वरस्य सर्वरोगप्रधानत्वात् प्रथमं तच्चिकित्सितं वक्तव्यं कृतमपि भेषजं निदानमेवनादकृतमिव भवतीति निदानपरिवर्जनस्यैव गरीयस्त्वात् प्रथमं निदानपरिवर्जनरूपं चिकित्सितमाह नवज्वर इत्यादि—नत्रान्न गुरुन्न लध्वन्नस्य विधानात्, अत एवोक्तं हारीते "गुर्वन्नभोजनाच्चापि विष्टम्भो दोषकोपनम्" इति। कषायांश्चेति "न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते" इति चरकवाक्यस्वरसात् कषायशब्देनात्र कषायरसमात्रमुच्यते, न तु स्वरसादि। अतएव जतुकर्णेऽपि "कषायरसगुरूष्णस्निग्धस्नानाभ्यङ्गान् नवज्वरे वर्जयेत्" इत्युक्तम्। हरिश्चन्द्रेणापि "नात्र स्वरसादीनां निषेधः" इत्युक्तम्। तथा "स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषमज्वरम्। दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणज्वरे" इति चरकवचने स्तम्भित्वादित्ययं हेतुः कषायरसवर्जनाभिप्रायेणैव सङ्गच्छते। उक्तं हि "कषायः स्तम्भनः शीतः" इति। वाग्भटेऽप्युक्तं "पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते। नवज्वरे मलस्तम्भात् कषायो विषमज्वरम्। कुरुतेऽरुचिहृल्लासहिक्काध्मानादिकानपि" इति॥४॥

ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात्।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्॥५॥

आमाशयसमुत्थानां पूर्वं लङ्घनमौषधमित्युक्तम्, ज्वरोऽप्यामाशयसमुत्थः अतस्तत्र लङ्घनमुपदिशति ज्वरे लङ्घनमित्यादि—यद्यपि लङ्घनबृंहणीये "चतुःप्रकारा संशुद्धिः" इत्यादिना दशविधमेव लङ्घनमुक्तं तथापि व्यायामप्रवातयोर्वर्जनीयत्वेनैवोक्तत्वात् संशोधनादीनाञ्चावस्थाविशेषनियतत्वात् पारिशेष्यादत्रोपवास एव लङ्घनशब्देनोच्यते। अतएव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते। तेन ज्वरस्य पूर्वरूपे यल्लघ्वशनादिविधानं तस्य न निषेधः। वाग्भटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषञ्च लङ्घनम्" इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परि-

शेषलङ्घनप्रतिषेध कुर्वता सशोधनादिरूप लङ्घन निषिध्यते । किं वा चरकेण निदानस्थाने " हित लघ्वशनमपतर्पणं वा" इति यदुक्तम्, तत्पूर्वरूपावस्थायाम्; व्यक्तायान्तु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम् । ननु लघन-बृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वर पठित्वा उक्त "पाचनैस्तान् भिषक् प्राज्ञ प्रायेणादावुपाचरेत्" इति, इह तु लघनमेवादावित्यतो विरोध ? नैवम्, तद्भेषजप्रयोगस्यादौ पाचन न तु ज्वरस्यादावित्यवगम्यते । किं वा आदावेव लघन कार्य्यमिति योज्यम्, तेन जीर्णज्वरे न लघन कार्य्यमिति बोधयति । उक्त हि वाग्भटे ' शुद्धवातक्षयागन्तुजीर्णज्वरेषु लघनम् । नेष्यते तेष्वभिहित शमन यन्न कर्षणम् " इति । हारीतेन तु "पित्तश्लेष्मविशुद्ध्यर्थ कुर्य्याद्वमनमादित " इति यदुक्त तत्र कफप्रधानानित्यादिवक्ष्यमाणावस्थाया ज्ञेयम् । क्षयशब्देन धातुक्षयकृत ज्वर किं वा राजयक्ष्मकृत ज्वर गृह्णाति । अनिलशब्देन निरामानिलग्रहणम्, उक्त हि " शुद्धवातक्षयागन्तुजीर्णज्वरेषु लघनम् । नेष्यते " इति । किं वा क्षयानिल-शब्देन धातुक्षयकुपितानिलग्रहणम् । यदुक्त " वायोर्धातुक्षयात् कोपो मार्गस्या-वरणेन च " इति । यस्तु वायुर्मार्गावरणेन कुप्यति, स आवरकधर्मितया प्रायेण सामो भवति । तत्र लघन मात्रया कर्त्तव्यमेव । यदुक्त " सामे वातेऽपि लघन " इति । अनिलज्वरमभिधायापि कामादिज्वराभिधानम्, कामादिज्वरेषु कालान्तरेण वातसम्बन्धो भवति, तेन प्रथममपि वातासम्बन्धेन कामादिज्वराणाम-लघनीयतोपदर्शनार्थम् ॥ ५ ॥

**आमशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।**
**विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥ ६ ॥**

लघनोपपत्त्यर्थ ज्वरस्य सम्प्राप्तिमाह आमाशयस्थ इत्यादि—वाग्भटस्य । अत्र यत्तदोर्नित्यसम्बन्धात् यस्मादिति लभ्यते ॥ ६ ॥

**अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।**
**ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥ ७ ॥**

लघनफलमाह अनवस्थितेत्यादि—सुश्रुतस्य । अनवस्थितौ स्वस्थाने स्वमाने चानवस्थितौ दोषाग्नी यस्य स तथा । काङ्क्षा अन्नप्रार्थना, रुचि अभ्यवहार-पाटवम् ॥ ७ ॥

**प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ।**
**बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ ८ ॥**

एतच्च लघन तथा कार्य्यं यथा न बलहानि स्यादित्याह प्राणाविरोधिनेत्यादि—प्राणो वलम्, विरोधश्चानिष्टय इहोच्यते । हेतुमाह वलाधिष्ठानमित्यादि—अधिष्ठानमाश्रय, अत्र बहुव्रीहि । अत एवोक्तम्, "यस्माद्बलवत सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्" इति । यदर्थं आरोग्यार्थं ॥८॥

तत्तु मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते ।
कार्य्यं न वाले वृद्धे वा न गर्भिण्यां न दुर्बले ॥ ६ ॥

अलघनीयानाह तत् त्वित्यादि ॥ ६ ॥

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ १० ॥

सम्यक् कृतस्य लघनस्य लक्षणमाह वातमूत्रेत्यादि—हृदयस्य शुद्धि, गौरवादिराहित्यम्, कण्ठस्य शुद्धि कफलिप्ततादिविरह, आस्यस्य शुद्धि अविकृतरसत्वम्, तन्द्रा निद्रावत् क्लान्ति, क्लमो दोषजा ग्लानि । क्षुत्पिपासासहोदय इति, क्षुत्पिपासयोर्युगपदुदय इत्यर्थ । वाग्भटेऽप्युक्त "क्षुत्तृट्सहोदय शुद्धहृदयोद्गारकण्ठता" इति । किन्तु "सृष्टमारुतविण्मूत्र क्षुत्पिपासासह लघुम् । प्रसन्नात्मेन्द्रिय क्षाम नर विद्यात् सुलघितम्" इति सुश्रुतदर्शनात्, क्षुत्पिपासयोरसहोऽसह्य उदय इति चक्रेण व्याख्यातम्, किन्तु न सहते इत्यसह पचाद्यजन्त कर्त्तरि दृश्यते, तेन असहशब्दस्यासह्यार्थत्वकल्पने कष्ट स्यादिति । कृतमिति सम्यक् कृतम् । अन्तरात्मनीति अन्तरिन्द्रिये मनसीत्यर्थ ॥ १० ॥

पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥
मनस· सम्भ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि ।
देहाग्निवलहानिश्च लङ्घनेऽतिकृते भवेत् ॥ ११ ॥

अतिलङ्घितलक्षणमाह पर्वभेद इत्यादि—अरुचि सत्यामपि बुभुक्षायाम् अनन्नाभिनन्दनम्, श्रोत्रनेत्रयोर्दौर्बल्य स्वविषयग्रहणासामर्थ्यम् । सम्भ्रमोऽनवस्थितत्व, भ्रान्तिरित्यन्ये । अभीक्ष्णमित्यतिशयेन । ऊर्ध्ववात हिक्काश्वासकर्णस्वनजृम्भादय., न, पुनरुद्गारविशेष, अतिलङ्घनेन कफक्षयात् । स च पुन कफकोपाद् भवति, यदुक्तम् "अध प्रतिहतो वायु श्लेष्मणा मारुतेन च । करोति नित्यमुद्गार-

मृदूर्ध्ववात म उच्यते।" तम हृदि मोह इत्यर्थ. ॥ ११ ॥

**सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते।**
**वमनं वमनार्हस्य शस्तमित्याह वाग्भटः ॥ १२ ॥**

ज्वरारम्भ एव वमनावस्थामाह सद्य इत्यादि—सन्तर्पणोत्थित इत्यत्र "सामे विशेषत." इति वाग्भटे पाठो दृश्यते ॥ १२ ॥

**कफप्रधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।**
**बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत् ॥ १३ ॥**

तरुणातरुणज्वरे अवस्थाविशेषे अविशेषेण वमनमाह कफप्रधानानित्यादि—चरकस्य। कफ प्रधानो येषा ते कफप्रधाना । उत्क्लिष्टान् हृल्लासादिना बहिर्निर्गमनोन्मुखान्। काले यथोक्तायामवस्थाया, वम्यानामिति वमनयोग्याना, तेन गर्भिण्यादिनिषेध ॥ १३ ॥

**अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।**
**हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम् ॥ १४ ॥**

उक्तावस्थाव्यतिरेकेण वमने दोषमाह अनुपस्थितेत्यादि—चरकस्य । अनुपस्थितदोषाणाम् अनुत्क्लिष्टदोषाणामित्यर्थ. ॥ १४ ॥

**तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।**
**मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम् ॥ १५ ॥**
**दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्।**
**स्रोतसां शोधनं बल्यं रुचिस्वेदप्रदं शिवम् ॥ १६ ॥**

लघनकाले तृष्यते जलमाह तृष्यते इत्यादि—चरकस्य। वातकफज्वर इति वातज्वरे कफज्वरे वातकफज्वरे च उष्ण सलिलमर्द्धशृत ज्ञेयम्। यदाह अग्निवेश "क्वाथ्यमानन्तु यत् तोय निष्फेन निर्मलीकृतम्। भवत्यर्द्धावशिष्टञ्च तदुष्णोदकमुच्यते"। मद्योत्थ इत्यादि—मद्यस्य अत्युष्णवीर्य्यत्वादम्लत्वाच्च पित्तकर्त्तृत्वात् तज्जन्यज्वरस्य पित्तजत्वेन परिग्रहे सिद्धेऽपि पुनस्तदभिधान अन्यस्मिन्नपि मद्योत्थरोगे तिक्तकशृतजलस्यैव यौगिकत्वबोधनार्थमित्याहु । तिक्तकै शृतमिति वक्ष्यमाणमुस्तादिभिस्तिक्तकै शृतम्। ज्वरघ्नमुभयञ्च तदिति उभयमुष्ण तथा तिक्तकशृतशीतञ्च। घृत दीपनमपि न पाचन, लङ्घन पाचनमपि न दीपनमित्यत· पदद्वयोक्ति, यद्यपि त्रिदोषजकफपित्तज्वरयो. पानीय नोक्त, तथापि सामान्येन विमानस्थाने यदुक्त "किं नु खलु ज्वरिभ्य. पानीयमुष्ण प्रयच्छन्ति' इत्यादिना तत्प्रा-

मारुयादुष्णमेव जल देयम् । वातपित्तज्वरेऽत्यर्थदाहकारके शीतमर्द्धशृत जल देयमित्यपि विमान. एवात्यर्थपित्तोत्स्यन्दे इत्यादिना ग्रन्थेन सूचितम् ॥ १५ ॥ १६ ॥

## षडङ्गपानीयम्

**मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ।**
**शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १७ ॥**

तिक्तकै शृतमिति यदुक्त तदाह मुस्तेत्यादि—चन्दन रक्तचन्दन, यदुक्तम् "उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम्" । उदीच्य बालकम् । अत्र तु शुण्ठी अतिक्ताप्यामाशयतुष्टिकारणज्वरहितत्वाद्विहिता । वाग्भटे तु पद्मकाष्ठ पठ्यते न तु शुण्ठी ॥ १७ ॥

**मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे ।**
**तोयपेयादिसंस्कारे निर्दोषं तेन भेषजम् ॥ १८ ॥**

ननु "ज्वरित षडहेऽतीते" इत्यादिना, सप्ताहानन्तरमेवौषधदान वक्ष्यति, अत्र तु सप्ताहाभ्यन्तर एव षडङ्गाद्यौषधविधानम्, अत पूर्वापरग्रन्थविरोध निराचिकीर्षुराह मुख्यभेषजसम्बन्ध इत्यादि—अन्नपानादेरसंस्कारकतया यदौषधमुपयुज्यते तत् प्रधान, तद्भिन्न पुनरप्रधानमिति। तेन प्रधानौषधस्यैव तरुणज्वरे निषेध , नाप्रधानस्य षडङ्गादे । उपयुज्यते इत्यनेन भक्षणविषय उपयोगो विवक्षित , तेन स्वेदादीनामप्रधानत्वात् तरुणज्वरे न निषेध । अष्टाङ्गावलेहोऽपि प्रधानत्वात् तरुणज्वरे देय एव। यतस्त्रिदोषजज्वरे तु सप्ताहाभ्यन्तर एव तस्य विधान तदपवादरूपमेवेति उत्सर्गापवादरूपतया विधिनिषेधयोर्न विरोध. ॥ १८ ॥

**यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते ।**
**कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥**
**अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥१९॥**

उक्तषडङ्गतोयसाधनार्थं तथा वक्ष्यमाणस्य कषायसाध्यपेयादे· साधनार्थञ्च भेषजजलमानव्यवस्थापिका वृद्धवैद्यव्यवहारसिद्धा परिभाषामाह यदप्सु इत्यादि— शृतशीत शृतशीतजलनिमित्त यत् षडङ्गादि द्रव्य प्रयुज्यते तत् कर्षमात्रम् । आदिशब्देन पेयादिसम्पादनार्थजलसंस्कारकधान्यपिप्पलीपञ्चमूलीधान्यपञ्चकादिग्रह । पेयादिसंविधावित्यादिशब्दात् तु यूषरसादीना ग्रहणम् । अत्र मध्यवीर्य्यस्यापि षडङ्गादे कर्षो मन्दानलपुरुषविषयतया ज्ञेय , मध्यवीर्य्यस्य हि द्रव्यस्यार्द्धपलप्रमाणमग्रे व्यवस्था-

पनीयम् । प्रास्थिक इति द्रव्यद्वैगुण्याच्छरावचतुष्टये; "द्वैगुण्य कुडवादूर्ध्व प्रस्थादिश्रुतिमानत" इत्युक्ते. । इमाश्च परिभाषा क्वाथसाध्ययवागूविषयत्वेन वृद्धा प्रायः समाद्रियन्ते ॥ १९ ॥

**वमितं लङ्घितं काले यवागूभिरुपाचरेत् ।**
**यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ २० ॥**

वमनलङ्घनयोरनन्तर यद्विधेय तदाह वमितमित्यादि—चरकस्य । अवस्थावशात् कदाचिद्वमित कदाचिल्लङ्घित, कदाचिच्च वमितलङ्घितम् । वमनानन्तर हि यदि सम्यग्विशुद्धिर्न भवति, तदा तदहर्लङ्घनमपि क्रियते इत्यत उक्त—काले इत्यन्नदानयोग्यकाले । यथास्वौषध यस्या यवाग्वा यद्भेषज पिप्पलीनागरादि वाच्यं, तत्सिद्धाभि । किं वा यस्मिन् ज्वरे यद्भेषज पाचन वाच्य तत्सिद्धाभि , उक्त हि सुश्रुते "अन्नकाले हिता पेया यथास्व पाचनैः कृता" इति। यद् यत् स्व यथास्वमिति वीप्सायामव्ययीभाव । मण्डपूर्वाभिरिति मण्ड पूर्व प्रधानोऽच्छतया यासा ताभिरित्यर्थ । एतेन पेयाया ग्रहण, तस्या एव बहुद्रवेन मण्डप्रधानत्वात्; विलेप्यास्तु निरास , तस्या अल्पद्रवत्वेन मण्डप्रधानत्वाभावात् । अन्ये तु मण्ड पूर्व. प्रथमाभ्यवहार्य्यो यासा ता इत्यर्थ , तेन प्रथम स्वच्छभाग खादित्वा ततो घनभाग खाद्य इत्याहु ॥ २० ॥

**लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।**
**पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥ २१ ॥**

लाजपेयामित्यादि—चरकस्य । अत्र लाजपेयामित्यादिना घृतभृष्टा ज्वरापहामित्यन्तेन चरके दश यवाग्वोऽभिहिता ।तत्र पिप्पलीनागरै शृतामित्यन्ता श्लेष्मणीति हरिश्चन्द्र । अन्ये तु लाजपेया सुखजरामित्येका, पिप्पलीनागरै शृतामिति द्वितीयाम्, एव शेषाभि. सममेकादश पेया इति व्याचक्षते । किन्तु "प्राक् लाजपेया सुखजरा सशुण्ठीम् " इति वाग्भटदर्शनात् हरिश्चन्द्रपक्ष एव समीचीन , यतोऽस्मिन् प्रकरणे तत्त लाजपेया नोच्यते ॥ २१ ॥

**पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि ।**
**श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिबेत् ॥ २२ ॥**
**कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ।**
**मृद्वीकापिप्पलीमूलचव्यचित्रकनागरैः ॥ २३ ॥**
**पञ्चमूल्या लघीयस्या गुर्व्या ताभ्यां सधान्यया ।**

**कणाया यूषपेयादि साधनं स्याद् यथाक्रमम् ॥**
**वातपित्ते वातकफे त्रिदोषे श्लेष्मपित्तजे ।**
**यवागूः स्यात् त्रिदोषघ्नी व्याघ्रीदुःस्पर्शगोक्षुरैः ॥ २४ ॥**

पेयामित्यादि—चरकस्य । श्वदंष्ट्रा गोक्षुर, मृद्वीका द्राक्षा, त्रिवृक रक्तचित्रक मांसलत्वात् । पञ्चमूल्येत्यादि चत्वारो योगा अवचारणयैव व्याख्याता । यवागू स्यादित्यादौ व्याघ्री कण्टकारी, दु स्पर्शो दुरालभा ॥ २२–२४ ॥

**कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् ।**
**विनीय पाचयेद् युक्त्या वारिप्रस्थेन चापराम् ॥ २५ ॥**

कल्कसाध्ययवागूसाधनार्थं परिभाषामाह कर्षार्द्धं वेत्यादि । कर्षार्द्धं वेति वर्षार्द्धं प्रत्येकम् । त्रिविध हि भेषजद्रव्य वीर्य्यभेदात्, तीक्ष्णवीर्य्यं यथा शुण्ठ्यादि, मध्यवीर्य्यं बिल्वाग्निमन्थादि, मृदुवीर्य्यमामलकादि । तत्र कणा-शुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षण, तेन तीक्ष्णद्रव्यमात्रस्यैव कर्षप्रमाणमिति ज्ञापितम् । कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षण, तेनान्यस्यापि मृदुवीर्य्य-द्रव्यस्यामलक्यादे पल ग्राह्यमिति ज्ञापयति । एतेन तीक्ष्णमृदुद्रव्ययो कर्षपल मानव्यवस्थया मध्यवीर्य्यस्य बिल्वाग्निमन्थादेरनुक्तमप्यर्द्धपलमान सामर्थ्यादेव ज्ञेयम् । यत् पुनर्मध्यवीर्य्यस्य षडङ्गादे कर्षप्रमाणमुक्त, तन्मन्दानलपुरुषाभिप्रायेणेत्युक्तमेव । विनीयेति कल्कीकृत्य, प्रक्षिप्येति वा । अपरामित्यन्याम्, अन्यत्वञ्च कषायसाध्य-यवागूमपेक्ष्य, तेन कल्कसाध्यामित्यर्थ । एवञ्च तीक्ष्णद्रव्यापेक्षया कर्षप्रमाण, मृदु-द्रव्यापेक्षया च पलप्रमाण, मध्यवीर्य्यद्रव्यापेक्षया चार्द्धपलप्रमाण द्रव्य विनीय कल्कसाध्या यवागू वारिप्रस्थेन द्रव्यद्वैगुण्याच्छरावचतुष्टयमानेन साधयेदिति योजना । ननु प्रबलानलबलादौ पुरुषे बहुयवाग्वादि विधेय तत्र कथ वारिप्रस्थेन यवागूसाधन भविष्यति ? इत्याह युक्त्येति । एतेन यत्र उत्तमबलानले बहुयवागूर्वि-धेया, तत्र युक्त्या जलप्रस्थद्वय त्रय वा तण्डुलानुरूप दत्त्वा यवागू साधयेत्, अल्प-बलानले तु वारिप्रस्थेनेत्यर्थ । अपरानिति पाठे यूषादीनिति, । तेन पेयासाधन-रीत्या यूषादयोऽपि साधनीया इति प्रतिपादितम् ॥ २५ ॥

**षडङ्गपरिभाषैव प्रायः पेयादिसम्मता ॥ २६ ॥**

अथ क्वाथसाध्ययवागूसाधनार्थं कथमिह परिभाषा नोक्ता ? इत्यत आह षडङ्ग-परिभाषैव इत्यादि—अन्ये तु 'क्वाथ्यद्रव्याञ्जलिं' क्षुण्ण श्रपयित्वा जलाढके । अर्द्धशृतेन तेनाथ यवाग्वाद्युपकल्पयेत्' इत्येव परिभाषामग्निवेशसंहितोक्ता क्वाथसाध्य

यवागूविषयत्वेनेत्याहु.। अस्यार्थ —अञ्जलि॰ पलचतुष्टय श्रपयित्वा जलाढके द्रव-द्वैगुण्यात् जलस्य षोडशशरावे। द्रव्य तावद् द्विविध वीर्य्यप्रधान रसप्रधानञ्च। तत्र आद्य भेषजद्रव्य, द्वितीय पुनराहारद्रव्य मासादि। तत्र रसप्रधानद्रव्याभिप्रायेणैव चतु पलद्रव्याभिधानमत्र ज्ञेयम्। तेन परिभाषेय 'सिद्धा वराहनिर्य्यूहे यवागूर्बृंहणी मता' इत्यादि यवागूविषया बोध्या। वृन्दस्तु 'वृद्धवैद्या पल द्रव्य ग्राहयित्वाढकेऽम्भसि। भेषजस्यातिवाहुल्यात् कदाचिदरुचिभवेत्' इति जेज्जटव्याख्यातमेव वृद्धव्यवहार निजपद्येन लिखितवान्॥ २६॥

**यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत्॥ २७॥**

इदानीं यवाग्वर्थ कियन्माना दरदलिततण्डुला देया इत्यत आह यवागूमित्यादि—उचितादित्यभ्यस्तात्, चतुर्भागकृतामिति चतुर्थभागकृता तद्दिवसीयबुभुक्षापेक्षया॥ २७॥

**सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता।**
**यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा॥ २८॥**

पेयादीना लक्षणमाह सिक्थकैरित्यादि—अत्र द्रवसिक्थसमन्विता यवागूरिति यवाग्वा सामान्यलक्षणम्। सा च द्विविधा पेयाविलेपीभेदात्। तत्र यवाग्वा एवोपरितनभागो मण्ड, न तु पृथङ्मण्ड साध्यते आयुर्वेदशास्त्रेऽदर्शितत्वात्। यस्तु क्वचिन्मण्डगुणो मण्डोपयोगो वा श्रूयते सोऽप्यस्यैव बोध्य। ननु मण्डश्चतुर्दशगुणजलसाध्य, यवागूस्तु षड्गुणजलसाध्या इत्यनन्तरमेव वक्ष्यति, तत् कथमुच्यते यवाग्वा उपरितनभागो मण्ड? नैवम्। तत्र यवागूशब्देन पेया विवक्षिता। तेन पेयाया पृथक् जलमान नोक्तम्। द्रवसिक्थसमन्वितत्वमेव यवागूसामान्यलक्षण, तेन चतुर्दशगुणजलसिद्धस्यापि मण्डस्य सिक्थसमन्वितावस्थाया यवागूत्वमेव, तेन सुष्ठूक्त 'यवाग्वा उपरितनभागो मण्ड' इति। पेया इति सञ्ज्ञाबलात् बहुद्रवत्वमल्पसिक्थत्वञ्च ज्ञेयम्। तेन सिक्थसमन्विता यवागूः पेयेति, पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोध्यम्। तथा विरलद्रवा बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षण बोध्यम्। तेन पेयाविलेपीव्यतिरेकेण पृथग् यवागूर्नास्तीत्याहु। अतएव वाग्भटेऽपि यवागूगुण पृथङ्नोक्त। तदुक्त 'मण्डपेयाविलेपीनामोदनस्य च लाघवम्। यथापूर्व शिवस्तत्र मण्डो वातानुलोमन.' इति। तथा चरकेऽप्यन्नपाने मण्डपेयाविलेप्योदनानामेव गुणो दर्शित, न पृथग् यवाग्वा इति। यत्तु द्रव्यगुणे माधवकरेण पेयाविलेपीगुण पठित्वा लिखित, 'तृष्णापनयनी लघ्वी दीपनी

दत्तिशोधनी । ज्वरे चैवातिसारे च यवागू नवका हिता' इति तत्सामान्यगुणाभिप्रायेण बोध्य सामान्यतोरुपपत्त्। यत्तु प्रयोगरत्नाकरे 'चतुर्विध भवेद्भक्त जलदानप्रमाणत । तत्र भक्त विलेपी च यवागू पेयया सह॥' इति, तत्र मण्ड एव पेयाशब्देन विवक्षित, यतस्तदनन्तरमेव पेयाया चतुर्दशगुण जलमुक्त तत्रैव 'पञ्चगुणे जले भक्त विलेपी च चतुर्गुणे। यवागू षड्गुणे तोये चतुर्दशगुणे पराम्' इति ॥ २८ ॥

**अन्नं पञ्चगुणे साध्यं विलेपी तु चतुर्गुणे ।**
**मण्डश्चतुर्दशगुणे यवागू षड्गुणेऽम्भसि ॥ २९ ॥**

यवागूपाकार्थं जलपरिमाणमाह अन्नमित्यादि—मूदगान्त्रस्य । यवागूरत्र पेया ॥ २९ ॥

**पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम् ।**
**तथा श्लेष्मणि संवृद्धे यवागू श्लेष्मवर्द्धनी ॥ ३० ॥**

यवागू कस्मिन् विषये न कर्त्तव्येत्याह पांशुधान इत्यादि—पांशुधाने पांशुसञ्चये, अतिकर्दम यथा स्यात् तथा क्लेदयति क्लेद जनयति ॥ ३० ॥

**मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके ।**
**ऊर्द्ध्वगे रक्तपित्ते च यवागूरहिता ज्वरे ॥**
**तत्र तर्पणमेवाग्रे प्रदेयं लाजशक्तुभि· ।**
**ज्वरापहै· फलरसैर्युक्तं समधुशर्करम् ॥**
**द्रवेणालोडितास्ते स्युस्तर्पणं लाजशक्तव· ॥ ३१॥**

मदात्यय इत्यादि—चरकस्य । चरके एतद्वचनस्योपरि "अन्ने मद्यसमुत्थितात्" इत्यस्ति तेन मद्यकारणके ज्वरे यवागूर्निषिद्धैव । तेन मदात्यये व्याधौ तथा मद्यनित्ये मद्यपे योऽमद्यहेतुकोऽपि ज्वर सोऽपि पेयानर्ह । तथा ग्रीष्मे यो ज्वर , तथा पित्तकफाधिको यो ज्वर , तथा ऊर्द्ध्वगरक्तपित्तिनो यो ज्वर', तेषु सर्वेषु यवागूर्न हितेति। इह मदात्ययादीना पेयानर्हत्वेन तेषु जातोऽपि ज्वर पेयानर्ह । पित्तकफाधिक इत्यनेन् पित्तकफयोरतिमात्रोद्रेके नति पेयाया अदान बोधयति । तेन कफजे ज्वरे, पित्तजे ज्वरे अनुद्धूतदोषे पेया देया । उक्त हि 'कफजेऽपि यदा क्षीणो लङ्घनादिक्रमात् कफ । गस्ता एव यवाग्वस्तु तत्र पित्तेऽप्यय क्रम ' इति । अतएव चरके 'पैत्तिके वाथ शीता मधुयुता पिबेद् । यवागूर्' इत्यनेन पित्तेऽपि यवागूरुक्ता ।

पाशुधाने यथा वृष्टिरित्यादि हारीतवचनमपि अतिवृद्धकफविषय ज्ञेयम् । अन्ये तु मिलितपित्तकफाधिके पुरुषे यवागूप्रनिषेधमाहु । उद्र्ध्वगे कफपित्ते इति पाठान्तरमनार्ष, पित्तकफाधिक इत्यनेनैव तदर्थस्य लाभात् । सुश्रुतेऽपि " कफपित्तपरीतस्य ऊद्र्ध्वासृकपित्तिनस्तथा" इत्युक्तम् । अन्ये तु उद्र्ध्वग इति ऊद्र्ध्वगरक्तपित्ते कफपित्ते चेति कफयुक्तपित्ते पित्तस्थानगते कफे इत्यर्थ । उक्त हि वाग्भटे "मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे । ग्रीष्मे तयोर्वाधिकयोस्तृड्दाहच्छर्दिपीडिते । ऊद्र्ध्व प्रवृत्त रक्ते च पेया नेच्छन्ति तेषु तु ॥" इति व्याख्याय कफपित्ते चेति पाठमुपपादयन्ति । यद्यपि चरके, " ऊद्र्ध्वगे तर्पण पूर्वम् " इति वचसा यवागू बाधित्वा ऊद्र्ध्वगे रक्तपित्ते तर्पण विहितमेव, तथाप्यूद्र्ध्वगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमः कार्य्य इत्याह तत्रेत्यादि—ज्वरापहानि फलानि द्राक्षादाडिमादीनि, उक्त हि " द्राक्षादाडिमखर्जूरपियालै सपरूषकै । तर्पणार्हेषु कर्त्तव्य तर्पण ज्वरनाशनम् ' इति । तर्पणशब्दार्थमाह द्रवेणालोडितास्ते स्युरित्यादि ॥३१॥

**श्रमोपवासानिलजे हितो नित्यं रसौदनः ।**
**मुद्गयूषौदनश्चापि देयः कफसमुद्भवे ।**
**स एव सितया युक्तः शीतः पित्तज्वरे हितः ॥ ३२ ॥**

श्रमेत्यादि—नित्यमिति सर्वदा नवे पुराणे च । रसो मामरसः, तेनोपसिक्त ओदन. रसौदन । एव मुद्गयूषौदनमित्यत्रापि व्याख्येयम् । अयञ्च रसौदन दीप्ताग्निं प्रति बोध्य ; उक्त हि सुश्रुते " उपवासश्रमक्लने ज्वरे वाताधिक तथा । दीप्ताग्निं भोजयेत् प्राज्ञो नर मामरसौदनम् " इति । मुद्गयूषौदनश्चापीति कफजे मुद्गयूषौदनो देयो यवाग्वा अहितत्वात् । स एवेति मुद्गयूषौदन ॥ ३२ ॥

**रक्तशाल्यादय शस्ता पुराणाः षाष्टिकैः सह ।**
**यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ ३३ ॥**

रक्तशाल्यादय इत्यादि—चरकस्य । चरके पुराणा इत्यत्र " शालय " इति पठन्ति, तेन यवकादीना निरास इत्याहु । ये तु पुराणा इति पठन्ति तन्मते यद्यपि " शूकधान्य शमीधान्य समातीतम् " इत्यनेन पुराणस्योपयोगो लब्ध, तथापि प्रमादादतिनवस्य तथातिपुरातनस्य च ग्रहण मा भूदित्येतदर्थ पुराण इत्युक्तम् ॥ ३३ ॥

**मुद्गामलकयूषस्तु वातपित्तात्मके हितः ।**
**ह्रस्वमूलकयूषस्तु कफवातात्मके हितः ।**

**निम्बकूलकयूषस्तु हितः पित्तकफात्मके ॥ ३४ ॥**

सम्प्रति द्वन्द्वजेष्वाहारविधिमाह मुद्गामलकेत्यादि—आमलकोपेतया मुद्गस्य यूषमी मात्रा, आहारद्रव्यत्वात् । योगोऽयं यद्यपि सुश्रुतेन अन्नपानाध्याये कफपित्त-ज्वरहरत्वेन निर्दिष्ट, तथापीह वातपित्तज्वरेऽभिधानाद् वातपित्तज्वरहरत्वमपि वचनबलादेवाध्यवसीयते । ह्रस्वमूलको बालमूलक । अत्र शमीधान्यस्य यूषयोनित्वात् मुद्गाद्यपि बोध्यम् । एव यत्र नास्ति तत्र सर्वत्र । किंवा व्यञ्जनपरो यूष । निम्बकूलकेत्यादि—सुश्रुतस्य । निम्बस्य पत्र, तथा कूलकस्य पटोलस्य च पत्रम ॥ ३४ ॥

**मुद्गान मसूराश्चणकान् कुलत्थान् समुकुष्ठकान् ।**
**आहारकाले यूपार्थे ज्वरिताय प्रदापयेत् ॥ ३५ ॥**

मुद्गानित्यादि—सुश्रुतस्य । मुकुष्ठको वनमुद्ग ॥ ३५ ॥

**पटोलपत्रं वार्त्ताकु कूलकं कारवेल्लकम् ।**
**कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम् ।**
**पत्रं गुडूच्या· शाकार्थे ज्वरिताय प्रदापयेत् ॥ ३६ ॥**

पटोलेत्यादि—सुश्रुतस्य । वार्त्ताकु वार्त्ताकुफल, कूलकमपि पटोलफल, कर्कोटक काकरोल इति ख्यात, गोजिह्वा दार्वाशाक ॥ ३६ ॥

**ज्वरितो हितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत् ।**
**अन्नकाले ह्यभुञ्जान· क्षीयते म्रियतेऽथवा ॥ ३७ ॥**

इदानीं ज्वरितस्यारुचावपि हितभोजन नियमयन्नाह ज्वरित इत्यादि—अस्यारुचिरपि यदि भवेत् तथापि ज्वरितो हितमेवाश्नीयादेव, इत्युभयत्रापि नियम । यतो दिनान्ते भोजयेदित्यनेन भुजि क्रिया विहितैव । "न हि तस्याहित भुक्तमायुषे वा सुखाय वा" इत्यादिना हितमपि विहितम्, अत सिद्धे सत्यारम्भो नियमाय भवति । विपक्षे दण्डमाह अन्नकाले हीत्यादि—यतोऽन्नकाले हितमभुञ्जान पुरुष क्षीयते म्रियते वा । अन्ये तु अरुचौ सत्याम् अशितुर्भोजने इच्छाभावात् अपिशब्द भिन्न-क्रमेण योजयित्वा नञ प्रक्षिप्यान्यथा व्याचक्षते । अस्य यदि अरुचिर्भवेत् तदा अहितमप्यश्नीयात् । कुत इत्याह अन्नकाले हीत्यादि—यतोऽभुञ्जानस्य धातुक्षयो मरण वा स्यात् तस्मादहितमश्नीयादित्यर्थ । न चैव व्याख्याने गुर्वभिष्यन्दकाले चेत्याद्युत्तरग्रन्थविरोध स्यादिति वाच्यम्, यतस्तेनापि ग्रन्थेनाहित न प्रतिषिध्यते अन्यथा व्याख्यानात्, तथा हि ज्वरी ना पुरुष गुर्वभिष्यन्दकाले च कथञ्चन कदा-

चिदद्यात् सक्तूद्भक्षीतेत्यर्थं । यतो भुक्त भोजन आयुषे वा सुखाय वा न अहित किन्तु हितमेव । हिशब्दस्थाने तुशब्दपाठेऽपि तुशब्दनिपातस्यानेकार्थत्वात्, हेतौ व्याख्येयः । नन्वेषा व्याख्या तदैव सङ्गच्छते यदि अहितार्थमुपदेश क्वापि शास्त्रे तिष्ठति किन्तर्हि हितस्यैव सर्वत्रोपदेश । अवस्थाया तदपि हितमिति चेत् तर्हि अहितमिति व्याहतम्? सत्य, प्राय सर्वदा मुद्गादिवन्न हितमिति कृत्वा अहितमित्युच्यते, अत एवाहु "मनोऽनुरूप यदपथ्य तदपि क्रियत एव" इति । यदुक्त चरके "मनसोऽप्यानुकूल्येन तुष्टिरूर्जो रुचिर्बलम् । सुखोपभोगिता च स्याद् व्याधेश्चापि वलक्षय " इति । किन्तु जेज्जटमते एषा व्याख्या न सङ्गच्छते, यतो ज्वरितो हितमित्यादेरनन्तरमेव हितविधायकमहितप्रतिषेधक " सतत विषम वापि " इत्यादि " वर्जयेच्च समासत " इत्यन्त ग्रन्थ जेज्जट पठति, तन्मध्ये च गुर्वभिष्यन्दीत्यादिग्रन्थोऽप्यस्ति, ततो गुर्वभिष्यन्दीत्यादिवाक्यस्याहितविधायकत्वव्याख्याने प्रकरणमसङ्गत स्यात् । तथा चन्द्रिकाकारेणापि " ज्वरितस्य मन्दाग्नेर्गुवन्नापाकेऽजीर्णम्, अभिष्यन्दिन स्रोतोरोधकत्वेन ज्वरवृद्धि " इत्यादि व्याख्यातम् । एवञ्च गुर्वभिष्यन्दीत्यादिग्रन्थोऽप्यहितप्रतिषेधकपरतया ऋजुमार्गेणैव व्याख्येय । ज्वरितो हितमश्नीयादित्याद्यपि हितविधायकतया एव व्याख्येयम् । अहितस्य रोगवर्द्धकत्वेन सर्वत्र निषेधात्, उक्तरीत्या गुर्वभिष्यन्दीत्यादिग्रन्थविरोधाच्चेति ॥ ३७ ॥

**अरुचौ मातुलुंगस्य केशरं साज्यसैन्धवम् ।**
**धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् ॥३८॥**

इदानीं बलवदुपद्रवत्वेनारुचे प्रतीकारमाह अरुचावित्यादि—योगान्तरमाह धात्रीत्यादि ॥ ३८ ॥

**सातत्यात् स्वाद्वभावाद् वा पथ्यं द्वेष्यत्वमागतम् ।**
**कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥ ३९ ॥**

अथ हितमेव यदि सततोपयोगादनभिमतरसादियोगाद्वा रुचिविषयो न स्यात् तदा किं कार्य्यम्? इत्याह सातत्यादित्यादि—दृढबलस्य । सातत्यादिति सततोपयोगात् । सततोपयोगाद्धि स्वाद्वन्नमपि अप्रिय भवतीत्यनुभवसिद्धम् । अस्वादु तु स्वत एवाप्रियम् । स्वादुरभीष्टो रस. । तैस्तै. कल्पनाविधिभिरिति स्वरसकल्कादिसूदशास्त्रोक्तविधानै पुन. प्रियत्व गमयेत् ॥ ३९ ॥

**ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ।**
**श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा ॥ ४० ॥**

अन्नकालमाह ज्वरितमित्यादि—वाग्भटस्य । दिनान्त इत्यपराह्णे, सुश्रुतेऽप्युक्त "सर्वज्वरेषु सप्ताह मात्रावद्भोजन हितम् । दिनापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम्" इति । ज्वरितमित्यादिवाक्यानन्तर वाग्भटवचन यथा ' यथोचितेऽथवा काले देशसात्म्यानुरोधत । प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते" इति । तेन यस्य पुरुषस्य य उचित आहारकाल., तस्मिन्नेव त भोजयेत् । यथोचिते हि काले देशसात्म्यानुरोधत प्राय क्षुद्बोधो भवति, तदतिक्रमे च क्षुधापगमो भवति तेन तस्य दिनान्तापेक्षा च कर्त्तव्येत्याह प्रागित्यादि । अल्पवह्निरिति कायाग्नेर्वह्निनि सरणात् ज्वरितेऽल्पवह्निरेव भवति । देशसात्म्यानुरोधात् अल्पवह्निरपि प्रागेव पूर्वाह्णेऽपि भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते इत्यर्थ ॥ ४० ॥

**गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन ।**
**न हि तस्याहितं भुक्तमायुषे वा सुखाय वा ॥ ४१ ॥**

नन्वरुचावपि सत्या हितमेव भोक्तव्यम्, नाहितमित्युक्तम्, अतस्तत् किमहित यन्न भोक्तव्यम् ? इत्याह गुर्वित्यादि सुश्रुतस्य । गुरु पिष्टकादि, अभिष्यन्दि, दोषधातुमलस्रोतसा क्लेदजनकम् अम्लिकादि—नाद्यात् न खादेत् । तथा अकाले अप्राप्ते अतीते च काले हितमपि नाद्यात् । कथञ्चन कदाचिदपि । अत्र हेतुर्नहीत्यादि ॥ ४१ ॥

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।**
**पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ ४२ ॥**

इदानीं लघनमेवादाविति यदुक्त तस्य पाचनतां दर्शयन्, प्रसङ्गात् स्वेदादीनामपि पाचनतामाह लङ्घनमित्यादि काल इत्यष्टाह । तिक्तकरसोऽत्र यवागूपानीयादिसस्कारकत्वेन ज्ञेय स्वतन्त्रभेषजप्रयोगस्य तरुणे निषेधात् । उक्तञ्च ' भेषज ह्यामदोषस्य भूयो ज्वलयति ज्वरम्' इति । अविपक्वानामित्युक्त्वापि यत् तरुणे ज्वरे इत्युक्त तदष्टाहादूर्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु पाचनकषायस्य प्राधान्यमावेदयति, न तु लङ्घनादीनाम् । किं वा अविपक्वग्रहणमष्टाहादूर्ध्वमपि सामत्वानुवृत्तिर्भवतीति सूचनार्थम् । अत एवाष्टाहादूर्ध्वमपि आमपाचनार्थं पाचन शमनीय वेत्यादि वक्ष्यति ॥ ४२ ॥

**आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः।**
**मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम्॥ ४३॥**

ननु ज्वरस्य तरुणता कियन्त काल तिष्ठति इत्याह आसप्तरात्रमित्यादि—सप्तरात्र व्याप्य। आङयमभिविधौ न मर्य्यादायाम्, अष्टाहस्य निरामज्वरकालत्वेनोक्तत्वात्। मध्य द्वादशरात्रानिति पाठ साधीयान्, न तु मध्य चतुर्दशाहन्त्विति, जतूकर्णे 'जीर्णस्त्रयोदशदिवस' इत्युक्तत्वात्। अत उत्तरमिति द्वादशाहानन्तर त्रयोदशदिवसमारभ्य, पुराणमिति जीर्णज्वरमाहु। यत्तु "त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुता गत। प्लीहाग्निसाद कुरुते स जीर्णज्वर उच्यते" इति तन्त्रान्तरम्, तदतिजीर्णाभिप्रायेण बोध्यम्। यद्यपि तरुणज्वर एवात्र प्रकृतस्तथापि मध्यपुराणयोरत्राभिधानमेकवाक्यनिबद्धत्वात्॥ ४३॥

**पाचनं शमनीयं वा कषायं पाययेत्तु तम्।**
**ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम्॥ ४४॥**

ननु लङ्घनानन्तर किं कर्त्तव्यम्? इत्याह पाचनमित्यादि—एतच्च विकल्पद्वय योग्यतया यथाक्रममामदोषपक्वदोषविषय ज्ञेयम्। तेन पाचन सामस्य, निरामस्य शमनमिति ज्ञेयम्। षडहेऽतीते इति ज्वरोत्पाददिनमारभ्य षडहेऽतिक्रान्ते सप्तमेऽहनि लघ्वन्नप्रतिभोजत ज्वरित अर्थादष्टमेऽहनि पाचन शमनीय वा पाययेदिति योजना। एवञ्च अष्टाहो निरामज्वरलक्षणमिति पूर्ववाक्येन, तथा "नि सप्तता निरामज्वरलक्षणम्" इति खरनादवाक्येन, तथा "सप्तरात्रात् पर केचिन्मन्यन्ते देयमौषधम्" इति सुश्रुतवाक्येन, तथा "सप्ताहादौषध केचित्" इति वाग्भटवचनेन सहैकवाक्यता उपपन्ना भवति। अन्ये पुनरमुमेवार्थं प्रकारान्तरेणेच्छन्ति—षडहे अतीते इति ज्वरोत्पाददिन परित्यज्य गणना कार्य्या बस्तिदिनपरिहारेण परिहारगणनावत्, तेन षडहे अतीते इत्यस्य सप्तमे अतीते इत्येवार्थो भवति। भट्टारहरिश्चन्द्रेणापि सप्तमे दिने कषायपान यद्व्याख्यात तस्याप्ययमभिप्राय उन्नेयः। अन्यथा सुश्रुतादिविरोधो दुष्परिहर इति। चन्द्रिकाकारेणोक्तम् "अक्षिरोगदिनचतुष्टयवत् ज्वरस्य सप्ताह सामताकाल, तत्र "न पाचन वा शमन न शोधनम्" इति। यत्तु पेयाद्यनन्तर हारीतेनोक्तम् "एता क्रिया प्रयुञ्जीत षड्रात्र सप्तमेऽहनि। पिबेत् कषायसयोगान् ज्वरघ्नान् साधुसाधितान्।" इति, तथा "इति षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधि। तत पर पाचनीय शमन वा ज्वरे हितम्॥" इति। खरनादवचनञ्च पूर्वोक्तरीत्या अष्टाहप्रतिपादकमेव ज्ञेयम्। अथवा यतः सुश्रुते

"सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" इत्याद्यभिधाय "पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते । अचिरज्वरितस्यापि भैषज्यं दोषपाकतः" इत्युक्तम्, वाग्भटेनापि "मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्यापि भैषज्यं योजयेत् तदा।" इति यदुक्तम्, तदपि सुश्रुतसंवादात् पित्तज्वरपरमेव ज्ञेयम् । एतद्वचनद्वयं सप्ताहादर्वागपि पाचनकषायदानप्रतिपादकमनुद्भूतसामतायामेव ज्ञेयम् । उद्भूतसामतायान्तु भेषजदानस्य बलवदपायजनकत्वात् । अत एवाह वाग्भटः "सप्ताहादौषधं केचिदाहुरन्ये दशाहतः । केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु । तीव्रज्वरपरीतस्य दोषवेगोदयो यतः । दोषेऽथवाभिनिर्चिते तन्द्रास्तैमित्यकारिणि । अपच्यमानं भैषज्यं भूयो जनयति ज्वरम् ॥" इति । अपैत्तिकज्वरे तु वातजादौ सप्ताहादर्वाक् पाचनमपि न देयमेव । सप्ताहानन्तरमपि यदि सम्यग्दोषपाकलक्षणानि ज्वरमार्दवक्षुधादीनि न भवन्ति तदा पाचनम्, अन्यथा तु शमनं देयम् । एतदभिप्रायेणैव "मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च । पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्" इति सुश्रुतवचनं ज्ञेयम् । न चैतद्वचनं ज्वरमार्दवादौ दोषपाकलक्षणे सञ्जाते सत्येव भेषजस्य देयतां बोधयति । तत्र च सप्ताहानन्तरमपि नियमो नास्तीति वाच्यम् । सप्तरात्रात् परं केचिदित्यादिवचनैः सप्ताहानन्तरमेव भेषजदानस्य बोधितत्वात् । तेन सप्ताहादर्वाक् पाचनं शमनञ्च न देयमिति स्थितम् । व्याख्यानान्तरन्तु "ज्वरे पेया कषायाश्च" इत्यादि व्याख्यानावसर एव व्याख्येयम् । ननु सप्तरात्रादूर्ध्वं ज्वरस्य निरामत्वात् किमर्थं तत्र पाचनं दीयते यदुक्तम् "अष्टाहो निरामज्वरलक्षणम्" इति । सत्यप्यष्टाहे यदि न निरामत्वं तदा लक्षणमेव न स्यात् सामनिरामसाधारणत्वात् । असाधारणधर्मो हि लक्षणं भवति । अत्राहुः द्विविधा हि सामता, एका दोषस्य तरुणत्वरूपा । तरुणत्वञ्च सप्ताहमात्रम् । तदुक्तं पुष्कलावते "आसप्तरात्रं तरुणम्" इत्यादि । द्वितीया तु रसस्य, मुखवैरस्यतृष्णारोचकादिरूपा । तत्र प्रथमा अष्टाहादपैति, अत्र हरिश्चन्द्रेण हेतुरप्युक्तः "सप्ताना धातूनां धात्वग्निना सप्ताहेनामपाकात् अष्टाहेनैव नैराम्यम्" इति । उक्तञ्च "सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति । द्वितीया पुनः सप्ताहात् परतोऽपि कदाचिद्दोषबाहुल्यादग्निमान्द्याच्चानुवर्त्तते । उक्तञ्च "श्लेष्मलानामवान्तानां ज्वरः प्रायः कफाधिकः । परिपाकं न सप्ताहे नापि याति मृदूष्मणा" इति अतस्तत्र पाचनमुचितमेव । अतएवाह सुश्रुतः "बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे । लङ्घनाम्बुयवागूभि-

यदा दोषा न पच्यते। तदा त मुखवैरस्यतृष्णारोचकनाशनै। कषायै पाचनै-र्हृद्यैर्ज्वरघ्नै समुपाचरेत्" इति ॥ ४४ ॥

**सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे।**
**निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥ ४५ ॥**

इदानीं सप्ताहानन्तरमेव यस्यामवस्थाया पाचन शमनञ्च देय तदाह सप्ताहादित्यादि—अस्तब्धे सामे इति लालाप्रसेक इत्यादि वक्ष्यमाणस्य रससामता-लक्षणस्य निवृत्तौ सत्या प्राप्तलघुभावे मधुभाण्डावलेपन्यायेन स्थितस्य कोष्ठावले-पकामभागस्य पाकार्थ पाचन देयम्। निरामे शमनमिति पाचनेन कोष्ठावलेपक स्यामभागस्य पाकात् सम्यङ्निरामत्वे सतीत्यर्थ। सम्यङ्निरामता च दशरात्रात् परमेव दोषामतारसामतयो सर्वथा निवृत्त्या प्रायशो भवतीति। अतएव "दशरात्रात् पर केचिद्दातव्यमिति निश्चितम्" इति सुश्रुतेनोक्तम्। किंवा यत्र दोषाणामनति-वृद्धत्वात् सप्ताहेनैव रससामतापि निवर्त्तते तत्र सप्ताहानन्तरमपि शमनादि देयम् "स्तब्धे सामे नौषधमाचरेत्" इति लालाप्रसेकादिरससामतालक्षणाना मत्त्वादप्राप्तलघुत्वे सप्ताहानन्तरमपि पाचन शमनञ्च न देयमित्यर्थ ॥ ४५ ॥

## रससामतालक्षणम्।

**लालप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः।**
**तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥**
**क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः।**
**आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम् ॥**
**भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ४६ ॥**

रससामतालक्षणमाह लालाप्रसेक इत्यादि—हृदयाशुद्धि हृदयगौरवम्। न दद्यादित्यत्र हेतुमाह भेषजमित्यादि ॥ ४६ ॥

## आमपाकलक्षणम्।

**मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।**
**पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ४७ ॥**

पाकलक्षणमाह मृदावित्यादि—सुश्रुतस्य। मृदौ मन्दीभूते। मान्द्यञ्च ज्वर-स्यामरसस्य पाकात् स्रोतसि शुद्धे पुन कोष्ठगते चोष्मणि भवति। प्रचलेषु प्रति-

वन्धकस्यामरसस्य व्यपगमात् अविरुद्धेषु मलेषु वातपित्तकफशकृदादिषु । पक्वमिति निरामम् । दोषमित्यनेन दुष्टिकारकत्वात् शकृदप्युच्यत इत्याह । देय तदौषधमिति अल्पदोषे अस्तब्धमामताया पाचन, सर्वथा निरामत्वे तु शमन, शोधन यथावस्थ देयम् । एतदनन्तरन्तु अन्यदपि पक्वलक्षण स्वकीयमतेन सुश्रुतेनोक्त यथा "दोषप्रकृतिवैकृत्यादेकेषा पक्वलक्षणम्" इति ज्वरारम्भकाले यो दोषस्वभाव सम्प्राप्तिरूप तस्यान्यथात्वादल्पत्वादेकेषा मते पक्वलक्षणमिति । अन्ये तु प्रथमा प्रकृति आमरससम्मूर्च्छिताना ज्वरजननसमर्थाना स्वकार्य्यस्य ज्वरतीव्रत्व देहगुरुत्वमलविवन्धादेरुत्पादन ततो विपर्य्ययो वैकृत्यम् । प्रथमा प्रकृतिरप्याम एव । यदुक्त "प्रथमां दोषदुष्टिञ्च केचिदाम प्रचक्षते इति ॥ ४७ ॥

नागरं देवकाष्ठञ्च धन्याकं वृहतीद्वयम् ।
दद्यात् पाचनकं पूर्वं ज्वरिताय ज्वरापहम् ॥ ४८ ॥

इदानीं सर्वज्वरसाधनार्थ पाचनकषायमाह नागरमित्यादि—भेलस्य । योगोऽस्य द्रव्यगुणपर्य्यालोचनया वातकफजे इति भद्र । व्याधिप्रत्यनीकतया तु पित्तजे हितत्वमस्याभ्युपगम्य सर्वज्वरविषयत्व ज्ञेयमित्याह सर्वज्वरेष्विति । अतएव तन्त्रापि एतत्प्रभृतियोगान्ते पठ्यते "सर्वज्वरेषु पठ्यन्ते यथादोषबल प्रति" इति ॥ ४८ ॥

सर्वज्वरेषु—

पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः ।
न पिवेदौषधं जन्तुः संशोधनमथेतरत् ॥ ४९ ॥

यैर्भेषज न पेय तानाह पीताम्बुरित्यादि—भुक्त इति कर्त्तरि क्त, अथशब्द समुच्चये निपातस्यानेकार्थत्वात्, तेनेतरत् शमनञ्च न पिवेदित्यर्थ ॥ ४९ ॥

वीर्य्याधिकं भवति भेषजमन्नहीनं
हन्यात् तदामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवतीमृदुभिश्च पीतं
ग्लानिं परां नयति चाशु वलक्षयञ्च ॥ ५० ॥

परिणामप्रयुक्तभेषजगुणमाह वीर्य्याधिकमित्यादि—भोजनसमयक्रियमाणौषधापेक्षया वीर्य्येणोत्कृष्टमित्यर्थ । अन्नहीनमिति हेतुगर्भविशेषण, यतोऽन्नहीनभेषजमावरकदोषाभावादखिलमेव स्रोत प्रतिपद्यते कोष्ठञ्च सम्यग्भावयति । अन्नहीन इति पाठान्तरे कोष्ठ इति शेष ॥ ५० ॥

**अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।**
**लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ ५१ ॥**

भेषजपाकलक्षणमाह अनुलोमोऽनिल स्वास्थ्यमित्यादि ॥ ५१ ॥

**क्लमो दाहाङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा ।**
**अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ५२ ॥**

भेषजस्यासम्यक्पाकलक्षणमाह क्लम इत्यादि ॥ ५२ ॥

**औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषेऽन्ने ।**
**न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ५३ ॥**

भेषजाजीर्णे भोजने अन्नाजीर्णेऽपि भेषजोपयोगे दोषमाह औषधशेष इत्यादि—भुक्त भोजन एतच्चाभ्यवहारोपलक्षण तेन लेह्यपानयोरपि ग्रहणम्, भुक्तमित्यस्य सम्बन्धे न करोति गदोपशममित्यन्तर्भावितो एयर्थो ज्ञेय., यत प्रस्तुतत्वादौषधमेव गदोपशमक युक्तम् । तेनायमर्थः—भेषजाजीर्णे भोजनमौषधमेव गदोपशमन न कारयतीत्यर्थ । पीतमित्यन्त परिमार्जनाभिप्रायेणोक्तम्, तेन लेह्यादीनामपि ग्रहणम् । सशेषेऽन्ने इत्येव पाठ, अन्यथा च्छन्दोभङ्ग. स्यात् ॥ ५३ ॥

**शीघ्रं विपाकमुपयाति बलं न हिंस्या-**
**दन्नावृतं न च मुहुर्वदनान्निरेति ।**
**प्राग्भुक्तसेवितमथौषधमेतदेव**
**दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ५४ ॥**

भोजनसमयोपयुज्यमानस्याप्यौषधस्य विषयविशेषे गुणमाह शीघ्रमित्यादि—शीघ्रपाकिता बुभुक्षितस्य प्रबलजठरानलसम्बन्धादित्यभिसन्धि । प्राग्भुक्तसेवितमिति भक्तात् पूर्वमव्यवहितकाले सेवितम् ॥ ५४ ॥

**मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।**
**व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥ ५५ ॥**

तद्भेषज किंपरिमाणमित्याह मात्राया इत्यादि—अवस्थानमिति नैयत्यम्, अतएव चरकेणाप्युक्त "मात्रा खलु व्याधिबलापेक्षिणी" इति ॥ ५५ ॥

**उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।**
**जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ ५६ ॥**

तर्हि मन्दबुद्धेरनध्यवसाय स्यात् इत्यत क्वाथ्यस्य मान प्रसङ्ग स्नेहस्याप्याह

उत्तमस्येत्यादि—स्नेहक्वाथ्यौषधेष्विति स्नेहरूपाणि क्वाथ्यरूपाणि चौषधानि तेषु, किंवा औषध स्वरसगुडादि ॥ ५६ ॥

**कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम्।**
**ततस्तु कुडवं यावत् तोयमष्टगुणं भवेत् ॥**
**क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥ ५७ ॥**

क्वाथ्यस्य तावत् पलमान तच्च कियता जलेन क्वथनीयमतस्तन्मानमाह कर्षादौ-वित्यादि—अग्निवेशस्य क्वाथविषयेय परिभाषा। पलं यावदित्येकपलम्। षोडशिकं जलमिति षोडशकर्षादिरूपम्। अतएव कर्षादिमानक्वाथ्यापेक्षया दीयमानस्य षोडश-गुणजलस्य वस्तुगत्या कुडवादिमानत्वेऽपि न द्वैगुण्यम्, जलमानस्यापि कर्षादि-रूपतया निर्दिष्टत्वात्। उक्तं हि "रक्तिकादिषु मानेषु यावन्न कुडवो भवेत्। शुष्कद्रवार्द्रयोश्चापि तुल्यं मानं प्रकीर्त्तितम्" इति। रक्तिकादिष्विति रक्तिरूपतया निर्दिष्टेष्वित्यर्थः। तत इति एकपलादूर्द्ध्वं पलद्वयमारभ्य कुडवपर्य्यन्तमित्यर्थः। अत्र पलं यावदित्यन्तस्यैव वचनस्य पेयाक्वाथविषयता, ततस्तु कुडवं यावदित्यादि तु सम्पूर्णश्लोकानुरोधादेवोक्तम्। अतएव पलं यावदित्यस्य पेयाक्वाथविषयत्वं द्रढयन् पादावशिष्टत्वञ्च बोधयन् कृष्णात्रेयोक्तवचनमुपन्यस्यति क्वाथ्यद्रव्यपले कुर्य्यादित्यादि। प्रस्थार्द्धमिति द्रवद्वैगुण्यात् षोडश पलानि। अतएवोक्तमन्यत्र "क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते। चतुर्भागावशिष्टञ्च पेयं पलचतुष्टयम्" इति द्विरष्टगुणमिति षोडशगुणमित्यर्थः। एतेन पले क्वाथ्ये दीयमानस्यापि षोडशगुणजलस्य पादावशि-ष्टता कार्य्येति सूचयति। उक्तञ्चान्यत्र "द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम्। पादावशिष्टं कर्त्तव्यमेष क्वाथविधिः स्मृतः" इति ॥ ५७ ॥

**द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम्।**
**अष्टचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः।**
**द्वादशभिर्धान्यमाषैश्चतुःषष्ट्या तु तैः पलम् ॥ ५८ ॥**

इदानीं क्वाथ्यस्य पलत्रिकर्षादिकमित्यादि यदुक्तं तत् सर्वमकिञ्चित्करं यतो रक्तिकादिज्ञानाधीनं माषकज्ञानं माषकज्ञानाधीनञ्च कर्षपलादिज्ञानं तदेव मूले निर्णीतम्, अतो माषकादिमानं व्यवस्थापयितुं परिभाषामाह द्वात्रिंशन्माषकै-रित्यादि—द्वात्रिंशन्माषकैरित्यर्थः। तेन द्वात्रिंशता व्रीहिमाषैः साधारणैर्माषकः, तैश्च माषकैरष्टचत्वारिंशता चरकमते पलं स्यादिति योग्यं, सुश्रुतमते पुनर्व्रीहिमाषै-र्द्वादशभिर्माषकः, तैर्माषकैश्चतुःषष्ट्या सुश्रुतमते पलमित्यर्थः ॥ ५८ ॥

**एतच्च तुलितं पञ्चरक्तिमाषात्मकं, पलम् ।**
**चरकार्द्धपलोन्मानं चरके दशरक्तिकैः ॥**
**माषैः पलं चतुःषष्ट्या यद्भवेत्तत्तथेरितम् ॥५९॥**

इदानीं सुश्रुतचरकमते यावतीभी रक्तिभिर्माषको भवति तदाह एतच्चेत्यादि—एतदिति द्वादशधान्यमाषकृतैश्चतु षष्ट्या माषकै सुश्रुतेन यत् पलमुक्त तत् रक्तिकाभिस्तुलित सत् पञ्चरक्तिमाषात्मक भूत्वा चरकार्द्धपलोन्मान भवतीत्यर्थः । एतदेव विशदयति चरके दशरक्तिकैरित्यादि । यतश्चरके द्वात्रिंशन्माषकलायकृतै रष्टचत्वारिंशन्माषकै यत् पलमीरितमुक्त तद्दशरक्तिकैश्चतु षष्ट्या माषकैस्तुलितं सत् तथा तावन्मानमेव भवेत्, यतश्चतुर्विंशत्या माषकलायैर्दशरक्तिकास्तुल्या भवन्ति, ततश्च दशरक्तिकमानाश्चतु षष्टिमाषकाश्चतुर्विंशतिमाषकलायैर्गुणिता सन्त षट्त्रिंशदधिकपञ्चदशशतमाषकलाया भवन्ति । एव चरकमतेऽपि द्वात्रिंशन्माषकलायप्रमाणा येऽष्टचत्वारिंशन्माषकास्ते द्वात्रिंशता गुणिता सन्त षट्त्रिंशदधिकपञ्चदशशतमाषकलायाः स्युरिति दशरक्तिकमाषकृतपलमानेन सह द्वात्रिंशन्माषकलायप्रमाणमाषकृतपलमानस्य तुल्यता । सुश्रुतमते पुनर्द्वादशमाषकलाया माषक, ते चतु - षष्टि पलमित्युक्तम् । ते चतु षष्टिमाषका द्वादशमाषकलायगुणिता सन्तोऽष्टषष्ट्यधिकसप्तशतमाषकलाया भवन्तीति चरकोक्तपलमानादर्द्धेन सुश्रुतोक्तपलमानमिति ॥५९॥

**तस्मात्पलं चतुःषष्ट्या माषकैर्दशरक्तिकैः ।**
**चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते ॥ ६० ॥**

इदानीं चरकसुश्रुतोक्तमानयोर्मध्ये चरकोक्तमानमेव व्यवहारोपयोगिकमित्याह तस्मादित्यादि—यस्माच्चरकोक्तमानमेव वैद्यैश्चिकित्सासूपयुज्यते, तस्माद्दशरक्तिकैश्चतु षष्ट्या माषकैर्यत् पल तदेव व्यवहारसिद्धमिति शेष ॥ ६० ॥

## वातज्वरचिकित्सा ।

**बिल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ।**
**पाचनं पिप्पलीमूलगुडूचीविश्वजोऽथवा ॥ ६१ ॥**

पाचनयोगद्वयमाह बिल्वादीत्यादि—बिल्वादिपञ्चमूल महत् पञ्चमूलम् । अवचारणाप्यनेन क्रियते पिप्पलीमूलेत्यादिकन्तु क्वाथविषयमेवेति, क्वाथार्थोक्तपाचनयोगेन गणरूपेणैव अवचारणा क्रियते, न पुनरगणरूपेण । अवचारणायोगेनापि

गणरूपेणैव कषायोऽपि क्रियते । तेन धान्यपिप्पल्यादिना कषायविधिरित्याहु केचित्तु क्वाथार्थोक्तपाचनयोगेनागणरूपेणापि अवचारणमाहु ॥ ६१ ॥

**किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः ।**
**सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः ॥ ६२ ॥**

किरातेत्यादि—किरातः चिरायतेति ख्यातम् । अब्दो मुस्तकम्, अमृता गुडूची, उदीच्य वालकम्, स्थिरा शालपर्णी, कलसी पृश्निपर्णी, विश्व शुण्ठी, विश्वस्थाने बिल्वस्य क्वचित् पाठ । 'योगवाह पर वायु' इति पित्तयुते पाचनोऽस्य योज्य इति निश्चल ॥ ६२ ॥

**रास्ना वृक्षादनी दारु सरलं सैलवालुकम् ।**
**कषायः शर्कराक्षौद्रयुक्तो वातज्वरापहः ॥ ६३ ॥**

रास्नेत्यादि—वृक्षादनी वन्दा, एलवालुक स्वनामख्यात, हारीतेऽस्य योगः, किन्तु तत्रोत्तरार्द्धमन्यथा पठ्यते, 'कोष्ण सगुडसर्पिष्क पिबेद्वातज्वरापहम्' इति एव चन्द्रटेऽपि । शर्कराक्षौद्रपाठस्तु बहुसग्रहपुस्तकेष्वेवास्ति अत आर्षेणापि भवितव्यम् । अत पित्तश्लेष्मयुते तत्प्रक्षेपो बोध्य । अय योगो गुडमात्रप्रक्षेपादपि रविगुप्तेन पठ्यते ॥ ६३ ॥

**प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः ॥**
**परिभाषामिमामन्ये प्रक्षेपेऽप्यूचिरे यथा ।**
**कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः ॥ ६४ ॥**
**द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः ।**
**मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत् ॥ ६५ ॥**

क्षौद्रशर्करयोर्मानार्थं परिभाषामाह प्रक्षेप इत्यादि—क्वाथ्यात् क्वथनीयद्रव्यात् रास्नादे उत्तमपुरुषापेक्षया पलात् पादिक कर्ष इत्यर्थ । स्नेहे कल्कसमो मत इति 'कल्कस्तु स्नेहपादिक' इत्युक्ते कल्कसम पादिक इत्यर्थ । इमामिति वक्ष्यमाणाम् । कर्ष इत्यादावपि क्षौद्रादीना मात्रा चूर्णवदित्यतिदेशेन कर्ष एवार्थ. । अत एकार्थत्वादनुमतैव । एवं 'सितोपलागुडक्षारसामान्याशप्रकल्पना' इति वचनस्यापि 'प्रक्षेप पादिक क्वाथ्यात्' इति वचनेन सहैकवाक्यता ज्ञेया । तथा हि सितोपलादिकमत्रोपलक्षण तेन मध्वादिकमपि ज्ञेयम् । सामान्यमुत्सर्गसिद्ध पलत्रिकर्षार्द्धपलरूप यत् क्वाथ्यद्रव्यमान तस्याशेन चतुर्भागरूपेण प्रकल्पना येषा

ने तथा । तेनापि क्वाथ्यात् पादिक एव प्रक्षेपो ज्ञेय. । समानैषा प्रकल्पनेति पाठ-पक्षेऽपि समाना चूर्णसमाना कर्ष इत्यर्थः । तेन "मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्" इत्यनेन सहैकवाक्यता । यत्र क्वाथप्रधानता तत्र प्रक्षेप पादिक इत्यादि परिभाषा । एवं यत्र चूर्णापेक्षी द्रव तत्र कर्षश्चूर्णस्य कल्कस्येति परिभाषा । द्रव-शुक्त्या स लेढव्य इति,स लेढव्यश्चेत् तद द्रवशुक्त्या द्रवार्द्धपलेन इत्यर्थ । पातव्यश्चेत् तदा चतुर्द्रव चतुर्गुणद्रव. वृद्धवैद्यव्यवहारस्तु पञ्च षण्माषकेणेति ॥६४–६५॥

**विल्वादि पञ्चमूली च गुडूच्यामलके तथा ।**
**कुस्तुम्बुरुसमो ह्येष कषायो वातिके ज्वरे ॥ ६६ ॥**

विल्वादीत्यादि—कुस्तुम्बुरु धनीयकम् । सम इति समभागकृत कषाय इत्यर्थ , एतेन " भागेऽप्यनुक्ते समता विधेया " इति परिभाषार्थ सूचित । किंवा शम तालव्यादि. तेन नायं पाचनयोग किं तर्हि शमन इत्यर्थ । चन्द्रटेऽपि शमना-धिकारेऽय योग पठित । अत्र शमनलक्षण यथा " न शोधयति यद्दोषान् समान् नोदीरयत्यपि । समीकरोति च क्रुद्धास्तत् संशमनमुच्यते" इति। न शोधयति यद्दोषानिति दुष्टान् दोषान् न देहान्नि सारयति, एतेन शोधन व्यवच्छिनत्ति । समान् नोदीरयत्यपीति अदुष्टानतिवृद्ध्या न विमार्गान् करोति, अनेन पाचन व्यवच्छिनत्ति, पाचन हि दोषान् विमार्गीकुर्वन् पचति यथा अग्नि स्थाल्या जल-तण्डुलादीन् विमार्गीकुर्वन्नेव पचति, न कोपयतीति क्वचित् पाठ , स च न सङ्गत , नोदीरयतीत्यनेन पौनरुक्त्यात् शोधनव्यवच्छेदाय पदान्तर मृग्यम् ॥ ६६ ॥

**पिप्पलीशारिवाद्राक्षाशतपुष्पाहरेणुभिः ।**
**कृतः कषायः सगुडो हन्याच्छ्वसनजं ज्वरम् ॥ ६७ ॥**

पिप्पलीत्यादि—सुश्रुतस्य । यत्र शारिवैका पठ्यते तत्रानन्तमूलमेव, एवमन्यत्रापि ज्ञेयम् । श्वसनजमिति वातजम् । पिप्पलीशारिवेत्यादिकमारभ्य वातज्वरे ये वाच्यास्ते शमनयोगा एव बोध्या , यस्मात् सुश्रुते "अत संशमनीयानि कषायाणि निबोध मे" इत्यभिधाय एते योगा उक्ता ॥ ६७ ॥

**गुडूची शारिवा द्राक्षा शतपुष्पा पुनर्नवा ।**
**सगुडोऽयं कषाय स्याद्वातज्वरविनाशनः ॥ ६८ ॥**

गुडूचीत्यादि—तत्रान्तरे गुडूचीस्थाने पिप्पली पठ्यते ॥ ६८ ॥

**द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः सशारिवाः ।**

निष्क्वाथ्य सगुडं क्वाथं पिबेद्वातज्वरापहम् ॥ ६९ ॥

द्राक्षेत्यादि—सुश्रुतस्य । काश्मर्य्यं गाम्भारीफलम् ॥ ६९ ॥

शतावरीगुडूचीभ्यां स्वरसो यन्त्रपीडित' ।
गुडप्रगाढः शमयेत् सद्योऽनिलकृतं ज्वरम् ॥ ७० ॥

शतावरीत्यादि—अनयो स्वरस मम एव ग्राह्य ॥ ७० ॥

## पित्तज्वरचिकित्सा ।

कलिङ्गं कटुफलं मुस्तं पाठा तिक्तकरोहणी ।
पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ ७१ ॥
सक्षौद्रं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः कृतम् ॥ ७२ ॥

पैत्तिकज्वरे पाचनयोगमाह कलिङ्गमित्यादि—कलिङ्गम् इन्द्रयव । पाठा आकनादी मक्षौद्रमित्यादौ तिक्ता कटुकी ॥ ७१—७२ ॥

लोध्रोत्पलामृतापद्मशारिवाणां सशर्करः ।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ७३ ॥

लोध्रोत्पलेत्यादि—उत्पल नीलोत्पलम्, पद्म च पद्मपुष्पम् । "गुडूचीशारिवालोध्रकमलोत्पलशर्करा" इत्यायुर्वेदसारदर्शनात् । एक एवाय योग, सुश्रुते तु योगद्वय पठ्यते "गुडूचीपद्मलोध्राणा शारिवोत्पलयोस्तथा । शर्करामधुर क्वाथ शीत पित्तज्वरापह" इति । किंवा एतद्वचनमवादात् सुश्रुतेऽप्येकयोगो व्याख्येय । पर्पटोद्भव इत्यत्रापि सशर्कर इति योज्यम् ॥ ७३ ॥

पटोलयवनिष्क्वाथो मधुना मधुरीकृतः ।
तीव्रपित्तज्वरामर्दी पानात्तृड्दाहनाशनः ॥ ७४ ॥

पटोलेत्यादि स्पष्टम् ॥ ७४ ॥

दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् ।
जलं पिबेच्छर्करयावगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥७५॥

दुरालभेत्यादि—शर्करात्र प्रक्षेपविधिनैव, अन्ये त्ववगाढमिति वचनात् सम्यङ्माधुर्य्यादिका शर्करा देयेत्याहु ॥ ७५ ॥

त्रायमाणा च मधुकं पिप्पलीमूलमेव च ।
किराततिक्तकं मुस्तं मधूकं सविभीतकम् ।

सशर्करं पीतमेतत् पित्तज्वरविनाशनम् ॥ ७६ ॥

त्रायमाणेत्यादि—त्रायमाणा वलीयालता इति, मधुक यष्टिमधु, मधूक मधूकपुष्प पित्तहन्तृत्वात् ॥ ७६ ॥

मृद्वीका मधुकं निम्बं कटुका रोहिणी समा।
अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥७७॥

मृद्वीकेत्यादि—मृद्वीका द्राक्षा, कटुका रोहिणी कटुरोहिणी, अवश्यायस्थित शिशिरस्थित, न तु शीतकषायमत आह पाक्यमिति । एतेन पाक कृत्वैव शिशिरे स्थापयेत् न तु "द्रव्यादापोत्थिताद् तोये" इत्यादि शीतकषायविधिना ॥७७॥

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥ ७८ ॥

एक इत्यादि—चन्दन रक्तचन्दन, नागर कटुकमपि न पित्ते विरुध्यते मधुरपाकित्वात् ॥ ७८ ॥

विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम्।
दद्यात् सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥
पर्पटामृतधात्रीणां क्वाथः पित्तज्वरापहः ॥७९॥

विश्वेत्यादि—अम्बु वालक, घन मुस्तम्। पर्पटेत्यादि—अमृता गुडूची छान्दसत्वात् ह्रस्व ॥ ७९ ॥

द्राक्षारग्वधयोश्चापि काश्मर्य्यस्याथवा पुनः ॥ ८० ॥

द्राक्षेत्यादि—सुश्रुतस्य। आरग्वध शोनालु, अस्य च चरके फलिनीवर्गे सुश्रुते पत्रवर्गे पाठात् अन्त परिमार्जने फल, बहि परिमार्जने कुष्ठादौ पत्र ज्ञेयम्। तेनात्र फलमेव, एवं काश्मर्य्या अपि फलमेव। अत्र द्राक्षारग्वधयोश्चापीत्येको योगः। काश्मर्य्यस्याथवेति द्वितीय । इदञ्च योगद्वय " गुडूचीपद्मलोध्राणा शारिवोत्पलयोस्तथा । शर्करामधुरः क्वाथ शीत. पित्तज्वरापह " इत्यस्यानन्तर सुश्रुते पठ्यते, तेनात्र योगद्वये 'शर्करामधुरः क्वाथ ' इत्यनुवर्त्य टीकाकारैः शर्कराप्रक्षेपो विधेय इति व्याख्यातम् ॥ ८० ॥

द्राक्षाभयापर्पटकाब्दतिक्ता-
क्वाथं सशम्पाकफलं विदध्यात्।
प्रलापमूर्च्छाभ्रमदाहशोष-

तृष्णान्विते पित्तभवे ज्वरे तु॥८१॥

द्राक्षेत्यादि—ख्यातममितप्रभस्य शम्पाक शोनालु तस्य मज्जाभाग प्रक्षेप इति केचित्, अथ प्रचारी। अन्ये तु तत्फलै सह मिलित्वा क्वाथ इत्याहु। ८१॥

व्युषितं धन्याकजलं प्रातः पीतं सशर्करं पुंसाम्।
अन्तर्दाहं शमयत्यचिराद् दूरप्ररूढमपि॥८२॥

व्युषितमित्यादि—धन्याकक्काथ एव व्युषित कार्य्य इति काश्चित्, अन्ये तु द्रव्यादापोत्थितात् तोये प्रतप्ते निशि मस्थितात्। कषायो योऽभिनिर्याति स शीत समुदाहृत। षड्भि पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयो। आप्लुत भेषजपल रसाख्याया पलद्वयम्" इति शास्त्रयुक्त्या शीतकषायमित्याहु। वृद्ध-वैद्यास्तु भेषजार्द्धपले जलपलद्वयेन शीतकषाय कुर्वन्ति॥ ८२॥

पित्तज्वरेण तप्तस्य क्रिया शीतां समाचरेत्॥८३॥

पित्तज्वरेण तप्तस्येत्यादि—तप्तस्येत्यनेन वक्ष्यमाणा प्रदेहाद्या शीतलक्रिया जीर्णज्वर एव कर्त्तव्येति बोधयति। अत एवोक्त सुश्रुते "परिषेकान् प्रदेहाश्च स्नेहान् संशोधनानि च। स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषित। कषायगुरुभक्ष्याणि क्रोधादीनि तथैव च। मारवन्ति च भोज्यानि वर्जयेत् तरुणज्वरी"॥८३॥

विदारीं दाडिमं लोध्रं दधित्थं वीजपूरकम्।
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः॥८४॥

विदारीत्यादौ—दधित्थ कपित्थफल, दाडिमस्यापि फल, वीजपूरकस्य केशरम्॥ ८४॥

घृतभृष्टाम्लपिष्टा च धात्री लेपाच्च दाहनुत्।
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत्॥
वदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा॥८५॥

घृतेत्यादि—धात्री आमलकी, आदौ अम्लकाञ्जिकपिष्टा पश्चान्मनाग्घृत-भृष्टेत्यर्थ। अम्लपिष्टैरित्यादि—अम्ल काञ्जिकम्, पलाशतरुजैश्च पलाशनवपल्लवै दिहेत् लिम्पेत्। वदरीपल्लवोत्थेनेत्यादि—अत्रापि वदरीपल्लव काञ्जिकेन पिष्ट्वा प्रचुरकाञ्जिकेन गोलयित्वा मन्थानदण्डेन प्रमथ्य फेनग्रहण कर्त्तव्यम्। एव निम्बपत्रस्येत्याहु॥ ८५॥

कालेयचन्दनानन्तायष्टीवदरकाञ्जिकैः।
सघृतैः स्याच्छिरोलेपस्तृष्णादाहार्त्तिशान्तये ॥ ८६ ॥

कालेयेत्यादि—कालेय कालेयकाष्ठ, अनन्ता अनन्तमूल, बदर बदरफलम्। सघृतैरिति—घृतमत्र शतधौत प्रयच्छन्ति वृद्धा ॥ ८६ ॥

उत्तानसुप्तस्य गभीरताम्र-
कांस्यादिपात्रं प्रणिधाय नाभौ।
तत्राम्बुधारा बहुला पतन्ती
निहन्ति दाहं त्वरितं सुशीता ॥८७॥

उत्तानेत्यादि—सर्वत्रैव कफसबन्ध विना। यथा गात्रे अम्बुकणा न पतन्ति, तथा कार्य्यम् ॥ ८७ ॥

पीतकाञ्जिकवस्त्रावगुण्ठनं दाहनाशनम् ॥ ८८ ॥

पीतेत्यादि—परन्तु सम्यगालोडयित्वा क्रियते ॥ ८८ ॥

जिह्वातालुगलक्लोमशोषे मूर्ध्नि तु दापयेत्।
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ८९ ॥

जिह्वेत्यादि—सुश्रुतस्य। लेपोऽयम्। क्लोम पिपासास्थानम्, मूर्ध्नि शिरस्तालुमध्ये ॥ ८९ ॥

मातुलुङ्गशिफाविश्वब्राह्मीग्रन्थिकसम्भवम्।
कफज्वरेऽम्बु सक्षारं पाचनं वा कणादिकम् ॥ ९० ॥

मातुलुङ्गेत्यादि—शिफा मूल, ब्राह्मी ब्राह्मीशाक, ग्रन्थिक पिप्पलीमूलम्। सक्षारमिति मातुलुङ्गशिफाविशेषणमेव, न तु कणादिकमित्यस्य, यतस्तन्त्रान्तरे पिप्पल्यादिकन्तु पाचन कफजे ज्वरे इत्युक्तम्। न तु यवक्षारप्रक्षेप इति ॥९०॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम्।
मरिचैलाजमोदेन्द्रपाठारेणुकजीरकम् ॥
भार्गी महानिम्बफलं हिंगु रोहिणीसर्षपम्।
विडङ्गातिविषे मूर्वा चेत्ययं कीर्त्तितो गणः ॥
पिप्पल्यादिः कफहरः प्रतिश्यारोचकज्वरान्।
निहन्याद्दीपनो गुल्मशूलघ्नस्त्वामपाचनः ॥ ९१ ॥

कणादिकमिति सुश्रुतोक्तपिप्पल्यादिगणः अतस्तमेव गणं निर्दिशति पिप्प-लीत्यादि ॥ ६१ ॥

**कटुकं चित्रकं निम्बं हरिद्रातिविषे वचा ।**
**कुष्ठमिन्द्रयवं मूर्वा पटोलञ्चापि साधितम् ॥**
**पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥ ६२ ॥**

कटुकमित्यादि—तन्त्रान्तरस्य । सुश्रुते "हरिद्रा चित्रक निम्बमुशीरातिविषे वचा" इति दर्शनात् कटुकस्थाने उशीरमिति निश्चल पठति । कटुकेत्यादि वचान्त एको योग , कुष्ठादिपटोलान्तो द्वितीय । अतएव वृन्दे पूर्वार्द्धं परित्यज्य कुष्ठमित्यादि द्वितीयार्द्धमेव पठ्यते । डल्वणस्तु एकयोगत एव सुश्रुतटीकाया व्याख्या-तवान् । पटोलमिति पटोलपत्र, 'पटोलादेश्छदस्तथा' इति वचनात् । साधित-मित्यनन्तर कषायमिति शेष । मरिचमल्प मधु तु प्रचुर प्रदेयम् तीक्ष्णमृदुवीर्य्य-त्वादिति चक्रः ॥ ६२ ॥

**निम्बविश्वामृतादारु शटी भूनिम्बपौष्करम् ।**
**पिप्पल्यौ बृहती चेति क्वाथो हन्ति कफज्वरम् ॥ ६३ ॥**

निम्बेत्यादि—पौष्कर पुष्करमूल, तदभावे कुष्ठ, एव सर्वत्र । बृहती। कण्टकारी ॥ ६३ ॥

**सिन्दुवारदलक्वाथः सोषणः कफजे ज्वरे ।**
**जङ्घयोश्च बले क्षीणे कर्णे वा पिहिते पिबेत् ॥ ६४ ॥**

सिन्दुवारेत्यादि—आयुर्वेदसारस्य । सोषण इति सपिप्पलीक , अतएव कणाढ्य इति पठ्यते, अन्ये तु ऊषणशब्देन मरिच व्याख्यानयन्ति व्यव-हरन्ति च ॥ ६४ ॥

**आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ।**
**सर्वज्वरकफातङ्कभेदी दीपनपाचनः ॥ ६५ ॥**

आमलकीत्यादि—स्पष्टम् ॥ ६५ ॥

**त्रिफला पटोलवासाच्छिन्नरुहातिक्तरोहिणीषड्ग्रन्थाः ।**
**मधुना श्लेष्मसमुत्थे दशमूली वासकस्य वा क्वाथः ॥ ६६ ॥**

त्रिफलेत्यादि—छिन्नरुहा गुडूची । तिक्तरोहिणी कटुरोहिणी, षड्ग्रन्था वचा । अय योगो दशमूलीवासकक्वाथसाहचर्यात् क्वाथ एव, दशमूलीवासकाभ्यां

मिलिताभ्यां क्काथ । अत्रापि मधु प्रक्षिपन्ति ॥ ९६ ॥

मुस्तं वत्सकबीजानि त्रिफला कटुरोहिणी ।
परूषकाणि च क्काथः कफज्वरविनाशनः ॥ ९७ ॥

मुस्तमित्यादि—सुश्रुतस्य । वत्सक कुटज. ॥ ९७ ॥

## चातुर्भद्रावलेहिका

कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥९८॥

कट्फलमित्यादि—कट्फल स्वनामख्यात, शृङ्गी कर्कटशृङ्गी ॥९८॥

कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः ।
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः ॥९९॥

कर्ष इत्यादि—परिभाषा व्याख्याता पूर्वमेव, किन्तु इद कर्षमान उत्तमपुरुषमपेक्ष्य कथितम्, तेन मध्यजघन्यापेक्षया कर्षमानादपकर्षो ज्ञेयः । व्यवहारस्तु द्वित्रैश्चूर्णमाषकैरिति ॥९९॥

ऊर्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका ।
अधोरोगहरी या तु सा पूर्वं भोजनान्मता ॥१००॥

अस्योपयोगार्थं समयमाह ऊर्ध्वेत्यादि ॥१००॥

क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते ॥१०१॥

क्षौद्रोपकुल्येत्यादौ उपकुल्या पिप्पली ॥१०१॥

संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ।

द्वन्द्वजाना चिकित्सामाह संसृष्टमित्यादि—संसृष्ट मिलित वातहरादिभिः ॥१०२॥

## नवाङ्गः

विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥१०३॥

विश्वामृतेत्यादि—अमृता गुडूची, पञ्चमूली स्वल्पा पञ्चमूली ॥१०३॥

त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूपकैः ।
शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥१०४॥

त्रिफलेत्यादि—शाल्मलीवृक्षस्य मूलम् । राजवृक्षस्य शोणालुवृक्षस्य फल अन्त परिमार्जनत्वादिति प्रागेवोक्तम् । आटरूपको वासक ॥१०४॥

किराततिक्तममृतां द्राक्षामामलकीं शटीम् ।
निष्क्वाथ्य पित्तानिलजे क्वाथं तं सगुडं पिबेत् ॥१०५॥

किराततिक्तमित्यादि—सुश्रुतस्य । अमृता गुडूची ॥१०५॥

निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥१०६॥

निदिग्धिकेत्यादि—निदिग्धिका कण्टकारी । मसूरविदलैरिति व्रीहिमसूर-दलैरिति वकुल । अन्ये तु मसूरविदल श्यामालतामाहु, यद्यप्यस्याः पर्य्याये मसूराविदला पठ्यते, तथापि लिङ्गमशिष्ट लोकाश्रयत्वात् इति लिङ्गे अनादर । अस्याश्च द्रव्यगुणे ज्वरहन्तृत्वमस्ति, व्यवहारस्तु कचिदनया क्वचिद् व्रीहि-मसूरेणेति ॥१०६॥

## पञ्चभद्रम्

गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥१०७॥

पञ्चभद्रस्य पित्तकफहन्तृत्वमपि वोध्यम् । यदाह हारीत, "किरात पर्पट निम्ब गुडूचीं विश्वभेषजम् । पित्तश्लेष्मज्वरे कुर्य्यात् पाचन ज्वरनाशनम्" इति ॥१०७॥

मधुकं शारिवे द्राक्षा मधूकं चन्दनोत्पलम् ।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम् ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।
मधुलाजसितायुक्तं तत्पीतमुषितं निशि ॥
वातपित्तज्वरं दाहतृष्णामूर्च्छावमिभ्रमान् ।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः ॥१०८॥

मधुकमित्यादि—द्वे शारिवे श्यामलतानन्तमूले, मधूक मधूकपुष्पम्, उत्पल नीलोत्पलम्, काश्मरी गाम्भारी अस्या फल वृद्धोपदेशात् । पद्मस्य केशर किञ्जल्क

मृणालमुशीरम्। उत्तमवारिरपि तण्डुलोदके। एतत् सर्वं शीतकषायविधिना गृहीतम् ॥१०८॥

## अथ पित्तश्लेष्मज्वरचिकित्सा।

### पटोलादिः

पटोलं चन्दनं मूर्वा तिक्ता पाठामृतागणः।
पित्तश्लेष्मारुचिच्छर्दिज्वरकण्डूविषापहः ॥१०९॥

पित्तकफज्वरचिकित्सामाह पटोलमित्यादि—सुश्रुतस्य। गणोक्तत्वात् क्वाथकल्कादिकल्पनास्य बोध्या ॥१०९॥

### गुडूच्यादिः

गुडूची निम्बधन्याकं पद्मकं चन्दनानि च।
एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः ॥
हृल्लासारोचकच्छर्दिपिपासादाहनाशनः ॥११०॥

गुडूचीत्यादि—पद्मकं पद्मकाष्ठम्। यत्र पद्ममित्यस्ति तत्र प्रायः पद्मकेशरमेव गृह्यते। अत्र अत्यन्तदाहपिपासायां वृद्धाः शीतीकृत्य मधु प्रक्षिपन्ति। तच्च बहुधा दृष्टफलम् ॥ ११० ॥

### चातुर्भद्रकपाठासप्तकौ

किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके।
पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत् ॥ १११ ॥

किरातमित्यादि—"पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्" इति किरातादिभिः सह मिलित्वा पिबेत्, अतः पाठासप्तकत्वम्। मृणालमुशीरम्। पित्ताधिक इत्यत्र कफ इति शेषः। जतुकर्णेऽप्युक्तं 'भूनिम्ब-घन-गुडूची-शुण्ठ्यम्बु-वासकभार्ग्यं सयापाठा' इति ॥ १११ ॥

### कण्टकार्य्यादिः

कण्टकार्य्यमृताभार्गी नागरेन्द्रयवासकम्।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
दाहतृष्णारुचिच्छर्दिकासहृत्पार्श्वशूलनुत् ॥ ११२ ॥

कण्टकार्य्यादि—भार्गी ब्राह्मणयष्टी, इन्द्र इन्द्रयवः; यवासक दुरालभा । एष योग पित्तोत्तरे कफ इति केचित् ॥ ११२ ॥

सपत्रपुष्पवासाया रस. क्षौद्रसितायुतः ।
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम् ॥ ११३ ॥

सपत्रेत्यादि—रस स्वरस तस्य शुक्त्यार्द्ध मात्रापल प्रायेणोपयुज्यते । सितामधुनोस्तु प्रत्येक चतुर्थांशयोरत्र प्रक्षेप इति सास्रपित्त रक्तपित्त-सहितम् ॥ ११३ ॥

पटोलं पिचुमर्दश्च त्रिफला मधुकं बला ।
साधितोऽयं कषाय. स्यात् पित्तश्लेष्मोद्भवे ज्वरे ॥११४॥

पटोलमित्यादि पिचुमर्दो निम्ब ॥११४॥

## अमृताष्टकः

गुडूचीन्द्रयवारिष्टपटोलं कटुरोहिणी ।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः ।
हृल्लासारोचकच्छर्दितृष्णादाहनिवारणः ॥ ११५ ॥

अमृताष्टके अरिष्टो निम्ब ॥ ११५ ॥

पटोलयवधन्याकं मुद्गामलकचन्दनम् ।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ ११६ ॥

पटोलेत्यादि—स्पष्टम् ॥ ११६ ॥

## पञ्चतिक्तम्

क्षुद्रामृताभ्या सह नागरेण
सपौष्करञ्चैव किराततिक्तम् ।
पिबेत् कषायन्त्विह पञ्चतिक्तं
ज्वरं निहन्त्यष्टविधं समग्रम् ॥११७॥

क्षुद्रेत्यादि—क्षुद्रा कण्टकारी, नागरस्य कटुत्वेऽपि छत्रिणो गच्छन्तीति न्यायात् पञ्चतिक्तकमशा ॥ ११७ ॥

सशर्करामक्षमात्रां कटुकामुष्णवारिणा ।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ ११८ ॥

सशर्करामित्यादि—सुश्रुतस्य कल्पकल्पनेयम् । शर्कराकटुरोहिण्यो मिलित्वा समभागेन कर्ष । वैद्यप्रसारकेऽपि समभाग एवोक्त । चक्रस्तु शर्कराया उपसर्जनत्वात् कटुकायाश्च प्राधान्यात् कटुकाया द्वादश माषका सितायाश्चत्वार इति। तन्न, आयुर्वेदसारे 'सिता कटुकया युक्ता पीत्वा चोष्णेन वारिणा । जीर्णज्वर जयेच्छीघ्र कफपित्तकृत ज्वरम्' इत्यत्र सिताया एव प्राधान्येन निर्देशात् । तस्मात् 'भागेऽप्यनुक्ते समता विधेया' इति वचनात् समभागतैव युक्ता ॥ ११८ ॥

दीपनं कफविच्छेदि वातपित्तानुलोमनम् ।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ ११९ ॥

दीपनमित्यादि—अत्र धन्याकस्य दश माषका, पटोलस्य तु षण्माषका इति केचित् । तन्न, समभागबाधकाभावात् । शृत क्काथ, व्यवहारस्तु व्यञ्जनेनैव ॥११९॥

## वातश्लेष्मज्वरचिकित्सा ।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्मितान् ।
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥ १२० ॥

वातकफज्वरचिकित्सामाह कफवातेत्यादि—रूक्षनिर्मितानिति करीषबुसपाषाणबाष्पनिर्मितान् । यद्यपि वातश्लेष्मणि स्निग्धरूक्ष एव स्वेदो युक्त यदुक्त 'स्वेदोऽनिले स्निग्धरूक्षो वातश्लेष्मणि शस्यते' इति तथापि आमाशयगतस्यैव दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेद उक्त । उक्त हि 'आमाशयगते वाते रूक्षपूर्वं प्रशस्यते' ॥ १२० ॥

खर्परभृष्टपटस्थितकाञ्जिकासिक्तो हि वालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥१२१॥

तमेव रूक्षस्वेदमाह खर्पर इत्यादि—स्विद्यते अनेनेति स्वेद., वालुका एव स्वेद वालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषण सङ्गच्छते । वालुकाप्रकर इत्यपि पाठः ॥ १२१ ॥

मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम् ।
कफवातामशमनं पाचनं ज्वरनाशनम् ॥ १२२ ॥

मुस्तेत्यादि—प्रत्येकं कर्षं ॥ १२२ ॥

## पञ्चकोलः

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १२३ ॥

पिप्पलीत्यादि—योगोऽयं चूर्णरूपतया क्वथितोऽपि क्रियते। प्रत्येकं कोलप्रमाणयोगादस्य पञ्चकोल इति संज्ञा ज्ञेया ॥१२३॥

पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम् ॥ १२४ ॥

पिप्पलीभिः शृतमित्यादि—पिप्पल्याम्लीद्रव्यत्वात् क्वाथ्यान्तरवत् अस्य अर्द्धपलादिमानेन क्वाथो न युज्यते तेन कर्षमेकमल्पं वा गृहीत्वा कषायं कार्यं. प्रदले श्लेष्मणि वाते च योज्यः । वृद्धास्तु क्वथितं व्यवहरन्ति, अष्टमांशकं गृहीत्वा षडङ्गवदर्द्धशृततामावस्थायामपि कुर्वन्ति ॥ १२४ ॥

आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥१२५॥

आरग्वधेत्यादि—आरग्वधः शोणालुफलं ग्रन्थिकं पिप्पलीमूलं, तिक्ता कटुकी। दीपनपाचनश्चेत्यत्र 'दीपनभेदनोऽसौ' इत्यपि पाठः ॥१२५॥

## क्षुद्रादिः कण्टकार्य्यादिर्वा

क्षुद्रामृतानागरपुष्कराह्वैः
कृतः कषायः कफमारुतोद्भवे।
सश्वासकासारुचिपार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवे च शस्यते ॥१२६॥

क्षुद्रेत्यादि—क्षुद्रा कण्टकारी ॥ १२६ ॥

दशमूलीरसः पेयः कणायुक्तः कफानिले ।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १२७ ॥

दशमूलीत्यादि—रस क्काथ । आविपाके दोषाणामीषत्पाके, तेन पाचनत्वमस्य ॥ १२७ ॥

मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा ।
कफवातारुचिच्छर्दिदाहशोषज्वरापहः ॥ १२८ ॥

मुस्तमित्यादि—क्काथेन ॥ १२८ ॥

दारुपर्पटभार्ग्यब्दवचाधान्यककट्फलैः ।
साभयाविश्वपूतीकैः क्काथो हिंगुमधूत्कटः ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान् ।
कासश्वासप्रसेकांश्च हन्यात्तरुमिवाशनिः ॥
मात्रा क्षौद्रघृतादीनां स्नेहक्काथेषु चूर्णवत् ।
माषिकं हिंगुसिन्धूत्थजरणाद्यास्तु शाणिकाः ॥१२९॥

दार्वित्यादि—पूतीको लाटाकरञ्ज इति निश्चल । किन्तु भूतीक इति पाठो वहुपुस्तकेषु दृश्यते स च टीकया न व्याख्यात. । भूतीकश्च यमानी । हिंगुक्षौद्रयो प्रक्षेपार्थं परिभाषामाह मात्रेत्यादि—चूर्णवदिति कर्ष इत्यर्थ । उत्तमस्य पल मात्रेति पक्षे इय मात्रा ज्ञेया, माषिक हिङ्ग्विति च्छेद । आद्यशब्देन सैन्धव-सौवर्चल-मरिचादय ॥ १२९ ॥

मातुलुङ्गफलकेशरो धृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जडतामरोचकम् ॥१३०॥

मातुलुङ्गेत्यादि—सिन्धुजन्म सैन्धवम् ॥ १३० ॥

## सन्निपाते—

लङ्घनं बालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥
सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥१३१॥

सन्निपातज्वरचिकित्सामाह लङ्घनमित्यादि—यद्यपि सान्निपातज्वरस्त्रिदोषारब्ध , तथापि आमाशयस्य कफस्थानत्वात्, स्थानित्वेन च कफ एव बली, अतस्तत्प्रत्यनीकचिकित्सा प्रथमतो विधेया । अत. कफप्रत्यनीकमेव लङ्घनादिक प्रथम

कर्त्तव्यमित्याह लङ्घनमित्यादि। अतएवोक्तमन्यत्र 'श्लेष्मनिग्रहमेवादौ कुर्य्याद् व्याधौ त्रिदोषजे' इति, यत् पुनस्तन्त्रान्तरे 'शमयेत् पित्तमेवादौ ज्वरेषु समवायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः।' तथा 'वातस्यानु जयेत् पित्तं पित्तस्यानु जयेत् कफम्। त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तमः' इत्युक्तं तत् पुनरवस्थाविशेषे बोध्यम्। तथाहि सामज्वरे कफमेवादितः प्रतिकुर्य्यात्, आमपाकान्ते पित्तमेवादौ, चिरजे मारुतमेवादाविति। अत्रार्थे तन्त्रान्तरं 'ज्वरे त्रिदोषजे सामे शमयेत् कफमादितः। पाकान्तमागते पित्तं चिरजे विषमेऽनिलम्' इति। अन्ये पुनः 'वातस्यानु जयेत् पित्तम्' इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वातादीनां विभिन्नमञ्चयप्रकोपादीनां युगपदवस्थानाभावात् कथं सम्भूय सान्निपातिकव्याध्यारम्भकत्वम्? अथ मन्यते त्रिदोषकरनिदानवशेन प्रकोपादेषां युगपदुपस्थितिरिति, तदपि न मनोरमं यतस्तथाविधनिदानोपसेवनेऽपि दोषाणां विपरीतैर्गुणैः परस्परोपघातात् युगपत्प्रकोपस्य अनुपपत्तेः। अत्रोच्यते न खलु दोषाणां निखिल एव गुणो विपरीतः, समानस्यापि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन दोषाणामन्योन्यप्रकोपस्यापि सम्भवात्। तथाहि रौक्ष्य लाघवाधैर्वायुस्तैजसं पित्तं प्रकोपयति, पित्तमप्येवमेव वायुम्, वायुरपि शैत्यात् कफम्, कफोऽपि तथा वायुम्, पित्तञ्च द्रवत्वेन कफम्, कफोऽपि तथा पित्तमिति, गुणसाम्यम्। न वाच्यम्, विपरीतस्तु गुणो भूयान् अल्पं समानगुणमभिभूय प्रशमयत्येव, कुतो न करोत्येव यतो दूष्यापेक्षया त्रिदोषकरद्रव्यप्रभावाच्च दोषगुणा दूषयन्ति परं न शमयन्तीति। दृढवलस्त्वाह 'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वात् घोरं विषमहीनिव' इति। अस्यार्थस्तु अस्मदीयचरकतत्त्वप्रदीपिकायामनुमन्धेय॥ १३१॥

**त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा।**
**लङ्घनं सन्निपातेषु कुर्य्याद्वारोग्यदर्शनात्॥**
**दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता।**
**न हि दोषक्षये कश्चित् सहते लङ्घनादिकम्॥१३२॥**

लङ्घनं सूचयित्वा दोषभेदेन तदवधिमाह त्रिरात्रमित्यादि—त्रिरात्रं लङ्घनविधिविकल्पो यथाक्रममुल्वणवाताद्यपेक्षया ज्ञेयः। कुर्य्याद्वारोग्यदर्शनादित्यभिधानं समवृद्धदोषत्रयापेक्षया बलसम्पत्तौ च ज्ञेयम्। एतावन्तं कालं कथं लङ्घनं कर्त्तुं शक्यमित्याशङ्क्याह दोषाणामित्यादि—'लङ्घनादिकम्' इत्यत्र आदिशब्दात्

वालुकास्वेदादीनामपि ग्रहणम् ॥ १३२ ॥

निष्ठीवनमाह—

आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम् ।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः ॥
तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात् ।
लीनोऽप्याकृष्यते शुष्को लाघवश्चास्य जायते ॥
पर्वभेदोऽङ्गमर्दश्च मूर्च्छाकासगलामयाः ।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ॥
सकृद्द्वित्रिचतुःकुर्य्यात् दृष्ट्वा दोषबलाबलम् ।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम् ॥ १३३ ॥

निष्ठीवनमाह आर्द्रकेत्यादि—आर्द्रकस्वरसमुष्णं कृत्वा सैन्धवादिचूर्णमनुरूप दत्वा निष्ठीवनमुपदिशन्ति वृद्धा ॥ १३३ ॥

मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।
अन्यद्वा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत् ॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते ।
शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति ॥ १३४ ॥

नस्यमाह मातुलुङ्गेत्यादि—लवणत्रय सैन्धवसौवर्चल विडम् । सिद्धिविहितमिति । अस्य योगस्य भालुकितन्त्रोक्तत्वात् भालुकितन्त्रस्यैव सिद्धिस्थाने ज्ञेयम् । ॥ १३४ ॥

## मधूकसारादिः

मधूकसारसिन्धूत्थवचोषणकणाः समाः ।
श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम् ॥ १३५ ॥

मधूकसारेत्यादि—मधूक फलविशेषस्तस्य सार फलास्थि, ऊषण मरिचम् । अम्भसा कोष्णेन ॥ १३५ ॥

सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च ।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ १३६ ॥

सैन्धवमित्यादि—श्वेतमरिच शोभाञ्जनबीजम् ॥ १३६ ॥

अञ्जनमाह—

शिरीषवीजगोमूत्रकृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात् प्रवोधाय सरसोनशिलावचैः ॥ १३७ ॥

अञ्जनमाह शिरीषेत्यादि—शिला मनःशिला । सरसोनेत्यादिविशेषाद्देकी योग, पृथक्पाठात् पृथग्योगोऽपि बोध्यः । यदुक्तमायुर्वेदसारे 'शृङ्गाचवीज-गोमूत्र-कणा-मरिच-सैन्धवैः । शिलावचारसोनैर्वा अञ्जनं स्यात् प्रबोधनम्' इति ॥१३७॥

## अष्टाङ्गावलेहिका

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
श्लक्ष्णचूर्णीकृतञ्चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति ॥
ऊर्ध्वगश्लेष्महरणे उष्णे स्वेदादिकर्मणि ।
विरोध्युष्णे मधु त्यक्त्वा कार्य्यैषार्द्रकजै रसैः ॥१३८॥

अवलेहमाह कट्फलमित्यादि—यासो दुरालभा, कारवी कृष्णजीरकम् । सन्निपाते स्वेदस्य सर्वदा हितत्वेन अग्निसम्बन्धसमुद्भूत देहस्य उष्णत्वम् । मधु च उष्णे विरुध्यते, अतस्तत्र मधु त्यक्त्वा आर्द्रकस्वरसेनावलेह कार्य्य इत्याह उर्ध्वेग इत्यादि । एकमुष्णे इति पद स्वेदादिविशेषणम् अपरञ्चोपपत्त्यर्थम् । यस्मात् उष्णविरोधि मधु ततो मधु त्यक्त्वा इत्यर्थः । ननु (' क्रियायास्तु गुणालाभे क्रियामन्या प्रयोजयेत् । पूर्वस्या शान्तवेगाया न क्रियासङ्करो हित ।') इत्यनेन सुश्रुते क्रियासङ्करो निषिद्ध, तत् कथ नस्यनिष्ठीवनादीना युगपदेव सन्निपातज्वरे विधानम् ? अत्रोच्यते, क्रिया-सङ्करो ह्यनेकक्रियामेलक, तस्य च दूषकत्व न सङ्करत्वमात्रेण, किं तर्हि अति-मात्रत्वेन अग्नि-मान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि निष्फलतया च । एतद्दोषद्वयमन्त परिमार्जन एव सम्भवति न पुनर्बहि परिमार्जने नस्यनिष्ठीवनादौ । एतदभिसन्धाय वृन्दोऽपि समाधानमुक्तवान् यथा (' क्रियाभिस्तुल्यरूपाभि क्रियासाङ्कर्य्यमिष्यते । भिन्नरूपतया यास्तु ताः कुर्वन्ति न दूषणम् ।') इति । तुल्यरूपता चात्रान्तःपरिमार्जनत्वेनैव ज्ञेया । तेनायमर्थः एकस्मिन् अन्त परिमार्जने उपयुक्ते यद्यपरमन्त परिमार्जनमुपयुज्यते तेनैव क्रियासाङ्कर्य्यस्य

उक्तरीत्या दूषकत्वं न यदि परिमार्जने नस्यादाविति । कषायादिभेषजोपयोगानन्तरं पुनरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव तथापि क्वाथ्याङ्गतया न विरोधः । तदङ्गता चानादिवृद्धव्यवहारात् दोषानुपलम्भाच्च बोध्यम् । किं वा क्रियासाङ्कर्य्यस्य दोषस्याल्पतया कण्ठरोधादिवलवदपायप्रशमकतया च निषिद्धमप्यवलेहादिकमवस्थाविशेषे अगीक्रियते । यथा पीतविषे बालादौ वमनम् । अन्ये तु कल्पनया तुल्यरूपतां व्याख्याय कषायावलेहयोर्युगपदुपयोगेऽपि कल्पनाभेदान्न साकर्य्यमित्याहु । तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करमात्रस्यैव दोषत्वमुक्तम् । तत्र चातुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति केवलं वृन्देनैव कषायनस्यादीनां सन्निपाते युगपदुपयुज्यमानानामविरोधार्थम् 'क्रियाभिस्तुल्यरूपाभिरिति वचनं निबद्धम् । तच्च क्रियाद्वयं कल्पनया तुल्यरूपमतुल्यरूपं वा भवतु, उभयथाप्यतिमात्रादिनाग्निमान्द्यादिहेतुतया निषिद्धमेव । तेनाभिन्नकल्पनात्मकेऽपि भेषजद्वये युगपद्भुक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं दूषकताबीजमस्त्येवेति । तस्मात् अन्तःपरिमार्जनत्वेनैव तुल्यरूपत्वम्, बहिःपरिमार्जने च भिन्नरूपत्वं व्याख्याय कषायनस्याञ्जनादिषु क्रियासाकर्य्यदोषत्वं परिहरणीयम् ॥१३८॥

## पञ्चमुष्टिः

यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः ।
एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ १३९ ॥

यवेत्यादि—प्रत्येकं यवादीनां मुष्टिमन्तर्नखम्, न तु पलं द्रव्यबाहुल्यात् । अयमेव पद्यः प्रचारी । एकैकं द्रव्यमाहृत्य समुदितानामेषां मिलित्वा पलमात्रं पचेदित्यन्ये । चक्र. पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पलमानत्वेऽपि न दोष इत्याह । अस्यैव योगस्य धान्यशुण्ठीयोगात् सप्तमुष्टिक इत्यपि नाम । यदुक्तं 'यवकोलकुलत्थैश्च मुद्गमूलकशुण्ठकैः । धन्याकविश्वसंयुक्तैर्यूषः स्यात् सप्तमुष्टिकः' ॥ १३९ ॥

## चातुर्भद्रकपञ्चमूलकम्

पञ्चमूलीकिराताादिर्गणो योज्यस्त्रिदोषजे ।

पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ १४० ॥

पञ्चमूलीत्यादि—वातपित्तोक्तनवाङ्गयोग एवायम् । अत्र पुनर्मधुयोगात् पित्तोत्कटत्रिदोषहन्तृत्वम्, पिप्पलीयोगाच्च कफोल्वणत्रिदोषहन्तृत्वमस्य ज्ञेयम । अत्र कनीयस्या एव पञ्चमूल्या व्यवहार । अन्ये पुन श्लेष्मोल्वणे महतीं पञ्चमूलीमाहु ॥ १४० ॥

## दशमूलम्

बिल्वश्योणाकगाम्भारीपाटलागणिकारिका ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥
शालपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलन्तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥ १४१ ॥

दशमूलस्य उक्तत्वादुक्तव्याख्यादयानुरोधाच्च पञ्चमूलद्वयमाह बिल्वेत्यादि—महातरुसम्भवत्वात् बिल्वादिपञ्चमूलस्य महत्व स्वल्पतरुसम्भवत्वाच्च शालपर्ण्यादीनामल्पत्व ज्ञेयम् । सुश्रुते तु गोक्षुरस्थाने एरण्डमूल पठ्यते, चरके तु गोक्षुर इति । तेन सुश्रुतप्रयोगेषु एरण्डमूलेन, चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति। शालिहोत्रादावप्येरण्डमूलेनैवेति ॥ १४१ ॥

## चतुर्दशाङ्गः

चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्ध्यर्थिने वा त्रिवृताविमिश्रः ॥१४२॥

चिरज्वर इत्यादि—वातकफोल्वण इत्युभयत्रापि सम्बध्यते । शुद्ध्यर्थिने वा त्रिवृताविमिश्र इति मलविबन्धे सति शोधनार्थं त्रिचतुरत्रिवृच्चूर्णमाषकाणां प्रक्षेप इत्याहु ॥ १४२ ॥

## वातश्लेष्महरोऽष्टादशाङ्गः

दशमूली शटी शृङ्गी पौष्करं सदुरालभम्।
भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहरः॥ १४३॥

दशमूलीत्यादि—स्पष्टम्॥ १४३॥

## पित्तश्लेष्महरोऽष्टादशाङ्गः

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रवीजधानिकेभकणाकषायः।
तन्द्राप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति॥

## मुस्ताद्यगणः

मुस्तपर्पटकोशीरदेवदारुमहौषधम्।
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत्॥
किराततिक्तकं पाठा वला कटुकरोहिणी।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत्।
पित्तोत्तरे सन्निपाते हितश्चोक्तं मनीषिभिः।
मन्यास्तम्भे ऊरुघाते उरःपार्श्वशिरोग्रहे॥ १४४॥

भूनिम्बेत्यादि—इन्द्रवीजम् इन्द्रयव। मुस्तेत्यादि—नीली नीलबुह्वा, कम्पिल्लक गुण्डारोचनी। वलास्थाने वचेति न पाठ, आयुर्वेदसारादौ वला-पाठात्॥ १४४॥

## शट्यादिगणः

शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा।
गुडूची नागरं पाठा किरातं कटुरोहिणी॥

एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासे तन्द्र्याञ्च शस्यते ॥१४५॥

शटीत्यादि—किरातस्थाने केचित् पटोल पठन्ति, तन्न, हारीतजतुकर्णचन्द्राट विदेहेषु किरातस्यैव पाठादिति ॥ १४५ ॥

## बृहत्यादिगणः

बृहत्यौ पौष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिगणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु देयः सोपद्रवेषु च ॥ १४६ ॥

बृहत्यावित्यादि—कासादिष्वित्यत्र आदिशब्दग्रहणात् शट्याद्युक्तहृद्ग्रहादीना ग्रहणम् । चरकेऽपि शट्याद्यनन्तरमस्य योगस्य पाठात् ॥ १४६ ॥

भार्गीं पुष्करमूलञ्च रास्नां विल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीश्चाप्सु साधयेत् ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम् ।
कासश्वासाग्निमान्द्यत्वं तन्द्राञ्च विनिवर्त्तयेत् ॥
द्विपञ्चमूली षड्ग्रन्था विश्वगृध्रनखीद्वयम् ।
कफवातहरः क्वाथः सन्निपातहरः पर. ॥ १४७ ॥

भार्गीमित्यादि—भेलस्य । विल्व विल्वमूल यौगिकमस्तम्भकत्वात् । दशमूलञ्चेति पाठपक्षेऽपि भागद्वय तस्य ग्राह्य, किन्तु भेले 'नागरञ्च मृणालञ्च पिप्पलीं च' इति पाठो दृश्यते एव चन्द्राटेऽपि, अत एकभागस्तस्येति युक्तम् । द्विपञ्चमूलीत्यादि—द्विपञ्चमूली दशमूली, षड्ग्रन्था वचा, गृध्रनखीद्वय कानागरकुटकराणिभेदात् रक्तश्वेतपुष्पभेदाद्वा ॥ १४७ ॥

## अभिन्यासज्वरचिकित्सा

कारवीपुष्करैरण्डत्रायन्तीनागरामृताः ।
दशमूलीशटीशृङ्गीयासभार्गीपुनर्नवाः ॥
तुल्या मूत्रेण निष्क्वाथ्य पीताः स्रोतोविशोधनाः ।
अभिन्यासज्वरं घोरमाशु घ्नन्ति समुद्धतम् ॥१४८॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह कारवीत्यादि—कारवी कृष्ण-जीरकम्, त्रायन्ती त्रायमाणा, मूत्रेण गोमूत्रेण ॥१४८॥

मातुलुङ्गाश्मभिद्बिल्वव्याघ्रीपाठोरुबूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत् ॥१४९॥

मातुलुङ्गेत्यादि—अश्मभित् पाषाणभेदी, बिल्वस्य मूल, लवण सैन्धव, मूत्र गोमूत्रम्। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथ पेय। गतप्रयोगदर्शनात् गोमूत्रेण क्वाथ प्रक्षेपञ्च लवणमित्येके ॥१४९॥

निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम् ॥१५०॥

रुग्विनिश्चये अभिन्यासलक्षणस्य अनुक्तत्वात् तल्लक्षणमिहैवाह निद्रोपेत-मित्यादि—सन्निपातज्वरमेव निद्रोपेतमभिन्यास विद्यात्। क्षीण विद्याद्धतौजसमिति क्षीणमिति क्षीणधातुगतम्। अभिन्यासज्वरमेव क्षीणधातुगत हतौजस विद्यात्। उक्त हि सुश्रुते 'अभिन्यासन्तु त प्राहुर्हतौजसमथापरे। सन्निपातज्वर कृच्छ्रमसाध्य-मपरे जगु' इति ॥१५०॥

कण्ठरोधकफश्वासहिक्कासंन्यासपीडितः।
मातुलुङ्गार्द्रकरसं दशमूल्यम्भसा पिबेत् ॥१५१॥

कण्ठरोधेत्यादि—दशमूलक्वाथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थ ॥१५१॥

व्योषाब्दत्रिफलातिक्तापटोलारिष्टवासकैः।
सभूनिम्बामृतायासैस्त्रिदोषज्वरनुज्जलम् ॥१५२॥

व्योषेत्यादि—अरिष्टो निम्ब, तस्य त्वक्। जल क्वाथ ॥१५२॥

त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥१५३॥

त्रिवृदित्यादि—विशाला गोरक्षकर्कटी, यवक्षार प्रक्षेप्य ॥१५३॥

स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः।
घर्षेज्जिह्वां जडां सिन्धुत्र्यूषणैः साम्लवेतसैः॥
उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया।
लेपयेत् सघृतश्चास्यं सन्निपातात्मके ज्वरे ॥१५४॥

स्वेदोद्गम इत्यादि—सन्निपातात्मके ज्वर इत्यन्त स्पष्टम् ॥१५४॥

काकजङ्घाजटा निद्रां जनयेच्छिरसि स्थिता ॥१५५॥

काकजङ्घा इत्यादि—जटा मूलम् ॥१५५॥

सन्निपाते प्रकम्पन्तं प्रलपन्त न बृंहयेत् ।
तृष्णादाहाभिभूतेऽपि न दद्याच्छीतल जलम् ॥१५६॥

सन्निपात इत्यादि—स्पष्टम् ॥१५६॥

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥
रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत् ।
प्रदेहै' कफपित्तघ्नैर्वमनै. कवलग्रहैः ॥
गैरिकं पाशुजं शुण्ठीवचाकटुककाञ्जिकैः ।
कर्णशोथहरो लेपः सन्निपातज्वरे भृशम् ॥१५७॥

सन्निपातज्वरस्यान्ते शेषे सन्निपातज्वरे वा गते इत्यर्थ । रक्तावसेचनैरिति बहुवचनात् रक्तावसेचन नैरन्तर्य्येण बोध्यम् । जतुकर्णे 'शश्वद्रक्तस्य मोक्षणम्' इत्युक्तत्वात् । सर्पिरत्र पञ्चतिक्तत्रिफलाघृतादि । चकारात् वातकफघ्नलेहोऽपि बोध्य । यदुक्त तत्रैव 'लेहाश्च कफवातघ्ना· कार्य्या मकवडग्रहा । त्रिफलाघृतपान वा बल ज्ञात्वा समाचरेत्' इति ॥१५७॥

कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः ।
सुखोष्णैर्लेपनं कार्य्यं कर्णमूले मुहुर्मुहु' ॥१५८॥

कुलत्थेति स्पष्टम् । दशमूलेनापि सुखोष्णेनात्र लेपमुपदिशन्ति ॥१५८॥

## जीर्णज्वरचिकित्सा

### निदिग्धिकादिः

निदिग्धकानागरकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूल-
श्वासाग्निमान्द्यार्दितपीनसेषु ॥
हन्त्यूर्ध्वगामयं प्रायः सायं तेनोपयुज्यते ॥१५९॥

जीर्णज्वरचिकित्सामाह निदिग्धिकेत्यादि—निदिग्धिका कण्टकारी, वातकफे

क्रियते, पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रक्षिपन्ति वृद्धा । पिप्पलीचूर्णस्य माषकद्वय प्रक्षेप्य प्रचारादिति कश्चित् । पुराणप्रतिश्यायेऽप्यय योगो दृष्टफल । अस्यैव योगस्य सोपपत्तिक वैद्यव्यवहारासिद्धमुपयोगकालमाह हन्तीत्यादि—किन्तु विन्दुमोर प्रात समयोऽप्युक्त । यथा 'आमकामविनाशाय मन्दाग्नेर्दीपनाय च । अरुचेश्च निवृत्त्यर्थं प्रातरुत्थाय त पिबेत्' इति । तथा वृन्दोऽप्याह 'तच्च रात्रिज्वरे सायमन्यत्र प्रातरिष्यते' इति ॥१५९॥

**पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः ।**
**जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥**
**कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् ।**
**जीर्णज्वरेऽग्निसादे च शस्यते गुडपिप्पली ॥१६०॥**

पिप्पलीत्यादि—छिन्नरुहा गुडूची, पञ्चमूली च महती । योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेप । पित्तानुबन्धे मधु उपदिशन्ति वृद्धा । इदञ्च योगद्वय प्राय सायमुपयुज्यते । कासेत्यादौ गुडपिप्पल्यो. प्रत्येक माषकत्रयेण व्यवहरन्ति वृद्धा ॥ १६० ॥

## विषमज्वरचिकित्सा

**कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।**
**पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥**
**निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ ।**
**किराततिक्तममृता चन्दनं विश्वभेषजम् ॥**
**गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः ।**
**कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ।**
**सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥१६१॥**

विषमज्वरचिकित्सामाह कलिङ्गका इत्यादि—वाग्भटस्य । एते पञ्च योगा पञ्चसु सन्तत–सततान्येद्युष्क–तृतीयक–चतुर्थकेषु यथासख्य ज्ञेया: । अन्ये तु सर्वे एव योगा सर्वत्र इत्याहु । तत्र यथासख्यमेव युक्त सततोल्लेखेन पटोलादियोगस्य तथा निम्बादेश्चान्येद्युष्कोल्लेखेन, गुडूच्यादेश्च चतुर्थकोल्लेखेन चारपाणौ दृष्टत्वात्। सन्ततं सततान्येद्युस्तृतीयकचतुर्थकानिति पाठस्तु वाग्भटे चरके नास्ति वृन्देऽपि नास्ति । तेनायमर्द्धश्लोकः सग्रहे केनापि प्रमादात् लिखित. ॥१६१॥

गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ।
दीर्घपत्रककर्णाख्यनेत्रं खादिरसंयुतम् ॥
ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम् ।
गुडूचीमुस्तधात्रीणां कषायं वा समाक्षिकम् ॥१६२॥

गुडप्रगाढामित्यादि—सुश्रुतस्य । त्रिफलामित्यत्र क्वथितामिति शेष इति डल्वण । गुडोऽत्र प्रक्षेप्य । दीर्घपत्रकेत्यादि । कर्णाख्य काणाखोड इति ख्यात । तस्य विशेषण दीर्घपत्रेति । नेत्र मूल तदपि शुष्कदेशजात ग्राह्यमुपदिशन्ति वृद्धा । गुडूचीत्यादि—सुश्रुतस्य अय योगो यद्यपि पूर्वं चतुर्थके पठित, तथापि मधुयोगात् विषमज्वरमात्रहन्तृत्वमप्यस्य बोध्यम् । डल्वणस्तु यद्यपि योगोऽय विषमज्वरे पठित तथापि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थक एवाय बोध्य इत्याह ॥१६२॥

## मुस्तकादिः

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥
महौषधामृतामुस्तचन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ।
वासाधात्रीस्थिरादारुपथ्यानागरसाधितः ॥
सितामधुयुतः क्वाथश्चातुर्थकनिवारणः ।
मधुना सर्वज्वरनुच्छेफालीदलजो रसः ॥१६३॥

मुस्तादिमहौषधादी स्पष्टौ । वासादौ वासास्थाने चन्द्राटे पाठा पठ्यते, व्यवहारस्तु वासयैव । स्थिरा शालपर्णी । पथ्या हरीतकी । मधुनेत्यादौ सर्वज्वरनुत् विषमाविषमज्वरनुत् ॥१६३॥

अजाजी गुडसंयुक्ता विषमज्वरनाशिनी ।
अग्निसादं जयेत् सम्यग्वातरोगांश्च नाशयेत् ॥१६४॥

अजाजीत्यादि—मनाग्भृष्ट कृष्णजीरकमिति चक्र । सितजीरकमित्यन्ये ॥ १६४ ॥

रसोनकल्कं तिलतैलमिश्रं
योऽश्नाति नित्यं विषमज्वरार्त्तः ।

विमुच्यते सोऽप्यचिराज्ज्वरेण
वातामयैश्चापि सुघोररूपैः॥१६५॥

रसोनकल्कमित्यादि—भक्षात् पूर्वं कर्त्तव्य, यदाह चरक. ‘रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्’ इति॥ १६५॥

प्रातः प्रातः ससर्पिर्वा रसोनमुपयोजयेत्।
पिप्पलीवर्द्धमानं वा पिवेत् क्षीररसाशनः।
षट्पलं वा पिवेत् सर्पिः पथ्यां वा मधुना लिहेत्॥१६६॥

प्रातरित्यादि—पिप्पल्यादियोगौ मौक्तौ। षट्पल सर्पिरत्रैव वक्ष्यमाणम्॥ १६६॥

पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु।
सम्मूर्च्छ्य पाययेदेतद् विषमज्वरनाशनम्॥ १६७॥

पय इत्यादि—दुग्धं शृतं बोध्यम्। विदारीक्षुरसमिति इक्षुरसस्थाने स्वरस इति न पाठः, उक्तं हि हारीते ‘विदारीक्षुरसः सर्पिर्मधुतैलशृतं पय। पिवेच्चातुर्थकश्वासकासवातज्वरापहम्’ इति। अन्ये तु विदारीस्वरसो विषमज्वरनाशे, चातुर्थे इक्षुरसात् योगान्तरमाहुः॥ १६७॥

पिप्पलीशर्कराक्षौद्रं घृतं क्षीरं यथावलम्।
खजेन मथितं पेयं विषमज्वरनाशनम्॥ १६८॥

पिप्पल्यादि—दुग्धं शृतं बोध्यम्॥ १६८॥

पयसा वृषदंशस्य शकृद्वेगागमे पिवेत्।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम्॥ १६९॥

पयसेत्यादि—वृषदंशो विडाल। वृषस्यापि शकृदित्यर्थ.॥ १६९॥

नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम्।
पिवेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः॥ १७०॥

विषमज्वरे विरेकार्थमाह नीलिनीत्यादि—नीलिनी नीलवृक्षा। आगमने आगमनदिवसे॥ १७०॥

सुरां समण्डां पानार्थे भक्ष्यार्थे चरणायुधान्।
तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे॥ १७१॥

सुरामित्यादि—चरकस्य स्पष्टम् ॥ १७१ ॥

अम्लोटजसहस्रेण दलेन सुकृतां पिबेत् ।
पेयां घृतप्लुतां जन्तुश्चातुर्थकहरीं ऽयहम् ॥ १७२ ॥

अम्लोटजश्चाङ्गेरी ॥ १७२ ॥

सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिला ।
नेत्राञ्जनं तैलपिष्टं विषमज्वरनाशनम् ॥
व्याघ्रीवसा हिंगुसमा नस्यं तद्वत् ससैन्धवा ॥ १७३ ॥

सैन्धवमित्यादि—चरकस्य । अञ्जनशब्द अभ्यञ्जनेऽपि वर्त्तते, तन्निरासाय नेत्रपदम् । व्याघ्रीत्यादौ स्त्रीलिङ्गनिर्देशात् लिङ्गमेव प्रयोजक न तु जाति ॥१७३॥

कृष्णाम्बरदृढावद्धगुग्गुलूलूकपुच्छजः ।
धूपश्चातुर्थकं हन्ति तमः सूर्य्य इवोदित ॥ १७४ ॥

कृष्णाम्बरेत्यादि—अम्बरस्य कृष्णत्व भृङ्गराजस्वरसादिभि, उलूक पेचक ॥ १७४ ॥

शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः ।
नस्यं सर्पिः समायोगाच्चातुर्थकज्वरं जयेत् ॥
नस्यं चातुर्थकं हन्ति रसो वागस्त्यपत्रज ॥ १७५ ॥

नस्यमाह शिरीषेत्यादि—रजनीद्वयचूर्णं सर्पिश्च प्रक्षेप्यम् । नस्यमित्यादौ अगस्त्यपत्र वगसेनपत्रम् ॥ १७५ ॥

## अष्टाङ्गधूपः

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।
सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १७६ ॥

पलङ्कषेत्यादि—पलङ्कषा गुग्गुलुः ॥ १७६ ॥

## अपराजिताधूपः ।

पुरध्यामवचासर्जनिम्बार्कागुरुदारुभिः ।
सर्वज्वरहरो धूप कार्य्योऽयमपराजित ॥ १७७ ॥

पुरेत्यादि—पुरो गुग्गुलु, ध्याम गन्धतृणम् ॥ १७७ ॥

वैडालं वा शकृद् योज्यं वेपमानस्य धूपने ।
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः ।
बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ १७८ ॥

वैडालमित्यादि स्पष्टम्। अपामार्गस्य जटा मूल, पृष्ठे पाद दत्त्वा वन्ध कार्य्य इत्याहु । वन्धनविधिरायुर्वेदसारे—यथा 'अपामार्गस्य मूलञ्च सम्यगद्धालितानन । वध्नीयाद् वामहस्तेन सर्वज्वरविमोचणम्' ॥ १७८ ॥

काकजङ्घा वला श्यामा ब्रह्मदण्डी कृताञ्जलिः ।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गराजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ।
रक्तसूत्रेण संवेष्ट्य वद्धमैकाहिकं जयेत् ॥ १७९ ॥

काकजघेत्यादि—काकजघा स्वनामख्याता, श्यामा वृद्धदारक , ब्रह्मदण्डी ब्रह्मयष्टिका, कृताञ्जलि लाजालिया ॥ १७९ ॥

मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम् ॥ १८० ॥

मूलमित्यादि—जयन्त्या श्वेताया इत्याहु , भूजयन्त्या इत्यन्ये ॥ १८० ॥

## भूतानुबन्धिनोस्तृतीयकचातुर्थकयोश्चिकित्सा

कर्म साधारणं यद्यत् तृतीयकचतुर्थकौ ।
आगन्तुरनुवन्धो हि प्रायशो विपमज्वरे ॥ १८१ ॥

भूतानुवन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह कर्मेत्यादि—दैवव्यपाश्रय वालिमगलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सित साधारणशब्देनात्रोच्यते। जह्यादिति अन्तर्भूतण्यर्थमिद तेन साधारण चिकित्सित तृतीयकचतुर्थकौ कर्मरूपौ जह्यादिति हापयेत् निराकुर्य्यादित्यर्थ । ननु ज्वरान्तरे सर्वत्र युक्तिव्यपाश्रय, कषायादिकमेवोपदिष्टम्, न दैवव्यपाश्रयम्। अत्र पुन किमर्थ दैवव्यपाश्रयमपि कर्त्तव्यत्वेन उपदिश्यते इत्याह आगन्तुरित्यादि—आगन्तुर्भूतादि । विषमज्वरशब्देन तृतीयकचतुर्थकावेवाभिमतौ । तृतीयकचतुर्थकशब्देनात्र तद्विपर्य्ययस्यापि ग्रहणम्। अन्ये तु यद्याप्यागन्तुरनुवन्धो हि इत्यादिवचनवलाद्विषमज्वरमात्र एव दैवव्यपाश्रय कर्म कर्त्तव्यमित्यायाति तथापि तृतीयकचतुर्थकाविति यदुक्त तद्विशेषार्थम्। तेन तृतीयकचतुर्थकयो प्रायेण भूतानुवन्धजन्यत्वात् तयोरेव विशेषेण दैवव्यपाश्रय कर्म कर्त्तव्यमित्याहु.। अन्ये तु साधारणशब्देन दोषमात्र-

साधारण युक्तिव्यपाश्रयमात्र कर्माच्यते। जह्वादित्यस्य त्यजतीत्यर्थः तेन तृतीयक-चतुर्थके युक्तिव्यपाश्रयमात्र न कार्य्यं किन्तूभयमपि कार्यम। एवञ्चागन्तुरनुबन्धो हीत्यादि द्वितीयार्द्धमपि सगच्छत इत्याह ॥ १८१ ॥

गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥
एतन्मन्त्रेण चाश्वत्थपत्रहस्तः प्रतर्पयेत्।
सोमं सानुचरं देवं समातृगणमीश्वरम् ॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात् ॥ १८२ ॥

गगाया इत्यादि—एकवृत्ताया पुष्करिण्या अक्राकन्दिते पानीय नूतनघट्या नेतव्यम्, उदिते च रवौ पालिद्दिने तर्पण कार्य्यम्। अत्र कुशा यवा कुसुमानि च उत्स्विन्नमाषमत्स्यादिना बलिश्चेत्युपदिशन्ति वृद्धा। अस्य मन्त्रस्य केचिदाद्य-श्लोक पठन्ति यथा—'अगवगकलिंगेषु सौराष्ट्रमगधेषु च। वाराणस्याञ्च यद्-वृत्त तत्र सरसि हे ज्वर'' इति। सोमसित्युमया सहितम्, अनुचरैर्नन्द्यादिभिश्च सहितम् ॥ १८२ ॥

विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन् नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ॥१८३॥

विष्णुमित्यादि—नामसहस्रेण महाभारताद्युक्तेन ॥ १८३ ॥

## ज्वरे घृतप्रयोगः

ज्वरा॰ कषायैर्वमनैर्लङ्घनैर्लघुभोजनै॰।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम्।
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्।
न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन तु ॥ १८४ ॥

इदानीं घृतप्रयोगान् विवक्षु॰ घृतस्य काल विषयञ्चाह ज्वरा कषायैरित्यादि— अत्र कषायैरित्यसमासनिर्देशेन व्यस्तैरपि कषायादिप्रयोगै रूक्षस्य सर्पि पान कर्त्त-व्यमिति दर्शयति। वमनैरित्यनेन अवस्थाविधेयवमनप्रयोगान् सर्पि॰षडहपूर्वभाविनो दर्शयति। लङ्घनैरित्यनेन च लङ्घन स्वेदन काल इत्याद्युक्त्वा लङ्घनसमानफला स्वेदा-

दयोऽपि गृह्यन्ते। रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि यद्यपि सामानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति। भिषगजित चिकित्सितम्। दशाहादूर्द्ध हि घृतपानावस्था चरकेणोक्ता, इदानीं तदपवादमाह निर्दशाहमपीत्यादि—निर्गतो दशाहान्निर्दशाहः। अलङ्घितमिति असञ्जातलङ्घितफलम्, इयञ्चावस्था प्रबलसमदोषारब्धत्वात् ज्वरस्य, तथा असम्यगुपचाराच्च भवतीति ज्ञेयम्। यावल्लघुत्वादिति च्छेदः। लघुत्वे तु जाते कफोत्तरता अलङ्घितता चापयाति, तेन तदा सर्पिः पानमनुवृत्तं कर्त्तव्यमित्यर्थः। यावदिति यावल्लघुत्वात् लघुत्वपर्य्यन्तं शमनैरुपाचरेत्। लघुत्वे सति सर्पिःपानम्, अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावत्पर्य्यन्तं शमनैरुपाचरेत् मांसरसेन। अशनन्तु निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि मांसरसेन देयमित्याहुः, अशनं दद्यान्मांसरसेनेति। ननु किमर्थमेतादृशमशनं कफविरुद्धमपि कफप्रधानावस्थायां दीयते? सत्यं मांसरसस्य बलजनकत्वात्, अत एवोक्तं तत्रैव 'बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्' इति ॥१८४॥

मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत्॥
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित्॥१८५॥

एणलावादीनित्यादिशब्दात् कपिञ्जलादीनां ग्रहणम्। मात्राविकल्पज्ञ इति, विकल्पो विशिष्टकल्पना संस्कार इत्यर्थः। मात्राज्ञो विकल्पज्ञश्चेत्यर्थः। तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारः कार्य्यः, यथा लघुत्वानुष्णत्वे भवत इत्यर्थः ॥ १८५ ॥

## पिप्पल्याद्यं घृतम्

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी।
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा॥
द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका।
सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति॥

क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति ॥
पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते ॥१८६॥

सर्पिः पानावस्था प्रतिपाद्य सर्पीष्याह पिप्पल्य इत्यादि—कलिङ्गक इन्द्रयव नामलकी भूम्यामलकी, शारिवा अनन्तमूलम्, बिल्व बिल्वशलाटु द्राक्षादिफल-माहत्याचर्य्यात् । अत्र यद्यपि घृतस्य मानं नोक्तं, तथापि वृद्धवैद्यव्यवहारात् प्रस्थमात्रं गृह्यते, अत एवोक्तम् 'अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते । अनुक्ते क्वाथ-माने तु पात्रमेकं प्रशस्यते' इति । अन्ये पक्तव्यघृतस्य मानानिर्देशे अव्यवस्थित-मानमेवेच्छन्त पक्तव्यमिति । यत्र तु प्रस्थादिमाननिर्देशं करोति, तत्र तावन्माने-नैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम् । तथाहि वातव्याध्यादौ भूरिस्नेहे माध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति । तथा प्रपौण्डरीकाद्यनस्ये योगितया स्नेहस्य कुडवमानमेवोक्तम् । कुष्ठोक्ततिक्तषट्पलादौ तु अत्यल्पघृतसविधानेन तथैव पक्वस्य घृतस्य कार्य्यकर्तृत्वं भवतीति भेषजप्रभावदर्शी महर्षिर्बोधयति । तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनः पुनः षट्पलमानं घृतं पक्तव्यं 'यथा कुर्वन्ति स उपाय' इति वचनात् । एवं पानीयकल्याणागस्त्यहरी-तक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम् । तस्मान्न यादृच्छिकमाचार्य्यस्य क्वचिन्मानाभिधानमनभिधानञ्च क्वचिदिति । अत्र क्वचित् पुस्तके हलीमकमिति पाठः क्वचिच्चारोचकमिति पाठद्वयमपि न प्रक्षेपणीयम् । यतः सुश्रुते 'जीर्णज्वर-शिरःशूलगुल्मोदरहलीमकान्' इति दृश्यते । वाग्भटे च 'पिप्पलीन्द्रयवधावनि-तिक्ताशारिवामलकतामलकीभिः । बिल्वमुस्तहिमापालिनिम्बैः द्राक्षयातिविषया स्थिरया च । घृतमाशु निहन्ति साधितं ज्वरमग्निं विषमं हलीमकम् । अरुचिं भृगतापमम्सयोर्वमथुं पार्श्वरुजं तथा क्षयम्' इति दृश्यते तस्मात् पाठद्वयमेव युक्तम् ॥ १८६ ॥

यत्राधिकरणे नोक्तिर्गणे स्यात् स्नेहसंविधौ ।
तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना ॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम् ॥१८७॥

अत्र केचित् 'कल्कक्वाथानिर्देशे गणात् तस्मात् समापयेत्' इति सुश्रुतवच-नात् पिप्पल्यादीनां कल्कत्वं कषायत्वञ्चेच्छन्ति । अन्ये तु कल्कत्वमेव भवते । अतः स्तत् संशयनिरासार्थं परिभाषामाह यत्रेत्यादि—अधिकरणेनेत्यधिकारितया, तेन

यत्रैवाचार्य्येण गणत्वमधिकृत, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना । यत्र त्वधिकृतगणत्व नास्ति, तत्र कल्ककल्पनैव । एतेन सुश्रुतोक्ता ‘ कल्कक्काथावनिर्देशे ’ इत्यादिका परिभाषा अधिकृतगणविषयैव, न तु भेषजसमूहमात्रविषया इति। ननु मा भूदुभयकल्पना अनियमेन कदाचित् कल्ककल्पना कदाचित् क्काथकल्पना कुतो न स्यात् ? इति चेन्नैवम्, कषायकल्पनाया द्रव्य न साक्षात् प्रधानभूत स्नेहसाधने व्यवह्रियते । कल्कस्तु साक्षादेव स्नेहसम्बन्ध पश्यत इति कल्कस्य प्राधान्यात् तथा वृद्धवैद्यव्यवहाराच्चेत्याह एतद्वाक्यबलेनैवेत्यादि ॥१८७॥

जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥
अनुक्ते द्रवकार्य्ये तु सर्वत्र सलिलं मतम् ॥ १८८ ॥
घृततैलगुडादींश्च नैकाह्वादवतारयेत् ।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः ॥
स्नेहकल्को यदांगुल्या वर्त्तितो वर्त्तिवद्भवेत् ।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥१८९॥

जलस्नेहेत्यादौ जलशब्दो द्रवमात्रोपलक्षक· ॥ १८८—१८९ ॥

## क्षीरषट्पलकं घृतम्

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम् ।
सर्पिः प्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत् ॥
अत्र द्रवान्तरानुक्ते क्षीरमेव चतुर्गुणम् ।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत् ॥ १९० ॥

पञ्चकोलैरित्यादि—पयसा सममित्यस्य समशब्दस्य तुल्यार्थतास्वीकारेण स्नेहसम क्षीरम्, त्रिगुणञ्च जलमर्शोऽधिकारोक्तषट्पलघृतसंवादात् । तद्यथा ‘ सक्षारै पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके । समक्षीर घृत प्रस्थ ज्वरार्श प्लीहगुल्मनुत् ’ इति । क्षीरदध्यारनालैस्तु पाको यत्रेरित· क्वचित् । चतुर्गुण जल तत्र वीर्य्याधानार्थमावपेत् ’ परिभाषयेमनार्षेति कृत्वा कैश्चित् नाद्रियेत । अन्ये तु

क्षीराग्निसाधनविषयेयमित्याहुः । चक्रस्तु समामित्यस्य महार्थतामाश्रित्याह अत्रे-त्यादि । एतच्चान्ये दूषयन्ति यतः सुश्रुतोक्तोदरचिकित्सिते 'षट्पलकेऽस्मिन् घृत-प्रस्थे तुल्यक्षीरम्' इति पठ्यते । चरकेऽप्युक्तं गुल्मे 'घृतप्रस्थं विपाचयेत् क्षीर-प्रस्थेन' इति । व्यवहारस्तु कश्चित् त्रिगुणोदकेन कश्चिच्चतुर्गुणोदकेनेति ॥१९०॥

## दशमूलषट्पलकं घृतम्

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः ।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः ।
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम् ॥१९१॥

दशमूलीरस इत्यादि —रसः क्वाथः, जेज्जटमते क्वाथश्चतुर्गुणः क्षीरन्तु स्नेह-समम् । स हि क्वथ्याच्चतुर्गुणं वारीत्यादि परिभाषार्थमृजु बुद्ध्वा क्षीरयोगे सर्व-त्रैवमेव पाकं व्याचष्टे । चक्रस्त्वाह यत्र क्वाथक्षीरे स्तः तत्र क्षीरेण सह स्नेहा-च्चतुर्गुणो द्रवः कार्यः, स्नेहपाके चतुर्गुण एव द्रव इत्युत्सर्गसिद्धः । 'स्नेहात् तोय-चतुर्गुणम्' इत्यत्र तोयस्य द्रवोपलक्षणत्वात् । अतः क्वाथोऽत्र त्रिगुणः क्षीरञ्च स्नेह-सममिति । पञ्चकोलयवक्षाराः प्रत्येकं पलिकाः पूर्वोक्तषट्पलकसाहचर्यात् षट्-पलत्वानुपपत्तेश्चेति ॥ १९१ ॥

क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् ।
स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः ।
चतुर्गुणन्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत् ॥
पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम् ॥ १९२ ॥

दशमूलीक्वाथार्थं परिभाषामाह क्वाथ्यादित्यादि—स्नेहसमं क्षीरमिति यत्र द्रवान्तरमस्ति तत्रैव केवलक्षीरे तु क्षीरेणैव चतुर्गुणेन पाकस्य चतुर्गुणद्रवेणैवोत्सर्ग-सिद्धत्वात् इति गयदासचक्रौ । अन्ये तु यत्रैव केवलं क्षीरं तत्रैव स्नेहसमं क्षीरम्, जलन्तु चतुर्गुणं क्षीरदध्यारनालैस्त्वित्यादिवचनादित्याहुः । द्रवद्वैगुण्यतो भवेदिति यद्यपि 'शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम् । द्विगुणं तद् द्रवेष्विष्टं सद्य-एवोद्धृतेषु च' इति वचनात् द्रवमात्र एव द्वैगुण्यमायाति, तथापि सुनिषण्णक-चाङ्गेरीघृते षोडशपलरूपस्य द्रवप्रस्थस्यास्य द्वैगुण्येन द्वात्रिंशत्पलरूपत्वे द्रवत्वेन सिद्धे-यदयमाचार्य्यः 'त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः' इति करोति, तेन

द्वैगुण्याभिधायकपरिभाषाव्यभिचारः क्वचिदस्तीति ज्ञापयति । अतएव रक्तिकादौ त्रिपलपर्य्यन्ते कुडवपूर्वमाने द्रवार्द्रयोर्द्वैगुण्य न कार्य्यम् । यदाह॰ गोपुररक्षित 'रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् । शुष्के द्रवार्द्रयोश्चापि तुल्य मान प्रकीर्त्तितम्' इति, तथा 'द्विगुण कुडवादौ तु शुष्कान्मान द्रवस्य च । आर्द्रस्य चाल्पवीर्य्यत्वात् ज्ञेयमन्यत्र तत्समम्' इति । तथा जतुकर्णेऽप्युक्तम् 'आर्द्राणाञ्च द्रवाणाञ्च द्विगुणा कुडवादयः ।' एवञ्च कुडवादिमानयोग्यस्यापि यत्र पलोल्लेखेन मान तत्रापि न द्वैगुण्य विधेय तेन 'रास्नामहस्तनिर्यूहे तैलद्रोण विपाचयेत्' इत्यादिषु पलोल्लेखेन जल गृह्यमाण द्विगुण भवति । कश्चित्तु पलोल्लेखविधानेऽपि तन्त्रान्तरीय-वाक्यैकवाक्यतया पलोल्लेखागतद्रवेऽपि कुडवादिविवक्षा कृत्वा द्वैगुण्य विधेयम् । यथा क्षतक्षीणचिकित्सिते 'मधुकाष्टफल द्राक्षाप्रस्थक्काथ.' इत्यादिना चरके य. प्रयोग उक्त स जतुकर्णे 'द्राक्षाया मधुकाद्धप्रस्थक्काथ' इत्यादिना ग्रन्थेन पठित । तेन जतुकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कृतद्वैगुण्यमेव जलस्य भवति । तत्प्रत्ययाच्चिहापि मधुकाष्टपलोल्लेखविहितेऽपि क्काथे कुडवद्वयविवक्षया कृतद्वैगुण्यमेव जल देयम् । एवमन्यदनुसरणीयम् । अत्र केचित् कुडवस्यापि द्वैगुण्य नेच्छन्ति, यदि हि द्विगुण कुडव. स्यात्, तदा क्काथ्याच्चतुर्गुणमित्यादि, कल्कश्च स्नेहपादिक इति परिभाषा सर्वतन्त्रसिद्धा बाधिता स्यादिति । यत सुश्रुते 'स्नेहकुडवे साध्ये भेषज-पल कल्कमिष्टम्' इत्युक्तम्, तथा च कृष्णात्रेयेणाप्युक्त 'स्नेहपाकविधौ यत्र प्रमाण नोदित क्वचित् । स्नेहस्य कुडव तत्र पचेत् कल्कपलेन तु' इति अत्र हि यदि कुडवश्चतुःपलरूप. स्यात्, तदैव कल्कपलस्य स्नेहपादिकत्व घटते । अष्टपल-रूपत्वे कल्कपलस्य स्नेहापेक्षया अष्टभागत्वमेव स्यादिति । एतच्च नातिसाधु, यत॰ सुश्रुत एव "स्नेहकुडवे साध्ये क्काथ्यद्रव्यप्रस्थो विधेय' इत्युक्तम् तत्र कुडवे-नैव यदि स्नेहपलचतुष्टय गृह्यते तदा चतु॰पलस्नेहे षोडशपलक्काथ्यग्रहण स्यात् । न च तथा व्यवहरति क्काथ्यषोडशपल हि अष्टपल एव स्नेहे गृह्यते, तस्मादसाधक-मेतत् कुडवाद् द्वैगुण्यस्येति द्वैगुण्य कुडवे युक्तम् । अगस्त्यहरीतक्या मधुनः कुडव यच्चरकेणोक्त तन्त्रान्तरे 'मधुनश्च पलाष्टकम्' इति पठ्यत, तथा तन्त्रा-न्तरे 'त्रायमाणाचतु पल पक्त्वा दशकेऽम्भसि शेषिते । कुडवे कुडवान् सर्पिः क्षीरधात्रीरसान् पचेत्' इत्युक्तम् । तत्र यदि चतु.पल कुडव स्यात् तदा चरकोक्तत्रायमाणाघृतेन सह विरोध स्यात् । तथाहि 'जले दशगुणे साध्य त्राय-माणाचतु.पलम्' इत्यादि यावत् 'रसस्यामलकानान्तु क्षीरस्य च घृतस्य च । पलानि पृथगष्टाष्टौ दत्वा सम्यग्विपाचयेत् ।' तथान्यत्राप्युक्तम् । 'आर्द्रद्रव्य-

द्रवद्रव्यपलैरष्टाभिरेव च । शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः ’ इति । तस्मात् कुडवे द्वैगुण्यं साधु, यत् तु अष्टपलेऽपि स्नेहे कल्कस्य पलमानत्वम्, तत् स्वरससाध्यस्नेहाभिप्रायेण पुष्पकल्काभिप्रायेण वा ज्ञेयम्। यदुक्तं ‘ स्नेहे सिध्यति शुद्धाम्बुनि क्वाथस्वरसे क्रमात् । कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ’ तथा ‘ शणस्य कोविदारस्य कर्बुदारस्य शाल्मलेः । कल्काढ्यत्वात् पुष्पकल्कं प्रशंसन्ति चतुःपलम् ’ इति । अत्र स्नेहप्रस्थापेक्षया चतुःपलः कल्कः स्नेहादष्टमभाग एव भवतीत्यादि विशेषवचनेन कल्कश्च स्नेहपादिक इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति अलमतिप्रपञ्चेन सर्वथा वृद्धव्यवहारानुमतमेव वर्त्मानुसरणीयमस्माभिरिति संक्षेपः । विस्तरः पुनरस्मदीयचरकतत्वप्रदीपिकायामेव गवेषणीय इति ॥ १६२ ॥

## वासाद्यं घृतम्—

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम् ।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च ॥
पिप्पलीमूलमृद्वीकाचन्दनोत्पलनागरैः ।
कल्कीकृतश्च विपचेद् घृतं जीर्णज्वरापहम् ॥ १६३ ॥

पञ्चप्रभृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसर एव व्यक्तीकरिष्यामः । वासामित्यादि—यवासकः दुरालभा । अत्र चकाराद्वासादिक्वाथोऽपि घृताद् द्विगुण इत्याहुः, युक्तञ्चैतत्, यतः स्नेहपाके चतुर्गुणमेव द्रवमुत्सर्गसिद्धम् ‘ स्नेहात् तोयं चतुर्गुणम् ’ इति वचनात्। तोयशब्दोऽपि तत्र द्रवमात्रोपलक्षक इति । अत्र द्वाभ्यामपि चातुर्गुण्यमित्यादि परिभाषयैव क्षीरकषाययोः प्रत्येकं द्वैगुण्ये सिद्धे चकारोऽयं क्वाथचातुर्गुण्यार्थं इति केचित् । अन्ये तु परिभाषाबलात् यद्यपि क्षीरं कषायश्च द्विगुण एव लभ्यते, तथापि स्पष्टार्थं क्षीरद्वैगुण्याभिधानमित्याहुः, तन्न, क्षीरस्य हि मानानुक्तौ ‘ क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम् । स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः ’ इति वचनात् क्षीरस्य द्रवान्तरसान्निध्ये सति स्नेहसमत्वमेव स्यात्। ततः कषायभागत्रयं क्षीरभागश्चैक इति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषार्थोऽप्यनुगृहीतो भवति। तस्मात् कर्त्तव्यं क्षीरद्वैगुण्याभिधानम् । अन्ये तु द्वाभ्यामपि चातुर्गुण्यमिति परिभाषायां प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति । तश्चेह कषायस्य चातुर्गुण्यं क्षीरस्य द्वैगुण्यमेव ‘ पयसा द्विगुणेन च ’ इति

वचनात् तत्र एकेनापि चातुर्गुण्य, द्वाभ्यामपि चातुर्गुण्य, त्रिभिरपि चातुर्गुण्यम्, चतुर्भि सममिति वचनेन चतुर्भि स्नेहसमताभिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्या त्रिभिरपि तथा चातुर्गुण्य कार्य्यम्। यथा स्नेहच्चातुर्गुण्य स्यात् तथा चं मिलित्वैव चातुर्गुण्य सिध्यति, न प्रत्येकमित्यर्थ। किञ्च यदि प्रत्येक चातुर्गुण्य विवक्षित स्यात् तदा द्वयोस्त्रयाणा चातुर्गुण्यमिति कुर्य्यात्। तृतीयानिर्देशेन हि साहित्य सूचयता मिलितयोरेव चातुर्गुण्य प्रतीयत इति। अत एवैतत्परिभाषास्वरसात् " पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसाविधौ। तत्र स्नेहसमान्याहुरर्वाक्नसमाच्चतुर्गुणम् " इति मिलित्वैव चातुर्गुण्यम्। अन्यथा एतद्वचनयोर्विरोधो दुष्परिहर स्यात्। अन्ये तु अर्वाक् स्याच्च चतुर्गुणम् इति प्रत्येकमेव चातुर्गुण्यम्। अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत्र यदि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्य स्यात् तदा स्नेहसमान्याहुरेतावतापि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्ये सिद्धे, अर्वाक् स्यात् तु चतुर्गुणमिति वचन तावदेकद्वित्रिद्रवविषये चरितार्थमेव। यत्र वा द्रवचतुष्टयविषये अचरितार्थमित्युच्यते तावतापि न वस्तुक्षति। यस्मादेकेनापि चातुर्गुण्यमित्यादि चतुर्भि सममित्यन्तया परिभाषया द्रवचतुष्टयविषये तावन्मिलित्वा चातुर्गुण्य सिद्धमेव। तदिदानीं प्रत्येक स्नेहसमत्वेन साध्यताम्, अर्वाक् स्यात्तु चतुर्गुणमिति वचनेन साध्यतामिति। अन्ये पुनरनयैवानुपपत्त्या चतु:प्रभृतीनि पठन्ति। श्रीकण्ठोऽपि गुल्माधिकारे परिभाषायामस्या चतुःप्रभृतीति पाठमेव स्वीकृतवान्॥ १६३॥

## गुडूच्यादिघृतानि—

**गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च।**
**मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः॥१६४॥**

गुडूच्या इत्यादि—वाग्भटस्य। गुडूच्यादीना पञ्चाना पृथक् २ क्वाथकल्काभ्या सिद्धानि पञ्चघृतानि वोध्यानि॥ १६४॥

**ज्वरे पेयाः कषायाश्च सर्पिःक्षीरं विरेचनम्।**
**षडहे षडहे देयं कालं वीक्ष्यामयस्य च॥ १६५॥**

अत्र पेयादिक यदिहोक्त तद्याप्यवच्छिन्नकालविशेषापेक्ष्यमिति प्रतिपादयन् क्षीरादिकमभिधातु पीठिका रचयति ज्वरे पेया इत्यादि—अत्र पेयाकषायसर्पि:क्षीरविरेचनानामुत्सर्गविधया ज्वरादादारभ्य षडहे यथाक्रम देयत्वमुच्यते। तेन " वमित लङ्घित काले यवागूभिरुपाचरेत् " इत्यादि विशेषवचनात् लङ्घितादे

षडहातिक्रमेऽपि यत् पेयादिदानमुक्तं तत् विरोधमावहति, सामान्यविधेः विशेष-
विधिना बाधनस्य सर्व्वैरेवानुमतत्वात् । ननु पेयादिप्रयोगे "यावज्ज्वरमृ-
दूभावात् षडहं वा विचक्षणः" इत्यादिना षडहं यावत् यवागूर्देयेति चरकेणोक्तं,
तथा अत्रापि षडहं पेयादानमुक्तम्, तस्य षडहं किं ज्वरोत्पाददिनं गृहीत्वा
भवतु लङ्घनविषयदिनं हित्वा वा ? नाद्यः अनशनरूपलङ्घनवैयर्थ्यात् । लङ्घनं
प्राक् एवोपक्रमः । यदुक्तं "ज्वरे लङ्घनमेवादौ" इति । नापि द्वितीयः,
"ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम्" ज्वरदिनादारभ्याष्टमे पाचनं शमनीयं वा
पाययेदित्युक्तत्वात् ज्वरदिनस्य कोटावगृहीतत्वेऽष्टाहः, यदुक्तं "अष्टाहो निरामज्वर-
लक्षणम्" इति । अथाद्य ज्वरोत्पाददिनं गृहीत्वैवाष्टाहः सत्येतस्य । "याव-
ज्ज्वरमृदूभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाददिनमारभ्यैव षडह-
पर्य्यन्तं पेयाप्रयोग उच्यते । पेया हि ज्वरे प्राधान्येन दोषपाचनार्थं क्रियते, यदुक्तं
"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः । पाचनान्यविपक्वानां दोषाणां
तरुणे ज्वरे" इति । न तु यस्मिन् षडहे पेया, तस्मिन्नेव षडहे लङ्घनादिकमपीति ।
लङ्घनादिभिर्निरवकाशतया पेयाषडहस्य निर्विषयत्वमिति वाच्यम्, तस्य वातज्वर-
विषयत्वात् । वातज्वरो ह्यलङ्घनीयः । यदुक्तं "ऋते ज्वरात् क्षयानिलभयक्रोध-
कामशोकश्रमोद्भवात्" इति । तेनालङ्घनीये वातज्वरे पेया समग्रमेव षडहं व्या-
प्नोति । एकद्वित्रिदिनं लङ्घिते पेया च दोषपाचनार्थं क्रियते । क्रियतेऽपि ज्वरे
पञ्चचतुस्त्रिदिनं यावत् पेयादिकमेवेति अतो निर्विषयत्वम् पेयाषडहस्य ? यत्र तु
दोषाणामतिसामतया सन्निपातज्वरे वा लङ्घनमेव षडहातिक्रमेणापि क्रियते, तत्र
प्रादेशिके विधौ पेयायाः षडहनियमः औत्सर्गिकः प्रवर्त्तते । ननु पेया दोषपाचनार्थं
क्रियते, तर्हि अतिलङ्घिते पेया कथं क्रियते ? लङ्घनेनैव दोषपाकसिद्धत्वात् । नैवम्,
अतिलङ्घिते पेया न दोषपाचनार्थं क्रियते, किं तर्हि स्वल्पगामबलीयसोऽग्निसन्धुक्षणाय ।
तत्राग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति । ज्वरे पेया कषायाश्रित्यादावपि
समानकार्य्याणां लङ्घनादीनामुपलक्षणभूता पेया । यत पेया यत्र प्रतिषिद्धा मद्योत्थे
ज्वरादौ तर्पणक्रमेणापि षडहो ज्ञाप्य । तत्र प्रथमषडहे उत्सर्गितलङ्घनादि पाचनं
कार्य्यमिति पेया षडहे देयेति वचनेनोच्यते, कषायषडहोऽपि ज्वरोत्पादात्
सप्तमदिनं परित्यज्याष्टमादारभ्यैव देया । सप्तमे ज्वरस्य तरुणत्वेन
कषायपाननिषेधात्, यत् तु हारीते लङ्घनोष्णोदकमुस्तादिषडङ्गशृतजल-
पानीयपानपेयाविधानान्तरमुक्तम् "एता क्रियां प्रयुञ्जीत षडहं सप्तमेऽहनि ।
पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान्" इति, तथा हारीतेनापि

" लंघितालंघित तस्माद् वमित वा ज्वरार्दितम् । तस्मात्प्यत्वादतस्ताभिरादौ ज्वरमुपाचरेत्' इति यवागूभिर्यथादोषमित्यादि तर्पणादिक्रममभिधायोक्तम् 'इति षाड्गिक प्रोक्तो नवज्वरहितो विधि.। तत पर पाचनीय शमन वा ज्वरे हितम्' इति, तदपि प्रागुक्तरीत्या अष्टाह एव कषायपानविधायकमिति प्रागेव प्रतिपादितम्। वस्तुतस्तु सप्तमाष्टमाहकषायपानविधायकाना रचनानामदूरान्तरत्वात् एव न परस्परविरोध इत्युक्तम्। एतन्मतेऽप्यनुद्धूतसामतायां सप्तमदिन एव कषायपानम्। उद्धूतसामतायान्तु अष्टमेऽहनि इति व्यवस्था। तेनैतस्मिन् व्याख्याने हारीतखरनादवचन यथाश्रुतमेव सङ्गच्छते। तथा ज्वरे पेया कषायाश्चेत्यादिनापि पेयाषडहानन्तरमेव सप्तमे दिने यत् कषायपानमुक्त तदप्यनुद्धूतसामताभिप्रायेणेति न विरोधमावहति। काल वीक्ष्यामयस्य चेति ज्वरलक्षणस्यामयस्यावस्थारूप काल वीक्ष्य षडहे यथाक्रम पेयादि देयमित्यर्थ.॥ १६५ ॥

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥ १६६ ॥

क्षीरपानावस्थामाह जीर्णज्वरे इत्यादि—कफे क्षीण इति, कफक्षयात् वातपित्तोत्तरताया क्षीरममृतायत इत्यर्थ। यदुक्त "दाहतृष्णापरीतस्य वातपित्तोत्तर ज्वरम्। बन्धप्रच्युतदोष वा निराम पयसा जयेत्" इति ॥ १६६ ॥

कासाच्छ्वासात् शिर:शूलात् पार्श्वशूलात् सपीनसात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ १६७ ॥

कासादित्यादि—पञ्चमूली स्वल्पा वातपित्तहन्तृत्वात् ॥ १६७ ॥

द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्।
क्षीरावशेष कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ १६८ ॥

त्रिकण्टकबलाव्याघ्रगुडनागरसाधितम्।
वर्च्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥ १६९ ॥

क्षीरसाधनपरिभाषामाह द्रव्यादित्यादि—त्रिकण्टकेत्यादौ गुड. प्रक्षेप्य, गुडपाकस्य निष्प्रयोजनत्वादित्याहु ॥ १६८ ॥ १६९ ॥

वृश्चीरबिल्ववर्षाभूपयश्चोदकमेव च।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥ २०० ॥

वृश्चीरेत्यादि—वृश्चीर श्वेतपुनर्नवा, वर्षाभू रक्तपुनर्नवेति । अत्रोदकर्तौ-रौषधाना पूर्ववदेव मानम् ॥ २०० ॥

**शीतं वोष्णं ज्वरे नीरं यथास्वैरौषधैर्युतम् ॥ २०१ ॥**

शीत वेत्यादि—विकल्प इच्छाविशेषकृत , किंवा वाते उष्ण, पित्ते शीत-मिति ॥ २०१ ॥

**एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥ २०२ ॥**

एरण्डेत्यादि—अत्र बिल्वफलानिद्ध दुग्धमपि बोध्य चरकोक्तत्वात् । गुदे कर्त्तनवत् पीडा परिकर्त्तिका ॥ २०२ ॥

**ज्वरिभ्यो बहुदोषेभ्य ऊर्ध्वश्चाधश्च बुद्धिमान् ।**
**दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २०३ ॥**

संशोधनावस्थानाह ज्वरिभ्य इत्यादि—बहुदोषेभ्य इति अल्पदोषेषु संशोधननिषेधार्थमुक्तम् । काल इति यथोक्तवमनविरेचनयोग्यज्वरावस्थायाम् । कल्प इति कल्पस्थाने ग्रन्थे यदुपदेक्ष्यते तद्देयम् ॥ २०३ ॥

**मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ।**
**युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥ २०४ ॥**

वमनयोगत्रयमाह मदनमित्यादि—मदन पिप्पलीयुक्त कफे । कलिङ्ग इन्द्रयव, तद्युक्त पित्तकफे, यष्टिमधुयुक्तन्तु दाहप्राय इत्याहु ॥ २०४ ॥

**आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।**
**त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २०५ ॥**

चतुरो विरेचनयोगानाह आरग्वधमित्यादि—अत्र चरके वाग्भटे च त्रिवृतास्थले त्रिफलापाठो दृश्यते, टीकाकारैश्च त्रिफलैव व्याख्यायते ॥ २०५ ॥

**ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।**
**कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥**
**प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।**
**पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २०६ ॥**

ज्वरक्षीणस्येत्यादि—स्पष्टम् । सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ २०६ ॥

**गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।**
**जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २०७ ॥**

नस्यावस्थामाह गौरव इत्यादि—विबद्धेष्विति स्वविषयग्रहणासमर्थेषु ॥२०७॥

अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानुवासनान्।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ २०८ ॥

जीर्णज्वरेऽभ्यङ्गादीनाह अभ्यङ्गानित्यादि—विभज्येति शीतोष्णसमुत्थज्वर-विभागेनेत्यर्थ। तेन उष्णोत्थे जीर्णज्वरे शीतद्रव्यकृता प्रदेहादय शीतोत्थे तु उष्णद्रव्यकृता देया इत्यर्थ.। वहिर्मार्गस्त्वगादि। उक्त हि "शाखा रक्तादयो धातव-स्त्वक् च बाह्यो रोगमार्ग" इति ॥ २०८ ॥

## षट्कट्वरतैलम्

सुवर्चिकानागरकुष्ठमूर्वा-
लाक्षानिशालोहितयष्टिकाभिः।
तैलं ज्वरे षड्गुणकट्वसिद्ध-
मभ्यञ्जनाच्छीतविदाहनुत् स्यात् ॥
दध्नः ससारकस्याल्ल तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः ॥ २०९ ॥

सुवर्चिकेत्यादि—सुवर्च्चिका सर्जिकाक्षार, लोहितयष्टिका मञ्जिष्ठा, सुश्रुत-वृद्धवाग्भटादिबहुतरतन्त्रप्रवादात्। अन्ये तु लोहितं चन्दनम्, यष्टिका मञ्जिष्ठा विदेहसवादादित्याहु। व्यवहारस्तु पूर्वव्याख्ययैव। शीतविदाहहन्तृत्वञ्च योगस्य अचिन्त्यशक्तित्वात्। तैलपाके विशेष स्मारयति घृतवदित्यादि ॥ २०९ ॥

## अङ्गारकं तैलम्

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥ २१० ॥

मूर्वेत्यादि—इन्द्रवारुणी गोरक्षकर्कटी, अङ्गारको मङ्गल, तत्कृतत्वादङ्गारक-सञ्ज्ञा ॥ २१० ॥

## लाक्षादितैलम्

लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचयेत्।
षड्गुणेनारनालेन दाहशीतज्वरापहम्॥ २११॥

लाक्षादितैल स्पष्टम्—अत्रापि दाहशीतहरत्व प्रभावात्॥ २११॥

यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत्॥ २१२॥

यवेत्यादि—मञ्जिष्ठा अर्द्धपलेनेत्यत्र द्विपलेनेति न पाठ सुश्रुतचन्द्राटादौ अर्द्धपलेनेति पाठात्॥ २१२॥

सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम्।
ज्वरदाहापहं लेपात् सद्यो वातास्रदाहनुत्॥ २१३॥

प्रदेहमाह सर्ज इत्यादि—सर्जो धूनक कल्क, काञ्जिक चतुर्गुणम्, सिद्ध पक्कम्। तत शीताम्बुमर्दित शीतलजलेन तैल मम्मर्द्य गाढाभ्यङ्ग कार्य्य॥ २१३॥

चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम्।
तथा नारायणं तैलं जीर्णज्वरहरं परम्॥ २१४॥

नारायणतैल वातव्याधौ वक्ष्यमाणम्॥ २१४॥

अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया॥ २१५॥

अभिघातेत्यादि—न स्यात् न भवेत् शाम्यतीत्यर्थ। क्षतनामित्युर क्षतानाम्। अत्रापि ज्वरो न स्यादिति योज्यम्॥ २१५॥

## आगन्तुज्वरचिकित्सा

ओषधिगन्धविषजौ विषपीतप्रबाधनम्।
जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा॥ २१६॥

औषधीत्यादि—सुश्रुतस्य। प्रबाधन चिकित्सितम्। विषपीतप्रबाधनैरिति पाठे, विषपीतस्य यानि चिकित्सितानि तैरित्यर्थ। सर्वगन्धकृतैरिति सर्वगन्ध सौश्रुत एलादिगण, स एवात्र विषहरत्वादुक्तिन, न तु "चातुर्जातककर्पूरकक्को-

लागुरुशिल्हकम् । लवङ्गसहितश्चैव सर्वगन्ध विनिर्दिशेत् " इति निर्घस्टकारोक्तो ग्राह्य । तस्योद्वर्त्तनादिमात्रविषयत्वात् ॥ २१६ ॥

**अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ।**
**दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडजौ ॥२१७॥**

अभिचारेत्यादि—सुश्रुतस्य । अभिचारोऽथर्ववेदोक्त श्येनादियाग । अभिशापो गुर्वादीनामनिष्टाभिशसनम् । होमादिनेत्यादिशब्दात् प्रायश्चित्तबलिमङ्गलादयो गृह्यन्ते । उत्पातो निर्घातादि. । ग्रहपीडाजमिति ग्रहपीडाजन्यम् " ङ्यापो सञ्ज्ञाच्छन्दसोर्बहुलम् " इति पीडाशब्दस्याकारस्य ह्रस्वत्वम् । सुश्रुते तु " उत्पातग्रहपीडितम् " इति पाठो दृश्यते ॥ २१७ ॥

## क्रोधकामादिज्वरचिकित्सा

**क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च ।**
**आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ॥**
**हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ।**
**कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ॥**
**याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥ २१८ ॥**

क्रोधज इत्यादि —अत्र चरक " काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमै । सद्वाक्यैश्च शम याति ज्वर कामसमुद्भव " इति । आश्वासेनेत्यादि—चरकस्य स्पष्टम् । कामादिजन्यान् ज्वरान् कामादय. परस्पर नाशयन्तीत्याह कामादित्यादि चरकस्य ॥ २१८ ॥

## भूतज्वरचिकित्सा

**भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः ।**
**जयेद् भूताभिषङ्गोत्थं मनःशान्तैश्च मानसम् ॥ २१९ ॥**

भूतविद्येत्यादि—सुश्रुतस्य । भूताना यक्षराक्षसादीना शानार्थं प्रशमनार्थं च विद्या, सा च सुश्रुतोत्तरतन्त्रादावनुसरणीया । बन्धावेशनताडनैरिति अनुप्रविष्टस्य भूतस्य पुनरपसरतो मन्त्रेण सयमनं बन्ध । मन्त्रेणाकृष्य मस्तके निवेशनमावेशनम् । ताडन मन्त्रै सर्षपादिभिरभिहननम् । ताडनैरित्यत्र पूजनैरित्येव पाठः सुश्रुते दृश्यते । टीकाकृतोऽपि पूजनै. बल्युपहारस्तुत्यादिभिरिति व्याख्यानयन्ति । भूता-

मिथ्यगोत्थमिति, भूताभिनम्बन्धोत्थम् । मानम कामक्रोधादिजम् । मन शान्तैरिति मन प्रमार्दन । मन शान्तैरित्यत्र विज्ञानाद्यैरित्यपि पाठ सुश्रुते दृश्यते । टीकाकृतोऽप्यादिशब्दात् समाधिधैर्य्यादीना ग्रहणमिति व्याचक्षते ॥ २१६ ॥

## वर्जनीयविधिः

व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥ २२० ॥

ज्वरमुक्तेन यन्न सेव्य तदाह व्यायामञ्चेत्यादि—स्नानमूर्नस्कारमपि ज्वर प्रत्यानयति, तदुक्त "स्नानमाशु ज्वर कुर्य्यात् ज्वरमुक्तस्य देहिन । तस्मान्मुक्त ज्वर स्नान विषवत् परिवर्जयेत्" इति ॥ २२० ॥

## ज्वरमुक्तिलक्षणम्

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेद॰ क्षवः प्रकृतिगामिमनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ २२१ ॥

इति ज्वरचिकित्सा ।

---

ज्वरमुक्तिलक्षणमाह देह इत्यादि—वाग्भटस्य । मुख एव पाको व्याधिप्रभावात् । एव कण्डूश्च मूर्ध्नीत्यपि ॥ २२१ ॥

इति ज्वरचिकित्साविवृति ।

---

# अथ ज्वरातिसारचिकित्सा ।

ज्वरातिसारे पेयादिकर्मः स्याल्लङ्घिते हित॰ ॥ १ ॥

## उत्पलषट्कम्

ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः ।
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ २ ॥

ज्वरे सत्युपद्रवत्वेनातीसारस्य सम्भवात् ज्वरानन्तर ज्वरातीसार उच्यते। ज्वरातीसारमेलकश्च ज्वरातीसाराभ्यामन्योन्यस्य इति कृत्वा निदानसंग्रहे माधवेन न पठित। अत एवोक्त सिद्धसारे "ज्वरातिसारयोरुक्त निदान यत् पृथक् पृथक्। तत् स्याज्ज्वरातिसारस्य तेन नात्रोदित पुन" इति। ननु एव चिकित्सापि भविष्यतीति चेत्? नैवम् मिथोवर्द्धनात्। उक्त हि, 'ज्वरातीसारयोरुक्त भेषज यत् पृथक् पृथक्। न तन्मिलितयो कार्य्यमन्योन्य वर्द्धयेद् यत'। प्रायेण हि ज्वरहरमौषधमनुलोमनम्, अतिसारहरञ्च स्तम्भनमिति परस्परविरुद्धत्वात् मिलितयोर्न कार्य्यमित्यर्थ.। पेया वेति वाशब्दश्चरके यवाग्वन्तरापेक्षया। किं वा साम्लामित्यस्यानन्तर वाशब्दो योज्य। तेनानम्लामपीत्यर्थे फलति। साम्लामिति ईषदम्लाम्। अम्लत्वञ्च दाडिमरसादिना। एतच्चाम्लसात्म्य प्रति ज्ञेयम्। पृश्निपर्णीत्यादि—सुश्रुते त्वस्मिन् योगे वालकमपि दृश्यते, यथा "पृश्निपर्णीबलाबिल्वधान्यकोत्पलवालकै। सनागरै पिबेत् पेयां साधितामुदरामयी"॥ १। २॥

पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः।
जयन्त्याममतीसारं सज्वरं समहौषधा.॥ ३॥

पाठेत्यादि प्रयोग· क्वाथेन॥ ३॥

## नागरादिः

नागरातिविषामुस्तभूनिम्बामृतवत्सकैः।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः॥ ४॥

नागरेत्यादि—वत्सक इन्द्रयवः, सिद्धसारे "छिन्नाभूनिम्बशुण्ठ्यब्दकलिङ्गातिविषाकृतः" इत्युक्तत्वात्॥ ४॥

## ह्रीवेरादिः

ह्रीवेरातिविषामुस्तबिल्वधान्यकनागरैः।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम्॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम्॥ ५॥

ह्रीवेरादिर्वातश्लेष्मणीति वृद्धा·। योगोऽयमवचारणयापि। बिल्वशुण्ठ्योः स्तम्भकत्वात्, एव वक्ष्यमाणेषु॥ ५॥

### गुडूच्यादिः

गुडूच्यतिविषाधान्यशुण्ठीविल्वाब्दवालकैः ।
पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दिपिपासादाहनाशनः ॥ ६ ॥

गुडूच्यादौ कुटजेन तत्फलं लघुत्वात् पाचनत्वाच्च । अथ योगं पित्तश्लेष्मणी-त्यपि व्याचक्षते ॥ ६ ॥

### उशीरादिः

उशीरं वालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ७ ॥

उशीरेत्यादि—यद्यपि समङ्गाशब्देन मञ्जिष्ठाप्युच्यते, तथापि वराहक्रान्तयैव व्यवहरन्ति वृद्धा ॥ ७ ॥

### पञ्चमूल्यादिः

पञ्चमूलीवलाविल्वगुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीवेरकुटजत्वक्फलैः श्रृतम् ॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम् ॥ ८ ॥

(पञ्चमूल्यादौ यद्यपि "पञ्चमूलीति सामान्याद् योज्या पित्ते कनीयसी । महती पञ्चमूलीति वातश्लेष्माधिके तथा)" इति वृन्देनोक्तम्, तथापि स्वल्पपञ्च-मूल्यैव व्यवहरन्ति वृद्धा ॥ ८ ॥

कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम् ।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः ॥ ६ ॥

वत्सकस्य फलं दारु रोहिणी गजपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यमानिका ॥
द्वावप्येतौ सिद्धयोगौ श्लोकार्धेनाभिभाषितौ ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ ॥ १० ॥

नागरामृतभूनिम्बबिल्वबालकवत्सकैः ।
समुस्तातिविषोशीरैर्ज्वरातीसारहृज्जलम् ॥ ११ ॥
मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथ ।
मकरन्दगर्भयुक्तो ज्वरातीसारौ जयेद् घोरौ ॥ १२ ॥
घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीविश्वैः ।
सेन्द्रयवैः कृतमम्भः सातीसारं ज्वरं जयति ॥ १३ ॥

कलिङ्गेत्यादि यमानिकान्त योगत्रय पित्तोत्तरे इत्याहु । नागरामृतभूनिम्बे-त्यादि जयतीत्यन्त स्पष्टम् ॥ ६—१३ ॥

## कलिङ्गाद्यगुडिका

कलिङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम् ।
लाक्षाहरिद्रे ह्रीवेर कट्फलं शुकनासिकाम् ।
लोध्रं मोचरसं शङ्खं धातकीं वटशुङ्गकम् ।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ।
छायाशुष्कान् पिबेच्छीघ्रं ज्वरातीसारशान्तये ।
रक्तप्रसादनाश्चैते शूलातीसारनाशनाः ॥ १४ ॥

कलिंगेत्यादौ हारीतचन्द्राटसवादात् कलिंगस्थाने कट्वङ्ग पठन्ति, कट्वङ्गश्च श्योणाक, जम्ब्वाम्रफलयोरस्थि ग्राह्यम् । हरिद्रे इति हरिद्राद्वयम् । तण्डुलोदकञ्च "जलमष्टगुण दत्त्वा पल कण्डिततण्डुलात् । भावयित्वा ततो ग्राह्य तण्डुलोदककर्मणि" इत्यनेन ग्राह्यम् । शुकनासिका चर्मकारवटक ॥१४॥

उत्पलं दाडिमत्वक् च पद्मकेशरमेव च ।
पिबेत् तण्डुलतोयेन ज्वरातीसारनाशनम् ॥ १५ ॥

उत्पलेत्यादौ—दाडिमफलस्य त्वक्, "फल स्याद्दाडिमादीनाम्" इति वचनात् । एवमन्यत्रापि बोध्यम् । अन्ये वृक्षत्वचमाहु । पद्मस्य केशर किञ्जल्कम् । सरक्ते पित्तोत्तरे योगोऽयमित्याहु ॥ १५ ॥

## व्योषाद्यचूर्णम्

व्योषं वत्सकबीजञ्च निम्बभूनिम्बमार्कवम् ।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम् ॥

श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचाम् ।
सर्वमेकत्र संयोज्य प्रपिबेत् तण्डुलाम्बुना ॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम् ।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् ॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च ।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत् ॥ १६ ॥

व्योषादौ तत्तुल्या वत्सकत्वचामिति मिलितव्योषादिचूर्णतुल्याम् ॥ १६ ॥

दशमूलीकषायेण विश्वमक्षसमं पिबेत् ।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे ॥ १७ ॥
विडङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम् ।
मरिचेन समायुक्तं शोथातीसारनाशनम् ॥ १८ ॥

दशमूलीत्यादि—अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् कर्षमानत्वमुक्तम्, तत् क्राथ्यस्य दशमूलस्य पलरूपामुत्तममात्रामपेक्ष्य; तेन मध्यमाधममात्रानुसारेण शुण्ठीचूर्णस्य ह्रासोऽपि बोध्यः । तेनात्र प्रक्षेपः पादिकः क्राथ्यादित्येव परिभाषा प्रवर्त्तते । न तु पातव्यश्च चतुर्द्रव इति वचनाद् विश्वचूर्णापेक्षया दशमूलीक्राथश्चतुर्गुणः कार्य्यः । यतः विश्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम् । अपि च क्राथकरणं हि क्राथ्यमानापेक्षम्, क्राथ्यमानञ्च उत्तमपुरुषाद्यपेक्षम् । अतस्तत्र पलत्रिकपार्द्धपलमानमुत्सर्गतो व्यवस्थितमस्त्येव, तदपेक्षस्य च क्राथ्यस्य उत्तमपुरुषाद्यपेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याल्पमात्रत्वदोषाद् व्याधिनिवृत्तिरेव न स्यादिति विपक्षे दोषदर्शनाद् यथावस्थितचतुर्भागावशिष्टक्राथप्रयोगाच्च क्राथस्यैव प्रधानता । ततश्च यदि पातव्यश्च चतुर्द्रव इत्यनुसाराद् विश्वचूर्णापेक्षया दशमूलीक्राथश्चतुर्गुणो गृह्यते, तदा प्रधानस्य क्राथस्य न्यूनता स्यात्; चतुर्भागावशिष्टक्राथानुसारेण वा यदि चतुर्भागः चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति । तेन यत्र क्राथेन चूर्णपानम्, तत्र प्रक्षेपः पादिकः क्राथ्यादित्यस्यैव विषयः, न तु पातव्यश्च चतुर्द्रव इत्यस्येति सिद्धः । एवमन्यत्रापि क्राथेन चूर्णस्य कल्कस्य वा पाके क्राथस्य प्राधान्यमनुमन्तव्यम् । अतएव रुचकादिचूर्णे वृन्दोऽप्याह "क्राथेन चूर्णपानं यत् तत्र क्राथप्रधानता । प्रवर्त्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः" इति । चूर्णापेक्षी चूर्णमानापेक्षीत्यर्थः ॥ १७ ॥ १८ ॥

किराताब्दामृताविश्वचन्दनोदीच्यवत्सकैः।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम् ॥ १९ ॥
किराताब्दामृतोदीच्यमुस्तचन्दनधान्यकैः।
शोथातिसारतृड्दाहशमनो ज्वरनाशनः ॥ २० ॥
इति ज्वरातिसारचिकित्सा।

---

किरातेत्यादि स्पष्टम् ॥ १९ ॥ २० ॥

इति ज्वरातीसारचिकित्साविवृतिः।

---

# अथातीसारचिकित्सा।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥

ज्वरोपद्रवस्यातीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह आमेत्यादि—सुश्रुतस्य। क्रिया चिकित्सा ॥ १ ॥

मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले।
विनातिद्रवसंघातशैत्यश्लेष्मप्रदूषणात् ॥ २ ॥

आमपक्वलक्षणमाह मज्जतीत्यादि—चरकस्य। आमेति आमान्विता विट् जले मज्जति। गुरुत्वादिति आमाहितगुरुत्वात्। पक्वेति निरामा, स्रवते निरामत्वेन लघुत्वादित्यर्थः। द्वयोरप्यामपक्वलक्षणयोरपवादमाह विनातिद्रवेत्यादि—अतिद्रवत्वात् आमापि स्रवेत्; तथा अतिमङ्घातात् अतिकाठिन्यात् पक्वापि मज्जति; तथा शैत्यसहितश्लेष्मप्रदूषणात् कफसम्बन्धकृतगौरवेण पक्वापि मज्जति। शैत्यस्थाने श्वैत्यपाठे श्वेतवर्णता। एतेनातिद्रवेत्यादिकं विना मज्जनस्रवने सामनिरामलक्षणतया ज्ञेये इत्यर्थः ॥ २ ॥

शकृद्दुर्गन्धि साटोपविष्टम्भार्त्तिप्रसेकिन।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति ॥ ३ ॥

मामत्वनिरामत्वयो मध्यगृह्णानार्थमपरमपि लक्षणमाह शकृदित्यादि—आटो-पविष्टम्भाविवार्त्ता तत्सहितम् । किं वा अतिं शूलम्, आटोपो रुजापूर्वक उदरक्षोभ, विष्टम्भ मतोऽत्यल्पमलाप्रवृत्ति, प्रसेकिन कफप्रसेकिन, किं वा प्रसेक स्तोकस्तोकमलसरणम् । कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौनरुक्त्यमाशङ्कनीयम् । इह तु सम्पूर्णश्लोकानुरोधात् पठितम् ॥ ३ ॥

आमे विलंघनं शस्तमादौ पाचनमेव च ।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम् ॥ ४ ॥

आम इत्यादि—प्रद्रवमिति प्रकृष्टद्रवम्, प्रकर्षश्चात्र शास्त्रविहितत्वेन ज्ञेय । तेनात्राविहितद्रवान्ननिषेधार्थम्, विहितलाजमण्डादिविधानार्थञ्च प्रशब्दोपादान ज्ञेयम् । अत वर्जयेद् वैदल शूली कुष्ठी मास चर्यी स्त्रियम् । द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी" इत्यादि वचनेन सहात्र विरोध । अन्ये तु प्रगतद्रवमिति व्याख्याय विरोध परिहरन्ति । अपरे तु निपातस्यानेकार्थत्वात् प्रशब्दस्य ईषदर्थता व्याख्यानयन्ति । अन्ये तु केवलद्रवस्यैव निषेधो न तु लाजमण्डादेरित्याहु ॥ ४ ॥

लंघनमेकं मुक्त्वा न चान्यदस्तीह भेषजं वलिनः ।
समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥

लङ्घनपाचनयोर्मध्ये लङ्घनस्य प्राधान्यमाह लङ्घनमित्यादि—स्पष्टम ॥५॥

ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा ।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे ॥
युक्तोऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ॥ ६ ॥

ह्रीवेरेत्यादि योगत्रय षडङ्गविधिना अर्द्धशृत बोध्यम् । उदीच्य वालकम् ॥६॥

औषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः ।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च ॥ ७ ॥

प्रद्रव लघुभोजनमिति यदुक्त तदेव दर्शयति औषधसिद्धा इत्यादि—औषध वक्ष्यमाणशालपर्ण्यादि-धान्यपञ्चकादिकम् । पेया चेति पेया च वस्त्रप्रस्रुतेत्यर्थ । अतएवोक्तम् "वस्त्रस्रुता यवागूर्याऽप्रस्रुतक्षुद्रभक्तकम्" इति ॥ ७ ॥

गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात् ।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ८ ॥

गुर्वीत्यादि ।—अत्यर्थं खरा कठिना शक्तुपिण्डिका गुर्वी स्यात् । सैव विपर्य्ययादिति मृद्वी सा लघ्वी भवति । अवलेहिका अवलेहयोग्या पिण्डी ॥ ८ ॥

## बृहच्छालपर्ण्यादिः

शालपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्राविल्वानि पाठानागरधान्यकम्॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम्॥ ९॥

बृहच्छालपर्ण्यादौ—विल्वानि विल्वशलाटव भग्नाहित्वात्। यदुक्त "कफानिलहर तीक्ष्ण स्निग्ध सग्राहि दीपनम्। कटुतिक्तकषायोष्ण विल्वमाममुदाहृतम्" इति। एव सर्वत्र स्तम्भनयोगे बोध्यम्। छर्द्यान्तु विल्वस्य मूल ज्ञेयम्, "विल्वमूलं मरुच्छ्लेष्मच्छर्दिघ्न न तु पित्तकृत्" इति गुणपाठात्। आहारसयोग इति आहारस्य सयोजने सस्कार इति यावत्। सर्वातिसारिणामिति आमपच्यमानपक्वातिसारिणाम्, प्रत्येकद्वन्द्वसन्निपातातिसारिणा वा॥ ९॥

## स्वल्पशालपर्ण्यादिः

शालपर्णीबलाविल्वैः पृश्निपर्ण्या च साधिता।
दाडिमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम्॥ १०॥

स्वल्पशालपर्ण्यादि।—वाग्भटस्य॥ १०॥

यवागूमुपभुञ्जानो न तु व्यञ्जनमाचरेत्।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः॥ ११॥

यवाग्वोऽम्ला इति अम्ला अम्लविपाका॥ ११॥

धान्यपञ्चकसंसिद्धो धान्याविश्वकृतोऽथवा।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम्॥ १२॥
वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः॥ १३॥

धान्यपञ्चकेत्यादि स्पष्टम्। वातपित्ते पञ्चमूल्या इति स्वल्पपञ्चमूल्या॥१२॥१३॥

धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत्।
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत्॥ १४॥

आभ्यामिति धान्योदीच्याभ्याम्॥ १४॥

दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।
अतिसाराय कल्पन्ते भूयस्तान् सम्प्रवर्त्तयेत्॥ १५॥

दोषा इत्यादि—सन्निचिता इति सञ्चय प्राप्ता। विदग्धशब्देनात्राविपक्वाहारवाचिना चतुर्विधमप्यामविदग्धविष्टब्धरसशेषरूपमजीर्णमुच्यते। मूर्च्छिता इति

वर्द्धिता । सम्प्रवर्त्तयेदिति स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत् । उक्तं हि तेपूपेक्षैव भेषजम् ” इति, तथा स्तोकं स्तोकं विबद्धं वा विरेचनयोगेन प्रवर्त्तयेत्। अतएव वक्ष्यति स्तोकं स्तोकं विबद्धं वेत्यादि ॥ १५ ॥

नतु सङ्ग्रहणं दद्यात् पूर्वमामातिसारिणे ।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ।
दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ॥ १६ ॥

न तु सङ्ग्रहणमित्यादौ—पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणेऽपि अतिनिस्रुतबहुदोषतया क्षीणधातवे सङ्ग्रहणं देयमिति दर्शयति । अतएव वक्ष्यति क्षीणधातुबलार्त्तस्येति । अन्ये तु पूर्वं सङ्ग्रहणं न देयमिति वचनेन प्रधानमम्बष्ठा-शाल्मलकुटजत्वगादिसङ्ग्रहणं न देयमिति बोधयति , मुस्तोदीच्यादि तु पाचन-ग्रहणञ्च यत्, पूर्वमिति देयमेवेत्याहुः ॥ १६ ॥

क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः ।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥१७॥

अवस्थायामामेऽपि सङ्ग्रहणं देयमित्याह क्षीणेत्यादि—पाचनादिति केवल-पाचनात्, पाचनस्तम्भनन्तु हितमेव ॥ १७ ॥

स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १८ ॥

विरेचनावस्थामाह स्तोकमित्यादि—सशूलस्य । अभयापिप्पलीकल्कस्य सुखोष्णता कदुष्णयोगेन ज्ञेया ॥ १८ ॥

## धान्यपञ्चकम्—

धान्यकं नागरं मुस्तं वालकं बिल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥
इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ १९ ॥

धान्यकमित्यादि—अयं योगः सामपित्ते बोध्यः । यदुक्तमायुर्वेदसारे “ बिल्वविश्व-घनोदीच्य-धान्यकैः क्वथितं जलम् । सामपित्तातिसारघ्नं दीपनं धान्यपञ्चकम् । ” धान्यपञ्चकं यदुक्तं तत् शुण्ठीव्यतिरेकेण कर्त्तव्यमित्येतदर्थमाह इदं धान्यचतुष्कं स्यादित्यादि । भोजेनाप्युक्तं “ धान्यकं वालकं मुस्तं बिल्वं पित्ते

प्रयोजितम्। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्' इति। तथान्यत्राप्युक्तं 'धान्यकं बालकं मुस्तं बिल्वं पित्ते तु दीपनम्। आमशूलविबन्धघ्नं पाचनं नागरान्वितम्' इति॥ १९॥

पिप्पली नागरं धान्यं भूतीकञ्चाभयां वचाम्।
ह्रीवेरभद्रमुस्तानि विल्वं नागरधान्यकम्॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका।
तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम्॥
कफे पित्ते च वाते च क्रमादेताः प्रकीर्तिताः।
संज्ञा प्रमथ्या ज्ञातव्या योगे पाचनदीपने॥ २०॥

पिप्पलीमित्यादि—प्रमथ्यात्रयं चरकस्य। अत्र भूतीकं यमानी, भद्रमुस्तं मुस्तकमेव, समङ्गा वराहक्रान्ता। एतास्तिस्रः प्रमथ्या यथाक्रमं कफपित्तवातेष्विति चरकटीकाकृतो व्याचक्षते। अतस्तमेवार्थं चक्रोऽप्याह कफे पित्ते चेत्यादि। यद्यपि ह्रीवेरमित्यादि द्वितीयो योगो धान्यपञ्चकमेव, तथापि तस्यैव प्रमथ्यासंज्ञाविधानार्थं पुनश्चरकवाक्यं लिखितम्। न च वाक्यं प्रमथ्यामध्यपठितं ह्रीवेरमित्यादिकमेवास्तु, किं धान्यपञ्चकयोगस्य पृथक् कथनेन? सत्यम्, धान्यपञ्चकसंज्ञया हि शास्त्रव्यवहारः कर्त्तव्यो यथा धान्यपञ्चकसामिद्धं इत्यादि। तथा शुण्ठीरहितस्य तस्यैव धान्यचतुष्कसंज्ञयापि, अत एतद्विशेषकथनार्थमेव तस्य पृथक् कथनमिति ज्ञेयम्। संज्ञा प्रमथ्या इत्यादि—प्रमथ्याशब्दो हि वृद्धपरम्परया पाचनदीपन-कषाये वैद्यशास्त्रे परिभाषितः श्रूयते। यथा विडङ्गकषायः शैखरिककषायशब्देन वैद्यैरुच्यते इति॥ २०॥

त्र्यूषणातिविषाहिङ्गुवलासौवर्चलाभयाः।
पीत्वोष्णेनाम्भसा हन्यादामातीसारमुद्धतम्॥ २१॥
अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकान्।
सौवर्चलवचाव्योषहिंगुप्रातिविषाभयाः।
पिबेत् श्लेष्मातिसारार्त्तश्चूर्णिताश्चोष्णवारिणा॥ २२॥
हरिद्रादिं वचादिं वा पिबेदामेषु बुद्धिमान्।
खडयूषयवागूषु पिप्पल्यादिं प्रयोजयेत्॥ २३॥

त्र्यूषणेत्यादौ त्र्यूषणादीनां चूर्णम्। अथवेत्यादि चित्रकान्त एको योगः।

मौवर्चलेत्यादौ प्रतिविषा अतिविषा । हरिद्रादि-वचादिगणौ सौश्रुतौ । यदाह हरिद्रा दारुहरिद्रा कलशी कुटजबीजानि मधुकञ्चेति ।' 'वचा मुस्ताविषाभया भद्रदारु नागरञ्चेति ।' खडयूष इत्यादि—पिप्पल्यादिश्च सौश्रुतो गणो ज्वराधिकारे चक्रेणैवोक्तः ॥ २१—२३ ॥

तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः ।
सुपक्वः खडयूपोऽयमयं काम्बलिकोऽपरः ।
दध्यम्लो लवणस्नेहतिलमाषसमन्वितः ॥ २४ ॥

खडयूपमाह तक्रमित्यादि—अयञ्च यूष 'कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्' इत्यादिना बोध्य । तेन तीक्ष्णवीर्य्याणां मरिचाजाजीचित्रकाणामल्पमानत्वम्, कपित्थचाङ्गेर्य्योस्तु मध्यवीर्य्यत्वाद् बहुमानत्वम्, तक्रस्य तु प्रस्थमानत्व कल्पनीयम् । यूषयोनित्वाच्च मुद्गोऽपि देय । तस्यैव दध्यादियोगात् काम्बलिकसंज्ञामाह दध्यम्ल इत्यादि । दध्यम्लेति दध्ना अम्लीकृत ॥२४॥

नागरातिविषामुस्तैरथवा धान्यनागरैः ।
तृष्णातीसारशूलघ्नं पाचनं दीपनं लघु ॥ २५ ॥

नागरादौ शृतमिति शेष । उक्त हि चरके 'नागरातिविषामुस्तक्वाथ स्यादामपाचन' इति ॥ २५ ॥

पाठावत्सकबीजानि हरीतक्यो महौषधम् ।
एतदामसमुत्थानमतीसारं सवेदनम् ।
कफात्मकं सपित्तञ्च वर्च्चो बध्नाति च ध्रुवम् ॥ २६ ॥

पाठेत्यादि—सुश्रुतस्य । अय योग क्वाथेन चूर्णेन वा ज्ञेय. । 'यतोऽयं सुश्रुते विंशतियोगमध्ये पठित । तदनन्तरं सुश्रुतेनैवोक्त यथा 'प्रयोज्या विंशतिर्योगा श्लोकार्द्धविहितास्त्वमी । धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा निष्क्वाथान् वा पिबेदेषां सुखोष्णान् साधुसाधितान् इति ॥ २६ ॥

पयस्युत्क्वाथ्य मुस्ता वा विंशतिं भद्रकाह्वयाः ।
क्षीरावशिष्टं तत् पीतं हन्यादामं सवेदनम् ॥ २७ ॥

पयस्युत्क्वाथ्येत्यादौ त्रिगुणोदक बोध्यम्, यदाह वाग्भटः 'पयस्युत्क्वाथ्य मुस्ता वा विंशतिं त्रिगुणेऽम्भसि' इत्यादि । अत्र छागदुग्धमित्याहुर्वृद्धा ॥ २७ ॥

**पक्वोऽसकृदतीसारो ग्रहणीमार्दवाद् यदा।**
**प्रवर्त्तते तदा कार्य्यः क्षिप्रं सांग्राहिको विधिः॥ २८॥**

पक्व इत्यादि स्पष्टम्॥ २८॥

**पञ्चमूलीबलाविश्वधान्यकोत्पलबिल्वजाः।**
**वातातिसारिणे देयास्तक्रेणाऽन्यतमेन वा॥ २९॥**

पञ्चमूलीत्यादौ पञ्चमूली स्वल्पा महती वा। धान्यकोत्पलबिल्वजा इति बिल्वजा बिल्वशलाटव, अन्ये तु बिल्वजा इत्यनन्तर कल्पना इति शेष', तेनाविशेषात् सर्वकल्पनैव कार्य्येत्याहु। तन्न, स्वरसस्य तत्कल्पनाया गुरुत्वाच्च। अतएव कल्कोऽपि न पारिशेष्यात्, कषायश्चूर्णो वा योग्यत्वादित्याहु। अन्यतमेनेति काञ्जिकजलादीनामन्यतमेन। क्वाथपक्षे तक्रादौ अर्द्धजल देयम्॥ २९॥

## कञ्चटादिः

**कञ्चटजम्बूदाडिमशृङ्गाटकपत्त्रबिल्वह्रीवेरम्।**
**जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात्॥ ३०॥**

कञ्चटेत्यादौ—कञ्चटादीना चतुर्णा पत्रम्। नागरान्तैरष्टाभि कषाय॥३०॥

**कृत्वालवालं सुदृढं पिष्टैरामलकैर्भिषक्।**
**आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्।**
**नदीवेगोपमं घोरमतीसारं निरोधयेत्॥ ३१॥**

कृत्वेत्यादि स्पष्टम्॥ ३१॥

**किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।**
**पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम्॥ ३२॥**

किराततिक्तकमित्यादि—अत्र तण्डुलोदकमपि बोध्यम् तेन एषा चूर्ण मधुसाहिततण्डुलोदकेन पिबेदित्यर्थ। यदाह वाग्भट 'किराततिक्तक मुस्त वत्सक सरसाञ्जनम्। कटकटेरी ह्रीवेर बिल्वमध्य दुरालभा। तिला मोचरसो लोध्र समगा कमलोत्पलम्। नागर धातकीपुष्प दाडिमस्य त्वगुत्पलम्। अर्द्धश्लोकैः स्मृता योगा सक्षौद्रास्तण्डुलाम्बुना' इति। चरकेऽप्युक्त 'किराततिक्तक मुस्त वत्सक सरसाञ्जनः। बिल्व दारुहरिद्रात्वग् ह्रीवेर सदुरालभम्। चन्दनञ्च मृणालञ्च नागर लोध्रमुत्पलम्। तिला मोचरसो लोध्र समगा कमलोत्पलम्।

नागर धातकीपुष्पमुत्पल दाडिमत्वच । कट्फल नागर पाठा जम्ब्वास्थि सदुरालभा । योगा पठते सक्षौद्रास्तण्डुलोदकमयुता । पेया पित्तातिसारघ्ना श्लोकार्द्धैस्तु निदर्शिता ' इति । निश्चलस्तु वातेत्यादौ क्वाथयितेति शेष इत्याह ॥३२॥

पलं वत्सकवीजस्य श्रपयित्वा जलं पिवेत्।
यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ३३ ॥

पलमित्यादि—वाग्भटस्य । रसाशी जागलमासरसेन भुञ्जान ॥ ३३ ॥

मधूकं कट्फलं लोध्रं दाडिमस्य फलत्वचम्।
पित्तातिसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ३४ ॥

मधूकमित्यादि—चूर्णविधया योगोऽयम् ॥ ३४ ॥

कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम्।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ३५ ॥

कुटजेत्यादौ हरिद्राद्वयम्, पर्णिनीद्वय शालपर्णीपृश्निपर्ण्यौ । क्वाथेनायं योग. ॥ ३५ ॥

कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिवेत्।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ३६ ॥

कुटजत्वगित्यादि योगत्रय स्पष्टम् ॥ ३६ ॥

विल्वचूतास्थिनिर्यूह. पीत. सक्षौद्रशर्करः।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ३७ ॥

विल्वेत्यादि ख्यातम् ॥ ३७ ॥

पटोलयवधन्याकक्काथ. पेय. सुशीतलः।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशन ॥ ३८ ॥

पटोलेत्यादि ख्यातम् ॥ ३८ ॥

प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत् तु यथावलम्।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३९ ॥

प्रियङ्ग्वित्यादौ अञ्जन रसाञ्जनम् । चूर्णविधया योगोऽयम् ॥ ३९ ॥

कलिङ्गकवचामुस्तं दारु सातिविषं समम्।
कल्कं तण्डुलतोयेन पिवेत् पित्तानिलामयी ॥ ४० ॥

कलिंगेत्यादौ सातिविषमिति कलिंगादिविशेषणम् ॥ ४० ॥

कुटजं दाडिमं मुस्तं धातकीबिल्ववालकम्।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ॥
सामे सशूले रक्तेऽपि पिच्छास्रावेषु शस्यते।
कुटजादिरिति ख्यातः सर्वातीसारनाशनः ॥ ४१ ॥

कुटज दाडिममित्यादौ दाडिमफलवल्कलम् ॥ ४१ ॥

समङ्गातिविषा मुस्तं विश्वं ह्रीवेरधातकी।
कुटजत्वक्फलं बिल्वं क्वाथः सर्वातिसारनुत् ॥ ४२ ॥

समङ्गेत्यादौ समगा वराहक्रान्ता। क्वाथ इत्यत्र एषामिति शेष ॥ ४२ ॥

दलोत्थः स्वरसः पेयो हिज्जलस्य समाक्षिकः।
जयत्याममतीसारं क्वाथो वा कुटजत्वचः ॥ ४३ ॥

दलोत्थ इत्यादि स्पष्ट ॥ ४३ ॥

वटारोहन्तु सम्पिष्य श्लक्ष्णं तण्डुलवारिणा।
तत् पिबेत् तक्रसंयुक्तमतीसाररुजापहम् ॥ ४४ ॥
तण्डुलजलपिष्टाङ्कोठमूलकर्षार्द्धपानमपहरति।
सर्वातिसारग्रहणीरोगसमूहं महाघोरम् ॥ ४५ ॥

वटारोहमित्यादौ आरोहः अस्याग्रो भाग.। सर्वातिसारग्रहणीत्यत्र संयोमादेरपि रेफस्य लघुत्वान्न च्छन्दोभग.। यदुक्त 'यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्। न च्छन्दोभग इत्याहुस्तददोषाय सूरय ' इति ॥ ४४—४५ ॥

कल्कः कोमलवब्बोलदलात् पीतोऽतिसारहा ॥ ४६ ॥

कल्क इत्यादौ—कोमलवब्बोलदलः वब्बोलकिशलय. ॥ ४६ ॥

कुटजत्वक्कृतः क्वाथो घनीभूतः सुशीतलः।
लोहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत् ॥ ४७ ॥

कुटजत्वक्कृत. क्वाथ इत्यादौ घनीभूत इति चतुर्थभागावशिष्ट क्वाथ एव पुनःपाकात् तथा घन कार्य्य यथा चूर्णे प्रक्षिप्ते लेह. स्याद, अतएव सुशोभन इत्युक्तम् ॥ ४७ ॥

वदन्त्यत्राष्टमांशेन क्काथादतिविषारजः।
प्रक्षेप्यत्वात् पादिकन्तु लेहादिति च नो मतिः॥ ४८॥

अतिविषाचूर्णं कियद्देयमित्येतदर्थमाह वदन्तीत्यादि—चतुर्थभागावशिष्ट-क्काथापेक्षया अष्टमांशेनातिविषाचूर्णं देयमिति वदन्ति वृद्धा। चक्रस्तु स्वमतमाह प्रक्षेप्यत्वादित्यादि—तदतिविषाचूर्णं पादिकं चतुर्भागावशिष्टक्काथापेक्षयेत्यर्थ कुत इत्याह प्रक्षेप्यत्वादिति। लेहादिति ल्यब्लोपे पञ्चमी, लेहमुद्दिश्य प्रक्षेप्यत्वा-दित्यर्थ। तदुक्तं "लेहे यत्र तु नो भागो निर्दिष्टो द्रवकल्कयोः। तत्रापि पादिकं कल्को द्रवात् कार्य्यो विजानता इति॥" 'कल्को दृशदि पेषितः' इति हि कल्क-लक्षणम्। अत कल्कशब्देन चूर्णस्यापि ग्रहणम्। द्रवादिति चतुर्भागावशिष्टात्। अतः क्काथ्यपलचतुष्टये दत्तस्य शरावचतुष्टयजलस्य पादशेषादष्टपले क्काथे अतिविषा-चूर्णपलद्वयमित्यर्थ। लेहाकारीकृतक्काथापेक्षया पादिकमिति तु न व्याख्येयम्। द्रवात् पादिकं कार्य्यं इत्युक्तेः। तत्रापि लेहाकारात् द्रवादिति व्याख्याने कष्ट-कल्पना स्यात्। अतिविषायुक्त इति घनीभूतक्काथस्य विशेषणम्, तेन क्काथे घनी-भूते अतिविषाचूर्णप्रक्षेप इत्यर्थ। वृद्धवैद्यास्तु मधुनापि लेहं कारयन्ति साय-समयेऽपि॥ ४८॥

## अङ्कोठवटकः

सदार्व्यङ्कोठपाठानां मूलं त्वक् कुटजस्य च।
शाल्मलीशालनिर्यासधातकीलोध्रदाडिमम्।
पिष्ट्वाक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना॥
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः।
पिबेदत्ययमापन्नो विड्विसर्गेण मानवः।
अङ्कोठवटको नाम्ना सर्वातीसारनाशनः॥ ४९॥

सदार्वीत्यादौ दार्वी दारुहरिद्रा, अङ्कोठ अङ्कोड इति ख्यातस्तरु। तस्य-मूलमेव। उक्तं हि हारीते 'पलञ्चाङ्कोठमूलस्य पाठा दार्वीञ्च तत्समाम्। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्' इत्यादि॥ ४९॥

पयस्यर्द्धोदके च्छागे ह्रीवेरोत्पलनागरैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिताः॥ ५०॥

पयसीत्यादि—चरकस्य। नागरमत्र मुस्तं, न तु शुण्ठी, रक्तातिसारे 'अजा

क्षीरक्रोष्ट्रीघनजलोत्पलै ' इति जतुकर्णसंवादात् । क्रोष्ट्री पृश्निपर्णी । अतएव पृश्निपर्ण्यन्त एको योग., अन्ये तु पृश्निपर्ण्या च नाधिता इति पृथक्पाठ , पृश्निपर्णीक्काथेन नाधिता इत्यर्थ । तेनार्द्धोदकच्छागदुग्ध पृश्निपर्णीक्काथैर्मिलित्वा पाकः कार्य्य. । उक्त हि वाग्भटे ' पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरै । पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता ' इति म्रवते ॥ ५० ॥

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम् ।
धातकीशृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना ॥
क्षौद्रेण युक्तं नुदति रक्तातीसारमुल्वणम् ।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत् ॥ ५१ ॥

रसाञ्जनमित्यादि—अत्र कुटजस्य फल त्वक् च । सुश्रुतेऽप्युक्त ' रसाञ्जनं नातिविष त्वग्वीज कौटज तथा । धातकीं नागरञ्चैव पाययेत् तण्डुलाम्बुना । सशूल रक्तजं हन्ति योगो मधुसमन्वितः ' इति ॥ ५१ ॥

विडङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम् ।
मरिचेन समायुक्तं शोथातीसारनाशनम् ॥ ५२ ॥

विडङ्गेत्यादि—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहु. ।

## वत्सकादिः

सवत्सकः सातिविषः सबिल्वः
सोदीच्यमुस्तश्च कृतः कषायः ।
सामे सशूले सह शोणिते च
चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ ५३ ॥

वत्सकादौ वत्सक कुटज. । तस्य त्वगिति चन्द्रकलाटीकाकारः वैद्यप्रसारकश्च । अन्ये तु 'बिल्वशक्रयवाम्भोदवालकातिविषाकृतः । कषायो हन्त्यतीसार साम पित्तसमुद्भवम् ' इति सुश्रुतसंवादात् फलमेवेत्याहुः । किन्तु प्रायो व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तप्राबल्ये च । यदुक्त ' कुटज. कफवातात्रकुत्वग्दोषार्शोऽतिसारजित् । तद्बीज रक्तपित्तातीसारज्वरहर हिमम् ' इति ॥ ५३ ॥

कषायो मधुना पीतस्त्वचो दाडिमवत्सकात् ।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम् ॥ ५४ ॥

कषाय इत्यादौ—दाडिमात् कोमलत्वक् ॥ ५४ ॥

**गुडेन खादयेद्बिल्वं रक्तातीसारनाशनम् ।**
**आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ५५ ॥**

गुडेनेत्यादि—अत्र गुडबिल्वयोः समभागः, बिल्वञ्च बिल्वशलाटु, तच्च पानीयेनोत्स्विद्य ग्राह्यम् । उत्स्वेदनञ्चापजलञ्चानुपेयम् ॥ ५५ ॥

**बिल्वाब्दधातकीपाठाशुण्ठीमोचरसाः समाः ।**
**पीता रुन्धन्त्यतीसारं गुडतक्रेण दुर्जयम् ॥ ५६ ॥**

बिल्वाब्देत्यादि—गुडेन मधुरीकृतं तक्रं गुडतक्रम् । पेषणमपि तक्रेण, आयुर्वेदसारम्प्रवादात् ॥ ५६ ॥

**शल्लकीबदरीजम्बूप्रियालाम्राऽर्जुनत्वचः ।**
**पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः ॥५७॥**

शल्लकीत्यादौ—क्षीरमाजं ग्राह्यमित्याहुः ॥ ५७ ॥

**जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत् ।**
**संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ।**
**तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ॥ ५८ ॥**

जम्ब्वाम्रेत्यादौ स्वरसच्छागक्षीरयोः समभागः मधुनोऽपि मात्रा चूर्णवदेव, मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवदित्युक्तेः ॥ ५८ ॥

**बिल्वं छागपयः सिद्धं सितामोचरसान्वितम् ।**
**कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ ५८ ॥**

बिल्वं छागपयः सिद्धमित्यादि—बिल्वशलाटूत्स्वेदनयोग्येन छागदुग्धेन किञ्चित् पानीयसहितेनोत्स्विद्य ततः सितादिना संयोज्य लेह्यम् । अत्र बिल्वशलाटुमाषकाष्टकं सितायाः एकमाषकः, मोचरसकलिङ्गयोश्चूर्णं मिलित्वा माषकम् इति वृद्धव्यवहारः । अजादुग्धमुत्स्वेदनावशिष्टमनुपेयम् ॥ ५९ ॥

**ज्येष्ठाम्बुना तण्डुलीयं पीतश्च ससितामधु ।**
**पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत् ।**
**रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ ६० ॥**

ज्येष्ठाम्बुनेत्यादावपि रक्तातिसारनाशनमिति योज्यम् । ज्येष्ठाम्बु ताण्डुलाम्बु ।

तण्डुलीयकस्य क्षुद्रमारिषस्य मूलम् । पीत्वेत्यादि—चरकस्य । वातपित्तोत्तरे योगोऽयमिति वदन्ति । पयसा पीत्वेत्यन्वय । क्षीरभुगिति क्षीरेण भुञ्जान । तयेति शतावर्य्या कल्कस्वरसरूपतया घृत पीत्वेत्यन्वय ॥ ६० ॥

कुटजस्य पलं ग्राह्यमष्टभागजले श्रृतम् ।
तथैव विपचेद् भूयो दाडिमोदकसंयुतम् ॥
यावच्चैव लसीकाभं श्रृतं तमुपकल्पयेत् ।
तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥
अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम् ।
क्काथतुल्यं दाडिमाम्बु भागानुक्तौ समं यतः ॥ ६१ ॥

कुटजस्य पलमित्यादि—कुटजछाल पल १, पा पानीय श १, शेष पल १। दाडिमफलकल्क पल १, पा पा श १, शेष पल १ । एतत् क्काथद्वय मिश्रीकृत्य तावत् पक्तव्य, यावत् लसीकाभं स्यात् ततोऽष्टमापक गृहीत्वा तक्रकर्षद्वयेन सह पातव्यमित्यर्थः ॥ ६१ ॥

कल्कस्तिलानां कृष्णानां शर्कराभागसंयुतः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ६२ ॥

कल्कस्तिलानामित्यादि—शर्कराभागसयुत इति शर्कराया भागश्चतुर्थोऽश, तेन सयुत इत्यर्थ । तेन शर्करायाश्चत्वारो भागा, एकस्तिलस्येति । उक्त हि जतुकर्णे " कृष्णतिलान् शर्करापादिकान् छागीपयसा " इति । एवं चरके वाग्भटेऽपि । यथा " कल्कस्तिलाना कृष्णाना शर्करापञ्चभागिक " इति । शर्कराभागमपेक्ष्य पञ्चमो भागस्तिलकल्कस्येत्यर्थ ॥ ६२ ॥

गुददाहे प्रपाके वा पटोलमधुकाम्बुना ।
सेकादिकं प्रशंसन्ति छागेन पयसापि वा ।
गुदभ्रंशे प्रकर्त्तव्या चिकित्सा तत्प्रकीर्त्तिता ॥ ६३ ॥

गुददाह इत्यादि—पटोलमधुकाम्बुनेत्यर्द्धश्रृतेन । सेकादिकमित्यत्रादिशब्दात् प्रलेपादिग्रह । चिकित्सा तत्प्रकीर्त्तितेति गुदभ्रंशचिकित्सा, सा च क्षुद्ररोगे वाच्या ॥ ६३ ॥

अवेदनं सुसम्पक्कं दीप्ताग्नेः सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ६४ ॥

पुटपाकयोग्यावस्थामाह अवेदनमित्यादि—सुश्रुतस्य । अवेदनमशूलमल्पशूलं वा । डल्वणस्तु नानावर्णमित्यनेन साम्निपातिकोऽतिसारः पुटपाकस्य विषय इति दर्शितमित्याह ॥ ६४ ॥

## कुटजपुटपाकः

स्निग्धं घनं कुटजवल्कमजन्तुजग्ध-
मादाय तत्त्वणमतीव च पोथयित्वा ।
जम्बूपलाशपुटतण्डुलतोयसिक्तं
बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥
सुस्विन्नमेतदवपीड्य रसं गृहीत्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात् ।
कृष्णात्रिपुत्रमतपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥
स्वरसस्य गुरुत्वेन पुटपाकपलं पिबेत् ।
पुटपाकस्य पाकोऽयं बहिरारक्तवर्णता ॥ ६५ ॥

स्निग्धमित्यादि—अजन्तुजग्धमिति न क्रिमिभिर्भक्षितम् । पोथयित्वा क्षोदयित्वा । जम्बूपत्रनिर्मितपुटे तण्डुलतोयेन सिक्तमित्यर्थः । योगोऽयं रक्तपित्तोत्तर इत्याहुः ॥ ६५ ॥

## श्योणाकपुटपाकः

त्वक्पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम् ।
मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥
स्विन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः ।
शीतीकृतं मधुयुतं पाययेदुदरामये ॥ ६६ ॥

त्वक्पिण्डमित्यादि—कस्यचित् तन्त्रस्य । त्वच पिण्डरूपकल्कम् । दीर्घवृन्तः श्योणाकः । काश्मरी गाम्भारी । सुकृतमिति कुशवेष्टनेन सुष्ठु बद्धमित्यर्थः । अवकूलयेत् अङ्गारैराच्छादयेत् । कूल आवरणे इत्यस्य रूपम् । दहेदित्यन्ये । उदरामयप्रकरणादतिसारे सुश्रुते पुनरयं योगोऽन्यथा पठ्यते, यथा " त्वक्पिण्डं दीर्घवृन्तस्य पद्मकेशरसंयुतम् । काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम् " शेष

तुल्यमेवेति । श्योणाकस्य त्वच पद्मकेशरञ्च समभाग कृत्वा सम्पिष्य, त पिण्ड गाम्भारीपत्रपद्मपत्रयो· पुटे निक्षिप्य, सूत्रेणावेष्टय मृत्तिकया चावलिप्य निर्धूमखदिराङ्गारेषु पुटपाकविधिना पक्त्वा रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृत । अत्र श्योणाकपुटपाके वाग्भटसवादात् मधुस्थाने शर्कराप्रक्षेपोऽपि वोध्य ॥ ६६ ॥

## कुटजलेहः

शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत् ।
सौवर्चलयवक्षारविडसैन्धवपिप्पली-
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥
लिह्याद्बदरमात्रं तत् शीतं क्षौद्रेण संयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥ ६७ ॥

शतमित्यादि—अर्मणो द्रोण । लेहमिति लेहाकार यथा भवति तथा पचेत् । पलद्वयमिति मिलित्वा । आसन्नपाके चूर्णप्रक्षेप । यवक्षारस्थाने गुडक्षारपाठो न प्रसिद्ध । वदरमात्रमित्यष्टमाषकम् । माषचतुष्टयेन व्यवहार । क्षौद्रयुक्तमित्युपयोगकाले अनुरूप मधु दत्त्वा उपयोज्यम् ॥ ६७ ॥

## कुटजाष्टकः

तुलामथार्द्रां गिरिमल्लिकायाः
संक्षुद्य पक्त्वा रसमाददीत ।
तस्मिन् सुपूते पलसम्मितानि
श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥
पाठां समङ्गातिविषां समुस्तां
बिल्वञ्च पुष्पाणि च धातकीनाम् ।
प्रक्षिप्य भूयो विपचेत्तु ताव-
द्दर्वीप्रलेपः स्वरसस्तु यावत् ।
पीतस्त्वसौ कालविदा जलेन
मण्डेन वाजापयसाथवापि ।

निहन्ति सर्वन्त्वतिसारमुग्रं
कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्यां विविधञ्च रक्तं
शूलं तथार्शांसि सशोणितानि ।
असृग्दरञ्चैवमसाध्यरूपं
निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥
तुलाद्रव्ये जलद्रोणो
द्रोणे द्रव्यतुला मता ॥ ६८ ॥

तुलामित्यादि—तुलाद्रव्ये जलद्रोण इति वक्ष्यति । रसश्च पादावशिष्ट एवो-त्सर्गसिद्ध । पलसम्मितानीति प्रत्येक, द्रव्यप्रधानत्वान्निर्देशस्य । समङ्गा वराह-क्रान्ता । शाल्मलेनेति शाल्मलीवेष्टकेन । अत्र केचित् चूर्णं दत्त्वैव पाक, "प्रक्षिप्य भूयो विपचेत्" इति वचनात् प्रचाराच्चेत्याहु । अन्ये तु तस्मिन् सुपूते भूय-पचेत्, ततो मनाक् दर्वीप्रलेपनावस्थाया शाल्मलीवेष्टकादिचूर्णं प्रक्षिप्य, ततो रस इति योज्यम् । एतेन "प्रायो न पाकश्चूर्णानां भूरिचूर्णस्य योगत " इत्यपि वचन-मनुगृहीत भवतीत्याहु । व्यवहारश्चानेनैवेति । जलेनेति शीतलजलेनाग्निमान्द्ये, मण्डेन वस्तिदुष्टौ, छागीदुग्धेन रक्ते ॥ ६८ ॥

## षडङ्गघृतम्

वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः ।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम् ।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ६९ ॥

षडङ्गघृते दार्व्याश्च त्वच उत्तमा इति सर्वत्र दार्व्यास्त्वच एव ग्राह्या उत्तम-त्वात् । तस्य दुर्लभत्वात् अत्र काष्ठमेव गृह्यते । षड्भिरिति षट् यथालाभ-ग्रहणनिषेधार्थम् । एभि कल्कैरर्थाच्चतुर्गुणमेव जल देयम् । इदमेव घृत कुटजत्वचा समाङ्ग भवति, तदुक्त वैद्यप्रदीपे 'मण्डेन पेय तत्रापि समाङ्ग कुटजत्वचा' इति ॥ ६९ ॥

## क्षीरिद्रुमाद्यं घृतम्

क्षीरिद्रुमाभीरुरसे विपक्वं
तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं
रक्तातिसारं शमयत्युदीर्णम् ॥ ७० ॥

क्षीरिद्रुमेत्यादौ—क्षीरिणो द्रुमा. वटोडुम्बरादय । एषामन्यतमस्य समुदितस्य वा क्वाथ.। शतावरीरसश्च घृतापेक्षया मिलित्वा त्रिगुण.। कल्कोऽप्येषामेव। पयश्च स्नेहसमम्। घृतमपेक्ष्य च सिताया अर्द्धं षोडशपलमित्यर्थ । मधुनोऽपि घृतमपेक्ष्यैव पादिकत्व ज्ञेयम् ॥ ७० ॥

जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्भेषजैः सिद्धं देयं वा वारिसाधितम् ॥ ७१ ॥

क्षीरपानविषयमाह जीर्ण इत्यादि—तद्भेषजैरिति अतिसारहन्तृभेषजै.। देय वा वारिसाधितमिति केवलेन त्रिगुणेन जलेन साधितमित्यर्थः। उक्त हि सुश्रुते 'यथामृत तथा क्षीरमतीसारेषु पूजितम्। चिरोत्थितेषु तत् पेयमपा भागैस्त्रिभि. शृतम्' ॥ ७१ ॥

बालं बिल्वं गुडं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥ ७२ ॥

बालबिल्वमित्यादि—चरकस्य। वाते प्रतिहत इति विबद्धवाते ॥ ७२ ॥

पयसा पिप्पलीकल्क. पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥७३॥

पयसेत्यादि—दुग्ध पल१, पिप्पली माष ४, अथवा मरिचचूर्ण माष २, एव व्यवहरन्ति। सविबन्धाया प्रवाहिकायामय योग ॥ ७३ ॥

कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सराम्लः स्नेहाढ्यः खडो हन्यात् प्रवाहिकाम् ॥७४॥

कल्क स्यादित्यादि—चरकस्य। अत्र स्नेहाढ्यता तिलदधिसरयोगात्। खड इत्यस्यैव योगस्य सज्ञा। चरके खडस्थाने सद्य इति पाठान्तरम् ॥ ७४ ॥

बिल्वोपर्णं गुडं लोध्रं तैलं लिह्यात् प्रवाहणे ॥ ७५ ॥

बिल्वोपर्णेत्यादौ बिल्व बिल्वशलाटु, ऊपर्ण मरिचम्। यदुक्तं 'बिल्वपेशी गुड लोध्र तैल मरिचयोजितम्' इति। तैलेन लेह ॥ ७५ ॥

दध्ना ससारेण समाक्षिकेण
भुञ्जीत निश्चारकपीडितस्तु।
सुतप्तकुप्यक्कथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन ॥ ७६ ॥

दध्नेत्यादि—सुश्रुतस्य। ससारेण अनुद्धृतनवनीतेन। निश्चारक प्रवाहिका, यदाह पराशर—'निर्वाहयेत् सफेनञ्च पुरीषं यो मुहुर्मुहु। प्रवाहिकेति सा ख्याता कैश्चिन्निश्चारकश्च स' इति। सुतप्तकुप्यक्कथितेनेति अत्यन्ततप्तसुवर्णरजत-नरलोहप्रक्षेपात् क्वथितेन। अन्ये तु अघटित रूप्यादि कुप्यमाचक्षते। केचित्तु कुप्यस्थाने कूपं पठन्ति, व्याचक्षते च कूप पाषाणभेदो दक्षिणापथे ख्यात-गण्डनाम्याकृतिरिति ॥ ७६ ॥

दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत्।
स पिबेत् फाणितं शुण्ठीदधितैलपयोघृतम् ॥ ७७ ॥
शोथं शूलं ज्वरं तृष्णां कासं श्वासमरोचकम्।
छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातीसारिणं त्यजेत्।
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ॥ ७८ ॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम्।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ ७९ ॥

इत्यतीसारचिकित्सा।

दीप्ताग्निरिति—सुश्रुतस्य। एतत्सर्वमालोच्य पेयम् ॥ ७७—७९ ॥

इति अतीसारचिकित्साविवृतिः।

# अथ ग्रहणीचिकित्सा।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥ १ ॥

ग्रहण्यतीसारयो परस्पर कार्य्यकारणभावसम्बन्धोऽस्तीत्यनन्तर ग्रहणीचिकित्सितमुच्यते ग्रहणीमाश्रितमित्यादि—वाग्भटस्य । ग्रहणी अग्न्याधाननाडी, यदुक्तम् 'अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता' इति । अजीर्णवदुपाचरेदिति, आमादजीर्णेषु यथा वमनाद्युपचारो दीपनपाचनञ्चौषधम्, तथेत्यर्थ । अतीसारोक्तविधिनेति लङ्घनलघ्वन्नपाचनादिना ॥ १ ॥

शरीरानुगते सामे रसे लङ्घनपाचनम् ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान् ॥ २ ॥

शरीरानुगत इत्यादि—चरकस्य। शरीरानुगते शरीरव्यापके। सामे रस इति आमशब्दोऽत्र भावप्रधान, तेन आमतासहितेऽपक्व इत्यर्थ । रस इत्याहाररसे । विशुद्धामाशयायेति—वमनविरेचनलङ्घनैर्यथायोग्यतया निर्हृतामदोषाय ॥ २ ॥

कपित्थविल्वचाङ्गेरीतक्रदाडिमसाधिता ।
पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ ३ ॥

कपित्थेत्यादि—चरकस्य । कपित्थविल्वयो फलम्; दाडिमफलस्य तु त्वक्, अन्ये तु फलमेवेत्याहु । कपित्थादीना चतुर्णां मृदुद्रव्यत्वेन मिलित्वा पल कल्क, तक्रञ्च द्रवस्थाने, तच्च तावच्छेषम् यावता यवागू सिध्यति । वृद्धवैद्यास्तु अत्यम्लगुरुत्वभिया तक्रजलाभ्या तुल्याभ्या पाकमिच्छन्ति । ग्राहिणीत्यन्ता एका यवागू, एषा च वातकफे । सवाते पाञ्चमूलिकीति द्वितीया, वातातिसारे स्वल्पपञ्चमूलसिद्धा यवागूर्हितेति शेष, 'भुवाथैर्वाप्यतीसार' इति जतुकर्णसवादात् ॥ ३ ॥

ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥ ४ ॥

तक्रस्य ग्रहणीदोषसात्म्यतां दोषत्रयहितत्वञ्च सहेतुकमाह ग्रहणीदोषिणामित्यादि—दीपन ग्राहि लाघवादिति पथ्यत्वे हेतु । मधुरपाकित्वान्न च पित्तप्रकोपणमिति, अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्त न प्रकोपयति; चकारान्नापि पित्त शमयतीति आकूतम्, किंवा 'सर्वमेवान्न प्रायो ह्यस्य विदह्यते' इति उक्तेर्विदाहजनक यदस्ति, तदपि तक्रप्रयोगे विदाहकृन्न भवति, मधुरपाकित्वात्

तक्रस्य । न तु जाताम्लत्वेन पित्तप्रकोपननिषेधार्थमयं ग्रन्थ, मधस्कोपयोगेन पित्त-कारिणोऽम्लरसस्याभावात् । अम्लञ्च न प्रयोज्यं विदाहित्वादेव, अतएवाह मध-स्कमविदाहीति सद्योमथितमेव तक्रं पच्यमानावस्थायां विदाहकृन्न भवति । किञ्चि-त्कालस्थितं पुनरम्लत्वाद् विदाहि भवत्येव । यत्तु स्वाद्वम्लमान्द्यत्वादित्यनेन अम्ल-रसत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहु । विकाशित्वादिति दोषावृतस्रोतोविशो-धकत्वादित्यर्थ । रौक्ष्यादित्यत्र वैशद्यादित्यपि पाठान्तरम्, पैच्छिल्यरहितत्वादि-त्यर्थ । एतच्च बलिनो जीर्णावस्थायां ग्रहण्यां देयमित्याहु ॥ ४ ॥

शुण्ठीं समुस्तातिविषां गुडूचीं
पिबेज्जलेन क्वथितां समांशाम् ।
मन्दानलत्वे सततामतायां-
मामानुबन्धे ग्रहणीगदे च ॥ ५ ॥

शुण्ठीमित्यादि—सततामतायामिति सर्वदा आमकोष्ठतायाम् । आमानुबन्ध इति आमे प्रवर्त्तमान इत्याहु । ग्रहणीगदविशेषणतया पुनरामानुबन्ध इति क्वचित् पाठो दृश्यते ॥ ५ ॥

धान्यकातिविषोदीच्ययमानीमुस्तनागरम् ।
बलाद्विपर्णीबिल्वञ्च दद्याद्दीपनपाचनम् ॥ ६ ॥

धान्यकेत्यादियोगं क्वाथेन ॥ ६ ॥

## चित्रकगुडिका

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषहिङ्ग्वजमोदाश्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुडिका मातुलुङ्गस्य दाडिमाम्लरसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च ।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥ ७ ॥

चित्रकमित्यादि—चरकस्य । अत्र कपिञ्जलाधिकरणकन्यायात् केचिल्लवण-मिच्छन्ति, तन्न, ' पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् । दीप्यकं हिंगु-गुडिका बीजपूररसे कृता । कोलदाडिमतोये वा परं पाचनदीपनी ' इति वाग्भट-

वचनात् । अतएव चक्रोऽप्याह सौवर्चलमित्यादि—औद्भिद शाम्बरिलवणम्, उत्कारिकेत्यन्ये । सामुद्रक करकचम् । गुडिकेयमार्द्रकरसेनापि बोध्या आयुर्वेदमारदर्शनात् ॥ ७ ॥

## श्रीफलादिः

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः ।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ ८ ॥

श्रीफलेत्यादि—नागरचूर्णं कटुत्वमात्रकृत् । सगुड इति समगुड । अथ योगो वाते इत्याहुः ॥ ८ ॥

## पञ्चपल्लवम्

जम्बूदाडिमशृङ्गाटपाठाकञ्चटपल्लवैः ।
पक्वं पर्य्युषितं बालविल्वं सगुडनागरम् ।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥ ९ ॥

जम्बूदाडिमेत्यादि—एषा पल्लवैरास्तरण कृत्वा अनुरूपञ्च जल दत्त्वा बालविल्वमुत्स्वेध पर्य्युषित कार्य्यम् । सगुडनागरमिति विल्वसमो गुड, नागरचूर्णन्तु कटुत्वमात्रकारकम्। रक्ते तु नागर न देयम् । उत्स्वेदनशेषजलमनुपेयामित्याहुर्वृद्धाः ॥ ९ ॥

नागरातिविषामुस्ताक्वाथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वातग्रहण्यान्तु घृतानि च ॥ १० ॥

नागरेत्यादि स्पष्टम् । हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम् ॥ १० ॥

## नागराद्यं चूर्णम्

नागरातिविषामुस्तं धातकी सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥
पिवेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यश्चोपवेश्यते ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥

शीतकषायमानेन तण्डुलोदककल्पना ।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनम् ॥ ११ ॥

नागराद्यचूर्णे सक्षौद्रमिति मधुप्रक्षेपयुक्तम् । कृष्णात्रेय पुनर्वसु । तण्डुलाम्बुनेत्यादि । तण्डुलाम्बुना तण्डुलधावनाम्बुना । तच्च तण्डुलाम्बु कथं कर्त्तव्यमिति जिज्ञासाया स्वमतं वृन्दमतञ्चोपन्यस्यति शीतकषायमानेनेत्यादि— शीतकषायविधानञ्च 'क्षुण्णमुष्णाम्भसि न्युष्टं शीतमाहुश्चिकित्सकाः' इति जलमत्र तण्डुलमपेक्ष्य षड्गुणं ग्राह्यम् । उक्तं हि 'षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयो' इति । वृन्दमतमाह केऽपीत्यादि—अन्ये तु द्विगुणमम्बु तण्डुलेन समं चिरं स्थितं तण्डुलाम्बु वदन्ति । अपरे तु अनियततण्डुलमनियतजलेन प्रक्षाल्य जलं गृह्णन्ति ॥ ११ ॥

## भूनिम्बाद्यं चूर्णम्

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकाद् वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत् ।
गुडयोगाद् गुडाम्बु स्याद् गुडवर्णरसान्वितम् ॥ १२ ॥

भूनिम्बेत्यादि— द्वौ चित्रकात् तथा वत्सकत्वग्भागान् षोडशेति—प्रथमभागापेक्षया द्विभागषोडशभागपरिग्रहः । गुडयुक्तं शीताम्बु गुडशीताम्बु गुडश्चात्र गुणवर्णतामाधुर्य्योपपत्तिजनको देय इत्याह गुडयोगादित्यादि । वैद्यप्रसारके तु सर्वचूर्णसमो गुडः शीतलजलेन च पानमित्युक्तम् । व्यवहारस्तु पूर्वेणैव । पैत्तिकग्रहण्यामम्लपित्तचिकित्सितमपि बोध्यम् । तदुक्तं वद्यप्रदीपे 'अम्लपित्तहितं यच्च पानभोजनभेषजम् । पैत्तिके ग्रहणीदोषे तत्सर्वमुपकल्पयेत्' इति ॥ १२ ॥

ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥ १३ ॥

ग्रहण्यामित्यादि स्पष्टम् ॥ १३ ॥

समूलां पिप्पलीं क्षारौ द्वौ पञ्चलवणानि च ।
मातुलुङ्गाभयारास्नाशटीमरिचनागरम् ।
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥

श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ।
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ॥ १४ ॥

समूलामित्यादि । मातुलुङ्गस्यात्र मूलम् । एतैरिति पिप्पलीमूलादिभि. कल्करूपैः ॥ १४ ॥

## भल्लातकक्षारः

भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः ।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ १५ ॥

भल्लातकमित्यादि—चरकस्य । गोपुरीषाग्निनेति अचिन्त्यप्रभावात् संयोगसंस्कारजशक्तीनामिति । स क्षार इति भल्लातकादीनामन्तर्धूमदाहात् य क्षारः स एव सर्पिषा पीत इत्यर्थ. । भोज्ये व्यञ्जने वा स क्षारो देय ॥ १५ ॥

सर्वजायां ग्रहण्यान्तु सामान्यो विधिरिष्यते ॥ १६ ॥

सर्वजायामित्यादि—सामान्यो विधिरिति प्रत्येकदोषोक्तचिकित्सामेलकेन त्रिदोषग्रहणीचिकित्सा कार्य्येत्यर्थ. ॥ १६ ॥

चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद् द्विगुणम् ।
गुडमिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम् ॥ १७ ॥

चूर्णमित्यादि—गुडमिश्रनक्रेणालोड्य पीतमित्यर्थः ॥ १७ ॥

## पाठाद्यं चूर्णम्

पाठाविल्वानलव्योषजम्बूदाडिमधातकी ।
कटुकातिविषामुस्तदार्वीभूनिम्बवत्सकैः ॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना ।
सक्षौद्रञ्च पिबेच्छर्दिज्वरातीसारशूलवान् ।
तृड्दाहग्रहणीदोषारोचकानलसादजित् ॥ १८ ॥

पाठादिचूर्णे जम्बूफलास्थि, एतत्साहचर्य्यात् दाडिमफलस्यापि बीजम् । वत्सक इन्द्रयवः ॥ १८ ॥

## कपित्थाष्टकचूर्णम्।

यमानीपिप्पलीमूलचातुर्जातकनागरैः।
मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः॥
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमतिन्दुकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः॥
चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान्।
कासं श्वासारुचिं हिक्कां कपित्थाष्टमिदं जयेत्॥ १६॥

यमानीत्यादि—अयं योगो वाग्भटे अतीसारचिकित्सिते लिखितः। अग्नि-श्चित्रकः, जलं बालकम्। समैरिति समभागैः। वृक्षाम्लं महार्द्रकम्। त्रिगुणैरिति एकभागापेक्षया वृक्षाम्लादीनां षण्णां प्रत्येकं त्रिगुणत्वम्। षड्गुणसितैः कपि-त्थाष्टगुणैः कृत इति सिताकपित्थयोरपि षड्गुणाष्टकगुणत्वे एकगुणापेक्षयैव, एवं कृतश्चूर्ण इति योज्यम्। अरुणस्तु वाग्भटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादि-तिन्दुकान्तानां विशेषणं व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सितायाः षड्गुणत्वमाह। तथा सति सिताभागानां शतमष्टाधिकं भवति। अन्ये तु षड्गुण-सितैः कपित्थाष्टगुणैः इति पठन्ति, व्याख्यानयन्ति च—एकभागापेक्षया कपित्थ-स्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वमिति, तथा सति सिताया अष्टचत्वारिंशद्भागा भवन्तीति। अपरे तु षड्गुणमिति कपित्थाष्टगुणी-कृत इति चूर्णविशेषणं कृत्वा समुदितचूर्णापेक्षया सिताकपित्थयोः षड्गुणाष्टगुण-त्वमित्याहुः। एतन्मतत्रयमपि न व्यवहारसिद्धम्, शर्कराकपित्थयोरतिबहुत्वा-दिति। तस्मादेकभागापेक्षयैव षड्गुणाष्टगुणत्वमिति। कपित्थभागाधिक्यादस्य कपित्थाष्टक इति संज्ञा॥ १६॥

## दाडिमाष्टकः।

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्।
यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकम्॥
पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः॥ २०॥

कर्षोन्मितेति—वाग्भटस्य। तुगाक्षीरी वंशलोचना, चातुर्जातं त्वगेला-पत्रकेशरम्। द्विकार्षिकमिति प्रत्येकं, निर्देशस्य द्रव्यप्रधानत्वात्। एवं यमान्या-

दिकमपि प्रत्येक पलाशिकम् । ग्रन्थिक पिप्पलीमूलम्, दाडिमस्यात्र फल " फलन्तु दाडिमादीनाम् " इत्युक्तेः । एवमन्यत्रापि । चकाराद् सिनाया अपि अष्टौ पलानि ॥ २० ॥

## वार्त्ताकुगुडिका

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात् ।
वार्त्ताकुकुडवश्चार्कादष्टौ द्वे चित्रकात् पले ।
दग्ध्वा रसेन वार्त्ताकोर्गुडिका भोजनोत्तराः ।
भुक्ता भुक्तं पचन्त्याशु कासश्वासार्शसां हिता ।
विसूचिकाप्रतिश्यायहृद्रोगघ्नाश्च ता मताः ॥ २१ ॥

चतुष्पलमित्यादि—वाग्भटस्य । त्रिपल लवणत्रयादिति मिलित्वा, निर्देशस्य मानप्रधानत्वात् । त्रिफला लवणानि चेति ये पठन्ति, ते त्रिफलालवणैर्मिलित्वा चतुष्पल वदन्ति पूर्वोक्तचतुष्पलमित्यस्यापि सम्बन्धात् । लवणान्यविशेषात् पञ्चैवेत्याहु. । वार्त्ताकुकुडव इति शुष्कवार्त्ताकुपलचतुष्टय, व्यवहारात् । अर्कादिति अर्कमूलात् । दग्ध्वा रसेन वार्त्ताकोरिति अन्तर्धूम दग्ध्वा क्षारीकृत्य वार्त्ताकुरसेन गुडिका. कार्य्या इत्यर्थ. । दग्धानि वार्त्ताकुरम इति च पाठ. । भोजनोत्तरा इति भोजनमुत्तर पश्चात्कालीन यामा तथा । किंवा भोजनादुत्तरा । भुक्ता पचन्तीत्यत्र भुक्त भुक्तमित्यपि पाठ ॥ २१ ॥

## अष्टपलं घृतम्

त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात् पले ।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ २२ ॥

त्र्यूषणेत्यादौ—बिल्वमात्र इति षड्भिर्मिलित्वा पलमात्रे, कल्कस्य पादिकत्वात् । चतुर्गुणजलेनाष्टपलघृतस्यात्र पाक । इत्थमेव फलदानक्षमत्वमस्य भवतीति महर्षिवचनादुन्नीयते । मात्रामिति अग्निबलानुरूपपरिमाणम् ॥ २२ ॥

## बिल्वगर्भघृतम्

मसूरस्य कषायेण बिल्वगर्भं पचेद् घृतम् ।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः ।
केवलं व्रीहिप्राणयक्क्वाथो व्युष्टस्तु दोषलः ॥ २३ ॥

मसूरस्येत्यादि—मसूरस्य क्काथोऽत्यन्तशिथिलपोट्टलकं बद्ध्वा कार्य्यं । एवं माषकुलत्थादीनामपि । बिल्वगर्भमिति बिल्वशलाटुकल्कम् । घृतमत्र प्रस्थमानमेव । ब्रीहिमासक्काथस्य तदह कार्य्यतामाह केवलेत्यादि—जन्त्वङ्ग छागादिमासम् । केवलमिति पाठे केवल समग्रयथा स्यात् तथा व्युष्टो रात्रिव्युषितो दोषल , यावता कालेन व्यम्लीभवति स एव दोषल इत्यर्थ । केवलब्रीहिजन्त्वङ्गपाठे तु द्रव्यान्तर-सयुक्तब्रीह्यादिक्काथस्य न दोषलत्वमित्याहु । तत्तु न व्यवहारसिद्धम्, अतएव वृन्दे "ब्रीहिप्राण्यङ्गयो क्काथ व्युषित दोषल मतम्" इत्येवोक्तम् । व्युष्टेति पदासिद्धिस्तु व्युष्टादिभ्योऽण् इति सूत्रनिर्देशात् ॥ २३ ॥

## शुण्ठीघृतम्

विश्वौषधस्य गर्भेण दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीसामतामयम् ॥ २४ ॥

विश्वौषधस्येत्यादि—ग्रहणीसामतामयमिति ग्रहणीनाड्याश्रितो य. सामता-रूप आमयो रोगस्तमित्यर्थ ॥ २४ ॥

## नागरघृतम्

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ २५ ॥

घृतमित्यादौ जल चतुर्गुणम् ॥ २५ ॥

## चित्रकघृतम्

चित्रकक्काथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥ २६ ॥

चित्रकघृत स्पष्टम् ॥ २६ ॥

## बिल्वादिघृतम्

बिल्वाग्निचव्यार्द्रकशृङ्गवेर-
काथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थ-
शोथाग्निमान्द्यारुचिनुद्वरिष्ठम् ॥२७॥

विल्वाग्नीत्यादौ—आर्द्रकेति शृङ्गवेरविशेषणं, तेन शुष्कस्य शुण्ठीरूपस्य निरासः। विल्वादीनां क्वाथस्त्रिगुणः, चतुर्गुण इत्येके। छागक्षीरं स्नेहसमम्॥२७॥

## चाङ्गेरीघृतम्

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली।
श्वदंष्ट्रापिप्पली धान्यं बिल्वं पाठा यमानिका॥
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम्।
चतुर्गुणेन दध्ना च तद् घृतं कफवातनुत्॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम्।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति॥ २८॥

नागरमित्यादि—अत्र हस्तिपिप्पली चवी, जतूकर्णसंवादात्। तद् यथा "दधिधान्यविल्वपाठायमानिकापञ्चकोलगोक्षुरकैः। चाङ्गेरीस्वरसे सर्पिर्गुदनि सृति-मूत्रार्त्तिनुद् ग्राहि" इति। द्रव्यावल्याञ्च हस्तिपिप्पली चवीपर्य्यायत्वेन दृश्यते "चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति। विल्वस्थाने विषापाठोऽपि जतूकर्णसंवादादेव न भवति। चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः। चतुर्गुणेन दध्ना चेत्यत्र चकारस्य समुच्चयार्थत्वात्, आयुर्वेदसारेऽपि "चतुर्गुणेन दध्ना च चाङ्गेरी-स्वरसेन च" इत्युक्तम्। अन्ये तु "स्वरसे क्षीरवद्विधि" इति वचनात् चाङ्गेरीस्वरसश्च स्नेहसम इत्याहुः, व्यवहारस्तु पूर्वव्याख्ययैव॥ २८॥

## मरिचाद्यं घृतम्

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली॥
हिङ्गु सौवर्चलञ्चैव बिडसैन्धवचव्यथ।
सामुद्रं सयवक्षारं चित्रको वचया सह॥
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत्।
दशमूलीरसे सिद्धं पयसा द्विगुणेन च॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम्।
विष्टम्भमामं दौर्बल्यं प्लीहानमपकर्षति॥
कासं श्वासं क्षयञ्चैव दुर्नामसभगन्दरम्।

कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ।
तान् सर्वान् नाशयत्याशु शुष्कं दार्वनलो यथा ॥ २६ ॥

मरिचाद्यघृते विडङ्गसैन्धववचवीति समाहारद्वन्द्वः । किंवा विडङ्गसैन्धवयुक्ता वचवीति मध्यपदलोपी समास । द्विगुणेन चेति चकाराद्दशमूलीक्वाथोऽपि द्विगुण । अन्ये तु दशमूलीरसश्चतुर्गुण इत्याहु, व्यवहारस्तु पूर्वैव ॥ २६ ॥

## महापट्पलकं घृतम्

सौवर्चलं पञ्चकोलं सैन्धवं हबुषां वचाम् ।
अजमोदां यवक्षारं हिङ्गु जीरकमौद्भिदम् ॥
कृष्णाजाजीसभूतीकं कल्कीकृत्य पलार्द्धकम् ।
आर्द्रकस्य रसं चुक्रं क्षीरं मस्त्वम्लकाञ्जिकम् ॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह दातव्यं निर्भक्तं वा विचक्षणैः ॥
क्रिमिप्लीहोदराजीर्णज्वरकुष्ठप्रवाहिकाम् ।
वातरोगान् कफव्याधीन् हन्याच्छूलमरोचकम् ॥
पाण्डुरोगं क्षयं कासं दौर्बल्यं ग्रहणीगदम् ।
महापट्पलकं नाम वृक्षमिन्द्राशनिर्यथा ॥ ३० ॥

सौवर्चलेत्यादौ—पञ्चकोल मिलितार्द्धपल, कल्कस्य पट्पलरूपत्वात् । हबुषा स्वनामख्याता, कृष्णाजाजी कृष्णजीरकम्, भूतीक यमानी । सौवर्चलादीना प्रत्येकमर्द्धपलम् । अत्र वचेति न पाठ किन्तर्हि विडमित्येव, चन्द्रटादौ दृष्टत्वात् । आर्द्रकस्वरसादीना पण्णा द्रवाणां प्रत्येक स्नेहसमत्व "पञ्चप्रभृति यत्र स्यु" इत्युक्ते ॥ ३० ॥

## स्वल्पचुक्रम्

यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ।
द्विगुणं गुडमध्वारनालमस्तु क्रमादिह ॥ ३१ ॥

स्वल्पचुक्रमाह यदित्यादि—मस्त्वादीत्यस्य विशेषण सगुडेत्यादि । आदिशब्दाद्दधि तक्रञ्च, मस्तुस्थाने यत्, तदपि मस्तुसम ग्राह्यमिति । अन्ये तु आदिभूत

मग्तु प्रथमोत्थित मस्त्वित्याहु.। त्रिरात्रस्थमिति ग्रीष्माभिप्रायेण, वर्षादिषु पुनर्यथमाणबृहच्चुक्रवदवस्थापनकालव्यवस्था। अम्लत्व यावद्वा भवतीति ॥३१॥

## बृहच्चुक्रम्

प्रस्थं तण्डुलतोयतस्तुषजलात प्रस्थत्रयञ्चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकपलान्यष्टौ गुडान्मानिके।
मान्यौ शोधितशृङ्गवेरशकलाद् द्वे सिन्धवजाज्योः पले
द्वे कृष्णोपणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढे॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरान् स्थापयेद्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट् शीतेऽष्टदिनान्यतः परमिदं विस्राव्य सञ्चूर्णयेत्
चातुर्जातपलेन संहितमिदं शुक्रञ्च चुक्रञ्च तत्॥
हन्याद्वातकफामदोषजनितान् नानाविधानामयान्।
दुर्नामानिलगुल्मशूलजठरान् हत्वानलं दीपयेत्॥ ३२॥

बृहच्चुक्रमाह प्रस्थमित्यादि—तुषजलादिति सतुषयवकृतसन्धानात्, तदभावे काञ्जिकात्। अम्लत इति तुषजलस्य दध्नश्च विशेषणम्। अम्लमूलक काञ्जिकाधिवासमूलकमित्याहुर्वृद्धा। मानिके इति मानिकाद्वयम्, मानिका पलान्यष्टौ, तेन षोडशपलमित्यर्थं। शोधितशृङ्गवेरशकलादिति निस्तुषार्द्रकखण्डात्। द्वे कृष्णोपणयोरिति ऊषण मरिचम्। तोयधरात्यये चेति चकारादत्रापि त्रीन् वासरान् स्थापयेत्। शीत इत्यनेन हेमन्तशिशिरयोरेव ग्रहणम्। विस्राव्येति वस्त्रपूत कृत्वा चातुर्जातपलेन मिलित्वा पलमात्रेण। सञ्चूर्णयेत् अवचूर्णन कारयेदिति॥ ३२॥

## तक्रारिष्टम्

यमान्यामलकं पथ्या मरिचं त्रिपलांशकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥
तक्रकंसासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम्॥ ३३॥

तक्रारिष्टे त्रिपलांशक तथा पलांशानीत्यपि प्रत्येक ज्ञेयम्। तक्रस्य कंसे आढके आसुत कृतसन्धानम्। जातमिति अम्लरसतया जातम्॥ ३३॥

## आयामकाञ्जिकम्

वाट्यस्य दद्याद् यवशक्तुकानां
पृथक् पृथक् त्वाढकसम्मितञ्च।
मध्यप्रमाणानि च मूलकानि
दद्याच्चतु पष्टिसुकल्पितानि॥
द्रोणेऽम्भस प्लाव्य घटे सुधौते
दद्यादिदं भेषजजातयुक्तम्।
क्षारद्वय तुम्बुरुवस्तगन्धा-
धनीयकं स्याद्विडसैन्धवञ्च॥
सौवर्चलं हिङ्गु शिवाटिकाञ्च
चव्यञ्च दद्याद् द्विपलप्रमाणम्।
इमानि चान्यानि पलोन्मितानि
विजर्जरीकृत्य घटे क्षिपेच्च॥
कृष्णामजाजीमुपकुञ्चिकाञ्च
तथासुरीकारविचित्रकञ्च।
पक्षस्थितोऽयं बलवर्णदेह-
वयस्करोऽतीव बलप्रदश्च॥
कान् जीवयामीति यत प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति तज्ज्ञा।
आ यामकालाजरयच्च भक्त-
मायामकेति प्रवदन्ति चैनम्॥
दकोदरं गुल्ममथं प्लिहानं
हृद्रोगमानाहमरोचकञ्च।
मन्दाग्नितां कोष्ठगतञ्च शूल-
मर्शोविकारान् सभगन्दरांश्च।
वातामयानाशु निहन्ति सर्वान्
संसेव्यमानं विधिवन्नराणाम्॥ ३४॥

आयामकालिके वाट्यस्येति निस्तुषदरदलितयवमण्डस्य तथा यवशक्तुकानाञ्च पृथक् पृथगाढकमम्मितमित्याढकप्रमाणम्। सम्मितमिति भावे क्त। चतु षष्टीत्या- कृतिमानेन। मुक्तलिप्तानीति खण्डगमण्डाक्तानि। साव्येत्याव्य। तुम्बुरु वणिग्द्रव्यम्, वस्तगन्धा फौकान्धी (अजगन्धा), शिवाटिका वशपत्री (हिङ्गुपत्री), कृष्णा पिप्पली, उपकुञ्चिका स्थूलकृष्णजीरक, आसुरी राजिका, कारवि सुगन्धि सूक्ष्मकृष्णजीरकम्। आ यामकालादिति याम प्रहररूप काल तमवधीकृत्य ॥३४॥

## कल्याणगुडः

प्रस्थत्रयेणामलकीरसस्य
शुद्धस्य दत्त्वार्द्धतुलां गुडस्य।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-
व्योषेभकृष्णाहवुषाजमोदैः ॥
विडङ्गसिन्धुत्रिफलायमानी-
पाठाग्निधान्यैश्च पलप्रमाणैः।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टा-
वष्टौ च तैलस्य पचेद् यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टं त्रिसुगन्धियुक्तम्।
अनेन सर्वे ग्रहणीविकारा
सश्वासकासस्वरभेदशोथा ॥
शाम्यन्ति चायं चिरमन्तराग्ने-
र्हतस्य पुंस्त्वस्य च वृद्धिहेतु।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं
कल्याणको नाम गुड प्रदिष्ट ॥
तैले मनाग् भर्जयन्ति त्रिवृदत्र चिकित्सका।
अत्रोक्तमानसाधर्म्यात् त्रिसुगन्धि पलं पृथक् ॥ ३५ ॥

प्रस्थत्रयेणेत्यादि—अय योग सुश्रुते कासप्रतिषेधे पठित। अत्र ग्रन्थिक पिप्पलीमूलम्, अजमोदा यमानी अन्त.परिमार्जनत्वात्, अतो यमान्या भाग-

द्वयम् । अग्निश्चित्रक । पलप्रमाणैरिति प्रत्येकम् । त्रिवृच्चूर्णं तैले मनाग् भर्जनीयम्, भर्जनेन च तस्य मन्दवीर्य्यत्वादतिविरेचकत्व न भवति । अक्षफलप्रमाण कर्षम्, व्यवहारस्तु चतु पञ्चमाषकैरिति । त्रिसुगन्धि त्वगेलापत्रकम् । त्रिवृच्चूर्णसहित एव तैले गुडमामलकीरसगोलित प्रदाय पाक, सिद्धे च लेहे ग्रन्थिकादिचूर्णप्रक्षेप इति व्यवहारो वैद्यानाम् । अनेकमानसाधर्म्यादिति ग्रन्थिकादिचूर्णस्य प्रत्येक पलमानत्वमुक्तम् तत्माहचर्य्यादित्यर्थ ॥ ३५ ॥

## कूष्माण्डगुडकल्याणकम्

कूष्माण्डकानां रूढानां सुस्विन्नं निष्कुलत्वचाम् ।
सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत् ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकानि विडङ्गानि यमानी मरिचानि च ॥
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ।
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ॥
तैलस्य च पलान्यष्टौ गुडपञ्चाशदेव तु ।
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु ।
यदा दर्वीप्रलेपस्तु तदैनमवतारयेत् ॥
यथाशक्ति गुडान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ।
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ॥
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ।
ज्वरमानाहहृद्रोग गुल्मोदरविसूचिकाः ॥
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ।
वातशोणितवीसर्पान् दद्रुचर्महलीमकान् ।
कफपित्तानिलान् सर्वान् प्ररूढांश्च व्यपोहति ॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां वृष्यश्च बल्यश्च वय स्थापनमेव च ।
गुडकल्याणकं नाम वन्ध्यानां गर्भदं परम् ॥ ३६ ॥

कूष्माण्डकानामित्यादि—रूढानामिति सम्यक्पक्कानाम्, सम्यक्पाकश्च सत्र-

न्मरातीतत्त्वेनैव भवतीति । तादृशस्य कूष्माण्डस्य खण्डखण्डीकृतस्य त्यक्तवीज-मञ्जरीवल्कलस्य त्वचा कृतास्तरणस्य किञ्चित् पानीय दत्त्वा उत्स्विन्नस्य निष्पीड्य गलितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलशत ग्राह्यम्, ततस्तस्य घृतशराव-चतुष्टये तैलस्य चाष्टपले सन्तलन कार्य्यम् । तत आमलकस्वरसस्य द्वादशशरावेण पञ्चाशद्गुडपलान्यालोड्य, तत पूत्वा सन्तलितकुष्माण्डादिकमेकीकृत्य पाच्यम्, ततो गुडपाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेप इत्यर्थ, [illegible] प्राय कर्षार्द्धेनेत्याहु ॥ ३६ ॥

## रसपर्पटिका

यास्लपित्ते विधातव्या गुडिका च क्षुधावती।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥
सम्मर्द्य कज्जलाभन्तु कुर्य्यात् पात्रे दृढाश्रये।
ततो वादरवह्निस्थलोहपात्रे द्रवीकृतम् ॥
गोमयोपरि विन्यस्तकदलीपत्रपातनात्।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥
द्वादशरक्तिकां यावत् प्रयोग प्रहारार्द्धतः।
तदूर्ध्वं वहुपूगस्य भक्षणं दिवसे पुनः ॥
तृतीय एव मांसाज्यदुग्धाद्यत्र विधीयते ॥
वर्ज्यं विदाहिस्त्रीरम्भामूलं तैलञ्च सार्षपम्।
क्षुद्रमत्स्याम्बुजखगांस्त्यक्त्वाग्निद्रः पयः पिवेत् ॥
ग्रहणीक्षयकुष्ठार्शःशोथाजीर्णविनाशिनी।
रसपर्पटिका ख्याता निवद्धा चक्रपाणिना ॥ ३७ ॥

सिद्धफला रसपर्पटीमाह यास्लेत्यादि—तत्रेति तत्र क्षुधावत्या प्रोक्तविधा यो रसगन्धकशुद्धिप्रकारो वक्तव्य, तेन शुद्धावित्यर्थ । तत्र सगन्धक रस दृढाश्रये खल्वशिलाया सम्मर्द्य कज्जलाभ चूर्ण कुर्य्यात् । वादरवह्निस्थेति वदरदारुसन्धु-क्षिताग्निस्थ इत्यर्थ । शुद्धपारदकर्ष १, शुद्धगन्धककर्ष १, एतद्द्वय खल्वे तावद्घर्षणीय लोहदण्डेन पाषाणदण्डेन वा, यावत् कज्जलाभ भवति । ततो लौहदर्विकाया-मेतच्चूर्ण दत्त्वा वदराङ्गारोपरि विन्यस्य लौहदण्डेन सञ्चाल्य यदा द्रवीभूत भवति,

तदा आर्द्रगोमयपिण्डोपरिस्थापितकोमलकदलीपत्रे ढालनीयम्, अपरकदलीपत्रान्तरेण सम्पीड्य पर्पटिकाकृतिः कार्य्या । रक्तिद्वय क्रमादिति प्रथम गुञ्जायुगलं, प्रतिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यर्थ । पर्प्पटीं कृत्वा सम्भक्ष्य द्विगुणभर्जिका जीरकगुञ्जाद्वयञ्च भक्षणीयम् । तत क्षणं स्थित्वा दन्तादिलग्नं प्रक्षाल्य जलचुलुकं पातव्यमित्युपदेशः । प्रहरार्द्धत इति प्रहरार्द्धाभ्यन्तरे । तदूर्ध्वमिति प्रहरार्द्धादूर्ध्वम् तृतीये दिवसे इति सम्बन्ध ॥ ३७ ॥

## ताम्रयोगः

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ ।
नखक्षुण्णं तदुपरि तण्डुलीयं द्विमाषिकम् ॥
ततो नैपालताम्रादि विधाय सुकरालितम् ॥
पांशुना पूरयेदूर्ध्वे सर्वां स्थालीं ततोऽनल ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्री ताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥
त्र्यूषणस्य च रक्त्येका विडङ्गस्य च तन्मधु ।
घृतेनालोड्य लेढव्य प्रथमे दिवसे तत ॥
रक्तिवृद्धिः प्रतिदिनं कार्या ताम्रादिषु त्रिषु ।
स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवर्ज्जित ।
तदा विडङ्गन्त्वधिकं दद्याद्रक्तिद्वयं पुन ॥
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ।
ग्रहणीमम्लपित्तञ्च क्षयं शूलं च सर्वदा ।
ताम्रयोगो जयत्येष वलवर्णाग्निवर्द्धन ॥ ३८ ॥

इति ग्रहणीचिकित्सा ।

ताम्रयोगमाह स्थाल्यामित्यादि—अत्रापि रसगन्धकौ क्षुधावतीगुडिकोक्तविधया शोधितौ ग्राह्यौ । सुकरालितामिति सिद्धमकासिक्थकेन नीरन्ध्रलेपितामित्यर्थ । पांशुना वालुकया । नालिका घटीमेका यावदनलज्वाला स्थाल्यधो देयेत्यर्थ । त्रिफलाया मिलित्वा चूर्णरक्तिका एव त्रिकटोरपि । सर्वमिदं चूर्णं विडङ्गान्त मधुघृताभ्यामालोड्य लेह्य । विडङ्गरक्तिका पुन स्थिरा न न्यूनाधिकमात्रा इत्यर्थ ।

यदा पुनः कोष्ठबिवन्धाध्मानादिषु विरेकोऽपेक्षितो भवति, तदैव पर विडङ्गस्य रक्तिद्वय ग्राह्यमित्यर्थं । अस्य च पत्री यथा—शोधितरसगन्धकप्रमा १, एतद् द्वय कज्जलीकृत्य दृढनूतनपातिलिकाया स्थाप्यम् । तदुपरि तण्डुलीयकशाकमूलचूर्णस्य माषकद्वयमङ्गुलीद्वयेन गृहीत्वा देयम् । अनन्तरमेतत् सर्वं कण्टकवेधयोग्येन नैपालताम्रपत्रद्वशमाषकेण कृतताम्रया अम्बरोलिरसभावितया ढक्कनीयम् । ढक्कित्वा पिष्टभक्तसिक्थकेन ताम्रिकाया रन्ध्रलेपन कार्य्यम् । तत स्थालीमध्यस्थितायास्ताम्रिकाया उपरि ता स्थालीं वालुकया पूरयित्वा, तदधो घटिका यावत् ज्वाला देया । एव कृतताम्राद्रक्ति १, मिलितत्रिफलाचूर्णरक्ति १, तथा मिलितत्रिकटुचूर्णरक्ति १, विडगचूर्णरक्ति १, एतत् सर्वं घृतमधुभ्यामालोड्य लेह्यम्, शीतलजलमनुपेयम्, प्रथमदिने । एव द्वादशदिनपर्य्यन्त रक्तिमेका कृत्वा वृद्धि । वृद्धिवत् ह्रासक्रमोऽपि एवमेव ज्ञेयम् । रसगन्धकलक्षणञ्च योगरत्नाकरे यथा—'मुक्ताफलसम स्निग्ध घन निष्पटल गुरु । चपल चपल शस्त वदन्ति भिषजा वरा' चपलमिति रम, द्वितीय चपलमिति चञ्चलम् । 'शुकपिच्छसमच्छायो नवनीतसमप्रभ । मसृण कठिन स्निग्ध श्रेष्ठो गन्धक उच्यते ।' घृतमासरसादीनाञ्चाहारविधिर्बोध्य ।

इति ग्रहणीचिकित्साविवृति ।

---

# अथार्शश्चिकित्सा ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अनुपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥

पूर्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते दुर्नाम्नामित्यादि—आद्य इति भेषजोपाय । विस्तरेण वक्ष्यमाणा चिकित्सा सारोद्धारेणाह यद्वायोरित्यादि—त्ररकस्य । अर्शसैरित्यर्शोरोगयुक्तै । शुष्कार्शसामित्यादि—आदिशब्दात् स्वेदादीना ग्रहणम् ॥ १ ॥

प्रलेपमाह—

स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम् ।
कोपातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ २ ॥

लेपादीनाह स्नुक्क्षीरमित्यादि—स्नुहीक्षारेण हरिद्राचूर्णमार्द्रं कृत्वा लेपः । उक्तं हि वाग्भटे ' स्नुक्क्षीरार्द्रनिशालेप ' इति । कोपातकी घोषकः ॥२॥

अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ३ ॥

अर्केत्यादौ—करञ्जस्य त्वक्, सुधाक्षीरमित्यत्र सुधाकाण्डश्चरके वाग्भटे च दृश्यते ॥ ३ ॥

अर्शोघ्नी गुदगा वर्त्तिर्गुडघोपाफलोद्भवा ।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः ॥ ४ ॥

वर्त्तिः फलवर्त्तिः । गुडं जलेन द्रवीकृत्य घोपाफलचूर्णं प्रक्षिप्य पक्त्वा वर्त्तिः कार्य्या । ज्योत्स्निका घोषकः ॥ ४ ॥

तुम्बीबीजं सोद्भिदन्तु काञ्जीपिष्टं गुडीत्रयम् ।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमश्नतः ॥ ५ ॥

उद्भिदमुत्कारिकालवणं शाम्भरिलवणं वा ॥ ५ ॥

महाबोधिप्रदेशस्य पथ्या कोपातकीरजः ।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम् ॥ ६ ॥

महाबोधिप्रदेशस्येति—महाबोधिर्मगधे प्रसिद्धः । पथ्या हरीतकी । कफेन श्लेष्मणा, समुद्रफेनेनेत्यन्ये, उदधिकफत्वादिति भावः । मुष्टियोगतया पूर्वव्याख्या साध्वी । लिंगवर्त्तिर्लिंगार्शः ॥ ६ ॥

अपमार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः ।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥
वातातीसारवद्भिन्नवर्चास्यर्शांस्युपाचरेत् ।
उदावर्त्तविधानेन गाढविट्कानि चासकृत् ॥ ७ ॥

अपामार्गेत्यादि स्पष्टम् । वातातीसारवदिति वातातीसारचिकित्सावत् ॥ ७ ॥

विड्विबन्धे हितं तक्रं यमानीविडसंयुतम् ।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥
तत्प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजा पुनस्तक्रसमाहताः ॥ ८ ॥

विड्विबन्ध इत्यादि स्पष्टम् । वातश्लेष्मार्शसामित्यादि—चरकस्य ॥ ८ ॥

त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ९ ॥

त्वचमित्यादि—तस्यैव । चित्रकमूलत्वच पिष्ट्वा तिलोत्सेधमात्र कुम्भगर्भे लेपो देय ॥ ९ ॥

पित्तश्लेष्मप्रशमनी कच्छुकण्डूरुजापहा ।
गुदजान् नाशयत्याशु योजिता सगुडाभया ॥
सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तियुतां वापि भक्षयेदानुलोमिकीम् ॥ १० ॥

गुदजानित्यत्र मामाकुरानिति शेष , तेन पुलिङ्गता उपपन्ना । सगुडामित्यादि स्पष्टम् ॥ १० ॥

तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥
तिलभल्लातकं पथ्या गुडश्चेति समांशिकम् ।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम् ॥११॥

तिलारुष्करेत्यादि—संयुज्यते प्रयुज्यतेऽयमिति संयोग प्रयोग एव । अन्ये तु तिलारुष्करयो· संयोगो यत्रेत्याहु ॥ ११ ॥

गोमूत्रव्युषितां दद्यात् सगुडां वा हरीतकीम् ।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत् ॥ १२ ॥

गोमूत्रव्युषितामित्यादि—चरकस्य । रात्रौ गोमूत्रस्थितामिति चक्र । सगुडामित्यन्त एको योग. । वाशब्द. पूर्वयोगापेक्षया, चरके हि 'सगुडामभया वाथ प्राशयेत् पौर्वभक्तिकीम्' इत्यभिधाय तदनन्तरमय योग उक्त., अतो भिन्नयोगत्वेन न पौनरुक्त्य स्यादिति । एतेन गोमूत्रव्युषितामिति प्रयोगानुरोधात् पुनरपि तन्त्रा-

न्तरीयगुडहरीतक्यमिहितेति निश्चलेनोक्तमसगतम्, योगद्वयस्यैव चरकोक्तत्वात् इति । पञ्चकोलयुक्तमिति पञ्चकोलचूर्णयुक्तम् ॥ १२॥

मृल्लिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ १३ ॥

मृल्लिप्तमित्यादि—वाग्भटस्य । शौरण कन्दमिति वन्यशूरणमूलम्, एव सर्वत्रार्शसि, तदभावे ग्राम्यशूरणोऽपीत्यन्ये ॥ १३ ॥

स्विन्नं वार्त्ताकुफलं घोषाया॰ क्षारजेन सलिलेन ।
तद् घृतभृष्टं युक्तं गुडेनातृप्तितो योऽत्ति ॥
पिबति च तक्रं नूनं तस्याशवेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥ १४ ॥

स्विन्नमित्यादि—घोषकक्षारोदकेन षड्गुणेनैकविंशतिवारपरिस्रुतेन उत्स्वेद्य घृते भृष्ट्वा अनुरूपगुडेन संयोज्य भक्षयेदिति ॥ १४ ॥

असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥१५॥

असितानामित्यादि—तिलाना प्रकुञ्च पलम्, प्राक् खादत अनु पश्चाच्छीतवारि खादत इति योज्यम् । द्विजदार्ढ्यम् दन्तदार्ढ्यम् ॥ १५ ॥

## दन्त्यरिष्टम्

दन्तीचित्रकमूलानामुभयोः पञ्चमूलयो ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ॥
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ॥
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत् ।
तुलां गुडस्य तत् तिष्ठेन्मासार्द्धं घृतभाजने ॥
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते ।
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः ॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते ॥ १६ ॥

दन्तीत्यादि—चरकस्य । अत्र उभयोरितिवचनबलात् पञ्चमूलयो प्रत्येक भागा ग्राह्या , त्रिफलाया इत्यत्र तु निर्देशस्य मानप्रधानत्वात् मिलितत्रिफलाया एव पलत्रय ग्राह्यम् । मासार्द्धमिति तन्त्रान्तरे तु मासमित्युक्तम्, यथा—'त्रिफला-दशमूलाग्निनिकुम्भाना पल पलम् । वारिद्रोणे स्थित पादशेषे गुडतुलायुत । आज्यभाण्डे स्थितो मास दन्त्यरिष्टो निषेवित ' इति, उभयमपि प्रमाण स्मृति-द्वैधवत् ॥ १६ ॥

सनागरारुष्करवृद्धदारकं
गुडेन यो मोदकमभ्युदारकम् ।
अर्शःषदुर्नामकरोगदारकं
करोति वृद्धं सहसैव दारकम् ।
चूर्णं चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड ॥ १७ ॥

सनागरेत्यादि—अरुष्करं भल्लातकम् । वृद्धमित्यत्र आत्मानमिति शेष । उदारकमिति महाफलम् । अस्य योगस्य चतु समसंज्ञामाह भव्यदत्त । तन्मते समेनैव गुडेन किञ्चिज्जल दत्त्वाग्नौ विपक्केन मोदकविधानम् । चक्रस्तु मोदकत्वात् गुडस्य द्वैगुण्यमाह । अन्ये तु मोदके 'मोदके द्विगुणो गुड' इति कस्यचित् अभियुक्तस्य वाक्यमनार्षमिति कृत्वा नाद्रियन्ते, उक्तरीत्या समेनापि गुडेन मोदकतोपपत्तेरिति ॥ १७ ॥

## प्राणदा गुडिका

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च ।
पिप्पल्याः कुडवार्द्धञ्च चव्यस्य पलमेव च ॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च ।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ॥
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वङ्मृणालयोः ।
गुडात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत् ॥
अक्षप्रमाणा गुडिका प्राणदेति च सा स्मृता ।
पूर्वं भक्ष्या च पश्चात्तु भोजनस्य यथाबलम् ।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा ॥

हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च ।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ॥
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे ।
विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ।
श्वासकासपरीतानामेषा स्यादमृतोपमा ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ॥
प्राणदेयं सितां दत्वा चूर्णमानाच्चतुर्गुणाम् ।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ १८ ॥

त्रिपलमित्यादि—चतुर्थं मरिचस्येति पलमेकमित्यर्थः । केशरस्य नागकेशरस्य । त्वङ्मृणालयोरिति त्वक् गुडत्वक्, अमृणालमुशीरम्, अनयोर्मिलित्वा कर्षः । पूर्वं भक्ष्या तु पश्चाच्च भोजनस्येति भोजनस्य पूर्वं भोजनाव्यवहितपूर्वकाले गुटिका भक्ष्या, तु पश्चाच्च मद्यादिकं पिबेदिति योज्यम । न तु मण्डूरादिवत् भोजनस्य पूर्वपश्चाद्भावेन भक्ष्येति कल्पनीयम्, अर्शांसि क्वचिदप्यस्य विधेरदृष्टत्वात् । मद्य वातकफेऽनुपेयम्, मांसरसो वाते, पित्ते क्षीरं, मुद्गयूषः कफे, तोयमुष्णं वातकफे, एवमन्यत्राप्यनुपानभेदो दोषभेदेन कल्पनीयः । वाग्भटे पुनरयं योगो ग्रहणीचिकित्सिते पठ्यते, तत्र चातुर्जातमुशीरञ्च प्रत्येकं कर्षमानमुक्तं, तथा—'तालीशपत्रमरिचचव्यानान्तु पलं पलम् । कृष्णा तन्मूलयोर्द्वे द्वे पले शुण्ठ्याः पलत्रयम् । चातुर्जातमुशीरञ्च कर्षांशं श्लक्ष्णचूर्णितम् । गुडेन वटकं कृत्वा त्रिगुणेन मत्रा भजेत् । मुद्गयूपरसारिष्टमस्तुपेयापयोऽनुप । वातश्लेष्मोल्वणा छर्दिं ग्रहणीं पार्श्वहृद्रुजाम् । गुदश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम् । प्रमेहकर्पीनसश्वासकासानाञ्च निवृत्तये । अभया नागरस्थाने दद्याच्चात्रैव विड्ग्रहे । छर्यादिषु च पैत्तेषु चतुर्गुणसितान्विता । पक्त्वैव गुडिका कार्य्या गुडेन सितयापि वा । परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ता' इति । शुण्ठ्याः स्थान इत्यादि—चूर्णमानादिति समुदितचूर्णमानात् । केचित्तु गुडमानाच्चतुर्गुणमिति पठन्ति, तन्न, वाग्भटविरोधात्, प्रभूतशर्करासङ्गाच्च अत्र दोषभेदेनानुपानमात्राभेदमाह अनुपानमित्यादि ॥ १८ ॥

## काङ्कायनमोदकः

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरा. ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ॥
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान् ।
कृत्वैनं भक्षयेत् प्रातस्तक्रमम्भोऽनु वा पिबेत् ॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥
काङ्कायनेन शिष्येभ्य शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ १६ ॥

पथ्येत्यादौ—मरिचस्येत्यत्राप्येकमिति सम्बध्यते । तेन मरिचस्य पलमेकमित्यर्थं । पलाभिवृद्धा क्रमश इति यथाक्रम पलेन वृद्धा । कन्दस्तु द्विगुण इति षोडशपल. । द्विगुणेन गुडेनेति समुदितचूर्णापेक्षया । अक्षसम्मितानिति कर्षसम्मितान्, व्यवहारस्तु षडष्टमापकैरिति ॥ १६ ॥

## माणिभद्रो मोदकः

विडङ्गसारामलकाभयानां
पलं पलं स्यात् त्रिवृतात्रयञ्च ।
गुडस्य षड् द्वादशभागयुक्ता
मासेन त्रिंशद् गुडिका विधेयाः ॥
निवारणे यक्षवरेण सृष्टः
स माणिभद्र. किल शाक्यभिक्षवे ।
अयं हि कासक्षयकुष्ठनाशनो
भगन्दरप्लीहजलोदरार्शसाम् ॥
यथेष्टचेष्टान्नविहारसेवी
अनेन वृद्धस्तरुणो भवेच्च ॥ २० ॥

विडगसारेत्यादौ—त्रिवृतात्रयमिति त्रिवृताया. पलत्रयम्, गुडस्य च षड्-

पलानि, द्वादशभागयुक्ता इति द्वादशपलरूपविभागेन युक्ता कृता । मासेनेति मासेनोपयोक्तव्यमिति शेष । अयमर्थ —द्वादशपलानि विभज्य मासेनोपयोज्यम् । त्रिंशद्गुडिका समभागेन कुर्य्यात् इति तेन एकैकगुडिका षड्रक्तिकाधिकनवमाष-कोपेतकर्षमाना भवति । कर्ष १, माष ६, रक्ति ६, । व्यवहारस्तु दशभिरष्टाभिर्वा माषकैरिति । निवारण इत्यत्र गुदजानामिति शेष । देश इत्यन्ते ॥ २० ॥

## स्वल्पशूरणमोदकः

मरिचमहौषधचित्रक-
शूरणभागा यथोत्तर द्विगुणा ।
सर्वसमो गुडभागः
सेव्योऽयं मोदक· प्रसिद्धफलः ॥
ज्वलन ज्वलयति जठरमुन्मूलयति शूलगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ २१ ॥

स्वल्पशूरणमोदक स्पष्ट ॥ २१ ॥

## बृहच्छूरणमोदकः

शूरणषोडशभागा वह्नेरष्टौ महौषधस्यात· ।
अर्द्धेन भागयुक्तिर्मरिचस्य ततोऽपि चार्द्धेन ॥
त्रिफला कणा समूला तालीशारुष्करक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ॥
भाग· शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गैले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ॥
द्विगुणेन गुडेन युत सेव्योऽयं मोदक प्रकामघनै ।
गुरुवृष्यभोज्यरहितेष्वितरेपूपद्रवं कुर्य्यात् ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ॥
अग्निवलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्य ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेष ॥

श्वयथुश्लीपदजिद् ग्रहणीमपि कफवातसम्भूताम् ।
नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥
हिक्कां श्वासं कासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानञ्चाथोग्रं हन्तीति रसायनं पुंसाम् ॥ २२ ॥

शूरणषोडशभागा इत्यादौ—त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नाना भागा महौषधसमा इति त्रिफलादीना प्रत्येक महौषधसमा भागा, त्रिफलायाश्च प्रत्येकम् । कणा मसूला इति पिप्पल्या फल मूलञ्चेत्यर्थ । समूला इत्यत्र स्त्रिया: पुवद्भाषितपुस्कादनूङ् इत्यादिना पुवद्भावो नोद्भावनीय । तस्योत्तरपदे स्त्रीप्रत्ययान्ते परतो विधानात् । विशेषणत्वादस्य पूर्वनिपातोऽपि नोद्भावनीय, विवक्षावशादस्यैव विशेष्यत्वात् । दहनश्चित्रक, भृगैले मरिचाशे प्रत्येकम्, भृङ्ग गुडत्वक् । गुरुवृष्यभोज्यरहितेष्विति प्रकामधनप्रतियोगितया दरिद्रेषु, उपद्रवमिति व्याप्तिम् ॥ २२ ॥

## शूरणपिण्डी

चूर्णीकृता षोडश शूरणस्य
भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद् द्वौ मरिचस्य चैको
गुडेन दुर्नामजयाय पिण्डी ॥
पिण्ड्यां गुडो मोदकवत् पिण्डत्वापत्तिकारक ॥ २३ ॥

चूर्णीकृता इत्यादि—वाग्भटस्य । मोदकवदिति द्विगुण इत्यर्थ ॥ २३ ॥

## व्योषाद्यं चूर्णम्

व्योषाग्न्यरुष्करविडङ्गतिलाभयानां
चूर्णं गुडेन सहितन्तु सदोपयोज्यम् ।
दुर्नामकुष्ठगरशोथशकृद्विबद्धा-
नग्नेर्जयत्यबलतां क्रिमिपाण्डुताञ्च ॥ २४ ॥

व्योषाग्नीत्यादि—अत्र गुडस्यैकभागत्व चूर्णयोगत्वात् इति । किन्त्वय योगो विभीतकामलकयोगात् गुडिकापि क्रियते, यदाह वाग्भट—‘ गुडव्योषाभयारेणुतिलारुष्करचित्रकै । अर्शांसि हन्ति गुडिका त्वग्विकारञ्च शीलिता ’ इति ॥२४॥

## समशर्करं चूर्णम्

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्द्ध्वमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥ २५ ॥

शुण्ठीत्यादि—नाग नागकेशरचूर्णम्, दल तेजपत्रम्। क्रमविवर्द्धितमूर्द्ध्व-मन्त्यादिति अन्तस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकद्वित्र्यादिक्रमेण वर्द्धयेदित्यर्थः। समसितमिति मिलित-सर्वचूर्णसमशर्करम्, श्वसनमिति श्वास ॥ २५ ॥

## लवणोत्तमाद्यं चूर्णम्

लवणोत्तमवह्निकलिङ्गयवां-
श्चिरिविल्वमहापिचुमर्दयुतान्।
पिब सप्तदिनं मथितालुलितान्
यदि मर्दितुमिच्छसि पायुरुहान् ॥ २६ ॥

लवणोत्तमेत्यादि—वाग्भटस्य। लवणोत्तम सैन्धवम्, वह्निश्चित्रक, कलिङ्ग-यव इन्द्रयव। चिरिविल्व करञ्ज, तस्य मूलम्, यत् पुनरस्य सुश्रुते फलग्रहणमुक्तं तच्छोधने ज्ञेयम्। महापिचुमर्द पर्वतनिम्ब, निम्बसदृशावृहत्पत्रो वृक्ष, वाकाय-नीति लोकख्यात। ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्याहुरन्ये, अस्य त्वग् ग्राह्या। मथितालुलितानिति तक्रेणालोडितान् ॥ २६॥

## नागार्जुनयोगः

त्रिफला पञ्चलवणं कुष्ठं कटुकरोहिणी।
देवदारुविडङ्गानि पिचुमर्दफलानि च ॥
बला चातिबला चैव हरिद्रे द्वे सुवर्चला।
एतत् सम्भृतसम्भारं करञ्जत्वग्रसेन च ॥
पिष्ट्वा च गुडिकां कृत्वा बदरास्थिसमां बुध।
एकैकां ता समुद्धृत्य रोगे रोगे पृथक् पृथक् ॥
उष्णेन वारिणा पीता शान्तमग्निं प्रदीपयेत्।

अर्शांसि हन्ति तक्रेण गुल्ममम्लेन निर्हरेत् ॥
जन्तुदष्टन्तु तोयेन त्वग्दोषं खादिराम्बुना ।
मूत्रकृच्छ्रन्तु तोयेन हृद्रोगं तैलसंयुता ॥
इन्द्रस्वरससंयुक्ता सर्वज्वरविनाशिनी ।
मातुलुङ्गरसेनाथ सद्यः शूलहरी स्मृता ॥
कपित्थतिन्दुकानान्तु रसेन सह मिश्रिता ।
विषाणि हन्ति सर्वाणि पानाशनप्रयोगतः ॥
गोशकृद्रससंयुक्ता हन्यात् कुष्ठानि सर्वशः ।
श्यामाकषायसहिता जलोदरविनाशिनी ॥
भक्तच्छन्दं जनयति भुक्तस्योपरि भक्षिता ।
अक्षिरोगेषु सर्वेषु मधुनाघृष्य चाञ्जयेत् ॥
लेहमात्रेण नारीणां सद्यः प्रदरनाशिनी ॥
व्यवहारे तथा द्यूते संग्रामे मृगयादिषु ।
समालभ्य नरो ह्येनां क्षिप्रं विजयमाप्नुयात् ॥२७॥

त्रिफलेत्यादौ—अतिबला श्वेतबला, सुवर्चला सूर्य्यावर्त्त । सम्भृतसम्भारमिति पाठः । सम्भृत्य सम्भारमिति पाठेऽपि सम्भार त्रिफलाद्यौषधजात सम्भृत्य मेलयित्वा करञ्जत्वग्रसेन पिष्ट्वेति योज्यम् । पृथक् पृथक् इत्यस्य पानाशनप्रयोगत इत्यनेन वक्ष्यमाणेन सम्बन्ध । तेन रोगे रोगे पृथक् पृथक् पानाशनप्रयोगत उपयुञ्जीतेति शेष॰ । गुल्ममम्लेनेति काञ्जिकेन, जन्तुर्वृश्चिकादि , इन्द्रस्वरस आकाशजलम्, श्यामाकषायस्त्रिवृताक्वाथ , भक्तच्छन्द भक्ताकाङ्क्षाम् । व्यवहार इति वाग्व्यवहाररूपे वादे, समालभ्येति आलिप्य ॥ २७ ॥

## त्रिजयचूर्णम्

त्रिकत्रयवचाहिंगुपाठाक्षारनिशाद्वयम् ।
चव्यतिक्ताकलिङ्गानि शताह्वालवणानि च ॥
ग्रन्थिबिल्वाजमोदा च गणोऽष्टाविंशतिर्मतः ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
ततो बिडालपदकं पिबेदुष्णेन वारिणा ।

एरण्डतैलयुक्तन्तु सदा लिह्यात् ततो नरः ॥
कासं हन्यात् तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ॥
हिक्काश्वासप्रमेहांश्च कामलां पाण्डुरोगताम् ।
आमान्वयमुदावर्त्तमन्त्रवृद्धिं गुदं क्रिमीन् ॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिता. ॥
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ।
अप्रजानान्तु नारीणां प्रजावर्द्धनमेव च ।
विजयो नाम चूर्णोऽयं कृष्णात्रेयेण पूजितः ॥ २८ ॥

त्रिकत्रयमित्यादि—त्रिकटु त्रिफला त्रिजात त्रिकत्रयम् । ये तु त्रिजात-स्थाने मुस्ताविडङ्गचित्रकरूप त्रिमदमाहु', तन्मते चव्यातिक्ताकालिङ्गाश्चीत्यत्राग्नि-शब्देन भल्लातक ज्ञेयम् । लवणानीति पञ्च लवणानि, अन्यथा अष्टाविंशतिसख्या नोपपद्यते । ग्रन्थि पिप्पलीमूलम्, अजमोदा यमानी । विडालपदकमिति कर्षम् । श्वासमिति केवल श्वासम्, हिक्काश्वासेति हिक्कासहित श्वास इत्यर्थ, अतो न पौनरुक्त्यम् । अन्ये तु श्वासमित्यत्र कासमिति पठन्ति । रोगान् जयतीति कृत्वा विजयसज्ञा ॥ २८ ॥

## श्रीबाहुशालो गुडः

त्रिवृत् तेजोवती दन्ती श्वदंष्ट्रा चित्रक शटी ।
गवाक्षीमुस्तबिल्वाह्वविडङ्गानि हरीतकी ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ।
षट्पलं वृद्धदारस्य शूरणस्य तु षोडश ॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम् ।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुडः ॥
लेहं पचेत् तु तं तावद् यावद्दर्वीप्रलेपनम् ।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान् ।
पलात्त्वङ्मरिचञ्चापि गजाह्वाञ्चापि षट्पलाम् ॥

द्वात्रिंशतं पलान्येवं चूर्णं दत्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥
दीपयेत् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति ।
अपीनसं प्रतिश्यायमाढ्यवात तथैव च ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तम ।
दुर्नामारिरयश्चाशु दृष्टो वारसहस्रश ॥
भवन्त्येनं प्रयुञ्जाना शतवर्षं निरामया ।
आयुषो दैर्घ्यजननो वलीपलितनाशन ॥
रसायनवरश्चैष मेधाजनन उत्तम ।
गुड श्रीबाहुशालोऽयं दुर्नामारि प्रकीर्त्तित ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ॥
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते ।
यदा दर्वीप्रलेप स्याद् यावद्वा तन्तुलीभवेत् ॥
एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः ।
सुखमर्द सुखस्पर्शो गुड पाकमुपागत ॥
पीडितो भजते मुद्रां गन्धवर्णरसान्वित ॥ २६ ॥

त्रिवृत् तेजोवतीत्यादि—कस्यचित् तन्त्रस्य । तेजोवती चवी, एव सर्वत्र । यत्र पुनश्चवी तेजोवती चास्ति तत्र पर तेजोवत्या ज्योतिष्मती गृह्यते, यथा गुग्गुलुपञ्चतिक्तके घृते । गवाक्षी गोरक्षकर्कटी, तस्या मूलम्, एव सर्वत्र । न तु गवाक्षी श्वेतापराजिता, क्वापि टीकाकृद्भिरव्याख्यातत्वात् । क्वाथ्येभ्यस्त्रिगुणो गुड इति एकचत्वारिंशत्पलक्वाथ्यापेक्षया त्रैगुण्येन गुडस्य त्रयोविंशतिपलाधिकशतपल भवति। कन्दः शूरण , त्रिवृदादीना द्विपलत्वम्, एलादीनाञ्च षट्पलत्वम्। यद्यपि निर्देशस्य द्रव्यप्रधानत्वादेव प्रत्येक सिध्यति, तथापि द्वात्रिंशत्पलानीति यदुक्त तत् क्वचित् द्रव्यप्रधाननिर्देशेऽपि प्रत्येकता नास्तीति सूचनार्थम् । तेन कैशोरकगुग्गुलौ त्रिकटोश्चूर्णं पङ्क्षपरिमाणमित्यत्र मिलित्वैव त्रिकटुचूर्णपङ्क्षपरिमितता वृद्धव्यव-

हारमिद्धेति बोध्यम्। द्वात्रिंशत पलान्येव पाठोऽन्यथा च्छन्दोभङ्गः स्यात्। क्वचिच्च द्वात्रिंशच्च पलान्येवमिति पाठ। अपीनसमिति प्रतिश्यायभेद। पीनसे च प्रतिश्याय इति पाठेऽपि स एवार्थ। अत्र अनुपानमनुक्तमपि वातकफे कोष्णाम्बु, पित्ते क्षीरादिक ज्ञेयम्। न चात्र भल्लातकप्रवेशादुष्णजलम् अयुक्तमिति शङ्कनीयम्, यतो भल्लातकलेह एव उष्णजलनिषेधो न भल्लातकयोगमात्रे। तथा चोक्तम्—"उष्णोदकानुपानन्तु स्नेहानामथ शस्यते। ऋते भल्लातकलेहात् तत्र तोयन्तु शीतलम्" इति। वृद्धास्तु शीततोयेन व्यवहरन्ति। तोयपूर्णे यदा पात्र इत्यादि गुडपाकलक्षणम्। वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्र दत्त्वा, गुडस्य मुद्रापाक निरूपयन्ति। न प्लवते न तरति पतित। पात्राधोगतो यदि न शीर्य्यते न विस्तीर्णता याति॥ २९॥

## गुडभल्लातकः

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत्।
पादशेषे रसे तस्मिन् पचेद् गुडतुलां भिषक्॥
भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत्।
सिद्धेऽस्मिंस्त्रिफलाव्योषयमानीमुस्तसैन्धवम्।
कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम्॥
खादेदग्निबलापेक्षी प्रातरुत्थाय मानव॥
कुष्ठार्शः कामलामेहग्रहणीगुल्मपाण्डुता।
हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान्।
गुडभल्लातको ह्येष श्रेष्ठश्चार्शोविकारिणाम्॥ ३०॥

गुडभल्लातके भल्लातकसहस्रे द्वे इति भल्लातकाना सहस्रद्वयम्, एव सर्वत्र पलादिमानविरहे, यथा सैन्धवाद्यतैले भल्लातकास्थानि विंशतिरिति। यत्र तु पलादिश्रुतिस्तत्र तथैव व्यवहर्त्तव्यम्। यथा बाहुशालगुडे, "पलान्यष्टावरुष्करादिति।" एव हरीतक्यादावपि ज्ञेयम्। भल्लातकसहस्रार्द्धं छित्त्वेति द्विधा कृत्वा गुडसहितक्वाथ एव पक्तव्य हरीतकीवत्। त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम् ॥ ३०॥

## अपरो गुडभल्लातकः

दशमूलामृता भार्गी श्वदंष्ट्रा चित्रकं शटी।

भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः।
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।
दत्वा गुडतुलामेकां लेहीभूतं समुद्धरेत्॥
माक्षिकं पिप्पलीं तैलमौरुवूकञ्च दापयेत्।
कुडवं कुडवञ्चात्र त्वगेला मरिचं तथा॥
अर्शः कासमुदावर्त्तं पाण्डुत्वं शोथमेव च।
नाशयेद्वह्निसादञ्च गुडभल्लातकः स्मृतः॥ ३१॥

द्वितीयगुडभल्लातके पलाशमिति दशमूलादिभि सम्बध्यते। भल्लातकसहस्रञ्च पूर्ववदाकृतिमानात्। क्वाथयेदिति पूर्वोक्तभल्लातकगुडसंवादात्, अत्रापि जलद्रोणे किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले। माक्षिक मधु। औरुवुकञ्च तैलमेरण्डतैलम्, एतच्च प्रथमतः क्षिप्त्वैव गुड पक्तव्य। सिद्धे मधुपिप्पलीचूर्णादि प्रक्षेप्यम्। एक कुडव शब्दो माक्षिकादिभि सम्बध्यते, अपरश्च त्वगेलादिभि। माक्षिकैरण्डतैलयोश्च द्रवत्वात् प्रत्येकमष्टौ पलानि। त्वगेलामरिचादीनान्तु कुडव मिलित्वेति केचित्, प्रत्येकमित्यन्ये। एतदेव युक्त द्रव्यप्रधानत्वात् निर्देशस्य। आयुर्वेदसारेऽप्युक्तम्— 'भल्लातकसहस्र हि शटीदहनगोक्षुरान्। दशमूल्यमराभार्गी पलाशा सविपाच्य च। दत्त्वा गुडतुला तत्र लेहवत् साधु साधयेत्। पिप्पल्या मधुन सिद्धे तैलस्योरुवुकस्य च। प्रत्येक कुडव दत्त्वा त्वगेलामरिचस्य च। मिश्रित भक्षयेन्नित्यमर्शः कासोदरापहम्' इति। अतएव आयुर्वेदसारसंवादात् कुडवार्द्धञ्च त्वगेलामरिचमिति पाठान्तरमपि प्रतिक्षेपणीयम्॥ ३१॥

## चव्याद्यं घृतम्

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च।
यमानी पिप्पलीमूलमुभे च बिडसैन्धवे॥
चित्रकं विल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्॥
गुदवङ्क्षणशूलञ्च घृतमेतद् व्यपोहति॥ ३२॥

चव्यमित्यादि—चरकस्य। कुस्तुम्बुरु धनीयकम्। जाते दध्नीति सुजाते।

अत्र केचित् 'स्वरसक्षीरमाङ्गल्यै पाको यत्रेरित कश्चित्। चतुर्गुण जल तत्र वीर्य्याधानार्थमावपेत्' इत्याहुः। परिस्रवमिति गुदपरिस्रावम्॥ ३२॥

## व्योषाद्यं घृतम्

व्योषगर्भे पलाशस्य त्रिगुणे भस्मवारिणि॥
साधितं पिबतः सर्पि पतन्त्यर्शांस्यसंशयम्॥ ३३॥

व्योषाद्य घृत स्पष्टम्॥ ३३॥

## उदकषट्पलं घृतम्

सक्षारै पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके।
समक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहकासनुत्॥ ३४॥

उदकषट्पलघृत स्पष्टम्॥ ३४॥

## सिंह्यमृतं घृतम्

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम्।
तत्राग्नित्रिफलाव्योषपूतिकत्वक्कलिङ्गकैः॥
सकाश्मर्य्यविडङ्गैस्तु सिद्धं दुर्नामेमहनुत्।
घृतं सिंह्यमृतं नाम बोधिसत्त्वेन भाषितम्॥ ३५॥

पचेदित्यादौ—कण्टकारीगुडूच्योर्मिलित्वा शत, निर्देशस्य मानप्रधानत्वात्। अन्ये तु द्रवभूयस्त्वदर्शनात् प्रत्येकमेव शतमाहु। चतुर्द्रोणे द्रोणावशेष, अतोऽत्र घृताढक बोध्यम्। चतुर्गुणेन पाकस्योत्सर्गसिद्धत्वात्। प्रस्थपक्षे तु षोडशगुणत्वमेव पाकस्य। अग्निरत्र चित्रक, पूतीकस्य करञ्जस्य त्वक्, काश्मर्य्यं गाम्भारीफलम्, कल्कस्य तु स्नेहापेक्षया पादिकत्वमेव बोधिसत्त्वेनेति योगिविशेषेण, अन्ये तु लोकनाथेनेत्याहुः॥ ३५॥

## पिप्पल्याद्यं तैलम्

पिप्पली मधुकं बिल्वं शताह्वां मदनं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्।

अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम् ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ।
उत्थानं बहुदोषञ्च जयेच्चैवानुवासनात् ॥ ३६ ॥

पिप्पल्यादितैले विल्व विल्वशलाटु , पुष्कराख्यमिति पुष्करमूल, तदभावे कुष्ठमेव द्विगुण ग्राह्यम् । अत्र द्रवान्तरस्यानिर्दिष्टत्वात् द्विगुण एव पाक इति केचित् । अन्ये तु चतुर्गुणपाकस्य उत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति । अपरे तु ' क्षीरदध्यारनालैस्तु पाको यत्रेरित क्वचित् । जल चतुर्गुण तत्र वीर्याधानार्थमावपेत् ' इति वचनात् जलमपि चतुर्गुणमाचक्षते, युक्तञ्चैतत्, यदाह वृद्धसुश्रुत ' शटीपुष्करकृष्णाह्वामदनामरदारुभि । शताह्वाकुष्ठयष्ट्याह्ववचाविल्वहुताशनै । सुपिष्ट द्विगुण क्षीर तैल तोयचतुर्गुणम् । पक्त्वा बस्तौ निधातव्य मूढवातानुलोमनम् ' इति ॥ ३६ ॥

## रक्तार्शश्चिकित्सा

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक् ।
दुष्टास्रे निगृहीते तु शूलानाहावसृग्गदाः ॥ ३७ ॥

रक्तार्शसा चिकित्सामाह रक्तार्शसामित्यादि—उपेक्षेत, न तु स्तम्भयेत् । निगृहीत इति स्तम्भिते । असृग्गदा इति वीसर्पादय ॥ ३७ ॥

लाजै. पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा ।
हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥ ३८ ॥

लाजै. पेयेत्यादि । चुक्रिका चाङ्गेरी; केशर नागकेशरम् । तथा बलापृश्निपर्णीभ्यामिति द्वितीयो योग । तथेत्यनेन लाजै पेयेत्यनुवर्त्तते ॥ ३८ ॥

शक्रकाथः सविश्वो वा किंवा विल्वशलाटवः ।
योज्या रक्तार्शसैस्तद्वज्ज्योतिष्मकामूललेपनम् ॥३९॥

शक्रकाथ इत्यादि—शक्र कुटज., उक्त हि रत्नकोषे ' वृक्षकः शक्रपर्य्यायो वत्सको गिरिमल्लिका ' इति । तद्वल्कलकाथ., उक्त चरके ' कुटजत्वङ्निर्य्यूहः सनागर. स्निग्धो रक्तसंग्रहण ' इति । वाग्भटेऽप्युक्त ' सकफे प्रपिबेत् पाक्य

शुण्ठीकुटजवल्कलम् ' इति । निश्चलस्तु इन्द्रयवक्काथ इत्याह । सनागर ईषन्नागर स च प्रक्षेपविधिनेति केचित् । अन्ये तु उक्तवाग्भटवचनसंवादात् शुण्ठीकुटजवल्कलयो क्काथ इत्याहु । बिल्वशलाटव इत्यत्रापि सनागर इति योज्यम् । अन्ये तु केवल बिल्व पिष्ट्वा पेयमित्याहु । ज्योत्स्निका कोषातकी घोषकभेद ॥ ३९ ॥

नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥४०॥

नवनीततिलाभ्यासादित्यादि—योगत्रयमेतत् । अत्र केशर पद्मकेशर, रक्तस्तम्भनत्वात्, यदाह वाग्भट ' शर्कराम्भोजकिञ्जल्क–सहित सह वा तिलै । अभ्यस्त रक्तगुदजान् नवनीत नियच्छति ' इति । आधुनिकास्तु नागकेशरेण व्यवहरन्ति । दधिसरस्य मथित तक्र दधिसरमथितम्, उक्त हि जतूकर्णे ' नवनीत निलैर्युक्त शर्करा केशरेण वा । नवनीत घृत वाज दध्नो वा खजित सर ' इति ॥ ४० ॥

समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ ४१ ॥

समङ्गेत्यादि—समङ्गा वराहक्रान्ता, उत्पल नीलोत्पलम्, मोचक शाल्मलीवेष्टकम्, तिरीट पट्टिकालोध्रम्, एषा कल्कश्छागक्षीरे खालोड्य पेय. । उक्त हि वाग्भटे ' लोध्र तिल मोचरस समङ्गा चन्दनोत्पलम् । पाययित्वाजदुग्धेन शालींस्तेनैव भोजयेत् इति । अन्ये तु क्षीरपरिभाषया च्छागक्षीर पक्त्वा पेयमित्याहु' ॥ ४१ ॥

## कुटजलेहः

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
वस्त्रपूतं पुन क्काथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां बिल्वं प्रत्येकञ्च पलं पलम् ॥
त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत् ।
मधुन कुडवं दद्याद् घृतस्य कुडवं तथा ॥

एष लेहः शमयति चार्शो रक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ।
रोगानीकविनाशाय कौटजो लेह उच्यते ॥ ४२ ॥

कुटजत्वक्पलशतमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते कुटजत्वक् फलयोर्मिलित्वैव पलशतम् । चन्द्राटेऽष्टभागावशिष्टमित्यत्र चतुर्भागावशिष्टमिति पठ्यते । अत्र घृतकुडवं प्रथमं दत्त्वा लेहं पक्तव्यं, सिद्धे तस्मिन् भल्लातकादि-चूर्णप्रक्षेपः । मधुनः कुडवोऽष्टौ पलानि, घृतकुडवोऽप्येवम् कुडवद्वैगुण्यन्तु पूर्वमेव स्थापितमिति ॥ ४२ ॥

## कुटजरसक्रिया

कुटजत्वचो विपाच्यं शतपलमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादरसं तद् द्रव्यं स रसस्ततो ग्राह्यः ॥
मोचरसः समङ्गा फलिनी पलांशिभिस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥
पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छागलीपयसा युक्ता पेया मण्डेनाथवा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥
रक्तगुदजातीसारं शूलं सासृग्रुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ ४३ ॥

कुटजत्वच इत्यादि—अत्र पलशतं तुला, तेन 'तुलाद्रव्ये जलद्रोणः' इति वचनात् द्रोणमात्रं जलं ग्राह्यम्, तच्च 'यावत् स्यादरसम्' इति वचनाच्चतुर्भागावशिष्टं कार्य्यम्, उक्तं हि 'चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत्' इति । अन्ये तु तन्त्रान्तरीययोगान्तरे 'द्रोणेऽम्भसः पलशतं विपाच्य कुटजत्वचोऽ-

ष्टभागस्थ ' इत्यष्टभागावशिष्टदर्शनात् अत्राप्यष्टभागावशेष' क्वाथो ग्राह्य इत्याहु' । व्यवहारस्तु पूर्वैवैव । महेन्द्रमलिनमान्तरीक्षजलम् ' तदभावे भूमिस्थजल तदनुकारि ग्राह्यम् । यदुक्त—' किञ्चित्तुवरानु सतनु लघु शीत सुगन्धि सुरम्यञ्च । अनभिष्यन्दि च यत् तत् क्षितिस्थमैन्द्रवज्ज्ञेयम् ' फलिनी प्रियगु । दर्वीप्रलेपनो ग्राह्य इति दर्वीप्रलेपावस्थायामवतारणीय इत्यर्थ । तेन रसक्रिया लेपरूपैव, वाग्भटेऽप्युक्तम्—' पक्त्वावलेह लीढ्वा च तद्यथाग्निबल पिबेत् ' इत्यादि । उभयभागमिति यद्यपि युगपदूर्ध्वाध प्रवृत्तरक्तपित्तस्यासाध्यत्व, तथाप्युभयभाग हन्तीत्यन्य क्रमेणोर्ध्वगमधोगञ्च हन्तीत्यर्थ , तत्राप्यधोगस्य याप्यत्वात् तत्प्रतियापनमेव निहन्यादित्यस्यार्थो ज्ञेय । अन्ये तु योगशक्तेरचिन्त्यत्वादसाध्यमपि—हन्तीत्यर्थमाहु ॥ ४३ ॥

## कुटजाद्यं घृतम्

कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूलरक्तार्शसा भिषजा ॥ ४४ ॥

कुटजाद्यघृते—कुटजस्य फल वल्कलञ्च, वल्कशब्दो वल्कलवचन , क्वचित्तु वल्कलमिति पाठ । अत्र जल चतुर्गुणमर्थवशात् ॥ ४४ ॥

## सुनिषण्णक-चाङ्गेरीघृतम्

अवाक्पुष्पी वला दार्वी पृश्निपर्णी त्रिकण्टकम् ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एष पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कालिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्ग्वतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
विल्वं मोचरसं पाठा भागा स्यु कार्षिका पृथक् ।
चतु प्रस्थशृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥
सुनिषण्णक-चाङ्गेर्यो प्रस्थौ द्वौ स्वरसस्य च ।

सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥
उत्थाने चातिबहुशः शोथशूलगुदामये ।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥
प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ४५ ॥

अवाक्पुष्पीत्यादि—अवाक्पुष्पी ऐठवहली । एषामष्टाना प्रत्येक पल-द्वयमिति मिलित्वा षोडशपल क्वाथ्य भवति । तथा सुनिषण्णकचाङ्गेर्योर्मिलित्वा प्रस्थद्वय, मानप्रधानत्वान्निर्देशस्य । वीरा अत्र क्षीरकाकोली । चतु प्रस्थशृत प्रस्थ-मित्यादि—यद्यपि षोडशपले क्वाथो चतु प्रस्थ जलमुत्सर्गसिद्धमेव तथा शेषोऽपि चतुर्थो भाग प्रस्थ एव भवति, तथापि यदेतच्चतु प्रस्थशृतमित्यादि वचन, तद् क्वाथ्याच्चतुर्गुण वारीत्यादिपरिभाषाया सूचक ज्ञेयम् । तथा 'त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपला-धिक 'इत्यपि वचन द्रवद्वैगुण्यपरिभाषासूचकत्वेनैव ज्ञेयम् । एतदेव दृष्ट्वा दृढ-बलमस्कोरऽपि द्रवद्वैगुण्यमुक्तम् । किंवा परिभाषासिद्धमपि द्रवद्वैगुण्य यदिह निर्दिशति तद् द्रवद्वैगुण्यपरिभाषा क्वचिद्बाधितापि भवतीति सूचयति । तेन कुडव-प्रस्थादिक गृहीत्वैव द्वैगुण्य, न कुडवादर्वाक् इत्यर्थ सिद्धो भवति । अन्ये तु दार्ढ्यार्थमशयितशिष्यबुद्धिवृद्ध्यर्थमेतद्वचनमित्याहु । त्रिंशत्पलविशेषणतया यद्यपि द्विपलाधिकानीति निर्देशो युज्यते, तथापि प्रस्थविशेषणतया पुलिङ्गस्य एकवचनस्य च निर्देश समर्थनीय । उत्थाने बहुश इति स्तोकस्तोकातिसरणे ॥ ४५ ॥

[illegible]क्षारः

प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम् ।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत् ॥
आढकन्त्वेकमादाय जलद्रोणे पचेद्भिषक् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥
शङ्खचूर्णस्य कुडवं प्रक्षिप्य विपचेत् पुनः ।
शनैः शनैस्तु मृद्वग्नौ यावत् सान्द्रतनुर्भवेत् ॥

सर्जिकायावशूकाभ्यां शुण्ठी मरिचपिप्पली ।
वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥
एषां चूर्णानि निक्षिप्य पृथक्त्वेनाष्टमाषकम् ।
दर्व्या सङ्घट्टितञ्चापि स्थापयेदायसे घटे ।
एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ॥ ४६ ॥

इदानीं क्षारपाकविधिमाह प्रशस्त इत्यादि—कालमुष्कक कृष्णपुष्पो घण्टापारलि, स श्रेष्ठगुण, यदाह विश्वामित्र 'श्वेतपुष्प कृष्णपुष्पो रक्तपुष्पस्तथैव च। पीतोऽन्योऽपि वरस्तेषु कृष्णपुष्प प्रकीर्त्तितः' इति । तस्य च काष्ठ तिलनालैर्दग्ध्वा भस्म कर्त्तव्यम्, इत्थमेव सुश्रुताभिधानात् । आढकमिति भस्मनश्चतु षष्टिपलानि । जलद्रोण इति द्वैगुण्याच्चतु षष्टिशरावे, अन्ये तु अत्र द्वैगुण्य नेच्छन्ति । शङ्खचूर्णस्य कुडवश्चतु पल, षोडशांशेनाक्तन्द्वैगुण्यात् । परिस्रावितपादावशिष्टक्षारोदकाढकाद्दिति चन्द्रिका । आगमप्रामाण्यसिद्धवद् द्वैगुण्यपक्षे तु द्वात्रिंशांशेनेति बोध्यम् । आयस इति लोहमये, एतच्च पात्रविशेषकथन गुणोत्कर्षार्थम्, 'यथा कुर्वन्ति स उपाय' इत्युक्ते । क्षार इति प्रतिसारणीय क्षार इत्यर्थ, प्रतिसारणीयश्च अच्छसीय इत्यर्थ ॥ ४६ ॥

तोये कालकमुष्ककस्य विपचेद् भस्माढकं षड्गुणे
पात्रे लोहमये दृढे विपुलधीर्दर्व्या शनैर्घट्टयन् ।
दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेद्
यद्येरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदास्राव्य क्षाराम्भो ग्राह्यमिष्यते ॥
तुर्य्येणाष्टमकेन षोडशभवेनांशेन संव्यूहिमो
मध्य· श्रेष्ठ इति क्रमेण विहित क्षारोदकाच्छङ्खक ॥
नातिसान्द्रो नातितनु· क्षारपाक उदाहृत· ।
दुर्नामकादौ निर्दिष्ट क्षारोऽयं प्रतिसारणः ॥
पानीयो यस्तु गुल्मादौ तं वारानेकविंशतम् ।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे ॥ ४७ ॥

तोये कालकमुष्ककस्येति—षड्गुणेति षडाढके व्यवहारादकृतद्विगुणे, अतएव वृन्देनोक्त—'द्वैगुण्य नाढकेऽप्यत्र भागमात्रोपलक्षणात्' इति। एतच्चान्ये दूषयन्ति, आढकादिश्रुत्या द्रवे यद्द्वैगुण्य सर्वागमसिद्ध तत् कथ बाधनीयम्, न च क्वचित् तन्त्रे भागमात्रमुक्तम्, येन भागमात्रोपलक्षणमिति वाच्यम्, अतएव चक्रेणास्वरसादेव द्वैगुण्यार्थे न किमपि लिखितम्। दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेदिति त्रिभागशेषेणाच्छपैच्छिल्याद्विलक्षणोदये कल्कमपनीय छानयित्वा क्षाराम्बु ग्राह्यम्, तत पुन पचेत्, पश्चादासन्नपाके बहुशङ्खनाभिशकलान्यग्नौ दग्ध्वा तस्य चूर्ण तुर्य्येणेत्यादि वक्ष्यमाणानुसारेण क्षिपेत्। अन्ये तु त्रिभागशेषे चतुर्भागावशेषे वा क्षारोदके वस्त्रपूते शङ्खचूर्ण दत्वा पुन. पक्तव्य, यथा नातिसान्द्र नातितरलञ्च स्यादित्याहु.। पूतावशेष इत्यत्र पूताङ्घ्रि शेषे इति केचित् पठन्ति, तन्मते च चतुर्थांशावशेषे क्षारोदक इत्यर्थ। सम्यक् सिद्धक्षारलक्षणमाह यथैरण्डजनालमित्यादि—एष इति पक्व शीत क्षारो यदि निस्त्वचमेरण्डनाल लेपेन वाकशताच्छोटिकशताद् दहति, तदा वर श्रेष्ठ इत्यर्थ। पूतावशेषे इत्युक्त, तच्च कियदवशिष्ट स्थाप्यम् इत्याह प्रायस्त्रिभाग इत्यादि। आस्राव्येति वस्त्रेण गालयित्वा। इदानीं प्रक्षेप्यशङ्खचूर्णस्य मानभेदेन प्रतिसारणीयक्षारस्य मृद्वादिभेदमाह तुर्य्येणेत्यादि—क्षारोदकात् इति त्रिभागावशिष्टक्षारोदकमपेक्ष्य। शङ्खक शङ्खचूर्ण यदि तुर्य्येण चतुर्थांशेन विहित प्रयुक्तो भवति, तदा सव्यूहिम इति मृदुक्षारो भवति। सव्यूहिम इति मृदुक्षारसंज्ञा। अष्टमकेनाष्टमांशेन यदि शङ्खचूर्ण दीयते, तदा मध्य क्षारः, षोडशभवेनांशेन यदि शङ्खचूर्ण दीयते तदा श्रेष्ठ क्षार इत्यर्थ.। यद्यपि सव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमान शङ्खचूर्ण मध्यश्रेष्ठक्षारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथापि क्षारस्य मृदुत्वमेव भूयसा शङ्खचूर्णेन क्षारोदकस्य तीक्ष्णताया अभिभूतत्वात्। पानीयक्षारे तु न शङ्खचूर्णयोग इति तस्य नैते भेदा.। प्रतिसारणीयक्षारपाकलक्षण तथा तद्विषयश्चाह नातिसान्द्र इत्यादि—प्रतिसारण इति भक्षणप्रयोजक। पातव्यक्षारोदकस्य विधान विषयश्चाह पानीय इत्यादि—पानीय इति पातव्यो य क्षार, त क्षार षड्गुणे चतुर्गुणे वा जले पाक विनैव एकविंशतिवारान् परिस्राव्य क्षारोदक ग्राह्यम्। अन्ये तु चतुर्गुणे जले पक्त्वा अर्द्धावशिष्ट कृत्वा कल्कमपसार्य्य क्षारोदक एकविंशतिवारान् परिस्रावयेदेव, न प्रतिसारणीयक्षारवत् अस्य पुन. पाक· इति तात्पर्य्यार्थ इत्याहु.। विश्वामित्रोऽप्याह 'पानाय भावनायाथ परिस्राव्य चतुर्गुणे। जले चार्द्धावशिष्टे च क्षाराम्भो ग्राह्यमिष्यते' इति पानाय यद्भावन क्षारोदकविधान

तदर्थमित्यर्थः । पानीयक्षारमात्रा च पलत्रिकर्षार्द्धपलरूपा क्रमादुत्तममध्यमाधमबलानलविषया ज्ञेया ॥ ४७ ॥

## क्षारसूत्रम्

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः ।
बन्धनात् सुदृढं सूत्रं भिनत्त्यर्शो भगन्दरम् ॥
प्राग्दक्षिणं ततो वामं पृष्ठजञ्चाग्रजं क्रमात् ।
पञ्चतिक्तेन सस्नेह्य दहेत् क्षारेण वह्निना ॥
वातजं श्लेष्मजञ्चार्शः क्षारेणास्रज-पित्तजे ।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत् ।
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा ।
पक्वजम्बूपमो वर्णो क्षारदग्धः प्रशस्यते ॥ ४८ ॥

क्षारसूत्रमाह भावितमित्यादि—पुनः पुनरिति सप्ताहमित्यर्थः । प्राग्दक्षिणमित्यादि—एतच्च क्रमोपदर्शनं मङ्गलार्थमसद्विशिष्टपुरुषगम्यं वा, एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि सन्ति तं प्रत्येव बोध्यः, यस्य पुनरेकतमपार्श्वे, तस्य तदेव दहनीयम्, एष च क्रमः क्षारे क्षारसूत्रेऽग्नौ च । अग्रजमिति अण्डकोषसमीपस्थम्, अस्य च दाहो वृद्धवैद्यैर्न क्रियते पाण्ढ्यभयात् । पञ्चतिक्तेनेति पञ्चतिक्तघृतेन पानादिना स्नेहयित्वेत्यर्थः । क्षारेण वह्निना च उभयमेव श्लेष्मजं वातजञ्च दहेत् । रक्तजे पित्तजे पुनः क्षारेणैव दहेत् । क्षारो हि सर्वत्रैवोचितः । यदाह सुश्रुतः—'क्षारस्तु सर्वत्रैवाप्रतिषिद्धो नत्वग्निः' इति । अन्यतरेणेति क्षारेण वह्निना वा । क्षारेण सम्यग्दग्धस्य लक्षणमाह पक्वेत्यादि—पक्वजम्बूपमः स्निग्धकृष्णवर्ण इत्यर्थः ॥ ४८ ॥

गोजीशेफालिकापत्रैरर्शः संलिख्य लेपयेत् ।
क्षारेण वाक्शतं तिष्ठेद् यन्त्रद्वारं पिधाय च ॥
तच्चापनीय वीक्षेत पक्वजम्बूफलोपमम् ।
यदि च स्यात् ततो भद्रं नो चेल्लिम्पेत् तथा पुनः ॥
तनुपाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत् ।
न निम्नं तालवर्णाभं वह्निदग्धं स्थिनासृजम् ॥

निर्वाप्य मधुसर्पिर्भ्यां वह्निसञ्जातवेदनाम् ।
सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ।
मुहूर्त्तमुपवेश्यासौ तोयपूर्णेऽथ भाजने ॥
क्षारमुष्णाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः ।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥
नवान्नं माषतक्रादि सेव्यं पाकाय जानता ।
पिबेद् व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम् ॥
जीर्णे शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ।
रूढसर्वव्रणं वैद्यः क्षारं दत्त्वानुवासयेत् ।
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम् ॥ ४६ ॥

प्रतिमारणीयक्षारो यथोपयोज्यस्तदाह गोजीत्यादि—गोजी शाखोटकः । क्षारेण लेपयेदित्यन्वयः । लघ्वक्षरोच्चारणकालो वाक्, तस्याः शतं, छोटीशतं वा । यन्त्रद्वारं गुदस्थितयन्त्रस्य द्वारं पिधाय कर्पटादिना ढक्कयित्वा । पक्वजम्बूफलोपमं सम्यग्दग्धे, हीनदग्धे तु लोहितं भवति । यदाह वाग्भटः—'पक्वजम्बूनिभं शस्तं सम्यग्दग्धं विपर्य्ययात् । ताम्राभं तोदकण्ड्वाढ्यं दुर्गन्धं तत् पुनर्दहेत् । अतिदग्धे स्रवेद्रक्तं मूर्च्छा-दाहज्वरादयः । गुदे विशेषाद्विण्मूत्रसरोधो वातिवर्चनम् । वातपित्तप्रशमनी शीता तत्र क्रिया हिता' इति । तुषाम्बु काञ्जिकम् । न निम्नमित्यादिना सम्यग्वह्निदग्ध-लक्षणम् । वह्निदग्धमिति वह्निना सम्यग्दग्धं, न निम्नमित्यादि लक्षणयुक्तं भव-तीत्यर्थः । तालवर्णाभमिति पक्वतालसमवर्णम्, तालवृन्ताभमिति पाठेऽपि पक्व-तालवृन्तसमवर्णमित्यर्थः । स्थितासृजमिति स्थितरक्तम्, एतच्च यदा अर्शांश्छित्त्वा दह्यते तदा ज्ञेयम् । दाहश्च शिरामङ्कोचत्वेन रक्तस्तम्भक इति । दाहानन्तरं यद्वि-धेयं तदाह निर्वाप्येत्यादि—सम्यग्दग्धेऽर्शसीत्यर्थः । तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी, प्लक्षः पर्कटि, तस्य वल्कलम्, अमृता गुडूची, यद्यपि गुडूची पाकादुष्णवीर्य्या तथापि स्पर्शाच्छीतैव, यथा काञ्जिकमम्लमपि भक्षणात् पित्तकरं स्पर्शेन शीतमिति कृत्वा पित्तहरं भवति, तेन गुडूच्या निर्वापणत्वं चिन्त्यमिति केनचिदुक्तम्, तदप्यपास्तम्; किं वा उष्णवीर्य्याया अपि गुडूच्या द्रव्यान्तर-संयोगमहिम्नैवात्र दाहप्रशमकत्वं ज्ञेयम् । तोयपूर्ण इति कोष्णतोयपूर्ण इत्याह. ।

चाग्नुष्णाम्बुनेति, चार यवचारम्। वराक्वाथमिति वरा त्रिफला, तिक्ताज्य पञ्च-तिक्तघृतम्। चार दत्त्वेति चारवस्तिं दत्त्वा चारवस्तिदानानन्तर पिप्पल्यादिन तैलेनानुवासयेदित्यर्थ ॥ ४९ ॥

## अग्निमुखं लौहम्

त्रिवृच्चित्रकनिर्गुण्डीस्नुहीमुण्डितिकाजटाः।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत्॥
पलत्रयं विडङ्गस्य व्योषात् कर्षत्रयं पृथक्।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत्॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम्।
घनीभूते सुशीते च दापयेदवतारिते॥
एतदग्निमुखं नाम दुर्नामान्तकरं परम्।
सममग्निं करोत्याशु कालाग्निसमतेजसम्॥
पर्वता अपि जीर्य्यन्ति प्राशनादस्य देहिन।
गुरुवृष्यान्नपानानि पयो मांसरसो हितः॥
दुर्नामपाण्डुश्वयथुकुष्ठप्लीहोदरापहम्।
अकालपलितञ्चैतदामवातगुदामयम्॥
न स रोगोऽस्ति यश्चापि न निहन्यादिदं चणात्।
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।
स्रवत्यतोऽन्यथा लोहं देहाद् किट्टञ्च दुर्जरम्॥५०॥

प्रसिद्धफलमग्निमुखलौहमाह त्रिवृच्चित्रकेत्यादि—अत्र मुण्डितिका मुण्डिरी अञ्जटा भूम्यामलकी, अस्या स्थाने जटेति पाठे त्रिवृतादीना मूलमित्यर्थ। एषाञ्च जलद्रोणे क्वाथश्चतुर्थभागावशिष्ट षोडशशरावरूपोऽर्थवशादेव सिद्ध। पृथगित्यनेन व्योषस्य प्रत्येक त्रिकर्षमानत्वम्, त्रिफलायाश्च मिलित्वा पञ्च पलानि। एषाञ्च विडङ्गादिशिलाजत्वन्तचूर्णाना पाकावतारसमये प्रक्षेप। दिव्यौषधि स्वर्णमाक्षिक मन शिला वा गालिकोक्तौ वा, अन्यत्र तु मन शिलाहतस्येति पाठान्तरदर्शना-

न्मन शिलेति मुक्तम्। लौहमारकत्वात् तु सर्वाण्येवाविरुद्धानि। वैकङ्कतहतस्य वेति राढाया वहिञ्जीति ख्यातम्, वारेन्द्रयादिषु वयोवक्षोलिरिति ख्यातम्। किन्तु स्वर्णमाक्षिकादिकं विना सम्यग् लौहमारणं न सिध्यति, अवश्य तत्साधन द्रव्यसमुच्चयेनापि कर्त्तव्यम्। रुक्मलौहं कान्तव्यतिरिक्तं वज्रपाण्ड्यादिकृष्णलौहम्; तदुक्तं निघण्टौ 'तीक्ष्णमयः उत्तरापथपिण्ड रुक्म रुक्मकुट्टि कृष्णलौहनामानि'। अत्रानुक्तस्यापि गव्यघृतस्य चतुर्विंशतिपलानि पाकारम्भसमय एव वृद्धवैद्यैर्दीयन्ते, घृतं विना क्वचिदपि लौहस्य पाकादर्शनात्, अत एव क्वचित् पलैश्चतुर्विंशत्याज्यशर्करयोरपीति पाठान्तरं केचित् पठन्ति। मधुशर्करयोश्चतुर्विंशतिपलानि मिलित्वा शर्कराघृताभ्यां पाके रात्रिपर्य्युषिते शीते मधुनः प्रक्षेपः, तेन शर्करायाः द्वादशपलानि, मधुनो द्वादश पलानि, घृतस्य च चतुर्विंशतिपलानीति। भक्षणविधिरमृतसारलौहवत्॥ ५०॥

## भल्लातकलौहम्

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता।
हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत्॥
तेन पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम्॥
त्र्यूषणं त्रिफला वह्निः सैन्धवं विडमौद्भिदम्।
सौवर्चलविडङ्गानि पलिकांशानि कल्पयेत्।
कुडवं वृद्धदारस्य तालमूल्यास्तथैव च॥
शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत्।
सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम्॥
प्रातर्भोजनकाले च ततः खादेद् यथाबलम्।
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्॥
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति॥
करोति शुक्रोपचयं वलीपलितनाशनम्।

रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ५१ ॥

भल्लातकलौहे कुठेरक. पर्णाश । भल्लातकसहस्रे द्वे इत्याकृतिमानात् । तत्र-वेति जलद्रोणे । तीक्ष्णलौहस्येति वज्रपाण्ड्यादिलौहस्य । गव्यघृतस्य कुडवद्वयमिति द्वैगुण्यात् षोडश पलानि, एव मधुनोऽपि । सिद्धे च व्यूषणादीना प्रक्षेप , सर्व-मपरममृतसारवत् । अत्रामृतसारोक्तविधिना पुटित यथाव्याधि प्रत्यनीकद्रव्यपुटि-तञ्च लौह ग्राह्य, भक्षणाग्निविधिरपि तथैव ॥ ५१ ॥

## रसगुडिका

रसस्तु पादिकस्तुल्या विडङ्गमरिचाभ्रकाः ।
गङ्गापालङ्कजरसे खल्वयित्वा पुन पुन ॥
रक्तिमात्रा गुदार्शोघ्नी वह्नेरत्यर्थदीपनी ।
वेगावरोधस्त्रीपृष्ठयानमुत्कटकासनम् ॥
यथास्व दोषलञ्चान्नमर्शस परिवर्जयेत् ॥ ५२ ॥

इति अर्शश्चिकित्सा ।

---

रसस्तु पादिक इति विडङ्गादीनामेकतमभागापेक्षया, तेन विडङ्गमरिचाभ्र-काणा प्रत्येक त्रयो भागा , पारदस्यैको भाग इत्यर्थ । शोधितपारद २ माषा, मारिताभ्रचूर्ण विडङ्ग मरिच, प्र० ६ माषा । ग्रन्थान्तरेऽपि रसभागापेक्षया विडङ्गम-रिचाभ्रकाणा प्रत्येक भागत्रयमुक्तम् । गङ्गापालङ्केति पालङ्कसदृशपत्र गङ्गापालङ्क, गाङ्गराइ इति ख्यातम् । पुन पुनरिति सप्ताहमात्र कृत नियम इत्यर्थ । रसाभ्रक-शोधनञ्च क्षुधावत्युक्तविधयैव विधेयम् । पृष्ठयान हस्त्यश्वादिपृष्ठे गमनम् ॥ ५२ ॥

इति अर्शश्चिकित्साविवृति ।

---

# अथाग्निमान्द्यचिकित्सा ।

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥१॥

अर्श.कार्य्यत्वात् तदनन्तरमग्निमान्द्यादिचिकित्सामाह समस्येत्यादि—रक्षण-मिति पालनम्। वातनिग्रहो वातस्य प्रशमनमित्यर्थ ॥ १ ॥

## हिङ्ग्वष्टकं चूर्णम्

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिंगुभागः।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं, वातरोगांश्च हन्यात् ॥ २ ॥

त्रिकटुकमित्यादि—वाग्भटेनाय योगो गुल्माधिकारे पठित । अजमोदा यमानी, एव सर्वत्रान्त.परिमार्जने, वहि.सम्मार्जने पुनरजमोदैव, उक्त हि 'अन्त-मम्मार्जने प्रायोऽजमोदा च यमानिका। बहि सम्मार्जने ज्ञेया चाजमोदाऽजमोदिका' इति। समधरणधृतानामिति धरण तुला, तया सम यथा स्यात् तथा धृतानाम्, अन्ये तु पलदशमाशे। धरणम्, समाश्च ते धरणधृताश्चेति विग्रह । अष्टमो हिंगु-भाग इति त्रिकट्वादीना सप्तभागास्तदेकभागसमो हिंगुभाग इत्यर्थ । वातरोगाश्च हन्तीत्यत्र वाग्भटे वातगुल्माश्च हन्तीति क्वचित् पाठ ॥ २ ॥

समयवशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे।
कुरुते क्षुधां सुखोदकपीतं विश्वौषधं वैकम् ॥ ३ ॥

समेत्यादौ—यवशूको यवक्षार । विश्वौषध वैकमिति वाशब्द पूर्वयोगा-पेक्षया, इवार्थे वाशब्दो वा। गोसर्गे गो सूर्य्यकिरणस्य सर्गे मोक्षे प्रातरित्यर्थ ॥३॥

अन्नमण्डं पिबेदुष्णं हिंगुसौवर्चलान्वितम्।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ४ ॥

अन्नमण्डमित्यादि—अन्नस्य मण्ड अन्नमण्ड इति केचित् । अन्ये तु चतुर्दशगुणाम्बुसाधित एव मण्डोऽन्नमण्डशब्देनोच्यते, अन्नपद सुरामण्डादि-निरासार्थमित्याहुः ॥ ४ ॥

## अन्नमण्डगुणाः

क्षुद्बोधनो बस्तिविशोधनश्च
प्राणप्रदः शोणितवर्द्धनश्च।

ज्वरापहारी कफपित्तहन्ता
वायुं जयेदष्टगुणो हि मण्ड ॥ ५ ॥

क्षुद्बोधन इत्यादि—अष्टगुणो हि मण्ड इति—मुतण्डुलाना प्रसृतद्वयञ्च (तदर्द्धमुद्ग चतुष्कतक्र) कुस्तुम्बुरु सैन्धवहिंगुतैलम् । एभिश्च सर्वै मण्ड इत्यस्यानन्तर-मेव । यद्यपि माधवकरेण द्रव्यगुणे सुतण्डुलेत्यादिवचनान्तर क्षुद्बोधनेत्यादि पद्य पठित तथाप्यन्नमण्डस्यापि मण्डत्वमामान्यादेतत् गुणाष्टक ज्ञेयम् । कुस्तुम्बरु धन्याक, तच्च मनाग्भृष्ट ग्राह्यम्, विधि पुनरस्य यथोक्तमानौ तण्डुलमुद्गौ तक्रजले युक्त्या दत्वा विपाच्य मण्डो ग्राह्य । पश्चात् त्रिकटुकादिभिर्यथा संस्कार इति ॥ ५ ॥

## तीक्ष्णाग्निचिकित्सा

नारीक्षीरेण संयुक्तां पिबेदौदुम्बरीं त्वचम् ।
आभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥
यत्किञ्चिद् गुरु मेध्यञ्च श्लेष्मकारि च भेषजम् ।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥

अत्यग्निचिकित्सामाह नारीक्षीरेणेत्यादि—उडुम्बरत्वचः कर्ष, पायसपक्षे तु उडुम्बरत्वच पलम्, तण्डुल नारीक्षीरञ्चानुरूप दत्त्वा पायस कार्य्य । यत्किञ्चि-दित्यादि महिषीदुग्धादि ॥ ६ ॥

मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत् ॥ ७ ॥

मुहुर्मुहुरित्यादि—तथाजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत्, यथा निरि-न्धनोऽग्नि, अन्तरमित्यवकाश लब्ध्वा, एनमातुर न निपातयेत् न मारयेत्, धातु-पाकादिति भाव । उक्त हि "अहारमग्नि पचति दोषानाहारवर्जित । धातून् क्षीणेषु दोषेषु न जीवेद् धातुसक्षये" इति ॥ ७ ॥

विश्वाभयागुडूचीनां कषायेण षडूषणम् ।
पिबेत् श्लेष्माणि मन्देऽग्नौ त्वक्पत्रसुरभीकृतम् ॥
पञ्चकोलं समरिचं षडूषणमुदाहृतम् ॥ ८ ॥

विश्वाभयेत्यादि—त्वक् गुडत्वक्, त्वक्पत्रे सुरभिमात्रत्वकारके देये । पञ्च-

कोल समरिच षड्रूषणमिति, तदुक्त 'मरिच पिप्पली शुण्ठी त्र्यूषण मुदाहृतम् । पिप्पलीमूलसयुक्त चतुरूषणमुच्यते । सान्नि पञ्चोषणञ्चैव सचव्यञ्च षड्रूषणम् ' इति । एतच्च षड्रूषण प्रक्षेपविषये ज्ञेयम् ॥ ८ ॥

**हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।**
**सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ९ ॥**

हरीतकीत्यादि—सुश्रुतस्य । योगत्रयमेतत्, शुण्ठ्या कफे, गुडेन वाते, सैन्धवेन दोषत्रयेऽपि विशेषाद्वातकफे ॥ ९ ॥

**सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-**
**मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।**
**तस्यामिषेण सघृतेन वरं नवान्नं**
**भस्मीभवत्यशितमात्रमिह क्षणेन ॥ १० ॥**

सिन्धूत्थेत्यादि—पथ्या हरीतकी, ह्रस्वत्वमिह छान्दसत्वात् । मगधोद्भवा पिप्पली, अत्रापि पूर्ववद् ह्रस्वत्वम् । वर प्रकृष्टमिति यावत्, मासघृताभ्यामधिक-मपीत्यर्थः । केचिदिह सैन्धवादीना मानभेदार्थं नातिप्रसिद्ध हरिश्चन्द्रमत वर्ण-यन्ति । तद्यथा—हरीतकी हरिहरतुल्यषड्गुणा चतुर्गुणा चतुरविना मपिप्पली । द्विचित्रक वरवदनैकसैन्धव रसायन कुरु नृप वह्निदीपनम् ' इति । व्यवहारस्तु समभागेनेति ॥ १० ॥

**सिन्धूत्थहिंगुत्रिफलायमानी-**
**व्योषैर्गुडांशैर्गुडिकान् प्रकुर्य्यात् ।**
**तैर्भक्षितैस्तृप्तिमवाप्नुवन् ना**
**भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ ११ ॥**

सिन्धूत्थेत्यादौ—गुडांशैरिति एकद्रव्यसमोऽत्र गुडभाग, प्रायेण हि श्लेष्मा-धिकेऽग्निसादे श्लेष्मणि च गुडो बहुतरो न युक्त इत्याहुरेके । अन्ये तु सर्वचूर्णा-पेक्षया द्विगुणो गुड, तस्माद् गुडादर्द्ध समुदितचूर्णम्, तेन गुडांशमिति, मोदके द्विगुणो गुड इति वचनमनुगृहीत भवतीत्याहु । तृप्तिमवाप्नुवन्निति मन्दाग्निरपि तावत् प्रभूत भुङ्क्ते यावत् तृप्तिमवाप्नोति । अनाप्नुवन्निति पाठे पुनरत्यग्नित्वात् प्रभूतभोजनेऽपि न तृप्तिमाप्नोतीत्यर्थ ॥ ११ ॥

विडङ्गभल्लातकचित्रकामृताः
सनागरास्तुल्यगुडेन सर्पिषा ।
लिहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाडवतुल्यवह्नय ॥ १२ ॥

बिडगेत्यादि—तुल्यगुडेनेत्यत्र युक्ता इत्यध्याहार्य्यम् तेनैव भागसमो गुड । केवलघृतेनैव लिहन्तीति व्याख्यानयन्ति केचित् । अन्ये तु तुल्यगुडेनेति पद सर्पिर्विशेषण वर्णयित्वा समुदितचूर्णापेक्षया द्विगुणेन मिलित्वा गुडसर्पिषा लेह इति व्याचक्षते, युक्तश्चैतत् नागार्जुनोक्तवचनसवादात्; तथा हि " सञ्चूर्णिता गुडूची विडगभल्लातकनागरहुताशा । ज्वलयन्ति जठराग्नि समेन गुडसर्पिषा लीढा " इति ॥ १२ ॥

गुडेन शुण्ठीमथवोपकुल्यां
पथ्यां तृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु गुदामयेषु
वर्च्चोविबन्धेषु च नित्यमद्यात् ॥ १३ ॥

गुडेन शुण्ठीमित्यादि—पथ्या तृतीयामिति समस्तमसमस्तञ्च । तत्र समस्तपक्षे गुडेनेति पदम्, तथा पथ्या तृतीयामिति पदञ्च शुण्ठ्यादिषु प्रत्येक योज्यम्, तेन गुडेन पथ्या तृतीया शुण्ठीमित्येको योग । तथा गुडेन पथ्या तृतीयामुपकुल्यामिति द्वितीय । तथा गुडेन पथ्या तृतीय दाडिममिति लिङ्गविपरिणामेन योज्यमिति योगत्रय यथासख्यमामाजीर्णादिषु रोगेषु योज्यम् । यत्तु गुडशुण्ठीभक्षण गुडपिप्पलीभक्षण वा, तदस्मिन् व्याख्याने प्रयोगान्तरमेव । यदा तु पथ्या तृतीयामित्यसमस्तपाठस्तदा गुडेनेति पद शुण्ठ्यादिषु चतुर्षु प्रत्येक योज्यम् । तेन चत्वारो योगा यथाक्रममामादिषु योज्या । अस्मिन् पक्षे तृतीयामिति पद योगव्यवच्छेदार्थं ज्ञेयम् ॥ १३ ॥

भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ १४ ॥

भोजनाग्रे इत्यादि स्पष्टम्—इमन्तु योग सर्वेऽप्याद्रियन्ते प्रत्यक्षफलत्वात् सहजलभ्यत्वाच्च ॥ १४ ॥

कपित्थतक्रचाङ्गेरीमरिचाजाजिचित्रकैः ।
कफवातहरो ग्राही खडो दीपनपाचनः ॥ १५ ॥

कपित्थेत्यादौ—कफवातहर इत्येव पाठः, न तु कफपित्तहर इति, द्रव्यगुणपर्यालोचनया कपित्थादीनां वातकफहन्तृत्वात्। खड इति यूषविशेषस्य पारिभाषिकी संज्ञा, अस्य विधानञ्चातीसाराधिकार एवोक्तम् ॥ १५ ॥

## शार्दूलकाञ्जिकः

पिप्पली शृङ्गवेरञ्च देवदारु सचित्रकम् ।
चविकां विल्वपेशीञ्चाजमोदाञ्च हरीतकीम् ॥
महौषधं यमानीञ्च धान्यकं मरिचं तथा ।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक् ॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः ।
सिद्धार्थतैलसम्भृष्टो दश रोगान् व्यपोहति ॥
कासं श्वासमतीसारं पाण्डुरोगं सकामलम् ।
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम् ॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः ।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १६ ॥

पिप्पलीत्यादौ—विल्वपेशी विल्वशलाटु, शृङ्गवेरम् आर्द्रकम्। पाकात् त्रिभागशेषे काञ्जिके कटुतैले सन्तलनम्, हिंगुजीरकयोश्च प्रक्षेप इत्युपदिशन्ति वृद्धाः। सात्म्यतोऽभ्यासादित्यर्थः। क्षीरपाकविधानेनेति द्रव्यादष्टगुणं क्षीरमित्यादिपरिभाषया, अतएवोक्तमन्यत्र "क्षीरमस्त्वारनालानां नास्ति पाकोऽम्भसा विना। सम्यक् पाको न गच्छेत्तु तस्मात् तोयं चतुर्गुणम्" इति ॥ १६ ॥

## अग्निमुखं चूर्णम्

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् ।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम् ॥
यमानिका पञ्चगुणा षड्गुणा च हरीतकी ।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत् ॥

एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ।
पिबेद् दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा ।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम् ॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम् ॥
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते ॥ १७ ॥

हिंगुभाग इत्यादौ—द्विगुणेत्याद्यभागापेक्षया एव त्रिगुणेति । प्रसन्नयेति सनिरुद्धवाते, दध्नेति शुद्धवाते, मस्तुनेति अल्पकफवाते, सुरया कफवाते, उष्ण-वारिणा सामवाते कफे च ॥ १७ ॥

## पानीयभक्तगुडिका

रसोऽर्द्धभागिकस्तुल्या विडङ्गमरिचाभ्रका ।
भक्तोदकेन सम्मर्द्य कुर्य्याद् गुञ्जानिभान् गुडान् ॥
भक्तोदकानुपानेन सेव्या वह्निप्रदीपनी ।
वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते ॥ १८ ॥

पानीयभक्तगुटिकाया—रसोऽर्द्धभागिक इत्येकभागापेक्षया, केचिदत्र कज्ज-लिकार्थं रसस्यार्द्धं गन्धकं क्षिपन्ति । विडङ्गादीनां प्रत्येकं रसापेक्षया द्विगुणो भागः । अर्शोऽधिकारोक्तरसगुटिकायान्तु विडङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः । भक्तोदकेनान्यन्नभक्तपानीयेन ॥ १८ ॥

## बृहदग्निमुखं चूर्णम्

द्वौ क्षारौ चित्रकं पाठाकरञ्जलवणानि च ।
सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥
शटी दार्वी त्रिवृन्मुस्तं वचा सेन्द्रयवा तथा ।
धात्रीजीरकवृक्षाम्लं श्रेयसी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यमानी सुरदारु च ।
अभयातिविषा श्यामा हवुषारग्वधं समम् ॥

तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लौहकिट्टञ्च तप्तगोमूत्रसेचितम् ॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥
दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥
उपयुक्तविधानेन नाशयत्यचिराद्गदान् ।
अजीर्णकमथो गुल्मं प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम् ।
प्रणुदत्युल्वणान् रोगान् नष्टमग्निञ्च दीपयेत् ॥
समस्तव्यञ्जनोपेतं भक्तं दत्वा सुभाजने ।
दापयेदस्य चूर्णस्य बिडालपदमात्रकम् ।
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम् ॥१६॥

बृहदग्निमुखे—करञ्ज करञ्जमूलस्य त्वक्, यत्तु एतस्य सुश्रुतेन कोविदार-पूर्वाणा फलमित्यनेन फलग्रहणमुपदिष्टम्, तच्छोधनविषय ज्ञेयम् । लवणानि पञ्चलवणानि, वृक्षाम्ल महार्द्रक, श्रेयसी गजपिप्पली, एव सर्वत्राग्निदीपनयोगे, वाते पर श्रेयस्या रास्ना गृह्यते । उपकुञ्चिका स्वल्पकृष्णजीरकम्, अम्लिका तिन्तिडी एव सर्वत्राग्निदीपनयोगे । पुगीप–सग्रहादौ, पुनरम्लिका चाङ्गेरी गृह्यते । श्यामा वृद्धदारक; आरग्वधस्य फलम्, तिलशब्देनात्र तिलनालग्रहण क्षारार्थत्वात्, मुष्कक घण्टापारुलि लौहकिट्ट मण्डूरम्, तच्च पुराण ग्राह्यम् । जेज्जटस्तु किट्ट पृथगेव पार्थिवद्रव्य मण्डूरादिति । तप्त गोमूत्रसेचितमिति अग्निवर्ण कृत्वा सप्तधा गोमूत्रनिर्वापितमित्यर्थ, एव सर्वत्र मण्डूरशोधन ज्ञेयम् । शुक्तेनेति ग्रहण्युक्त-मन्धानविशेषेण, तदभावे काञ्जिकेन । एवमन्यत्रापि बोध्यम् । गोदोहमात्रात् गोदोहनमात्रकालात् ॥ १६ ॥

## भास्करलवणम्

पिप्पली पिप्पलीमूलं धन्यार्कं कृष्णजीरकम् ।
सैन्धवञ्च बिडञ्चैव पत्रं तालीशकेशरम् ॥

एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुडवद्वयम् ।
दाडिमात् कुडवञ्चैव द्वे पले चाम्लवेतसात् ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम् ।
वातगुल्मं निहन्त्येतद् वातशूलानि यानि च ।
तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम् ॥
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च ।
मन्दाग्नेरश्नत शक्तो भवेदाश्वेव पावकः ॥
अर्शांसि ग्रहणीदोषं कुष्ठामयभगन्दरान् ।
हृद्रोगमामदोषांश्च विविधानुदरस्थितान् ॥
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन् ।
विशेषत शर्करादीन् रोगान् नानाविधांस्तथा ।
पाण्डुरोगांश्च विविधान् नाशयत्यशनिर्यथा ॥ २० ॥

भास्करलवणे—केशर नागकेशरपुष्पम् । पञ्च सौवर्चलस्येति पञ्चपलानि सौवर्चलस्येत्यर्थ । त्वगेले चार्द्धभागिके इति पलापेक्षया, तेन त्वगेलयो. प्रत्येकमर्द्धपलमित्यर्थ । गन्धाढ्यमिति पत्रनालीशादिद्रव्ययोगादेव, न पुनर-पश्चाज्जातप्रक्षेपेण ॥ २० ॥

## अग्निघृतम्

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिंगु चव्याजमोदा च पञ्चैव लवणानि च ॥
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥

अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्बुदापचीकासकफमेदोऽनिलानपि ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ॥
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ।
सर्वांस्तान् नाशयत्याशु सूर्य्यस्तम इवोदित ॥ २१ ॥

पिप्पलीत्यादि—स्वल्पाग्निघृते हस्तिपिप्पली गजपिप्पली; अजमोदा वस्त-गन्धा ( वनयमानी ), द्वौ क्षारौ यवक्षार सर्जिकाक्षारश्च ॥ २१ ॥

## मस्तुषट्पलकं घृतम्

पलिकैः पञ्चकोलैस्तु घृतं मस्तुचतुर्गुणम् ।
सक्षारैः सिद्धमल्पाग्निकफगुल्मं विनाशयेत् ॥ २२ ॥

मस्तुषट्पलके—घृतस्य प्रस्थ , 'अनिर्दिष्टप्रमाणाना स्नेहाना प्रस्थ इष्यत' इत्युक्ते । पलिके प्रत्येकश , कल्कस्तु स्नेहपादिक इत्युक्ते ॥ २२ ॥

## बडवामुखचूर्णम्

पथ्यानागरकृष्णाकरञ्जबिल्वाग्निभिः सितातुल्यैः ।
वडवामुखं विजयते गुरुतरमपि भोजनं चूर्णम् ॥ २३ ॥

पथ्येत्यादौ—कृष्णा पिप्पली, अग्निश्चित्रक ॥२३॥

## बृहदग्निघृतम्

भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत् ।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
हिंगुचव्याजमोदा च पञ्चैव लवणानि च ।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥
तत्सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ।

एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं मूढवातानुलोमनम् ।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे ॥
शोथं पाण्ड्वामयं कासं ग्रहणीं श्वासमेव च ।
एतान् विनाशयत्याशु तमः सूर्य्य इवोदितः ॥ २४ ॥

बृहदग्निघृते—भल्लातकमहस्रार्द्धमित्याकृतिमानात्, शोभाञ्जनरम शोभाञ्जनस्य मूलस्वच स्वरम ॥ २४ ॥

## क्षारगुडः

द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम् ।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम् ॥
पृथग्दशपलान् भागान् दग्ध्वा भस्म समावपेत् ।
त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणे च गालयेत् ॥
तद्रस साधयेदग्नौ चतुर्भागावशेषितम् ।
ततो गुडतुलां दत्त्वा साधयेन्मृदुनाग्निना ॥
सिद्धं गुडन्तु विज्ञाय चूर्णानीमानि दापयेत् ।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥
एते पञ्चपला भागाः पृथक् पञ्च पलानि च ।
हरीतकीं त्रिकटुकं सर्जिकां चित्रकं वचाम् ॥
हिङ्ग्वम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत् ।
अक्षप्रमाणां गुडिकां कृत्वा खादेद् यथाबलम् ॥
अजीर्णं जरयत्येष जीर्णे सन्दीपयत्यपि ।
भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति ॥
प्लीहार्शः श्वयथुञ्चैव श्लेष्मकासमरोचकम् ।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥
कुष्ठानि च प्रमेहांश्च गुल्मञ्चाशु व्यपोहति ।
ख्यातः क्षारगुडो ह्येष रोगयुक्ते प्रयोजयेत् ॥ २५ ॥

क्षारगुडे आस्फोता नवमल्लिका हाफरमाली इति ख्याता; सुधा स्नुही, तस्या मूलम्। त्रि सप्तकृत्व इत्येकविंशतिवारान् वाराभिधेये कृत्वसुप्रत्यय.। वृश्चिकाली वृश्चिकपत्री, काकोल्यौ काकोलीक्षीरकाकोल्यौ। एते पञ्चपला भागा पृथगिनि च्छेद। पञ्चपलानीत्यत्र एषामिति शेष, तेन हरीतक्यादीना वचान्तानां मिलित्वा पञ्च पलानीत्यर्थ.। हिंग्वम्लवेतसयोरपि मिलित्वैव द्वे पले। रोगयुक्त इति न तु स्वस्थे, सौम्यधातुक्षयभयात्॥ २५॥

## चित्रकगुडः

नासारोगे विधातव्या या चित्रकहरीतकी।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुडोऽग्निदः॥२६॥

नासारोग इत्यादि स्पष्टम्॥ २६॥

## आमाजीर्णचिकित्सा

वचालवणतोयेन वान्तिरामे प्रशस्यते॥ २७॥

अग्निमान्द्याजीर्णयो परस्परकारणत्वादग्निमान्द्यप्रकरण एवाजीर्णचिकित्सामाह वचेत्यादि—वचालवणकल्कयुक्तेनोष्णोदकेन किंवा वचया अर्द्धशृतेनोष्णोदकेन मलवणेन वा वमनम्॥ २७॥

## विदग्धाजीर्णचिकित्सा

अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै परिपाकमेति।
तद्ध्यस्य शैत्येन निहन्ति पित्त-
माक्लेदिभावाच्च नयत्यधस्तात्॥२८॥

विदग्धाजीर्णचिकित्सामाह अन्नमित्यादि—सुश्रुतस्य। शीताम्बुना परिपाकमेतीति यदुक्त तदेवोपपादयति तद्धयस्येत्यादि। हिशब्दो हेतौ। तदिति शीताम्बु; अस्याजीर्णिन पित्त निहन्तीत्यन्वय। आक्लेदिभावादिति द्रवत्वात्॥ २८॥

विदह्यते यस्य च भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य।
द्राक्षासितामाक्षिकसम्प्रयुक्तां लीढ्वाभयां वै स सुखं लभेत्॥
हरीतकी धान्यतुषोदसिद्धा
सपिप्पली सैन्धवहिङ्गुयुक्ता।

सोद्गारधूमं भृशमप्यजीर्णं
विजित्य सद्यो जनयेत् क्षुधाञ्च ॥२६॥

विदह्यत इत्यादि—सुश्रुतस्य। भुक्तमात्रमिति मात्रशब्द कात्स्न्र्ये यावद् भुक्तमित्यर्थः, भुक्तमाकल्ये मात्राशब्दो वर्त्तते। किंवा भुक्तमात्रमिति भोजनानन्तर, तत्कालमेवेत्यर्थ। 'अन्न विदग्ध हि नरस्य शीघ्रम्' इत्यादि वाक्य, तथा 'विदह्यते तस्य तु भुक्तमात्रम्' इत्यादि वाक्य, तथा 'भवेदजीर्णं प्रति यस्य शङ्का' इत्यादि वक्ष्यमाणन्तु सौश्रुतवचनमनार्षमिति, अजीर्णे भेषजनिषेधस्य स्वयमेव सुश्रुतेनोक्तत्वात्, लङ्घनाद्युपदेशाच्च; ततश्च केनाप्यश्ववैद्यन घस्रवैद्येन प्रकल्पित योगत्रयमिदमित्याह जेज्जट। अपरे तु प्रचाराद् भूरिपाठदर्शनाच्च योगत्रयमेतदर्थं मन्यन्त एव, किन्तु स्वल्पाजीर्णं बोध्यमेतत्, प्रभूताजीर्णे तु भेषजसम्बन्ध न कुर्य्यात्, अल्पाजीर्णे तु औषध सेव्यमिति। हरीतकीत्यादौ—धान्यतुषोद मन्धानविशेष, तदभावे काञ्जिक, तेन सिद्धा उत्स्विन्ना ॥ २६ ॥

## विष्टब्धाजीर्णचिकित्सा

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ॥ ३० ॥
रसशेषे दिवास्वप्नो लङ्घन वातवर्जनम्।
व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिण
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान्।
क्षीणान् क्षीणकफाञ्छिशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान् कामं दिवा स्वापयेत् ॥ ३१ ॥

विष्टब्धाजीर्णचिकित्सामाह विष्टब्ध इत्यादि। लवणोदक सैन्धवयुक्तमुष्णोदकमित्यर्थ। रसशेषे दिवास्वप्न इत्यल्पदोषापेक्षया, महति च लङ्घनमुचितम्। लङ्घनमित्युपवास, अन्ये तु लङ्घनशब्देनात्र लाघवकरो विधिरिष्यते, तेन लघ्वन्न भया जरणार्थं कालप्रतीक्षण पाचनौषध तथा स्वेदश्च प्राप्यते, न पुनर्लङ्घनमुपवास, दोषस्याल्पत्वादित्याहु। वातवर्जनमिति वातस्यासेवनम्। व्यायामेत्यादि। रतेति भावे क्त, रतमनुरक्तिरासक्तिरिति यावत्, तेन व्यायामादावतिरतत्वेन ये क्लान्तास्तानित्यर्थ, न तु रत सुरत, तस्य प्रमदाग्रहणेनैव लब्धत्वात्। वाहनञ्च हस्त्यादियानम्। व्यायामादिक्लान्तानाञ्च धातुपुष्ट्यर्थम्। यदुक्तं 'स्वप्नप्रसङ्गाच्च नरो वराह इव पुष्यति' इति। अतीसारे दिवास्वाप कफवर्द्धकतया स्रोत मरोधकतया

प्रभावाद्धाः हित, न च सर्वातीसारे कफवर्ज्यं ज्ञेय । शूलश्वासतृष्णादिषु वात-शान्त्या प्रभावद्धा हित । क्षीणानिति धातुक्षीणान्; तेन सुश्रुतोक्तरसादिधातु-क्षयेऽपि दिवास्वाप प्राप्यते । क्षीणकफानिति स्वतन्त्र किंवा व्यायामादिष्वपि योज्य, तेन व्यायामादिक्लान्तान् क्षीणकफानेव दिवा स्वापयेत्, शिशूनाञ्च निद्रा-माल्यत्वाच्च दिवानिद्रा । मद्यहतानिति प्रमत्तान्, तेषाञ्च मद्यजरणार्थं दिवास्वाप । वृद्धान् प्रति धातु-पुष्ट्यर्थम् । रसाजीर्णिनो रसविशेषपाकार्थ दिवानिद्रा रात्रावपि, निद्रितस्यैवाहारपाकस्य दृष्टत्वात् । किञ्च निद्राणस्य स्रोत सङ्कोचादनिर्गच्छन् देहोष्मा जठरानलमुद्दीपयति, तेन शीघ्रमजीर्णस्य पाक । न च दिवास्वप्नात् कफ-पित्तयो प्रकोपो भवति, तदुक्त चरके-' दिवास्वप्नात् श्लेष्मपित्ते प्रकुप्येते ' इति तत्प्रकोपाच्चाग्न्युपघात एव कथ स्यादिति वाच्य, यत. स्रोत सङ्कोचादुपजात-जठराग्निर्जाठराजीर्णपाचक एव न तदा कफपित्तयो प्रकोप, प्रतिनियतशक्तिक-त्वाद् भेषजानामिति । अस्तु वा कफपित्तप्रकोपस्तथापि नाग्निमान्द्य, तथाविध-दोषदूष्यसंयोगाभावात्, न चाय नियम यत् कफप्रकोपेऽवश्यमग्न्युपघात इति कफपित्तप्रकोपजन्यतिमिरादौ सत्यपि कफपित्तप्रकोपेऽग्न्युपघातादृष्टत्वादिति । रात्रौ जागरिताना जागरणजनितवातक्षोभप्रशमनार्थमेव दिवास्वप्न, स च रात्रिजागरण-कालादर्द्ध कार्य्य, यदाह वाग्भट,—' असात्म्याज्जागरादूर्ध्वं प्रात' सुप्यादत-न्द्रित ' इति । निरशनानिति । अतएव हारीते—'भुक्त्वा स्वप्नमसेवेत स्वस्थो-ऽप्यस्वथितो भवेत् इति ॥ ३० ॥ ३१ ॥

**आलिप्य जठरं प्राज्ञो हिंगुत्र्यूषणसैन्धवैः ।**
**दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ ३२ ॥**

आलिप्येत्यादि स्पष्टम् ॥ ३२ ॥

**धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः ।**
**आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ ३३ ॥**

धान्यनागरेत्यादि—कर्षार्द्धं वा कणाशुण्ठ्योरित्यादिवचनेन तीक्ष्णद्रव्यस्याल्प-मानत्वमुक्त, तेनेहापि तीक्ष्णातीक्ष्णयोर्धान्यनागरयोरुक्तमात्राया पले गृह्यमाणे धान्य सार्द्धत्रिकर्षमान नागरन्तु कर्षार्द्धमान ग्राह्यम् । यत्तु धान्यशुण्ठ्युपयोगे शुण्ठ्याख्य धान्यनरत्नयमिति केनचिदुक्त, तदनार्षत्वान्नाद्रियते । वैद्यप्रचारस्तु शुण्ठ्या. षण्माषका., धान्यस्य दश एव कर्षेणेति ॥ ३३ ॥

## पथ्यात्रिकम्

पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत् ।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक् ॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥३४॥

पथ्येत्यादि—पथ्यादीनां त्रयाणां समो भाग, तच्च मिलित्वा कर्षप्रमाणं ग्राह्यं कर्षश्चूर्णस्य कल्कस्येत्यादिवचनात् ॥ ३४ ॥

भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्वं सशुण्ठीमभयामशङ्कः
स प्राश्य भुञ्जीत हितं हिताशी ॥ ३५ ॥

भवेदजीर्णमित्यादि—सुश्रुतस्य । रसशेषाजीर्णविषयकमिदं वाक्यम् । भोजनोपदेशात् रसशेषे हि स्वल्पदोष, तेन तत्रौषधपूर्वकं भोजनं सम्भवतीति । पूर्वमिति प्रातःकाले, यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत् सोऽन्नकाले यस्य पुरुषस्य यः भोजनकालः तस्मिन् सशुण्ठीं शुण्ठीसहिताम् अभयां सम्प्राश्य भुञ्जीतेति योजना, न तु पूर्वं सम्प्राश्येत्यनेनैव पूर्वकालस्य लब्धत्वादिति ॥ ३५ ॥

किञ्चिदामेन मन्दाग्निरभयागुडनागरम् ।
जग्ध्वा तक्रेण भुञ्जीत युक्तेनान्नं षडूषणैः ॥३६॥

किञ्चिदित्यादि—यद्यपि गुडेन शुण्ठीत्यादिवचनं पूर्वमुक्तं तथापि तक्रषडूषणसम्बन्धाद् योगान्तरमिवैतद्बोध्यम् ॥ ३६ ॥

## विसूचिकाचिकित्सा

विसूचिकायां वमितं विरिक्तं
सुलङ्घितं वा मनुजं विदित्वा ।
पेयादिभिर्दीपनपाचनैश्च
सम्यक् क्षुधार्त्तं समुपक्रमेच्च ॥ ३७॥

विसूचिकाचिकित्सामाह, विसूचिकायामित्यादि—सुश्रुतस्य । पेयादीनाञ्च

दीपनपाचनत्वम्, दीपन–पाचन–धान्यपञ्चकादि—संस्कारात् ॥ ३७ ॥

कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम् ।
विसूच्यां मर्दनं कोष्णं खल्वीशूलनिवारणम् ॥ ३८ ॥

कुष्ठेत्यादि—आतुरस्य तात्कालिकी पीड़ा महती, तदेह च तैल पक्तुमशक्यम्, अत किञ्चिच्चुक्र तैलञ्च दत्त्वा कुष्ठसैन्धवयो कल्केन कदुष्णेन मर्दन कार्य्यमित्याहुर्वृद्धा तैलपाकपक्षे तु कुष्ठसैन्धवयो कल्क पादिक, चुक्रञ्च चतुर्गुणम्। खल्वी हस्तादौ शिरामोटनरूपा वेदना ॥ ३८ ॥

करञ्जनिम्बशिखरीगुडूच्यर्जकवत्सकैः ।
पीतः कषायो वमनाद्घोरां हन्ति विसूचिकाम् ॥३९॥

करञ्जेत्यादि—करञ्जस्य फलम्, शिखरी अपामार्गस्तस्य बीजम् । अर्जक श्वेतपर्णाश इति टल्वण, तथा वृन्दटीकाया चन्द्राटेऽप्यर्जक इति पठ्यते तस्मात् अर्जकस्थाने अर्जुनेति प्रमादपाठ । वत्सक कुटज । पीत कषायो वमनादिति वमनार्थञ्च कषाय 'क्वाथ्यद्रव्याञ्जलौं चुण्णा श्रपयित्वा जलाढके । अर्द्धभागावशेषञ्च वमनेष्ववचारयेत्' इति परिभाषया अर्द्धशृत कार्य्य । अर्द्धभागावशेषमित्यत्र चतुर्भागावशेष इति पाठो दृश्यते तच्च निश्चलो नानुमन्यते । वमनञ्चातीक्ष्णम्, स्तोकस्तोकवमिकारकाजीर्णनिरासार्थम् ॥ ३९ ॥

व्योषं करञ्जस्य फलं हरिद्रां
मूलं समावाप्य च मातुलुङ्ग्याः ।
छायाविशुष्का गुडिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥ ४० ॥

व्योषमित्यादि— सुश्रुतस्य । मातुलुङ्गी मधुकुक्कुटी । विसूचीशब्देनात्र विसूचीजनितमूर्च्छाप्रमीलकशिरोरोगादयो गृह्यन्ते, कारणे कार्य्योपचारात् । किं वा अञ्जनेन प्रभावादेव विसूची हन्यते इति सुश्रुतटीकाकृतो व्याचक्षते ॥ ४० ॥

गुडपुष्पसारशिखरितण्डुलगिरिकर्णिकाहरिद्राभि ।
अञ्जनगुडिका विलयति विसूचिकां त्रिकटुसनाथा ॥ ४१ ॥

गुडपुष्पेत्यादि—गुडपुष्पो मधुकवृक्ष, तस्य सारो ग्राह्य । शिखरितण्डुला अपामार्गबीजानि । गिरिकर्णिका श्वेतापराजिता तस्या मूल ग्राह्यम् । त्रिकटुकान्त

एको योग । विलयति शमयति ॥ ४१ ॥

त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै-
रम्लेन पिष्टैः सवचाशताह्वैः ।
उद्वर्त्तनं खल्लिविसूचिकाघ्नं
तैलं विपक्वञ्च तदर्थकारि ॥ ४२ ॥

त्वक्पत्रेत्यादि—त्वक् गुडत्वक्, पत्र तेज पत्रम् । अम्लपिष्टैरिति काञ्जिकपिष्टै । शताह्वा सुल्फा (सोया) इति ख्याता, शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति, यथा 'रास्नापत्रागुरुमासीकुष्ठशिग्रुत्वचो वचा। पिष्टमम्लेन तच्छ्रेष्ठ विसूच्यामङ्गमर्दनम्' । सुश्रुते तु शतपुष्पी जटामासी चेति द्वयमपि न दृश्यते, यथा—'कुष्ठञ्चागुरुपत्रञ्च रास्ना शिग्रुत्वचा वचा । पिष्टमम्लेन तच्छ्रेष्ठं विसूच्यामङ्गमर्दनम्' इति । तैल विपक्वञ्च तदर्थकारीति, त्वक्पत्रादिभि कल्कीकृतै काञ्जिकेन द्रवेण चतुर्गुणेन तैल पक्व खल्लीविसूचिकाघ्न भवतीत्यर्थ ॥ ४२ ॥

पिपासायामनूत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ४३ ॥
विसूच्यामतिवृद्धायां पार्ष्णयोर्दाहः प्रशस्यते ॥ ४४ ॥

पिपासायामित्यादौ—अनूत्क्लेश इत्युत्कामिका, ठिकरीति लोके ख्याता इति निश्चल , अन्ये त्वनूत्क्लेश इतीपदुत्क्लिष्ट दोष इत्याहु । लवङ्गाम्बु अर्द्धशृतशीतम्, एव जातिफलाम्बु भद्रघनाम्बु च ज्ञेयम् । भद्रघन भद्रमुस्तकम्, अत्रान्तरे योगान्तर दृष्टफलमत्र बोद्धव्यम्—' आघ्राय तद्विशेषशो मातुलुङ्गफलत्वचम् । पीत्वा भद्रघनक्वाथमनूत्क्लेशाद्विमुच्यते ' । पार्ष्ण्योर्दाह इति पादपार्ष्णियुगदाहस्तु मूर्च्छाशान्त्यर्थम् , मूर्च्छेतरलक्षणाभावे सति मसशरादिशलाकया पाददाह । म च प्रभावात् पाददेशे एव कृतो हितो भवतीति वचनादुन्नीयते । सुश्रुतेऽप्युक्त 'माध्यासु 'प्रशस्त पार्ष्ण्योर्दहनम् ' इति । चन्द्रटेऽप्युक्त ' वृद्धाया विसूच्या पार्ष्णिदेशे च दाह ' इति । अत पार्ष्णिदेशे इत्यत्र पार्श्वदेश इति ये पठन्ति ते भ्रान्ता । पार्ष्णिदाहस्य सर्वतन्त्रविहितत्वात् ॥ ४३ ॥ ४४ ॥

वमनन्त्वलसे पूर्वं लवणेनोष्णवारिणा ।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः ॥

सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत्।
दारुहैमवतीकुष्ठशताह्वाहिंगुसैन्धवैः॥
तक्रेण युक्तं यवचूर्णमुष्णं
सक्षारमार्त्तिं जठरे निहन्यात्।
स्वेदो घटैर्वा बहुवाष्पपूर्णै-
रुष्णैस्तथान्यैरपि पाणितापैः॥ ४५॥
तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्।
दोषाच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम्॥ ४६॥
इत्यग्निमान्द्यचिकित्सा।

---

अलसकचिकित्सामाह वमनमित्यादि—लवणेन सैन्धवेन। वर्त्तिरिति फलवर्त्तिः सा चोदावर्त्ते वक्ष्यमाणा। अत इति अत ऊर्द्ध्वमित्यर्थः। सरुगिति सशूलम्। हैमवती वचा। तक्रेणेत्यादि—चरकस्य। सक्षारमिति सह यवक्षारम्, तत्सर्वं घटे प्रक्षिप्य उदरे स्वेद इत्याह कश्चित्, तन्न, चरकेऽस्य योगस्य प्रदेहप्रकरणे पठितत्वात्। तस्माद् यवचूर्णयवक्षारौ तक्रेण पिष्ट्वा किञ्चिदुष्णं कृत्वा उदरे लेपः कार्य्यः। स्वेदो घटैर्वा बहुवाष्पपूर्णैरिति तप्तकाञ्जिकादिभिर्वाष्पपूर्णैर्घटैस्तथान्यैरुष्णैर्वस्त्रपुटकादिभिस्तथा हस्ततापैरपि स्वेद इति योज्यम्। तीव्रार्त्तिरित्यादि—वाग्भटस्य। ना पुरुषः। दोषाच्छन्न इति आमदोषाभिभूतः। नालमिति न समर्थः॥ ४५॥ ४६॥

इत्यग्निमान्द्यचिकित्साविवृतिः।

---

# अथ क्रिमिचिकित्सा।

पारसीकयमानीका पीता पर्य्युषितवारिणा प्रातः।
गुडपूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु॥ १॥

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह पारसीकेत्यादि—पारसीकयमानी खोरासनी यमानीति ख्याता। गुडपूर्वेति गुडः पूर्वो यस्या इति,

गुड भक्षयित्वा मनाक् विलम्ब कृत्वा मा पातव्येत्यर्थ । पेषणमपि पर्युषितवारिणेति ॥ १ ॥

पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत् ।
केबुकस्य रसं वापि पत्तूरस्याथवा रसम् ॥
लिह्यात् क्षौद्रेण वैडङ्गं चूर्णं क्रिमिविनाशनम् ॥ २ ॥

पारिभद्रेत्यादि—पारिभद्रक मन्दारविशेष । केबुकस्येति केबुकस्य केउताडा इति ख्यातस्य तस्य मूलस्वरस ग्राह्यम्, एव पत्तूरस्य, पत्तूर शालिञ्च., क्षौद्रयुतमिति पद केबुकरसे पत्तूररसेऽपि योज्यम् । लिह्यादित्यादि स्पष्टम् ॥ २ ॥

मुस्ताखुपर्णीफलशिग्रुदारु-
क्वाथ सकृष्णाक्रिमिशत्रुकल्क ।
मार्गद्वयेनापि चिरप्रवृत्तान्
क्रिमीन् निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥

मुस्तेत्यादि—आखुपर्णी मूषिकपर्णी दन्तीभेदो वा, फलशब्देनात्र त्रिफला ग्राह्या रविगुप्तमतवादात् । क्रिमिशत्रुर्विडङ्गमार ॥ ३ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥

आखुपर्णीदलैरित्यादि—आखुपर्णी द्रवन्ती मूषकपर्णी दन्तीभेदो वा, मण्डूकपर्णीत्यन्ये, दल कोमलदलम् । यदाह वाग्भट 'आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः । पक्त्वा पूपलिका खादेद् धान्याम्लञ्च पिबेदनु' इति । पिष्टकेनेति यवपिष्टकेन क्रिमिहरत्वादिति सुश्रुतटीकाकृत । शालितण्डुलपिष्टकेनेति निश्चल । आखुपर्णीपत्रस्य भागत्रय पिष्टकस्य त्वेको भाग इत्याहु । सौवीर काञ्जिकम्, यद्यपि सुश्रुते वाग्भटे च क्षीराणि मासानित्यादिनाम्लमात्रस्यैव वर्जनमुक्त तथापि विशेषवचनादत्र काञ्जिकानुपानमिति न विरोधमावहति ॥४॥

पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ।
पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥५॥

पलाशबीजमित्यादि—पलाशबीजस्य स्वरस, तद्बीजकल्को वा तक्रेणेति

तण्डुलाम्बुनाप्यय योगो ज्ञेय । तदुक्तं सुश्रुते 'पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना' इति ॥ ५ ॥

सुरसादिगणं वापि सर्वथैवोपयोजयेत्।
विडङ्गसैन्धवक्षारकाम्पिल्लकहरीतकीः।
पिबेत् तक्रेण सम्पिष्य सर्वक्रिमिनिवृत्तये ॥ ६ ॥

सुरसादिगणः सौश्रुत, सर्वथैवेति कल्ककषायकल्पना। विडङ्गसैन्धवेत्यादौ—काम्पिल्लकी गुण्डारोचना कमलागुटी (कमीला) इति ख्याता ॥ ६ ॥

विडङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥
पीतं विम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन् ॥ ७ ॥

विडङ्गेत्यादि—चरकस्य। तक्रसिद्धेति तक्रमत्रार्द्धोदकं ग्राह्यम्, अन्यथात्यम्लता स्यादित्याहु। सुवर्चिका सर्जिकाक्षार, त दत्त्वा भक्षयेत्। विम्बीघृतमिति—विम्बीघृते विपक्वबिम्बीफलस्य कल्कश्चतुर्गुणं जलम् ॥ ७ ॥

## त्रिफलाघृतम्

त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम् ॥ ८ ॥

त्रिफलाघृते दन्ती नागदन्ती, सा च स्थूलमूलेत्याहु। तदुक्तं 'त्रिवृत्काम्पिल्लकवचानागदन्तीफलत्रयै। गोमूत्रसाधितं सर्पि पानत क्रिमिनाशनम्' इति ॥ ८ ॥

## विडङ्गघृतम्

त्रिफलायास्त्रय प्रस्था विडङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभत समुपाचरेत् ॥
पादशेषे जलद्रोणे शृतं सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रिमिनाशनम् ॥
विडङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान् ॥९॥

त्रिफलाया इत्यादि स्पष्टम् । विडङ्गघृत कश्चित् पुस्तके, तथा वृन्दे च । नच टीकाकृद्भिर्न धृत इत्यधिकमेवेति ज्ञेयम् ॥ ९ ॥

✓ रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रज. ।
ताम्बूलपत्रजो वापि लेपो यूकविनाशन ॥ १० ॥

रसेन्द्रेणेत्यादौ—रसेन्द्र पारद' । ताम्बूलपत्र पर्ण । लेपन यौकनाशनमिति पाठे यौक यूकवृन्दम् ॥ १० ॥

## विडङ्गतैलम्

सविडङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम् ।
आजन्म नयति नाश लिक्षासहितांस्तु यूकांश्च ॥ ११ ॥
इति क्रिमिचिकित्सा ।

सविडङ्गेत्यादौ—शिला मन शिलेति केचिदाहु , अन्ये तु गन्धकशिला गन्धकपाषाणमेवेति वदन्ति । सुरभीजल गोमूत्र तच्च चतुर्गुण ग्राह्यम् ॥ ११ ॥

इति क्रिमि चिकित्साविवृति ।

# अथ पाण्डुरोगचिकित्सा ।

साध्यन्तु पाण्ड्वामयिनं समीक्ष्य
स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।
सम्पादयेत् क्षौद्रघृतप्रगाढै-
र्हरीतकीचूर्णमयैः प्रयोगैः ॥ १ ॥

पुरीषक्रिमित पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तर पाण्डुरोगचिकित्सामाह साध्यमित्यादि—सुश्रुतस्य । समीक्ष्येति अनुबन्ध्यानुबन्धरूप तद्दोषविशेष सम्यगुपलभ्य स्निग्धमेव, न स्विन्न पाण्डुरोगे स्वेदनिषेधात् । उक्त हि सुश्रुते ' पाण्डुमेही रक्तपित्ती तृषार्त्त क्षतक्षीणो दुर्बलोऽजीर्णयुक्त । दकोदरी गर्भिणी पीतमद्यो नैते स्वेद्या यश्च मत्तोऽतिसारी ' इति । घृतेनेति- न तु तैलादिना सर्वपाण्डुरोगाणा पित्तप्रधानत्वात् रक्तदूष्यत्वाच्च । उक्त हि सुश्रुते ' व्यायाममम्ल

लवणानि मद्य मृद दिवास्वप्नमतीव तीक्ष्णन् । निषेवमाणस्य प्रदूष्य रक्त दोषास्त्वच पाण्डुरता नयन्ति ' इति । पित्ते घृतस्यैव प्राधान्यात् घृतेनैव लेहन मुक्तम्, घृतञ्च भेषजसस्कृतमेव देय बहुगुणत्वात् । उक्त हि चरके ' कल्याणक पञ्चगव्य महातिक्तमथापि वा । स्नेहनार्थं घृत दद्यात् कामलापाण्डुरोगिणे ' इति । उक्त हि सुश्रुते च ' केवलेनैव घृतेनेत्याहु ।' उर्द्ध्वमिति वमनेन, अध इति विरेचनेन । यद्यपि पाण्डुरोगे वमन निषिद्धन्, यदुक्त ' न वामयेन् तैमिरिक न गुल्मिनं न चापि पाण्डुरोगपीडितन् ' इति तथापि पीडितमिति वचनेन प्रवृद्धपाण्डुरोगविषय तद्वचन ज्ञेयन्; उपक्रमे तु कालर्तुदोषाद्यपेक्षया कफोद्रेकावस्थाया मृदुवमन ज्ञेयम् । यथाच हारीत ' कालर्तुदोषप्रकृतिं शरीर समीक्ष्य दद्याद्वमन विधिज्ञ ' इति । सुश्रुतेऽप्युक्तम् ' एतेऽप्यजीर्णव्यथिता वम्या ये च विषातुरा. । अतीव चोल्वणकफास्ते च स्युर्मधुकाम्बुना ' इति । विरेचनन्तु तीक्ष्णमेव, यदुक्त ' वान्तस्य तीक्ष्णान्यनुलोमनानि कफोपदिष्टानि भिषग्विदध्यात् ' इति । इदानीं सशोधनानन्तर कृतससर्जनक्रमस्य दोषविशेषशमनार्थमाह सम्पादयेदित्यादि—हरीतकी चूर्णमयैः प्रयोगैर्वक्ष्यमाणैर्नवायसादिभिर्हरीतकीचूर्णबहुलैरित्यर्थ. । हरीतकीचूर्णयुतैरिति पाठान्तरन् ॥ १ ॥

पिबेद् घृतं वा रजनीविपक्वं
त्रैफलं तैल्वकमेव चापि ।
विरेचनद्रव्यकृताम् पिबेद्वा
योगांश्च वैरेचनिकान् घृतेन ॥ २ ॥

रजनीविपक्वमिति हरिद्राकल्कक्वाथाभ्या सिद्धमिति गयदास । तन्न, कल्कक्वाथकरणस्य गणविषयत्वात् तस्मात् हरिद्राकल्कसिद्धमित्यन्ये, अन्ये तु वक्ष्यमाणहरिद्राघृतमित्याहु. । तन्न, चरकक्तत्वात्, इद वाक्य सौश्रुतमिति । त्रैफलमिति त्रिफलाक्वाथकल्कसिद्धम्, त्रिफलापटोलपिचुमर्देत्यादि कुष्ठोक्तन्, वातरोगोक्त वा ज्ञेयन् । तैल्वकमिति वातव्याध्युक्तम् । विरेचनद्रव्यकृतमिति त्रिवृदादिद्रव्यसस्कृत घृतम्; इद हि वाक्य सौश्रुतन् । योगांश्च वैरेचनिकानिति सौश्रुतविरेचनाध्यायोक्तान् घृतेन पिबेदिति ॥ २ ॥

## हेतुप्रत्यनीकाचिकित्सा

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ३ ॥

हेतुप्रत्यनीकचिकित्सामाह विधिरित्यादि। मिश्रक इति द्वन्द्वे ॥ ३ ॥

द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत्।
कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम् ॥
नागरं लौहचूर्णं वा कृष्णा पथ्या तथाश्मजम् ॥
गुग्गुलुं वाथ मूत्रेण कफपाण्डवामयी पिबेत् ॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ४ ॥

द्विशर्करमित्यादि।—त्रिवृच्चूर्णमेव द्विगुणशर्करं सत् पलार्द्धमानं पिबेत् तेन शर्करा कर्ष १ मा ५ रक्ति ४। त्रिवृच्चूर्णं माषा १० रक्ति ८ एवं मिलित्वा पलार्द्धमित्यर्थः न तु त्रिवृच्चूर्णं पलार्द्धं सत् द्विशर्करं पलमेकम्, एवं मिलित्वा नार्द्धपलमेकं प्रत्यहोपयोगेऽस्या मात्राया अनर्हत्वात्। गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्ना पिष्टा तदनु गोमूत्रेणैव युक्तामालोडिता पिबेदित्यर्थः, वृद्ध-वाग्भटेऽप्युक्तं "गोमूत्रेण वा हरीतकी कल्किता" इत्यादि, अन्ये तु गोमूत्रेण क्लिन्नामुद्वर्त्तितामित्याहुः, अन्ये तु चरकवक्ष्यमाणयोगे आरग्वधरसेनेति पठित्वा आरग्वधरसेन हरीतकीं पिबेदिति पृथग् योजयन्ति। किन्तु वाग्भटसंवादात् पूर्वपाठ एव साधुः। नागरमित्यादि—नागरलौहचूर्णाभ्यामेको योगः, कृष्णापथ्याभ्यां द्वितीयः, अश्मजं शिलाजतु अयं योगस्तृतीयः, गुग्गुलुमिति चतुर्थः, गोमूत्रेणेति सम्बध्यते सर्वत्रैव। लौहचूर्णन्तु जारितं पुटितञ्च ग्राह्यं तदभावे लौहपत्रिका ग्राह्या, सा च शालिञ्चरसत्रिफलाक्वाथै पुटपाकेन समाधनीया, एवं सर्वत्र, तच्च माषकमेकं शुण्ठीचूर्णञ्च माषकचतुष्टयमित्याहुः। एवमेव पिप्पलीहरीतकीचूर्णं, तथा शुद्धशिलाजतु माषा ३, घृतेपचितगुग्गुलु माषा ८, सर्वत्रैव गोमूत्रेण पानम्। सप्तरात्रमित्यादि—स्पष्टम् ॥ ४ ॥

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ।

फलत्रिकेत्यादौ।—अमृता गुडूची, तिक्ता कटुकी, भूनिम्बश्चिरता ॥ ५ ॥

अयस्तिलत्र्यूषणकोलभागैः
सर्वैः समं माक्षिकधातुचूर्णम्।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः

पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ६ ॥

अयस्तिलेत्यर्दौ—कोल शुष्कवदर न तु कर्षार्द्ध, यदाह सुदान्तसेन 'अन्य कोलतिलव्योष समैर्माक्षिकधातुना । मधुना वटकान् कृत्वा जग्ध्वा तक्र पिबेदनु' इति । तिलोऽपि कृष्ण , माक्षिकधातु स्वर्णमाक्षिक, तदपि शुद्ध ग्राह्य, तच्छोधनञ्च लोहप्रदीपादौ बोध्यम् । अनुतक्र इति तक्रानुपान ॥ ६ ॥

अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम् ॥७॥

अयोमलमित्यादि—अयोमल पुराणमण्डूर, भूयो गोमूत्रशोधितमिति सप्तवारान् । ईदृशस्य मण्डूरचूर्णस्य मापकद्वय त्रिधा विभज्यातो दर्शनात् भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लेह्य, पश्चादभ्यासक्रमेण माषक वर्द्धयेत् । अनुपानमिह तक्र दुग्ध वा ॥ ७ ॥

## नवायसं लौहम्

त्र्यूषणं त्रिफलामुस्तविडङ्गचित्रका समाः ।
नवायो रजसो भागास्तच्चूर्णं मधुसर्पिषा ॥
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥ ८ ॥

त्र्यूषणमित्यादि—एकभागापेक्षया नवगुण मण्डूरचूर्णम् । आदौ रक्तिद्वय घृतमधुभ्या लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वय कृत्वा वृद्धि कार्य्या मापकद्वय यावदिति व्यवहार । वाग्भटे तु तक्राद्यनुपानञ्चोक्त, यथा 'व्योषाग्नित्रिफलाविडङ्गमुस्तैस्तुल्यमयोरज । चूर्णित तक्रमध्वाज्यकोष्णाम्भोभि प्रयोजितम्' इति । एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम् ॥ ८ ॥

## योगराजः

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ॥
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च ।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्वं श्लक्ष्णचूर्णितम् ।

माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे।
उडुम्बरसमां मात्रां तत खादेद् यथाग्निना॥
दिने दिने प्रयोगेण जीर्णे भोज्ये यथेप्सितम्।
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान्॥
योगराज इति ख्यातो योगोऽयममृतोपम।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्।
पाण्डुरोग विप कासं यक्ष्माणं विषमज्वरम्।
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च॥ ६॥

त्रिफलाया इत्यादि—चरकस्य। त्रिफलायास्त्रयो भागा इति मिलित्वा त्रयो भागा, एव त्रिकटुकस्यापि, निर्देशस्य मानप्रधानत्वात्। चित्रकविडङ्गयोरपि प्रत्येक पलम्। शिलाजत्वादिलौहचूर्णान्ताना प्रत्येक पञ्च पलानि, शर्कराया्श्चाष्टौ पलानि, शिलाजतु च शिवागुडिकोक्तविधिना ग्राह्यम्। रूप्यमलस्य चेति रूप्यस्यावध्मायमानस्य यत् किट्ट निर्गच्छति तद्रूप्यमल, माक्षिकस्येति मारणपुटनादिना शुद्धस्य स्वर्णमाक्षिकस्य। अन्ये पञ्चाश्मजतुनो भागा पञ्च रूप्यमलस्य चेत्यत्र तथा रूप्यमलस्य इति पठन्ति, तेन रूप्यमलस्येति शिलाजतुविशेषण, ततश्च रसायनाधिकारे राजत कटुक श्वेतमित्यादिना यच्छिलाजतु रूप्यमलत्वेनोक्त तदिह गृह्यते इत्याहु। एतत्तु न व्यवहरन्ति वृद्धा। वाग्भटे तु लौहस्थाने रूप्य पठितम्, यथा 'ताप्याद्रिजरूप्यायोमला पञ्च पला पृथक्। चित्रकत्रिफलाव्योषविडङ्गैः पलिकै सह। शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुता' इति तदत्र प्रयोगे भेदाद्यविरोध, उक्त हि 'सुवर्णमथवा रूप्य योगे यत्र न लभ्यते। तत्र लौहेन कर्म स्यात् भिषक् कुर्य्याद्विचक्षण' इति। पूर्वोक्तव्यवस्थापि शिलाजतुलौहमलस्वर्णमाक्षिकलौहरजोभिश्चतुर्भिरेव दृश्यते, तेन तन्त्रकारवचनयोर्न विरोध इति। उडुम्बर कर्ष। अजरकम् अजीर्णम्। यथाग्निनेत्यत्र ना पुरुष॥ ६॥

विशालाकटुकामुस्तकुष्ठदारुकालिङ्गका।
कर्षांशा द्विपिचुर्मूर्वा कर्षार्द्धा च घुणप्रिया।
पीत्वा तच्चूर्णमम्भोभि सुखं लिह्यात् ततो मधु॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।

गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत् ॥१०॥

विशालेत्यादि—विशाला गोरक्षकर्कटी । कर्षांशा च सुखप्रिया इत्यपपाठ किन्तु कर्षार्द्धांशेति । उक्त हि चरके 'विशालाकटुकामुस्तकुष्ठदारुकलिङ्गकान् । कर्षो न्मितानतिविषा कर्षार्द्धाञ्च प्रदापयेत् । कर्षौ मधुरसाद् द्वौ च सर्वचूर्णं सुखाम्बुना । मृदित त रस पूत पीत्वा लिह्यात्तु माक्षिकम् ' इति, अतएव वचनबलात् कल्ककषाय-विधानमप्यत्र योगे बोध्यम्, तेन तच्चूर्ण सुखे कदुष्णैरम्भोभिश्चूर्णापेक्षया चतुर्गु-णैर्मृदित्वा वस्त्रपूत कृत्वा पिबेत्, अनन्तरञ्च मधु लिह्यादित्यर्थ ॥ १० ॥

लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजन ।
पिबेत् पाण्डुवामयी शोथी ग्रहणीदोषपीडित ॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा ।
स्नेहनार्थे घृतं दद्यात् कामलापाण्डुरोगिणे ॥
रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ।
तत प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ ११ ॥

लौहपात्र इत्यादि—अत्र जल चतुर्गुण बोध्य पाकानुपपत्ते । कल्याणघृत पञ्चगव्यघृतञ्च उन्मादे वक्ष्यति, महातिक्तञ्च कुष्ठे, रेचनञ्च पित्तहरत्वेन ॥११॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रस ।
प्रातर्माक्षिकसंयुक्त शीलित कामलापह ॥ १२ ॥

त्रिफलाया इत्यादि—स्पष्टम् ॥ १२ ॥

अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः स्मृतः ।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत् ॥ १३ ॥

अञ्जनमित्यादि—अञ्जन नेत्राञ्जन, द्रोणपुष्पी दण्डकलस इति केचित् । निशादिभिश्चूर्णाञ्जन कार्य्य, तदुक्त तन्त्रान्तरे ' निशागैरिकधात्रीणा चूर्णरत्राञ्जन मतम् ।' एतच्च मध्वक्तशलाकया कार्य्यमित्याहु ॥ १३ ॥

नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ १४ ॥

नस्यमित्यादौ—कर्कोटमूलमिति कर्कोटमूलरस इत्यर्थ । जालिनी पीत-घोषक ॥ १४ ॥

अयोरजोव्योषविडङ्गचूर्णं
लिह्याद्धरिद्रां त्रिफलान्विता वा ।
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥ १५ ॥

सशर्करेत्यादि—सुश्रुतस्य । त्रिभण्डी त्रिवृता, रेचनार्थमय योग । गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये, अत्रापि सशर्करेत्यादि योज्यमित्याह निश्चल । कार्तिकस्तु सगुडा च शुण्ठीत्यत्र चकार, भिन्नक्रम योजयित्वा शुण्ठी सगुडेति व्याख्याय गवाक्षीमपि सगुडामाह । एव सुश्रुतटीकाया डल्वणोऽपि व्याख्यातवान् ॥ १५ ॥

दार्वी सत्रिफला व्योषविडङ्गान्ययसो रजः ।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ १६ ॥

दार्वीत्यादि—चरकस्य । दार्व्यास्त्वक् ॥ १६ ॥

तुल्या अयोरज.पथ्याहरिद्राः क्षौद्रसर्पिषा ।
चूर्णिता कामली लिह्याद् गुडक्षौद्रेण वाभयाम् ॥१७॥

तुला इत्यादि—स्पष्टम् ॥ १७ ॥

धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्करा. ।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥१८॥

धात्रीत्यादि स्पष्टम् ॥ १८ ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापितमष्टवारान् ।
विचूर्ण्य लीढं मधुना चिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ १९ ॥

दग्ध्वेत्यादि—सुश्रुतस्य । अक्षवृक्षो विभीतकवृक्ष । सुश्रुते बहुपुस्तकेषु चन्द्रटादिषु गोमूत्रनिर्वापितसप्तवारमित्येव पाठो दृश्यते, अन्ये तु गोमूत्रनिर्वापित-मष्टवारमित्येव पठन्ति ॥ १९ ॥

पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥ २० ॥

पाण्डुरोगकामलाचिकित्सा हलीमकेऽप्यतिदिशति पाण्डुरोगक्रियामित्यादि। क्रिया विरेचनादिरूपा ॥ २० ॥

## विडङ्गाद्यं लौहम्

विडङ्गमुस्तत्रिफलादेवदारुषडूषणैः।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद् दिने दिने।
कामलापाण्डुरोगार्त्तः सुखमाप्नोत्यचिरात् ॥२१॥

विडङ्गादि तुल्यमात्रमयश्चूर्णमिति मिलितविडङ्गचूर्णादिसर्वचूर्णसममयश्चूर्णमित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणगोमूत्रेण लौहचूर्णं पक्त्वावतारिते च विडङ्गादिचूर्णस्य प्रक्षेप इति केचित्। अन्ये तु विडङ्गादिचूर्णसहितस्यैव लौहचूर्णस्य पाकः; गोमूत्रस्याष्टगुणत्वं सर्वचूर्णापेक्षयैव। अत्र द्रवद्वैगुण्यं न व्यवहरन्ति वृद्धाः। पाकश्चात्र मुद्रापाकेनेत्याहुः। अक्षमात्रा गुडिका कुर्य्यात्, न तु तत्प्रमाणं खादेत्। मात्रा देहाग्निबलापेक्षिणी, अतएव बुद्ध्वा विभज्य कर्त्तव्या ॥ २१ ॥

## त्र्यूषणाद्यं मण्डूरम्

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ।
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च ॥
एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम् ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः।
उडुम्बरसमान् कुर्य्याद् वटकांस्तान् यथाबलम् ॥
उपभुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामलामेहान् प्लीहानं शमयन्ति च ॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते।
आहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥ २२ ॥

त्र्यूषणमित्यादि—चरकस्य । दार्वीत्वगिति पष्ठीसमास , न तु दार्व्या त्वक् चेति, ताप्य दार्व्यास्त्वच चव्यम् ' इति वाग्भटवचनात् । ग्रन्थिक पिप्पलीमूलम् । एभिश्चतुर्दशद्रव्यै पृथग्द्विपलैरष्टाविंशतिपलानि भवन्ति । मण्डूरञ्च समुदित-चूर्णाद् द्विगुण मत पट्पञ्चाशत्पलमान भवति । गोमूत्रञ्च मिलितचूर्णापेक्षयाष्ट-गुणम्, पल्लोलेखागतत्वेन द्वैगुण्यमपि नास्ति । अन्ये तु मूत्रमष्टगुणं प्रत्यासत्त्या मण्डूरापेक्षयैव वदन्ति । चक्रेणाप्यनुमतोऽय पक्ष अतो दीपकायामेव पक्ष प्रतिभातीत्युक्तम् । एतच्च न युक्त, यदाह वाग्भट ' ताप्य दार्व्यास्त्वचा चव्य ग्रन्थिक देवदारु च । व्योपादिनवकञ्चैव चूर्णयेद् द्विगुण तत । मण्डूरञ्चाञ्जन निभ सर्वतोऽष्टगुणे पचेत् । पृथग्विपक्के गोमूत्रे वटकीकरणक्षमे । प्रक्षिप्य वट-कान् कुर्य्यात् तान् खादेत् तक्रभोजनम् ' इति । वाग्भटटीकायाञ्च सर्वत इति मण्डूरसहितचूर्णादष्टगुण गोमूत्रमिति व्याख्यानम् । वृद्धवाग्भटेऽपि मूत्र सर्वतो-ऽष्टगुणमित्युक्तम् । पृथक् पृथगिति एकपृथक्शब्दो द्विपलिकानीत्यनेन सम्बध्यते, द्वितीयपृथक्शब्दाच्च मण्डूरचूर्णमेव पृथक कृत्वा पक्तव्यम्, तस्मिन्नासन्नपाके त्र्यूष णादिचूर्णप्रक्षेप चूर्णबहुलत्वात्, एव सर्वत्र बहुचूर्णप्रक्षेपविषये आसन्नपाक एव प्रक्षेप, स्वल्पचूर्णस्य तु प्रक्षेप सम्यक्पाके सत्येव, अतएवोक्त ' प्रायो न पाक-श्चूर्णाना भूरिचूर्णस्य तेन हि । आमन्नपाके प्रक्षेप स्वल्पस्य पाकमागते । ' पाक-मागते इति सम्यक् पाक इत्यर्थ । पाकलक्षणञ्च ' रसो गन्ध शुभ पाके वर्त्ति स्याद् गाढमर्दनात् ' इति । उदुम्बरसमानिति कर्षमानान्, पञ्चपट्मापकेण प्रायेण प्रचार । अजरकमजीर्णम् । बहुश इति सप्त वारान् । चक्रेण तु ग्राहयन्त्यष्टगुणित मूत्र मण्डूरचूर्णत इत्येव पाठो लिखित । यतो दीपिकाया मण्डूरापेक्षयैवाष्टगुण-त्वम्, तेनायमेव पक्ष प्रतिभातीति वदता स्वीकृतम्, गोमूत्र सर्वचूर्णत इति तु केनापि प्रतिसस्कृत्य लिखितम् ॥ २२ ॥

## पुनर्नवामण्डूरम्

पुनर्नवात्रिवृच्छुण्ठी पिप्पली मरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा ।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं तत ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥

पाण्डुशोथोदरानाहशूलार्शः क्रिमिगुल्मनुत् ॥ २३ ॥

पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैव, सन्निहितत्वात् व्यवहाराच्च अत्रापि द्वैगुण्य न व्यवहरन्ति ॥ २३ ॥

## वज्रवटकमण्डूरम्

पञ्चकोलं समरिचं देवदारुफलत्रिकम् ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिता ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥
अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत् ।
मण्डूरवज्रनामायं रोगनीकविनाशन ॥ २४ ॥

मण्डूरवज्रवटके विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिता इति पञ्चकोलादिभागा विडङ्गमुस्तसहितास्त्रिपलसम्मिता इत्यर्थः । अत्रापि मण्डूरापेक्षयैवाष्टगुणत्वं मूत्रस्य द्वैगुण्यञ्च पूर्ववत् ॥ २४ ॥

## धात्र्यरिष्टम्

धात्रीफलसहस्रे द्वे पीडयित्वा रसं भिषक् ।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुडवान्वितम् ॥
शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम् ।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशन ॥
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान् ।
कासहिक्कारुचिश्वासानेषोऽरिष्ट प्रणाशयेत् ॥ २५ ॥

धात्रीफलेत्यादि—चरकस्य । क्षौद्राष्टभागमिति क्षौद्रस्याष्टमो भाग, तेनामलकस्वरसस्य सप्त भागा इति सिध्यति, शर्करार्द्धतुला पञ्चाशत् पलानि, अर्द्धपलेति लेखकदोषात् प्रमादपाठ ॥ २५ ॥

## द्राक्षाघृतम्

पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः ।
कामलागुल्मपाण्डवर्त्तिज्वरमेहोदरापहः ॥ २६ ॥

पुराणसर्पिष इति पुराणं दशवर्षस्थितं सर्पिः । जलमत्र चतुर्गुणमधात् । अन्ये तु 'पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत् । पुराणसर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम्' इति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः ॥ २६ ॥

## हरिद्राघृतम्

हरिद्रात्रिफलानिम्बवलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ २७ ॥

हरिद्रेत्यादौ—क्षीरं चतुर्गुणम् ॥ २७ ॥

## मूर्वाद्यं घृतम्

मूर्वातिक्तानिशावासाकृष्णाचन्दनपर्पटैः ॥
त्रायन्तीवत्सभूनिम्बपटोलाम्बुददारुभिः ॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरचतुर्गुणम् ।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत् ॥ २८ ॥

मूर्वाघृते वत्सकेन वत्सकफलं ग्राह्यम् ॥ २८ ॥

## व्योषाद्यं घृतम्

व्योषं विल्वं द्विरजनी त्रिफला द्विपुनर्नवा ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥ २९ ॥

इति पाण्डुरोगचिकित्सा ।

---

व्योषमित्यादि—वाभटस्य । विल्वं विल्वशलाटुः । अयोरजोऽत्र पुटादिशोधितं ग्राह्यम् । वृश्चिकाली विछाटीति ख्याता । क्षीरमत्र चतुर्गुणं बोध्यम्,

अरुणन्तु चीर शृतममम्, जलन्तु चतुर्गुणमित्याह ॥ २६ ॥

इति पाण्डुरोगचिकित्साविवृति ।

---

# रक्तपित्त-चिकित्सा।

नोद्रिक्तमादौ संग्राह्यं वलिनोऽप्यश्नतश्च यत्।
हृत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत्।
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः॥
अक्षीणवालमांसाग्नेः कर्त्तव्यमपतर्पणम्।
उर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम्॥
प्रागधोगमने पेया वमनञ्च यथावलम्॥ १॥

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकारणत्वाव्यभिचारात् पाण्डुरोगानन्तर रक्तपित्तमाह नोद्रिक्तमित्यादि—नोद्रिक्तमित्यादिना सौश्रुतक्रियामाह, उद्रिक्त-मतिशयेन प्रवृत्त्युन्मुखम्। अश्नत इत्यनेन सन्तर्पणोत्थितत्व दर्शयति। आदौ सग्रहणे दोपमाह हृदित्यादि। रोगशब्दस्य हृदादिभि सम्बन्ध, प्रत्येकमिति शेप। ऊर्द्ध्वं प्रवृत्तदोषस्येति—सुश्रुतस्य। अतिप्रवृद्धदोषस्येति पाठान्तरम्। अपतर्पण लङ्घनम्, चरके रक्तपित्ते लङ्घनकरणोपपात्तिर्दर्शिता, यथा 'प्रायेण हित-मुत्क्लिष्ट सामदोपाच्च वारिणा। वृद्धिं प्रयाति पित्तासृक् तस्माल्लङ्घनमादित ' इति। दोपनिदानापेक्षया यत् कर्त्तव्य तदाह ऊर्द्ध्वग इत्यादि। यदाह चरकः 'मार्गं दोपानुवन्धञ्च निदान प्रसमीक्ष्य च। लङ्घन रक्तपित्तादौ तर्पण वा प्रयोजयेत् ' इति अस्यार्थ —यदि ऊर्द्ध्वमार्गग साम पित्त कफस्थो दोप स्निग्धोष्णञ्च निदान तदा लङ्घनम्, अन्यथा तर्पणम् तर्पयतीति तर्पणमशनम्, तेन यवागूतर्पणञ्च ग्राह्यम्। ये तु शक्तुतर्पणे तर्पणमिति, तन्मते यवागूदानपक्षो न सगृहीत स्यादित्याह प्रागधोवमन इति, अधोगे रक्तपित्ते प्राक् पूर्वं पेयादिकमित्यर्थ ॥ १ ॥

तर्पणं सघृतक्षौद्रलाजचूर्णैः प्रदापयेत्।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति।
जलं खर्जूरमृद्वीकामधुकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम्॥ २॥

तर्पणमित्यादि—चरकस्य । स्पष्टम् । येन द्रवेण शक्तूनामालोटन कार्य्यं तदाह जलमित्यादि—अथ खर्जूरादिना जल षडङ्गविधानेन कार्य्यम् । एतच्च जलमत्यर्थं मधुरमप्यूर्द्ध्वगे कफसम्बन्धे रक्तपित्तव्याधिप्रत्यनीकतया यौगिक ज्ञेयम् ॥२॥

**त्रिवृता त्रिफला-श्यामा पिप्पली शर्करा मधु ।**
**मोदक सन्निपातोर्द्ध्वरक्तपित्तज्वरापहः ॥ ३ ॥**

विरेचनमाह त्रिवृतेत्यादि—त्रिवृतेति अरुणमूला; श्यामेति श्याममूला त्रिवृत्, न तु श्यामलता वृद्धदारको वा, चरके श्यामात्रिवृत कल्पस्थाने पठितत्वात्। अत्र 'मोदके द्विगुणो गुड' इति वचनात् शर्करायाश्चूर्णाद् द्वैगुण्यमिच्छन्ति, मधु पुनरेकद्रव्यसम किंवा मधुशर्करे मिलित्वा चूर्णान् द्विगुणम्, उभयोरपि मोदकार्हत्वात्। अय योग सुश्रुतेऽपि पठ्यते, तट्टीकाकारस्तु त्रिफलाया प्रत्येक भाग, शर्करामाक्षिकन्तु मोदकयोग्यमाह ॥ ३ ॥

**शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते ।**
**वमन मदनोन्मिश्रो मन्थ. सक्षौद्रशर्करः ॥ ४ ॥**

शालपर्ण्यादिना सिद्धेति—शालपर्ण्यादि स्वल्पपञ्चमूल तथातिसारे उक्तौ द्वौ च स्वल्पमहद्भेदात् एव शालपर्ण्यादिद्वयमेव दोषाद्यपेक्षया देयमित्याहु । व्यवहारस्तु प्राय स्वल्पञ्चमूलेनेति । वमनमिति—मन्थो द्रवद्रव्यालोडिता शक्तव ॥ ४ ॥

**शालिषष्टिकनीवारकोरदूषप्रशातिका ।**
**श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥**
**मसूरमुद्गचणका समुकुष्टाढकीफला ।**
**प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥**
**शाकं पटोलवेत्राग्रतण्डुलीयादिकं हितम् ।**
**मांसं लावकपोतादिशशैणहरिणादिजम् ॥ ५ ॥**

शालीत्यादौ—नीवार उड़िया, कोरदूष 'कोद्रव, स चेह पुरातनो ग्राह्य, तेन कोरदूषस्य यद्रक्तपित्तहेतुत्व चरके निदानस्थाने प्रोक्त तदभिनवाभिप्रायेणेति केचित् । अन्ये तु निष्पावमाषपूपादियुक्तस्यैव कोरदूषस्य सयोगमहिम्ना रक्तपित्तहेतुत्व निदाने प्रोक्तम्, केवलस्य तु कषायमधुरलघुत्वात् रक्तपित्तहन्तृत्वमेवाहु । प्रशातिका रक्तशूका, रक्त उड़िया इति ख्याता, सा जलमध्ये प्रायो भवति। प्रियगु कगु कायोनीति लोके । आढकी तुवरी ॥ ५ ॥

विना शुण्ठीं षडङ्गेन सिद्धं तोयञ्च दापयेत् ॥ ६ ॥

विना शुण्ठीमित्यादि स्पष्टम् ॥ ६ ॥

क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत् ॥ ७ ॥

निषिद्धवमनविरेचनमाह क्षीणेत्यादि—शोषानुबन्धिन यक्ष्मानुबन्धयुतम् ॥७॥

वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ८ ॥

स्तम्भनयोगानाह वृषेत्यादि—वृषस्य पत्राणि पुटपाकविधिना उत्स्विद्य ततो रसो ग्राह्य । अन्यथा तत्पत्रस्वरसो दुर्ग्रहो भवति । अयञ्च योग ऊर्द्ध्वगे बोध्य इत्याहु । योगोऽय मधुशर्कराभ्यातिरेकेण तत्कृतकषायेणापि बोध्य , यदाह वाग्भट, 'पित्तासृक् शमयेत् पीतो निर्यासो वाटरूषज । शर्करामधुसंयुक्त केवलो वा शृतोऽपि वा ' इति ॥ ८ ॥

आटरूषकनिर्य्यूहे प्रियङ्गुर्मृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ९ ॥

आटरूषकनिर्य्यूह इत्यादि—आटरूषो वासक , मृत्तिका सौराष्ट्री मृत्, तदभावे पङ्कपर्पटी, अञ्जन रसाञ्जनम्, क्षौद्रान्तोऽय योग । उक्तञ्च वाग्भटे 'वासारसेन फलिनीमृद्रसाञ्जनमाक्षिकम् । पित्तासृक् शमयेत् पीतम्' इति । विनीय कल्कीकृत्य प्रक्षिप्येति वा । प्रियग्वादीना मिलिताना कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषाबलात् । उक्त ह्यग्निवेशेन कर्षश्चूर्णस्य कल्कस्येत्यादि, तथा मात्रा क्षौद्रघृतादीनामिति । अन्ये त्वाहु—चूर्णादीना कर्षमानत्व स्वतन्त्रप्रयोग एव भवति । यदि पुनरत्रोक्तपरिभाषानुसारेण प्रियग्वादीना प्रत्येक गृह्यते तदा भेषजभूयस्त्व स्यात्, प्रियग्वादीनामल्पत्व युक्त भवति, व्यवहारस्तु प्रियग्वादिकल्कक्षौद्रयो प्रत्येक चतु पञ्चमाषक प्रक्षेप इति ॥ ९ ॥

वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात्
पित्तासृजो वेगमुदीर्णमाशु ॥ १० ॥

वासाकषाय इत्यादि—सुश्रुतस्य । उत्पलादीनां चूर्णीकृतानां प्रक्षेप । निश्चलस्तु सितामधुनो प्रत्येक शाण , उत्पलादीनां मिलित्वा शाण इत्याह ॥ १० ॥

तालीशचूर्णसंयुक्तः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वास-स्वरभेदरक्तपित्तहर ॥ ११ ॥

तालीशेत्यादि—अत्र वासकस्वरसस्य पलम्, तालीशचूर्णस्य माषकद्वयम्, मधु माषचतुष्टयमिति व्यवहरन्ति ॥ ११ ॥

आटरूपकमृद्वीका-पथ्याक्वाथ सशर्कर ।
क्षौद्राढ्य कसनश्वासरक्तपित्तनिवर्हण ॥ १२ ॥

आटरूपकेत्यादि—चरकस्याय योगोऽनार्ष इति जेज्जट , दृश्यते त्वय चन्द्राटादिषु बहुमग्रहेष्वपीति ॥ १२ ॥

वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ १४ ॥

वासायामित्यादि स्पष्टम् ॥ १३ ॥

समाक्षिक फल्गुफलोद्भवो वा
पीतो रस शोणितमाशु हन्ति ॥ १४ ॥

समाक्षिक इत्यादि—फल्गुफल काकोडुम्बरिकाफलम् । अय योगोऽयोगे भवति ॥ १४ ॥

मदयन्त्यङ्घ्रिज क्वाथस्तद्वत् समधुशर्करः ॥ १५ ॥

मदयन्त्यङ्घ्रीति मदयन्ती मल्लिकाभेद , तया मूलम् ॥ १५ ॥

अतसीकुसुमसमङ्गावटावरोहत्वगम्भसा पीता ।
प्रशमयति रक्तपित्ते यदि भुङ्क्ते मुद्गयूपेण ॥ १६ ॥

अतसीत्यादौ—वटावरोहत्वगिति वटावरोहस्य त्वक् । एतत् सर्व पिष्ट्वा अम्भसा पेयम् ॥ १६ ॥

कषाययोगैर्विविधैर्दीप्ताग्नौ निर्जिते कफे ।
रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्वणे पय ॥
छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले ।
अभ्यसेत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः ॥ १७ ॥

क्षीरपानविषयमाह कषाययोगैरित्यादि—वाग्भटस्य । कषायाश्चूर्णकल्का-द्य । पञ्चमूली स्वल्पा, क्षीरपाकविधानेन पञ्चमूलीसाधित पय. । अत्रापि माक्षिकाक्षौद्रमिति योज्यम् । उक्त हि वाग्भटे ' पञ्चमूलेन लघुना शृतञ्च ससिता-मधु ' इति ॥ १७ ॥

**द्राक्षया पर्णिनीभिर्वा बलया मधुकेन वा ।**
**श्वदंष्ट्रया शतावर्य्या रक्तजित् साधितं पय ॥ १८ ॥**

द्राक्षयेत्यादि—एते षड्योगा । पर्णिनीभिरिति शालपर्णी-पृश्निपर्णी—मुद्ग-पर्णी-माषपर्णीभिरिति, एव सर्वत्र बहुवचनान्ते, द्विवचनान्ते त्वाद्ये द्वे । एते योगा विशेषेण मूत्रमार्गगे रक्तपित्ते ज्ञेया । तथा घृतस्य शर्कराया प्रक्षेपोऽत्र बोध्य । यदुक्त वाग्भटे ' जीवकर्षभकौ द्राक्षाबलामधुकगोक्षुरै । पृथक् पृथक् शृत क्षीर सघृत सितयापि वा । गोकण्टकाभीरुशृत पर्णिनीभिस्तथा पय । हन्त्याशु रक्त सरुज विशेषान्मूत्रमार्गगम् ' इति । एवञ्च सजीवक सर्षभकमित्यादि चरके-णाप्युक्तम् ॥ १८ ॥

**पक्वोडुम्बरकाश्मर्य्य-पथ्याखर्जूरगोस्तना ।**
**मधुना घ्नति संलीढा रक्तपित्तं पृथक् पृथक् ॥ १९ ॥**

पक्वोडुम्बरेत्यादि—उडुम्बरादीना फलानि पक्वानि, ततस्तेषा चूर्णाना मधुना लेह । काश्मर्य्य गाम्भारीफलम्, खर्जूर पिण्डखर्जूरम्, गोस्तना द्राक्षा । मधु-नेत्यादेर्दैवादप्राप्तौ अनर्हत्वे वा सर्वत्र शार्कर जल वङ्गसेनरसं कदल्यादिकुसुम-सम्भव वा ग्राह्यमित्यर्थ । नासाप्रवृत्तरुधिरेऽपि पक्वोडुम्बरफल मधुना गुडेन च दृश्यते, उक्त हि विन्दुसारे ' उडुम्बराणि पक्वानि गुडेन मधुनापि वा । उपयुक्तानि निघ्नन्ति नासारक्त नृणा ध्रुवम् ' इति ॥ १९ ॥

**भद्रशाखोटकत्वग्रसविन्दुद्वितययुतो घृतद्विगुण ।**
**भूनिम्बकल्क ऊर्द्ध्वगपित्तास्रकासश्वासघ्न ॥ २० ॥**

भद्रेत्यादि—भद्रस्तरुण ॥ २० ॥

**खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मले ।**
**पुष्पचूर्णन्तु मधुना लीढ्वा चारोग्यमश्नुते ॥ २१ ॥**

खदिरस्येत्यादि—चरकस्य । चरके तु पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्त-नुदिति पाठ; टीकाकारोऽपि चूर्णानि तस्य रक्तपित्तनुदिति विशेषय नोपपद्यत

इति कृत्वा पुरुषविशेषपरत्वमाह । सङ्ग्रहकारैश्च पुष्पचूर्णानि मधुना लीढ्वा चारोग्य-मश्नुते इति प्रतिसंस्कृत्य लिखितम् । अयञ्च पुष्पचूर्णलेहो व्यस्त , सर्वत्र विभक्त्य-न्तत्वेन निर्देशादिति वृन्दटिप्पणी, किन्तु चरकटीकाकृद्भिर्न व्याख्यातोऽयमर्थ ॥२१॥

अभया मधुसंयुक्ता पाचनी दीपनी मता ।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ २२ ॥

अभयेत्यादि—अय योगो यद्यपि पक्षोडुम्बरकाश्मर्य्येत्यादियोगमध्ये पठित एव तथापि फलविशेषकथनार्थमिह पुनरुक्तम् ॥ २२ ॥

वासकरस्वरसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना लीढा रक्तपित्तं द्रुतं जयेत् ।
भावनायां द्रवो देय सम्यगार्द्रत्वकारकः ॥ २३ ॥

वासकस्वरस इत्यादि—कृष्णा च वासकस्वरसे भावितेति योज्यम्, भावना च सप्ताहम्, उक्त हि चन्द्रटे 'दिवा दिवातपे शुष्कं रात्रौ रात्रौ च वासयेत् । शुष्क-चूर्णीकृत द्रव्य सप्ताह भावनाविधि । द्रवेण यावता द्रव्यमेकीभूयार्द्रता व्रजेत् । तावत्प्रमाण निर्दिष्ट भिषग्भिर्भावनाविधौ' इति ॥ २३ ॥

## एलागुडिका

एलापत्रत्वचोऽर्द्धाक्षा पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुना युक्त्या गुडिका कारयेद्भिषक् ।
अक्षमात्रां ततश्चैका भक्षयेत्तु दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ।
शोथप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुडिका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ २४ ॥

एलेत्यादि—क्षतक्षीणे चरकस्य । अर्द्धाक्षा इति प्रत्येक कर्षार्द्धमाना । एव सितादयश्च प्रत्येक पलोन्मिता । युक्त्या इति यावता मधुना गुडिका भवति तावन्मान मधु देयम् । आढ्यवात वातरक्त ऊरुस्तम्भमित्यन्ये ॥ २४ ॥

**लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि ।**
**पृथ्वीकां शाणमात्रान्तु खादेद् द्विगुणशर्कराम् ॥२५॥**

पृथ्वीका शाणमात्रामिति पृथ्वीका कृष्णजीरक न तु सूक्ष्मेला, टीकाकृद्भिर्व्याख्यातत्वात् । शाणो माषचतुष्टयम् । कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात् प्रभावाद्वा पित्तहन्तृत्वम् ॥ २५ ॥

**नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ।**
**सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ २६ ॥**

नासेत्यादि । आमलक घृते भृष्ट्वा काञ्जिके पिष्ट्वा शिरसि लेपो देय ॥२६॥

**घ्राणप्रवृत्ते जलमाशु देयं**
**सशर्करं नासिकया पयो वा ।**
**द्राक्षारसं क्षीरघृतं पिबेद्वा**
**सशर्करश्चेक्षुरसं हितं वा ॥ २७ ॥**

घ्राणप्रवृत्त इत्यादि—सुश्रुतस्य । जलादय॰ सशर्करा॰ पञ्च नस्ययोगा इति गयदास॰ । तथा डल्वणोऽपि घ्राणप्रवृत्ते सशर्कर पानीयम्, पयोऽपि सशर्करम्, तथा द्राक्षारसमपि सशर्कर नासिकया पिबेत् । तथा क्षीरघृत क्षारमथनोद्भूतघृत तच्च सशर्कर नासिकया पिबेत् । एवमिक्षुरसमपि नासिकया पिबेत् । वृन्दटिप्पण्यान्तु केवलद्राक्षारसस्य नस्यञ्चेक्षुरसस्य च नस्यमित्युक्तम्, इदमपि युक्तम्, यदाह चरक॰ 'द्राक्षारसस्येक्षुरसस्य नस्य क्षीरस्य दूर्वास्वरसस्य चैव' इति । चक्रस्तु नासिकया इत्यत्र नस्तकयेति पठित्वा नासापुटयोरिति विवृतवान् । केचित् तु मूर्ध्नि लेपेनेत्यतो मूर्ध्नि इति पदमनुवृत्य अत्र मूर्ध्नि जल देयमित्यर्थमाहु । तन्न, नासाप्रवृत्तरुधिरमित्यादि चरकवचनम्; घ्राणप्रवृत्त इत्यादि सौश्रुतम्, तस्मात् दुरन्वय । हित वेत्यत्र हिम वेति पाठोऽपि ज्ञेय ॥ २७ ॥

**नस्यं दाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा ।**
**आम्रास्थिज पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥२८॥**

नस्यमित्यादि—चत्वारो योगा॰; चरकेऽप्युक्त 'द्राक्षारसस्येक्षुरसस्य नस्य क्षीरस्य दूर्वास्वरसस्य चैव । यवासमूलानि पलाण्डुमूल नस्यं तथा दाडिमपुष्पतोयं'

इति । एवं वाग्भटेऽप्युक्तम् । केचित् तु 'रसे दाडिमपुष्पस्य दूर्वारससमन्विते' इति तन्त्रान्तरप्रदर्शनादत्रापि दूर्वारस–दाडिमरसाभ्यामेक एव योग इत्याहु' ॥ २८ ॥

मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसंज्ञितः ।
शृतं क्षीरं पिबेद्वापि पञ्चमूल्या तृणाह्वया ॥ २९ ॥

मेढ्रग इत्यादि—पञ्चमूल्या तृणाह्वयेति तृणपञ्चमूल्या, यदुक्तं सुश्रुते 'कुशकाशशरेक्षुदर्भा' इति । अत्र दर्भ उलुघासः । चरके तु 'शरेक्षुकाशदर्भाणां शालीनां मूलमेव च' इति । उभयमपि शस्तम् ॥ २९ ॥

## दूर्वाद्यं घृतम्

दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका ।
सिता शीतमुशीरञ्च मुस्तं चन्दनपद्मकम् ॥
विपचेत् कार्षिकैरेतैः सर्पिराजं सुखाग्निना ।
तण्डुलाम्बु त्वजाक्षीरं दत्त्वा चैव चतुर्गुणम् ॥
तत्पानं वमतो रक्तं नावनं नासिकागते ।
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ ३० ॥

दूर्वाघृते शीतं श्वेतचन्दनमिति वृन्दः । अन्ये तु बहुवारत्वचं रमाशनं वेत्याहु । त्रयाणामेव रत्नशालादौ शीतसंज्ञकत्वेनोक्तत्वात् । व्यवहारस्तु प्राय श्वेतचन्दनेनेति । तण्डुलाम्बु त्वजाक्षीरञ्च प्रत्येकं चतुर्गुणम्, दत्त्वा चैवेति चकारादित्याहु ॥ ३० ॥

## शतावरीघृतम्

शतावरी दाडिमतिन्तिडीकं
काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं ज्ञः ॥

कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं घृतमाशु हन्यात् ॥ ३१ ॥

शतावरीत्यादि—चरकस्य। केचिदत्र दाडिमफलम् श्रोत्तरापथिकमित्याहु। तिन्तिटीक महार्द्रकम्। काकोल्यायुक्ते मेदे काकोलीमेदे, मध्यपदलोपी समास, किंवा काकोलीशब्द प्रथमैकवचनान्तस्त्रीलिङ्गशब्द, मेदे इति मेदाद्वयम्, तन्त्रान्तरप्रमाणात्, उक्तं हि 'काकोली मधुक मेदे तिन्तिटीक सदाडिमम्। शतावरीं विदारीञ्च वीजपूरजटान्विताम्। पिष्ट्वा चतुर्गुणे तोये पक्वमाज्य ज्वरापहम्' इति ॥ ३१ ॥

## बृहच्छतावरीघृतम्

शतावर्य्यास्तु मूलानां रसप्रस्थद्वयं मतम्।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥
जीवकर्षभकौ मेदा महामेदा तथैव च।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा।
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक् ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।
क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम् ॥
अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम्।
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥
एतान् रोगान् निहन्त्याशु छिन्नाभ्राणीव मारुतः।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥
स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे।
इति वाक्यबलात् स्नेहे प्रक्षेप्यं पादिकं भवेत् ॥ ३२ ॥

बृहच्छतावरीघृते - शर्करामधुसंयुतमिति सिद्धशीते मधुशर्करयोर्मिलित्वा पादिक प्रक्षेप, अतएवाह स्नेहपाद इत्यादि ॥ ३२ ॥

## वासाद्यं घृतम्

✓ वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः।

प्रदाय कल्कं विपचेद् घृत तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥
शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ ३३ ॥

वाम्ामित्यादि—चरकस्य। अत्रार्द्राया विधानात् क्वाथविधाने न द्वैगुण्यम् । 'नित्यमार्द्रा प्रयोक्तव्या न तामा द्विगुणो भवेत्' इति वचनात् । अत्राष्टगुण जल दत्त्वा अष्टाशशेष कषाय कार्य्य । उक्त हि वाग्भटे ' ममूलमस्तक पिष्ट वृष-मष्टगुणेऽम्भसि । पक्त्वाष्टाशावशेषेण घृत तेन विपाचयेत् । तत् पुष्पगर्भं तच्छीत सक्षौद्र पित्तशोणितम्' इत्यादि । अत्र वामापुष्पकल्क, अत प्रस्थेऽपि पलचतु-ष्टयम्, शणस्य कोविदारस्य वृषस्येति वक्ष्यमाणपरिभाषाबलात् । अत्रानिर्दिष्टप्रमा-णत्वात् स्नेहस्य प्रस्थ एव पक्तव्य । अतएवोक्तम्, 'अनिर्दिष्टप्रमाणाना स्नेहाना प्रस्थ इष्यते' इति । यत् पुन ' स्नेहपाकविधौ यत्र प्रमाण नेरित क्वचित् । स्नेहस्य कुडव तत्र पचेत् कल्कपलेन तु' इति परिभाषया स्नेहकुडवपाकाभिधान तत् तु नस्यविषय ज्ञेयम् । सक्षौद्रमिति कल्कवन्मधुशर्करे इति वचनेन घृतात् पादि-कत्व ज्ञेयम् । अन्ये तु कल्कधर्ममधुशर्करे इत्यतिदेशबलात् कल्कस्यात्र चतुष्पल त्वात् मधुनोऽपि चतुष्पलत्वमाहु । अत्र केचिच्चरके ' काम ज्वर पित्तभवञ्च शूल गुल्म यकृत्प्लीहगदाश्च हन्ति ' इति फलभद्र पठन्ति । वाग्भटेऽप्युक्त ' पित्त-गुल्मयक्ष्मच्छर्द्यामकासहृद्ग्रहकामला । तिमिरज्वरवीसर्प-स्वरभेदाश्च नाशयेत् ' इति ॥ ३३ ॥

## कामदेवघृतम्

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरी विदारी च शालपर्णी बला तथा ॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मरीफलमेतत्तु माषबीजं तथैव च ॥
पृथग्दशपलान् भागाश्चतुर्द्रोणेऽम्भस पचेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
वालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा ।

नीलोत्पल शारिवे द्वे जीवनीयं विशेषतः ।
पृथक् कर्षसमञ्चैव शर्करायाः पलद्वयम् ॥
रसस्य पौण्ड्रकेक्षूणामाढकं तत्र दापयेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं तथा शोथं स्वरभेदं बलक्षयम् ।
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत् ।
एतद्राज्ञां प्रयोक्तव्यं बह्वन्त पुरचारिणाम् ॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम् ।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम् ।
श्रेष्ठं बलकरं हृद्यं वृष्यं पेयं रसायनम् ॥
ओजस्तेजस्करञ्चैव आयु प्राणविवर्द्धनम् ।
संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम् ॥
सर्वरोगाविनिर्मुक्तस्तोयसिक्तो यथा द्रुम ।
कामदेव इति ख्यातः सर्वर्त्तुषु च शस्यते ॥ ३४ ॥

अश्वगन्धेत्यादि—तदर्द्धमिति गोक्षुरस्य पञ्चाशत् पलानि; शतावर्य्यादीनां बलान्तानाञ्च प्रत्येक पञ्चाशत् पलानीत्यर्थ, अश्वत्थशुङ्गादीनाञ्च पञ्चाना पृथक् दश-पलानि, ततो मिलित्वा पलशतचतुष्टये क्वाथ्ये प्रतिशत जलद्रोणो देय तुलाद्रव्ये जलद्रोण इत्युक्तेः । नागपुष्प नागकेशरम्, आत्मगुप्तायाः, शूकशिम्ब्याः फलम्, जीवनीयमिति जीवनीयदशकम्, शर्करान्त कल्कः । तेजस्करमुत्माह-वर्द्धकम् ॥ ३४ ॥

## सप्तप्रस्थघृतम्

शतावरीपयोद्राक्षा-विदारीद्वामलै रसैः ।
सर्पिषा सह संयुक्तैः सप्तप्रस्थं पचेद् घृतम् ॥
शर्करापादसंयुक्तं रक्तपित्तहरं पिबेत् ।
उरःक्षते पित्तशूले चोष्णवातेऽप्यसृग्दरे ॥
बल्यमूर्जस्करं वृष्यं क्षयहृद्रोगनाशनम् ॥ ३५ ॥

शतावरीत्यादि—शतावर्य्यादीनां पलेन मिलित्वा रसप्रस्था षट्, घृतस्यैक प्रस्थ इति सप्त प्रस्थाः ॥ ३५ ॥

## खण्डकूष्माण्डकः

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे ॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत् ।
कूष्माण्डपीडनात् तोयेनाढकेन पुनः पचेत् ॥
शुक्लसर्पिर्यदा पश्येत् तदा सिद्धेऽत्र निक्षिपेत् ।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥
त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम् ।
न्यस्येत् चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम् ।
तद् यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः ।
वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम् ॥
उरःसन्धानकरणं बृंहणं स्वरवर्द्धनम् ।
अश्विभ्यां निर्मितं सिद्धं कूष्माण्डकरसायनम् ॥
खण्डामलकमानानुसारात् कूष्माण्डकद्रवात् ।
पात्रं पाकाय दातव्यं यावान् वात्र रसो भवेत् ।
अत्रापि मुद्गया पाको निस्त्वचं निष्कुलीकृतम् ॥ ३६ ॥

कूष्माण्डकादिति—निष्कुलीकृतं निस्त्वगस्थीकृतम्, किञ्चित् जलं दत्त्वा उत्स्विद्य क्षौमे निष्पीड्य आतपे मनाक् संशोष्य पिष्ट्वा च पलशतं गृहीत्वा पक्तव्यम्। द्वे पले जीरकस्य चेति कणाशुण्ठ्यो प्रत्येकं पलद्वयम्, जीरकस्य च द्वे पले, तन्त्रान्तरसम्मतञ्चैतत् । तद्यथा 'द्विपलांशं कणाशुण्ठीजीरकैरवचूर्णितैः' इति । वैद्यप्रमारकेऽप्येवमेवोक्तम् । व्यवहारोऽपीत्थमेव । अन्ये तु पलार्द्धकमिति परेण सम्बन्धात् जीरकस्य पलार्द्धमित्याहुः, तन्न तन्त्रान्तरविरोधात् । त्वगेलादीनाञ्च

पञ्चाना प्रत्येक पलार्द्धम्। आयुर्वेदसारेऽप्युक्त 'कूष्माण्डकाना रूढाना स्विन्न शतपल पचेत्। प्रतप्ते हविष प्रस्थे मधुवर्णेऽत्र वीक्षिते। खण्डाच्छत कणाजाज्यो-र्द्विपल नागरादपि। धान्योपण त्रिगन्धञ्च पृथगर्द्धपलाशिकम्। घृतार्द्ध माक्षिकोपेत तत् खादेदस्रपित्तजित्' इति। घृतार्द्धमिति प्रस्थार्द्धमानमित्यर्थ।

खण्डामलकमानानुसारादित्यादि। खण्डामलके कूष्माण्डरसामलकरसयोः प्रत्येक प्रस्थ इत्युक्त, तेन कूष्माण्डशतपले पात्रमिति द्वैगुण्येन प्रस्थचतुष्टय दातव्य-मित्यर्थ। पक्षान्तरमाह यावान् वात्र रसो भवेदिति। स्विन्नकूष्माण्डस्यातिपीडनेन यावान् रसो भवति तावतैव पाक इत्यर्थ। व्यवहारोऽप्यनेनैव। युक्तश्चाय पक्ष, उक्त हि तन्त्रान्तरे 'वृद्ध पुरातनञ्चापि कूष्माण्ड कठिन दृढम्। त्वक्शिराभ्या विनिर्मुक्तमन्तर्बीजैर्विवर्जितम्। स्विन्न सुपिष्ट दृशदि वस्त्रेणैव प्रपीडितम्। विशुष्क-मातपे किञ्चिद् ग्राह्य तत् तुलया धृतम्। औडुम्बरकटाहे तु पचेत् प्रस्थे च सर्पिष। कृत्वा क्षौद्रनिभ तस्मिन् क्षिपेत् खण्डशत भिषक्। कूष्माण्डपीडनात् तोय यत् तेन विपचेत् पुन इति। मुद्रया पाक इत्यादि—अङ्गुलिपीडनजन्य चिह्न मुद्रा, तया पाको ज्ञेय। एतच्चोपलक्षणम्, तेनान्यदपि पक्कलक्षण ज्ञेयम्॥ ३६॥

## वासाखण्डकूष्माण्डकः

पञ्चाशच्च पलं स्विन्नं कूष्माण्डात् प्रस्थमाज्यत।
ग्राह्यं पलशतं खण्डं वासाक्काथाढके पचेत्॥
मुस्ताधात्रीशुभाभार्गीत्रिसुगन्धैश्च कार्षिकैः।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः॥
पिप्पलीकुडवञ्चैव मधुमाणीं प्रदापयेत्।
एतच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुन॥
तद् यथाग्निवलं खादेद् रक्तपित्ती क्षतक्षयी।
वृष्यं पुनर्नवकरं बलवर्णकरञ्च तत्॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति॥ ३७॥

पञ्चाशच्च पलमित्यादि—अत्रापि पूर्ववत् स्विन्नम्, संस्कृतकूष्माण्डात् पञ्चा-शत्पलम्। न चात्र खण्डकूष्माण्डवत् कूष्माण्डरसो ग्राह्य, पाकार्थं वासाक्काथस्यैव

उक्तत्वात् । वासायास्तु षष्टि पलानि, जलस्यापि चतु षष्टि शरावा, स्याप्यन्तु षोडशशरावरूपमाढकम् । शुभा वंशलोचना, ऐलेयम् एलवालुकम् । मधुमाणीति मधुनोऽष्टौ पलानि । अत्र केचित् माणिकाया द्वैगुण्यमिच्छन्ति; किन्तु ' माणिका-कुडवौ चेति या वा मल्या पलै कृता । आर्द्रद्रव्ये द्रवे चैव न तत्र द्विगुण विदु इति वचनात्, तथा चारपाणिवचने माणिकाष्टौ पलान्येवेत्यवधारणादष्टावेत्र पलानि, न तद् द्वैगुण्यात् षोडश पलानीत्यर्थ । चरकेऽपि पूर्ण शरावमित्यत्र पूर्णपदेन शरावे द्वैगुण्याभाव सूचित, तथाहि पूर्णपद द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्णपद व्यर्थं स्यात् । चक्रस्तु माणिकाकुडवौ चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमाशङ्क्य माणिकाया द्वैगुण्यमिच्छन् चरकोक्तल शुनादिवृते माणिकया षोडशपलत्व व्याख्यातवान् ॥ ३७ ॥

## वासाखण्डः

तुलामादाय वासाया पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धाच्छतं तथा ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥
कुडवं पलमात्रन्तु चातुर्जातं सुचूर्णितम् ।
क्षिप्त्वा विलोडितं खादेद् रक्तपित्ती क्षतक्षयी ।
श्वासकासपरीतश्च यक्ष्मणा च प्रपीडितः ॥ ३८ ॥

तुलामादायेत्यादि—अत्रार्द्रा वासा, एव मन्यत्र, निम्बादिकमपि । उक्त हि ' वासानिम्बपटोलकेतकबलाकूष्माण्डकेन्दीवरी । वर्षाभूकुटजाश्वगन्धसहिते द्वे पूतिगन्धामृते । मास नागबला महाचरपुरो हिङ्ग्वाद्रके नित्यशो ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घना ' इति । अष्टगुणे जल इति शरावशते, नात्र द्वैगुण्यम्, ' न द्वैगुण्य तुलामाने पलोल्लेखागते तथा ' इत्युक्ते । पादशेषाश्च पञ्चविंशतिशरावा । चूर्णानामिति हरीतकीचूर्णानामाढक चतु षष्टिपलानीत्यर्थ, प्रायो न पाकश्चूर्णानामिति प्राय शब्दात् पाकोऽप्यस्तीति सूचयति, तेन चूर्णाना पाकेऽपि न विरोध । चातुर्जात पलमानमिति प्रत्येक पलमानम्, निर्देशस्य मानप्रधानत्वात् ॥ ३८ ॥

## खण्डकाद्यो लौहः

शतावरी छिन्नरुहा वृषमुण्डितिका बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ।
भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च ।
जलद्रोणे विपक्कव्यमष्टभागावशेषितम् ॥
दिव्यौषधिहतस्यापि माक्षिकेण हतस्य वा ।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोडशिकं बुधै ।
पचेत् ताम्रमये पात्रे गुडपाको यथा मतः ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकत्वच ।
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ॥
त्रिफला धान्यकं पत्रं द्व्यक्तं मरिचकेशरम् ।
चूर्णं दत्त्वा सुमाथितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत विडालपदकं तत ।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पय ।
गुरुवृष्यान्नपानानि स्निग्धं मांसादि बृंहणम् ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषत ।
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ॥
श्वयथु पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ।
आनाहं रक्तसंस्रावमम्लपित्तं निहन्ति च ॥
आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम् ।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् ॥
छागं पारावतं मांसं तित्तिरि क्रकराः शशाः ।
कुरङ्गा कृष्णसाराश्च तेषां मांसानि योजयेत् ।
नारिकेलपय पानं सुनिषण्णकवास्तुकम् ।
शुष्कमूलकजीराख्यं पटोलं बृहतीफलम् ॥

फलं वार्त्ताकु पक्वाम्रं खर्जूरं स्वादु दाडिमम्
ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम् ॥
वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता ।
लोहान्तरवदत्रापि पुटनादिक्रियष्यते ॥ ३६ ॥
यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत् ॥ ४० ॥
इति रक्तपित्तचिकित्सा ।

—:•०•—

खण्डाद्य लौहमाह शतावरीत्यादि—छिन्नरुहा गुडूची, वृषो वासक, मुण्डितिका मुण्डीरी, गायत्री खदिर । त्रिफलायास्त्वत्र इति निरग्निस्त्रिफलाया । दिव्यौषधिर्मन शिला, कणामूल वा, माक्षिक स्वर्णमाक्षिकम्, मन शिलास्वर्णमाक्षिकाभ्या प्रत्येक मिलित्वा वा प्रलिप्य दग्ध्वा न लौह मारणीयम् । खण्डतुल्यमिति च्छेदः, तेन खण्डस्यापि द्वादश पलानि । केचित् तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरमेवाधिकरोतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति, तत् तु न सम्यक्, लौहयोगत्वादस्य लौहप्राधान्येन तन्मानापकर्षस्यायुक्तत्वात्, रक्तपित्तप्रत्यनीकन्तु लौहस्य स्वरूपत एव महाशक्तिकत्वात् विशेषतो रक्तपित्तघ्नम् । तत् तु द्रव्य पुटादिभावितत्वेन महावीर्य्यकनयोपपन्नम् । व्यवहारश्च लौहममतथैव । प्रस्थार्द्धमिति षोडश पलानि । शुभा वशलोचना, अश्मजतुक शिलाजतु, त्वक गुडत्वक्, शुभादीना जीरकान्ताना प्रत्येक पलम्, त्रिफलादीना केशरान्ताना प्रत्येक द्वयस कर्षद्वयमित्यर्थ । बिडालपदक कर्ष, एतच्च पूर्वयुगपुरुषाभिप्रायेण मानमुक्त, व्यवहारस्तु रक्तित्रितु पञ्चकादारभ्य रक्तिद्वयवृद्ध्या माषकचतुष्टय यावत् वृद्धि । गव्यक्षीरानुपानमिति लौहापेक्षया चतु षष्टिगुणम्, लौहान्तरे तथा दर्शनात् । उक्त हि 'अनुपान चतु षष्टिगुण प्राहु सदा बुधा ' इति । क्षीराख्यमिति जीराख्यशाक मारिषाकार चम्पकादौ जीरेति ख्यातम् । ककारपूर्वकमिति विहितान् ककरकुरककृष्णसारान् विहाय, दद्यात् । ककारपूर्वकं कपोतकर्कोटादि तत् परित्याज्यम् । अमृतमारलौहवदत्रापि बलिमन्त्रादि देय मधुघृतमर्दनादिकञ्च । अत्र केचित् गन्धकाभ्ररससयोग कुर्वन्ति, एतदनुकूलञ्च वचन पठन्ति, ' न रसेन विना लोह गन्धकञ्चाभ्रक विना' इति, तथा ' चपलेन विना लौह य. करोति पुमानिह । उदरे तस्य किट्टानि जायन्ते नात्र सशय ' इति । एतत् तु न

व्यवहारमिद्धम् । यत रमाभ्रमहितलौहप्रयोगस्य प्रशस्तताप्रतिपादानार्थं तथाभ्रकशून्यलौहे क्रिमिकिट्टादिव्यापच्छङ्कानिवृत्त्यर्थमभ्रकस्यावश्य प्रक्षेपणार्थञ्च फलातिशयप्रतिपादनार्थमिति चतु ममलौहे वाक्यद्वयमिद पठितम् । पुमानिहेति, इहशब्दात् वचनद्वयमपि तत्रैव बोध्य, नान्यत्र । अन्यथा मामान्यत एव परिभाषितमिद स्यादिति ॥ ३९ ॥ ४० ॥

इति रक्तपित्त-चिकित्सा-विवृति ॥

— o —

# अथ यक्ष्मचिकित्सा ।

शालिषष्टिकगोधूमयवमुद्गादय शुभा. ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यताम् ॥
शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यात् क्रव्यादमांसानि बृंहणानि विशेषतः ॥ १ ॥

यक्ष्मरूपेषु पित्तास्रस्य चागम इति रक्तपित्तानन्तर राजयक्ष्मचिकित्सितमुच्यते । शालीत्यादि—शाल्यादिक सवत्सरातिक्रान्त, यदाह वाग्भटः 'शालिषष्टिकगोधूमयवमुद्ग ममातीतम्' इति । क्रव्यादमासानीति क्रव्यादा व्याघ्रगृध्रादय. । एषाञ्च मासमतिशयेन मासकर भवति । उक्त हि 'मासेनोपचिताङ्गाना माम मासकर परम् ।' एतच्च भक्ष्यच्छागादिमासव्याजेन देयम् । उक्त हि 'काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् । गृध्रचासखरोष्ट्रञ्च हित हस्त्यौतुसहितम्' इति । सुश्रुतेऽप्युक्त 'काकानुलूकान् नकुलान् विडालान् गण्डूपदान् व्यालबिलेशयाखून् गृध्रांश्च दद्याद्विविधै. प्रकारै समैन्धवान् सर्षपतैलभृष्टान् । देयानि मासानि च जाङ्गलानि । मुद्गाढकीसूपरसाश्च हृद्या । खरोष्ट्रनागाश्वतराश्वजानि देयानि मासानि सुकल्पितानि मासोपदशाश्च पिबेदरिष्टान् माध्वीकयुक्ता मदिराश्च सेव्या' इति । सुकल्पितानीति सूदशास्त्रोक्तविधया उपकल्पितानि ॥ १ ॥

दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यत्न कर्षणम् ॥
शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम् ।

शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम् ।
तस्माद् यत्नेन संरक्षेद् यक्ष्मिणो मलरेतसी ॥ २ ॥

शोषाधिकानामित्यादि—चरकस्य । संशोधनीयस्तेऽस्य । अत्र कार्य्यमित्यनेन वमनविरेचनयोरत्र मृदुनोरबलापाचकपणयो प्रयोग दर्शयति । शुक्रेत्यादि—वाग्भटस्य । शुक्रस्य सर्वधातुसारत्वात् तदधीन शारीरबलं बलम्, मलायत्तं हि जीवितमिति । यद्यपि सर्वेषामेव जीवितं मलाधीनं सम्यक् [illegible] तथापि विशेषाद्राजयक्ष्मिणो जीवितं मलाधीनम् । उक्तं हि 'तस्मिन् काले पतत्यग्निर्यद्यत् कोष्ठमाश्रितम् । मलं भवति तत् प्राय कल्पते किञ्चिदोजसे । तस्मात् पुरीषं संरक्ष्य विशेषाद्राजयक्ष्मिणः । सर्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ' इति ॥ २ ॥

सपिप्पलीकं सयवं सकुलत्थं सनागरम् ।
दाडिमामलकोपेतं स्निग्धमाजरसं पिबेत् ॥
तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः ।
रसे द्रव्याम्बु पेयावत् सूदशास्त्रवशादिह ॥
पलानि द्वादश प्रस्थे घनेऽप्र तनुके तु षट् ।
मांसस्य वटकं कुर्य्यात् पलमञ्जुतरे रसे ॥ ३ ॥

सपिप्पलीकमित्यादि—अत्र केचित् यवकुलत्थान्यद्रव्यापेक्षया चतुर्गुणं तयोः यूषयोनित्वात्, पिप्पली शुण्ठी च तावती देया यावत्या कटुरसमात्रं स्यात्, चाम्लत्वार्थं दाडिमामलकयोर्दानम्, एतत् सर्वं पिप्पल्यादिद्रव्यापेक्षया द्विगुणमांसेन सह एकीकृत्याष्टगुणजले क्वथनीय, तत्र पादस्थं पूतेन संस्कृत्य उपयोज्यमिति । वृद्धास्तु पिप्पलीशुण्ठ्यो प्रत्येकं माषकचतुष्टयं यवकुलत्थयोस्तु प्रत्येकं पलं, दाडिमामलकयोरपि प्रत्येकं माषकचतुष्टयं ग्राह्यं, समुदितद्रव्यापेक्षया मांसं द्विगुणं ग्राह्यं, सर्वमेकीकृत्याष्टगुणजले क्वथनीयं, तत्पादस्थं पूतेन संस्कृत्य उपयोज्यमित्याहुः । चक्रस्तु स्वमतमाह रसे इत्यादि षडङ्गपरिभाषया द्रव्यं जलञ्च गृहीत्वार्द्धशृतं कार्य्यं, तेनार्द्धशृतक्वथितेन पलानि द्वादशप्रस्थे इत्यादि । वक्ष्यमाणसूदशास्त्रपरिभाषानुसारेण परिमितं पिष्ट्वा पक्त्वा यूषः कार्य्य इति । व्याख्यान्तरन्तु पूर्वोक्तवृद्धोपदिष्ट एव ज्ञेयः । पीनसादय इत्यादिशब्दाच्चरकोक्तानि शिरःशूलश्वासकासस्वरभेदपार्श्वशूलानि बोध्यानि । रसे द्रव्याम्बुपेयावदित्यादौ पेयावदित्यनेन यथा क्वथनाय

पेयाया षडङ्गपरिभाषया द्रव्यजलयोर्व्यवस्था तथा मासरसेऽपीत्यर्थ । मासन्तु सूद-शास्त्रोक्त वचनानुसारेण ग्राह्यमित्याह पलानीत्यादि-अस्यार्थ सर्वत्रापि पिष्ट्वेति शेष । प्रस्थे द्रवं यदि घनरस कर्त्तव्यस्तदा मासस्य द्वादश पलानि पिष्ट्वा वटक कुर्य्यात् । तथा प्रस्थे द्रवे यदि तनुकोऽच्छरस कर्त्तव्यस्तदा मासस्य षट्प-लानि पिष्ट्वा वटक कुर्य्यात्, एव प्रस्थे द्रवे यदि अच्छतरो रस कर्त्तव्यस्तदा मासस्य पल पिष्ट्वा वटक कुर्य्यादिति । षटङ्गयूषे पुन षडङ्गपरिभाषानुसारेण प्रस्थमात्र जलमर्द्धशृत सत् प्रस्थार्द्धमेव भवति, तेन तत्र घनरसे मासस्य षट् पलानि तनुके पलत्रयम्, अच्छतरेऽर्द्धपलमिति ॥ ३ ॥

## त्रयोदशाङ्गः

धन्याकपिप्पलीविश्व-दशमूलीजलं पिबेत् ।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ ४ ॥

धन्याकपिप्पलीत्यादि—वातकफोत्तरे योगोऽयम् ॥ ४ ॥

अश्वगन्धामृताभीरुदशमूलीबलावृषा ।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिन ॥ ५ ॥

अश्वगन्धेत्यादि—अभीरु शतमूली, वृषो वासक. । क्वाथेनाय योग । असमासनिर्देशादिह पुष्करातिविषयो प्रक्षेपत्वामिति वृन्दटिप्पणी ॥ ५ ॥

दशमूलबलारास्नापुष्करसुरदारुनागरै. कथितम् ।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम् ॥६॥

दशमूलबलेत्यादि स्पष्टम् ॥ ६ ॥

ककुभत्वङ्नागबलावानरिवीजानि चूर्णितं पयसि ।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ७ ॥

ककुभेत्यादि—ककुभत्वक् अर्जुनवल्कल, नागबला गोरक्षतण्डुला, अस्या मूल सर्वत्र बोध्यम्, वानरी शूकशिम्बी, एषा चूर्ण प्रत्येकमेकपल १, शर्करा पल १, दुग्धशराव २, सर्वमिद पक्त्वा उत्कारिका कार्य्या, परिभर्जनार्थ घृतकर्ष २, सुशीते मधु किञ्चित् दत्त्वा भक्ष्यम् ॥ ७ ॥

पारावतकपिच्छागकुरङ्गाणां पृथक् पृथक् ।
मांसचूर्णमजाक्षीरं पीतं यक्ष्महरं परम् ॥ ८ ॥

पारावतेत्यादि स्पष्टम् ॥ ८ ॥

घृतकुसुमसारलीढं क्षयं क्षयं नयति गजबलामूलम् ।
दुग्धेन केवलेन तु वायसजङ्घा निपीतैव ॥ ९ ॥

घृतेत्यादौ—कुसुमसारो मधु, गजबला गोरक्षतण्डुलेति ख्याता । वायस-जङ्घा काकजङ्घा ॥ ९ ॥

कृष्णाद्राक्षासितालेह क्षयहा क्षौद्रतैलवान् ।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भव ॥
शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥ १० ॥

कृष्णेत्यादि सितोद्भव इत्यन्त योगद्वय स्पष्टम् । अतुल्ये चाज्यमाक्षिके इत्यपि योगान्तरम्, अत्रापि लिहन् क्षयी क्षीराशी लभते पुष्टिमिति बोध्यम ॥ १० ॥

## सितोपलादिलेहः

सितोपलातुगाक्षीरीपिप्पलीबहुलात्वच ।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा ॥
चूर्णितं प्राशयेद्वैतत् श्वासकासक्षयापहम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ॥ ११ ॥

सितोपलेत्यादि—चरकस्य । सितोपला शर्करा, तुगाक्षीरी वंशलोचना, बहुला एला, त्वक् गुडत्वक् । अन्त्यादूर्ध्वं द्विगुणितमिति अन्त्यायास्त्वच एको भाग, एलाया द्वौ, पिप्पल्याश्चत्वार, तुगाक्षीर्या अष्टौ, सितोपलाया षोडशेत्यर्थः । यद्यप्यूर्ध्वशब्दोऽनागतमभिधत्ते यथा 'अत ऊर्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधा.' तथाप्यत्र विवक्षावशादतीतमप्यभिधत्ते । चूर्णं वा प्राशयेदित्यनेन मधुघृते विनापि भक्षण बोधयति ॥ ११ ॥

## लवङ्गाद्यं चूर्णम्

लवङ्गकक्कोलमुशीरचन्दनं
नतं सनीलोत्पलजीरकं समम् ।

त्रुटिः सकृष्णागुरुभृङ्गकेशरं
कणा सविश्वा नलदं सहाम्बुदम् ॥
अहीन्द्रजातीफलवंशलोचना
सिताष्टभागं समसूक्ष्मचूर्णितम् ।
सुरोचनं तर्पणमग्निदीपनं
बलप्रदं वृष्यतमं त्रिदोषजित् ॥
उरो विवद्धं तमकं गलग्रहं
सकासहिक्कारुचियक्ष्मपीनसम् ।
ग्रहण्यतीसारभगन्दरार्बुदं
प्रमेहगुल्मांश्च निहन्ति सज्वरान् ॥ १२ ॥

नवद्गमित्यादौ—नत तगरपादिका, तदभावे सियलीछोपर । मलिलोत्पल-पत्रनीरकमिति पाठे पत्र तेज पत्रम् । त्रुटि सूक्ष्मैला, भृङ्ग गुडत्वक्, नलद मांसी । सहाम्बुनेति पाठे अम्बु वालकम् । अहीन्द्रोऽनन्तमूलम् । शर्कराया एक-भागापेक्षयाष्टौ भागा . अन्ये तु मिलितचूर्णापेक्षयेत्याहु । व्यवहारस्तु पूर्वेणैव ॥ १२॥

## तालीशाद्यं चूर्णं मोदकश्च

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद् गुडिकाश्चैतच्चूर्णं पक्त्वा सितोपलाम् ।
गुडिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा स्मृताः ।
पैत्तिके ग्राहयन्त्येके शुभया वंशलोचनाम् ॥ १३ ॥

तालीशपत्रमित्यादौ—शुभेति पिप्पलीविशेषण, न तु वंशलोचना, समानतन्त्रे हारीतादावदृष्टत्वात् । किन्तु सग्रहकारा प्रवलपित्ते शुभया वंशलोचना ग्राह्येति लिखन्ति । एतमेवार्थं कश्चिल्लिखति यथा ' तालीशमरिचनागरमागधिकावंशलो-

चना क्रमश । वृद्धास्त्वगेलार्द्धं कृष्णाया मिता भवेदष्टगुणा' इति । त्वगेले चार्द्ध-भागिके इति । प्रथमभागापेक्षया त्वगेलयो, प्रत्येकमर्द्धभागत्वम्, पिप्पल्यष्टगुणेति पिप्पलीभागापेक्षया अष्टगुणा सितशर्करा । गुटिकापक्षे मम जलेन शर्करापाक कुर्वन्ति वृद्धा ॥ १३ ॥

## शृङ्ग्यर्जुनाद्यचूर्णम्

**शृङ्ग्यर्जुनाश्वगन्धानागवलापुष्कराभयाच्छिन्नरुहा ।**
**तालीशादिसमेता लेह्या मधुसर्पिर्भ्यां यक्ष्महराः ॥ १४ ॥**

शृङ्गीत्यादौ—छिन्नरुहा गुडूची । तालीशादिसमेता इत्यनेन तालीशादिद्रव्य-मात्रमनुकर्षति, न तु तत्रोक्तभागवृद्धिक्रममपि, यथा वक्ष्यमाणचैतसघृते कल्याणस्य चाङ्गेनेत्युक्तत्वेऽपि कल्याणघृतोक्तकल्कद्रव्यमात्रमिति, तेनात्र शृङ्ग्यादीना समभाग-तया तालीशाद्योऽपि समभागा एव ग्राह्या ॥ १४ ॥

**मधुताप्यविडङ्गाश्मजतुलौहघृताभयाः ।**
**घ्नन्ति यक्ष्माणमत्युग्र सेव्यमाना हिताशिना ॥ १५ ॥**

मधुताप्येत्यादि—मधुघृताभ्या लेह । लौहमत्रायश्चूर्णं पुटादिशोधित, न तु लौहमगुरु रसायनत्वात् । लौहमगुर्विति वृन्दटिप्पणी । ताप्य स्वर्णमाक्षिक, तच्चा-मृतसारवक्ष्यमाणविधिना शोधित ग्राह्यम् । अश्मजतु शिलाजतु, तदपि वक्ष्यमाण-शिवागुडिकाविधिना शोधित ग्राह्यम् । अयारजश्चात्र मिलिततरचूर्णसमम् । लौहचूर्णमत्र रसायनतया श्रेष्ठत्वात् महावीर्य्यत्वाच्च महाव्याधिप्रशमनहेतुत्व युज्यत इति ॥ १५ ॥

## विन्ध्यवासियोगः

**व्योषं शतावरी त्रीणि फलानि द्वे वले तथा ।**
**सर्वामयहरो योगः सोऽयं लौहरजोऽन्वित ॥**
**एष वक्षःक्षतं हन्ति कण्ठजांश्च गदांस्तथा ।**
**राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम् ॥ १६ ॥**

विन्ध्यवासियोगे त्रीणि फलानीति त्रिफला, द्वे वले इति नागबलाबले, न तु श्वेतपीतभेदात् । अत्र लौहचूर्णं रसायनतया श्रेष्ठत्वात् योगिकत्वात् महावीर्य्य त्वाच्च मिलितव्योषादिचूर्णेन सम ग्राह्यम्, अतएव व्योषादिपाठात् विच्छिद्य

लाहरजोऽन्वितमिति पठितम्। चूर्णयोग एवाय घृतमधुनोरश्रुतत्वात्। अन्ये तु लेह एवाय घृतमधुभ्या कर्त्तव्य, लेहप्रकरणविहितत्वादित्याहु। युक्तञ्चैतत्॥१६॥

## रसेन्द्रगुडिका

कर्षं शुद्धं रसेन्द्रस्य स्वरसेन जयार्द्रयो।
शिलायां खल्वयेत् तावद् यावत् पिण्डं घनं ततः॥
जलकर्णाकाकमाचीरसाभ्यां भावयेत् पुनः।
सौगन्धिकपलं भृङ्गस्वरसेन विभावितम्॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये।
खल्लितं घनपिण्डन्तु गुडीं स्विन्नकलायवत्॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशन॥
सर्वरूपं क्षयं श्वासं रक्तपित्तमरोचकम्।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति॥ १७॥

कर्षमित्यादि—रसेन्द्र पारदस्तस्य शोधन वक्ष्यमाणक्षुधावतीगुटिकाया वक्ष्यमाणविधिना कार्यम्। तदनुक्रमेण जयाया जयन्त्या स्वरसेन खल्लशिलाया सम्मर्द्य पिण्डाकार कुर्यात्। तदनु जलकर्णा मोरटा तस्या रसेनासाव्य प्रत्येक मसधा भावयेत्, तत· सौगन्धिक मद्रगन्धक तदपि क्षुधावत्या वक्ष्यमाणविधिना शोधित पलपरिमित पारदेन सह घर्षणीयम् तदनन्तरमजाक्षीरपलद्वये खल्लशिलास्थिते खल्लित घनपिण्डतापन्ने तु स्विन्नकलायप्रमाणा गुडिका कुर्यात्, तदनु प्रत्यहमेका गुडिका जीर्णान्ने भक्षयेत्। अनुपानञ्च दुग्धादिकमेव॥ १७॥

## एलादिमन्थः

एलाजमोदामलकाभयाक्ष-
गायत्रिनिम्बासनशालसारान्।
विडङ्गभल्लातकचित्रकांश्च
कटुत्रिकाम्भोदसुराष्ट्रिकाश्च॥
पक्त्वा जले तेन पचेत्तु सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च।

त्रिंशत्पलान्यत्र सितोपलाया
दद्यात् तुगाक्षीरिपलानि षट् च ॥
प्रस्थे घृतस्य द्विगुणं च दद्यात्
क्षौद्रं ततो मन्थहतं निदध्यात् ॥
पल पलं प्रातरतो लिहेच्च
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ।
एतद्धि मेध्य परमं पवित्रं
चक्षुष्यमायुष्यतमं तथैव ॥
यक्ष्माणमाशु व्यपहन्ति शूल
पाण्ड्वामयञ्चापि भगन्दरञ्च ।
न चात्र किञ्चित् परिवर्जनीयं
रसायने च तदुपास्यमाने ॥ १८ ॥

एलेत्यादि—सुश्रुतस्य । अजमोदा यमानी, अक्ष विभीतक गायत्री खदिर, असन पीतशाल, गायत्र्यादीना शालान्ताना चतुर्णां सारो ग्राह्य । सौराष्ट्रजा सुराष्ट्रमृत् । एलादीना सौराष्ट्र्यन्ताना पृथगष्टौ पलानि गृह्यन्ते । जल षोडशगुण दत्त्वा षोडशांश स्थापयेत्, तेन क्वाथेन केवलेनैव घृतप्रस्थ पाचयेत् । घृतप्रस्थापेक्षया द्विगुण मधु । मन्थो मन्थानदण्ड इत्याहु । अन्ये तूक्तव्याख्यानुवादाय वाग्भटवचन पठन्ति, यथा ' एलाजमोदात्रिफला–सौराष्ट्रीव्योषचित्रकान् । साराः नरिष्टगायत्री–शालबीजकसम्भवान् । भल्लातक विडङ्गञ्च पृथगष्टपलोन्मितम् । सलिले षोडशगुणे षोडशांश स्थित पचेत् । पुनस्तेन घृतप्रस्थ सिद्धे चास्मिन् पलानि षट् । तुगाक्षीर्या क्षिपेत् त्रिंशत् सिताया द्विगुण मधु । ततस्त्रिजातत्रिपल ततो लीढ खजाहतम् । पयोऽनुपान तत् प्राह रसायनमयन्त्रणम् ' इत्यादि । एतद्दर्शनात् त्रिजातकमपि बोध्य सौगन्ध्यर्थम्, अत्र तु न पठित तद्व्यतिरेकेणापि व्याधिहन्तृत्वात् । अन्ये त्वाहु सुश्रुतोक्तयोगेऽस्मिन्नम्भोदपाठात् त्रिजाताभावात् योगान्तरमेवेदम् । तदा घृतप्रस्थस्य साध्यत्वादेलादीना सप्तदशाना मिलित्वा ऋतु षष्टि पलानि, जलस्य तु चतु षष्टि शरावा, शेषा षोडशशरावा इति ॥ १८ ॥

## सर्पिर्गुडः

बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा सुक्ष्मांशिकाः पृथक् ॥

एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढकम् ॥
सितोपलानि पूते च शीते द्वात्रिंशदावपेत् ।
गोधूमपिप्पलीवांशी-चूर्णं शृङ्गाटकस्य च ॥
समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ॥
तान् जग्ध्वा पलिकान् क्षीरं मद्यञ्चानुपिबेत् कफे ।
शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्शिते ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥
क्वाथ्ये त्रयोदशपले द्रव्याल्पत्वभयाज्जलम् ।
अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् ।
केचिद् यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः ॥ १६ ॥

बलेत्यादि—अथ योगश्चरके क्षतक्षीणचिकित्सिते उक्तः । क्षीरिवृक्षा प्लक्ष-वेतसोडुम्बराश्वत्थवटाः । शालाक्ये तु वेतसस्थाने मधूकं निक्षिप्य पञ्चक्षीरिवृक्षा व्याख्याता, यथा "उडुम्बरो वटोऽश्वत्थो मधूकः प्लक्ष एव च । पञ्चैते क्षीरिणो वृक्षाः अस्मिंस्तन्त्रे प्रकीर्तिताः" इति । अस्मिंस्तन्त्र इति वचनेन शालाक्याधिकार-व्यतिरिक्ते स्थाने पूर्ववृक्षा उक्ता युक्ताः । अन्ये तु वेतसस्थाने कपीतनमाहुः । कपीतनो गर्दभाण्डः । शुङ्गा इत्यविकसितपत्रमुकुलम् । मुष्ट्यंशिकाः पलमानाः । अत्र बलादि-क्वाथ्ये त्रयोदशपले जलद्रोणो देयस्तस्य पादावशेषादष्टाविंशत्यधिकशतपलमानम् । द्विक्षीर इति द्विप्रकारं क्षीरं यत्रेति तथा । क्षीरद्वयञ्चात्र प्राधान्यादाजं गव्यञ्च ग्राह्यम् । आजरसश्छागमांसरसः । एषां चतुर्गुणमपि द्रवाणां क्वाथसमत्वमेव माहु-चर्य्यादिति पञ्चगुणपाकः । क्षीरानुपानञ्च पित्ते ज्ञेयम् । उक्तार्थसंवादकतन्त्रान्तरं यथा "पुनर्नवा बला ह्रस्वा पञ्चमूलीं विदारिकाम् । उडुम्बरवटाश्वत्थप्लक्षवेतसशुङ्गकान् । पलिकांशान् जलद्रोणे पक्त्वा पादावशेषिते । पादांशैश्छागगोक्षीरविदार्य्याः स्वरसैः पृथक् । कर्षांशैर्जीवनीयैश्च कल्कैराज्याढकं पचेत् । कृष्णगोधूमशृङ्गाटवांशीक्षौद्राञ्जलिं पृथक् । सिद्धे प्रस्थौ सितायाश्च दत्त्वा खादेत् खजाहतम् । एतद् गुडीकृतं सर्पिर्घटे भूर्जान्विते स्थितम् । अनुपानं पिबेत् क्षीरं पित्ते मद्यं कफे हितम् । क्षतक्षयाम्लपित्तास्र

ज्वरशोषप्रणाशनम् ' इति । अत्र पादांशैरिति पादस्थक्वाथसमभागैरिति । चक्रस्त्वाह क्वाथ्ये त्रयोदशपले द्रव्याल्पत्वभयाज्जलम् । अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् । केचित् यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुरिति । अस्यार्थ त्रयोदशपले क्वाथ्येऽष्टगुणं जलं त्रयोदशशरावपरिमितं भवति, तस्य तु पादशेषात् सपादशरावत्रयं क्वाथं वदन्ति । क्वाथसमश्च विदारीरसश्छागमांसरसश्च, क्षीरञ्च क्वाथापेक्षया द्विगुणमिति सार्द्ध षट् शरावा , एवं घृताढके पक्तव्ये त्रिंशत्पलाधिकं द्रवपलशतमिह भवति । एवञ्च मति द्रव्याल्पत्वं स्यादिति भयात् केचिदत्र यथोक्त एव क्वाथ्ये त्रयोदशपलरूपे तथा पानीयं देयं यथा पादशेषात् क्वाथो घृतसमं स्यात्, तेनात्र त्रयोदशपलेऽपि क्वाथ्ये जलद्रोणं दत्वा पादावशिष्टक्वाथस्य घृतसमत्वं कल्पनीयमिति जगुरुक्तवन्तः । अस्मिन् पक्षे क्षीरं द्विगुणं दत्वा विदारीमांसरसौ च मिलित्वा घृतसमाविति चतुर्गुणद्रवेण पाकं उत्सर्गसिद्धो भवति, चतुर्गुणद्रवेण तु स्नेहपाकोत्सर्गत्वात् । जतूकर्णेनापि क्वाथ्यमानमनियतमेवोक्तं क्वाथस्तु तथापि स्नेहसम एव, पञ्चप्रभृति यत्र स्युरित्युक्ते । अपि च यथा श्वदंष्ट्रा पञ्चमूलं बला विदारी वटादिशुङ्गाश्च । निष्क्वाथ्य द्विक्षीरे छागविदारीरसे च समे । तत् जीवनीयगणकल्कैः पक्त्वा घृताढकमित्यादि । अन्ये तु ' द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम् । पादावशेषं कर्त्तव्यं एष क्वाथविधिः स्मृतः ' इति कृष्णात्रेयपरिभाषानुसारेण क्वाथ्ये षोडशगुणं जलं दीयमानं षड्विंशतिशरावं भवति, पादशेषाच्च सार्द्धषट्शरावक्वाथो भवति, द्विक्षीर इति क्वाथापेक्षया क्षीरस्य द्वैगुण्यात् त्रयोदश शरावा , मिलितौ विदार्य्याजरसावपि कषायापेक्षया द्विगुणाविति, एवं मिलित्वा सार्द्धाद्वत्रिंशच्छरावद्रवे पाक इति व्याचक्षते । व्यवहारः पुनः प्रायेण अनेनैव । खजो मन्थानदण्डः । भूर्जपत्रे वेष्टनञ्च शक्त्युत्क्रपोर्थम् ॥ १६ ॥

## च्यवनप्राशः

विल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटली बला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु ।
अभया सामृता ऋद्धिर्जीवकर्षभकौ शटी ॥
मुस्तं पुनर्नवामेदे सूक्ष्मैलोत्पलचन्दने ।
विदारी वृषमूलानि काकोली काकनासिका ।
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ॥

पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ।
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम् ॥
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषो ।
पलद्वादशके भृष्ट्वा दत्वा चार्द्धतुलां भिषक् ॥
मत्स्यण्डिकायाः पूतायाः लेहवत् साधु साधयेत् ।
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ॥
चतुष्पलं तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा ।
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात् ॥
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ।
कासश्वासहरश्चैव विशेषेणोपदिश्यते ॥
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम् ।
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ॥
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ।
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम् ॥
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥
मेधां स्मृतिं कान्तिमनामयत्वं वपुः प्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ।
रसायनस्यास्य नरः प्रयोगात् लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं पूर्वमपास्य रूपं बिभर्ति रूपं नवयौवनस्य ॥
सिता मत्स्यण्डिकालाभे धात्र्याश्च मृदुभर्जनम् ।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ॥ २० ॥

बिल्वेत्यादौ—पर्ण्यश्चतस्र इति शालपर्णीपृश्नीपर्णीमुद्गपर्णीमाषपर्ण्यः । तामलकी भूम्यामलकी । जीवन्ती स्वनामख्याता । पुनर्नवामेदे इति पुनर्नवा च मेदा च इति द्वन्द्वः न तु मेदाद्वयम्, 'पर्ण्यन्य पिप्पली शृङ्गी मेदा तामलकी त्रुटिः' इति वाग्भटवचनात् । उत्पलं नीलोत्पलं न तु कुष्ठम्, सर्वस्मिन्नेव तन्त्रान्तरे कुष्ठमिति पाठस्य तट्टीकाकारैरव्याख्याततत्वात् । काकनासिका काउयाठुटी, जेज्जटस्तु रम फलमित्याह । शतान्यामलकस्येति आकृतिमानत्वात् आमलकीफलस्य पञ्चशतानि,

एतानि कर्पटे पोट्टलीं कृत्वा अपरैः क्वाथ्यद्रव्यैः सह क्वथनीयम्। गतरसत्वञ्च द्रव्याणां चतुर्भागावशेषेण क्वाथेनेति स्वयमेव वक्ष्यति; अतएव पादावशेष इति वाग्भटोक्तम्। अन्ये त्वष्टभागावशेष इत्याहु, तत्तु न व्यवहारसिद्धम्। निष्कुलमिति शिराश्मिर-हितम्, तच्च लौमादिघर्षणेन कार्य्यम्। पलद्वादशक इति मिलित्वा, निर्देशस्य मानप्रधानत्वात्, एव त्वगेलापत्रकेशरादपि मिलित्वैव पलम्। ये तु समासकरण-सामर्थ्यात् मिलितग्रहणमाहु तन्मते अगस्त्यहरीतक्यादौ दशमूलस्यापि मिलित्वा द्विपलता स्यात्, दशमूलीति समासनिर्देशादिति ज्ञेयम्। अत्र समयोरपि मधुसर्पि-षोर्द्रव्यान्तरसंयोगादेव न विरुद्धत्व भयम्, किंवा आमलकभर्जनेन घृतस्योपक्षीणत्वात् समत्वमेव नास्तीति। यद्यपि मत्स्यण्डिकापेक्षया शर्करा विमला तथाप्युपात्तत्वादिह सैव प्रशस्ता तदभावे शर्करा खण्डो वा गृह्यत, चक्रेण तु शर्करैवोक्ता। च्यवनस्य मुने प्राश इति घञ्। योपरुन्ध्यान्न भोजनमिति या प्रथमान्नभोजनोपयुक्ता जरणेन द्वितीयान्नकाले भोजनोपरोध न करोतीत्यर्थ, यदुक्त 'एणाद्धि नैकमाहार या सा मात्रा जरा प्रति' इति। कुटीप्रवेशादिति वातातपपरिहारेणेत्यर्थ ॥ २० ॥

## जीवन्त्याद्यं घृतम्

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शठीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम् ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ २१ ॥

जीवन्तीमित्यादि—चरकस्य, अत्र जलमेव चतुर्गुणम्। केचित्तु चरके अदष्टाघृतानन्तरमय योग उक्त अतः प्रत्यासत्त्या पूर्वयोगोक्त क्षीरमेवात्रापि द्रवमिच्छन्ति, किन्तु वाग्भटादपि न बुधमतो जलमेव युक्तम् ॥ २१ ॥

## पिप्पलीघृतम्

पिप्पलीगुडसंसिद्धं छागक्षीरयुतं घृतम्।
एतदग्निप्रवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ २२ ॥

पिप्पलीत्यादि—पिप्पलीगुडौ कल्कौ, छागक्षीर चतुर्गुणम् ॥ २२ ॥

## पाराशरघृतम्

यष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद् घृतम् ॥
धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्मणे ।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ॥
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ॥ २३ ॥

यष्टीत्यादि—वाग्भटस्य । यष्ट्यादीनां मिलित्वा तुला । शूर्पं इति द्रोणद्वये, उक्तं दृढबलेन 'कुम्भो द्रोणद्वयं शूर्पः' इति । चारपाणिनाप्युक्तं 'द्रोणद्वयन्तु शूर्पः स्यात् कुम्भ इत्यभिधीयते', तस्मात् द्रोणपर्य्याय शूर्प इति वृन्दलिखितमत नादरणीयम् । यद्यपि तुलाद्रव्ये एक एव जलद्रोण उचितस्तथापि निर्दिष्टत्वादिह तोय द्रोणद्वयमेव देयम्; यथा वक्ष्यमाणद्वितीयच्छागलादिघृते छागमांसतुलाया जल द्रोणद्वयमिति । धात्र्यादिरसानां मिलित्वा त्रिपात्रम्, पात्रमाढकम् ॥ २३ ॥

## छागलाद्यं घृतम्

छागमांसतुलां गृह्य साधयेन्नल्वणेऽम्भसि ।
पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत् ॥
ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा ।
काकोलीक्षीरकाकोलीकल्कैः पृथक् पलोन्मितैः ॥
सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत् ।
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत् ॥
पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति दुर्जयम् ।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम् ॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम् ।
बल्यं मांसकरं वृष्यमग्निसन्दीपनं परम् ॥ २४ ॥

छागलाद्ये नल्वणो द्रोणः ॥ २४ ॥

## अपरं छागलाद्यं घृतम्

तोयद्रोणद्वितये छागलमांसस्य पलशतं पक्त्वा ।
जलमष्टांशं सुकृतं तस्मिन् विपचेद् घृतं प्रस्थम् ॥

कल्केन जीवनीयानां कुडवेन तु मांससर्पिरिदम्।
पित्तानिलं निहन्यात् तज्जानपि रसकयोजितं पीतम्॥
कासश्वासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्।
अध्वव्यवायशोष शमयति चैवापरं किञ्चित्॥ २५॥

तोयेत्यादी—जीवनीयानां दशानां कुडवेनेति मिलित्वा। तज्जानिति पित्ता-
निलजान् व्याधीन्। रसकयोजितमिति मांसरसावचारितमित्यर्थः॥ २५॥

## अजापञ्चकं घृतम्

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम्॥ २६॥

अजापञ्चकघृते सर्पिरप्यजाया एव, दधि च। यवक्षारमप्यत्र प्रक्षेपत्व-
माहुः॥ २६॥

## बलागर्भं घृतम्

द्विपञ्चमूलस्य पचेत् कषाये
प्रस्थद्वये मांसरसस्य चैके।
कल्कं बलायाः सुनियोज्य गर्भे
सिद्धं पयःप्रस्थयुतं घृतञ्च॥
सर्वाभिघातोत्थितयक्ष्मशूल-
क्षतक्षयोत्कासहरं प्रदिष्टम्॥ २७॥

द्विपञ्चमूलस्येति दशमूलस्य मिलित्वा द्वात्रिंशत्पलानि, जलस्य च द्वात्रिं-
शच्छरावास्ततः प्रस्थद्वयं शेषः। मांसरसस्य चैक इति छागमांसरसस्य एकस्मिन्
प्रस्थ इत्यर्थः। गर्भमित्यन्तः॥ २७॥

## नागबलाघृतम्

पादशेषे जलद्रोणे पचेन्नागबलातुलाम्।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत्॥
पलार्द्धिकैश्चातिबला बलायष्टिपुनर्नवा।
प्रपौण्डरीककाश्मर्य्यपियालकपिकच्छुभिः॥

अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ।
मृणालविसशालूकशृङ्गाटककशेरुकै ॥
एतन्नागबलासर्पी रक्तपित्तक्षतक्षयम् ।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥
बल्यमोजस्यमायुष्यं बलीपलितनाशनम् ।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥ २८ ॥

पादशेषमित्यादि—वाग्भटस्य । पादशेषमित्येव पाठ । पादशेष यथा भवति तथा पचेदिति । अन्ये तु पादशेषे कर्त्तव्य इति व्याचक्षते । नागबला, गोरक्ष-तण्डुला, अतिबला गोरक्षतण्डुलैव । मृणालविसे स्वल्पमहत्त्वेदात् । मृणालमुशीर विसं पद्ममूलमित्यन्ये ॥ २८ ॥

## निर्गुण्डीघृतम्

समूलफलपत्राया निर्गुण्ड्या स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षतक्षीणो निर्व्याधिर्भाति देववत् ॥ २९ ॥

निर्गुण्डीघृतमकल्कन् ॥ २९ ॥

## बलाद्यं घृतम्

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥
कृत्वा कषायं पेष्यार्थे दद्यात् तामलकीं शटीम् ।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च ॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥
चरकोदितवासाद्यघृतानन्तरमुक्तित ।
वदन्तीह घृतात् क्वाथं पयश्च द्विगुणं पृथक् ॥ ३० ॥

बलामित्यादि—चरकस्य । ज्वरचिकित्सितेऽस्य योग । कलसी पृश्निपर्णी, धावनी कण्टकारिका, स्थिरा शालपर्णी । चरकोदितेत्यादि—चरके हि वासाघृतानन्तरमय योग उक्त , तत्र च क्वाथ- पयश्च प्रत्येक घृताद् द्विगुणम्, तत्साहचर्य्यादिहापि तथैवेति । घृतसम क्षीरम्, क्वाथश्च त्रिगुण इत्यन्ये ॥ ३० ॥

## चन्दनाद्यं तैलम्

चन्दनाम्बु नखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठा सरलं दारु शट्येला पूतिकेशरम्॥
पत्रं शैलं मुरामांसी कक्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम्॥
त्वग्रेणु नलिका चैभिस्तैलं मस्तुचतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं वलवर्णकृत्॥
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम्।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम्॥ ३१॥

चन्दनादितैल—अम्बु बालकम्, वाप्य कुष्ठम्; पूति खट्टाशी; शैल शिलारस, वनिता प्रियङ्गु, तिक्ता लताकस्तूरी, रेणु रेणुकम्, नलिका नालुका। लाक्षारसो लाक्षाक्वाथ; लाक्षाया षोडशपलम्, पाकार्थजल षोडशशरावम्, शेष प्रस्थिकम्॥३१॥

छागं मांसं पयश्छाग छागं सर्पिः सशर्करम्।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत्॥

छागमित्यादि स्पष्टम्॥ ३२॥

उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम्॥ ३३॥

उर इत्यादिना उर क्षतचिकित्सामाह—उर क्षत मत्वा लाक्षा पयसा मधुसंयुता पिबेदित्यर्थ। जीर्णे पयसा सशर्करमन्न भुञ्जीतेत्यन्वय॥ ३३॥

इक्ष्वालिकाबिसग्रन्थि-पद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षयी॥ ३४॥

इक्ष्वालिकेत्यादि—इक्ष्वालिका वनखगरीति ख्याता, बिसग्रन्थि मृणालग्रन्थि, पद्मकेशर पद्मकिञ्जल्कम्। सन्धानार्थमिति क्षतोर सन्धानार्थम्॥ ३४॥

बलाश्वगन्धा श्रीपर्णीबहुपुत्रीपुनर्नवाः।
पयसा नित्यमभ्यस्ता क्षपयन्ति क्षतक्षयम्॥ ३५॥

बलेत्यादौ—श्रीपर्णी गाम्भार्य्याः फलम्, बहुपुत्री शतावरी। बलादयो व्यस्ता समस्ता वा बोध्या॥ ३५॥

### बलाद्यघृतम्

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम् ।
हृद्रोगशूलक्षतरक्तपित्तकासानिलासृक् शमयत्युदीर्णम् ॥३६॥
इति यक्ष्मचिकित्सा ।

घृतमित्यादि स्पष्टम् ॥ ३६ ॥

इति यक्ष्मचिकित्साविवृति ॥

# अथ कासचिकित्सा ।

### वातकासचिकित्सा

वास्तूको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च ॥
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥
ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ १ ॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ २ ॥

यक्ष्मरूपेषु कासपाठात् कासापेक्षया च यक्ष्मासम्भवात् यक्ष्मानन्तर कासचिकित्सामाह वास्तूक इत्यादि—वायसी काकमाची । पञ्चमूलीत्यादि—पञ्चमूली महती, उष्णवीर्य्यतया विशेषेण वातप्रत्यनीकत्वात् । अन्ये तु स्वल्पामाहु । रसान्न मासरसोपहितमन्नम् ॥ १ ॥ २ ॥

### अपराजितलेहः

शटीशृङ्गीकणाभार्गीगुडवारिदयासकैः ।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥ ३ ॥

चूर्णिता विश्वदुःस्पर्शाशृङ्गीद्राक्षाशटीसिता ।
लीढा तैलेन वातोत्थं कासं जयति दारुणम् ॥ ४ ॥
भार्गीद्राक्षाशटीशृङ्गीपिप्पलीविश्वभेषजैः ।
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ ५ ॥

शट्यादि—योगत्रयेऽपि कटुतैलेन लेह इति वृन्दटिप्पणी, किन्तु टीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ ३—५ ॥

## पित्तकासचिकित्सा

पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥ ६ ॥

पित्तकास इत्यादि—चरकस्य तनुकफ इत्यत्र घनकफे । कफस्य तनुत्वघनत्वे च श्लेष्मणि सर्वेषामपि कफस्य दर्शनादेव ज्ञेये ॥ ६ ॥

मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ७ ॥

मधुरैरिति—मधुरद्रव्यैर्युक्तां त्रिवृतामिति सम्बन्धः । अन्ये तु मधुरैर्जीवनीयद्रव्यैरित्याहुः । मधुरैर्जाङ्गलैरित्यत्र मधुराः स्वादुनि क्रिया जीवनीयसंस्कृतैः ॥ ७ ॥

बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥ ८ ॥

बलेत्यादि स्पष्टम् ॥ ८ ॥

शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥ ९ ॥
काकोलीबृहतीमेदायुग्मैः सवृषनागरैः ।
पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥ १० ॥

शरादीत्यादि—चक्रस्य । शरादिपञ्चमूलन्तु गोक्षुरदर्भकाशशरेक्षुमूलम् । अत्र पञ्चपरिभाषया अर्द्धश्लोकपादेन चतुर्गुणेन दुग्धं साध्यम् । काकोल्यादि—अत्र युग्मैरिति काकोल्यादिभिः सम्बध्यते इति चक्रः । अन्ये तु बृहतीमेदाभ्यां युग्मत्व इति, युग्मशब्देन, यदाह वृन्दः काकोलीयुग्मबृहतीमेदायुग्मैरिति ॥ ९ ॥ १० ॥

द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम्।
पित्तकासापहं ह्येतल्लिह्यान्माक्षिकसर्पिषा॥ ११॥

द्राक्षेत्यादि—इद कफानुबन्धे ज्ञेयम्, पित्तोद्रेके तु मरिचस्थाने शर्करा ज्ञेया, यदाह चारपाणि 'पिप्पल्यामलके द्राक्षा खर्जूर शर्करा मधु। लेहोऽय सघृतो लीढः सपित्तक्षयजकासजित्' इति॥ ११॥

खर्जूरपिप्पलीद्राक्षासितालाजा समांशिका।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः॥ १२॥

खर्जूरेत्यादि स्पष्टम्॥ १२॥

शटीह्रीबेरबृहतीशर्कराविश्वभेषजम्।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत्॥ १३॥
मधुना पद्मबीजानां चूर्णं पैत्तिककासनुत्॥ १४॥

शटीत्यादि—वाग्भटस्य। तत्र शट्यादिक जले पिष्ट्वा तद्रस वस्त्रपूत कृत्वा घृतसम्मिश्र पिबेत्। बृहती चात्र कण्टकारी कासहन्तृत्वात्। उक्त हि चरके 'शर्करानागरोदीच्य-कण्टकारीशटीसमम्। पिष्ट्वा रस पिबेत् पूत वस्त्रेण घृतमूर्च्छितम्' इति॥ १३॥ १४॥

## कफकासचिकित्सा

बलिनं वमनेनादौ शोधितं कफकासिनम्।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत्॥ १५॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः॥ १६॥
पञ्चकोलैः शृतं क्षीरं कफघ्नं लघु शस्यते।
श्वासकासज्वरहरं बलवर्णाग्निवर्द्धनम्॥१७॥

बलिनमित्यादिना कफचिकित्सामाह। पिप्पलीक्षारकैरिति पिप्पलीयवक्षारसस्कृतैरित्यर्थ॥ १५॥ १७॥

पौष्करकट्फलभार्गीविश्वपिप्पलिसाधितम्।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे॥

स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ॥
पाचयेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १८ ॥

पौष्करमित्यादि—कफापह पर्य्यन्त स्पष्टम् ॥ १८ ॥

## नवाङ्गयूपः

मुद्गामलाभ्यां यवदाडिमाभ्यां
कर्कन्धुना मूलकशुण्ठकेन ।
शुण्ठीकणाभ्याञ्च कुलत्थकेन
यूषो नवाङ्ग· कफरोगहन्ता ॥ १९ ॥

नवाङ्गयूषे यवामलकदाडिमकर्कन्धुमूलकशुण्ठकैः षडङ्गपरिभाषया कल्कं कृत्वा मुद्गकुलत्थौ युक्त्या प्रचुरौ दत्त्वा यूष· साध्य, पश्चात् कटुत्वार्थं शुण्ठी-पिप्पलीचूर्णप्रदानम्, किंवा सकलमेव द्रव्य यथोचितमात्रया गृहीत्वा क्वाथविधानेन पञ्चमुष्टिकवत् यूष· कार्य्य इत्याहु ॥ १९ ॥

पार्श्वशूले ज्वरे कासे श्वासे श्लेष्मसमुद्भवे ॥
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ २० ॥

पार्श्वशूल इत्यादि स्पष्टम् ॥ २० ॥

## कट्फलादिः

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया ।
शृङ्गी पर्पटकं शुण्ठी सुराह्वा च जले शृतम् ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च ॥ २१ ॥

कट्फलमित्यादौ कत्तृण गन्धतृणम् ॥ २१ ॥

कण्टकारीकृत· क्वाथ सकृष्णः सर्वकासहा ॥ २२ ॥

कण्टकारीत्यादि—स्पष्टम् ॥ २२ ॥

विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ॥ २३ ॥

विभीतकमित्यादि स्पष्टम् ॥ २३ ॥

वासकस्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषत ॥ २४ ॥

वासकेत्यादि च स्पष्टम् ॥ २४ ॥

मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी।
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥
तं लिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ २५ ॥

मधुकमित्यादि—तुगाक्षीरी वंशलोचना एकभागापेक्षया द्विगुणा, सर्वचूर्णापेक्षया चतुर्गुणा सिता ॥ २५ ॥

पिप्पली पद्मकं द्राक्षा सम्पकं बृहतीफलम्।
घृतक्षौद्रयुतो लेहः श्वासकासनिवर्हणः ॥ २६ ॥

पिप्पलीत्यादि स्पष्टम् ॥ २६ ॥

हरीतकीनागरमुस्तचूर्णं
गुडेन तुल्यं गुडिका विधेया।
निवारयत्यास्यविधारितोऽयं
श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥ २७ ॥

हरीतकीत्यादौ—समुदितचूर्णेन तुल्यो गुड ॥ २७ ॥

## मरिचाद्यं चूर्णम्

कर्षं कर्षार्द्धमथो पलं पलद्वयमथार्द्धकर्षञ्च।
मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविवर्जिताः।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ २८ ॥

कर्ष इत्यादि—मरिचकर्ष १, पिप्पली तोलक १, अम्लदाडिमवीज पल १, गुड पल २, यवक्षार तोलक १। वाग्भटेऽप्युक्त "गुडक्षारोषणकणा दाडिम श्वासकासजित्। क्रमाद् पलद्वयार्द्धाक्ष-कर्षकार्द्धपलोन्मितम्" इति ॥ २८ ॥

## समशर्करं चूर्णम्

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षयुतानमीषाम्।
पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य ॥

सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान्निहन्यात् ।
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥२६॥

लवगेत्यादि—पलार्द्धमेकमित्यत्र एकपद श्लोकपूरणार्थमेवोक्तम् । बलानिति अर्शादित्वादच्, बलवतो रोगानित्यर्थे । तेन प्रसह्य इत्यनेन न पौनरुक्त्यम् ॥ २६॥

हरीतकीकणाशुण्ठीमरिचं गुडसंयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशन ॥ ३० ॥

हरीतकीत्यादि—मोदकत्वाद् गुडो द्विगुण ॥ ३० ॥

## व्योपान्तिका गुडिका

तालीशवह्निदीप्यकचविकाम्लवेतसव्योषैः ।
तुल्यैस्त्रिसुगन्धियुतैर्गुडेन गुडिका प्रकर्त्तव्या ॥
कासश्वासारोचकपीनसहृत्कण्ठवाङ्निरोधेषु ।
ग्रहणीगदोद्भवेषु गुडिका व्योपान्तिका नाम ॥ ३१ ॥

तालीशेत्यादौ—वह्निश्चित्रक, दीप्यक यमानी, त्रिसुगन्धियुतैरिति सर्वचूर्णापेक्षया चतुर्थांशेन मिलित त्रिसुगन्धिचूर्णमित्याहुः । व्योपान्तिकेति, अत्रान्तशब्द उपान्तमाह व्योपस्यान्तस्थितत्रिसुगन्धात् पूर्वमवस्थितत्वात् । किंवा तालीशादीना विशेषणप्रधानत्वादेपत्वैवान्तो ज्ञेय ॥ ३१ ॥

मन.शिलालमधुकमांसीमुस्तेङ्गुदै पिबेत् ।
धूमं त्र्यहञ्च तस्यानु सगुडञ्च पयः पिबेत् ।
एष कासान् पृथग्द्वन्द्वसर्वदोषसमुद्भवान् ।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान् ॥ ३२ ॥

मन शिलालेत्यादि—आल हरितालम्, इङ्गुद पुत्रजीवफलमध्यम्, फलत्वगित्यन्ये, युक्तञ्चैतत्, "मन शिलालमधुक मासीमुस्तेंगुदीत्वच" इति वाग्भटवचनात् । अत्र मन शिलादीनां पेषण छागमूत्रेण बोध्यम्, छागलाम्बुपिष्टैरिति सुश्रुत दर्शनात् । अत्र मधुकस्थाने मरिच केचित् पठन्ति, तन्न, शिलालेंगुदयष्ट्याह्मासीधूप पिबेत् त्र्यहम्" इति तन्त्रान्तरदर्शनात् । अत्र मनःशिलादिक कल्कीकृत्य श्लक्ष्णवस्त्रखण्ड लिम्पेत्, तत आतपे शोषयित्वा वर्त्तिं विधाय शरावसम्पुटस्थवदराङ्गारवह्नौ निक्षिप्य यथोक्तनलिकया धूमपान कार्य्यम्, विश्राम्य किञ्चित् सगुडक्षीर पेयम्, धूमस्य तीक्ष्णत्वेनोज क्षयादिति ॥ ३२ ॥

मनःशिलालिप्तदलं बदर्य्यातपशोषितम्।
सक्षीरं धूमपानञ्च सर्वकासनिवारणम्॥ ३३॥

मन शिलेत्यादौ—बदर्य्यातपशोषितमिति बदर्य्या मन शिलालिप्तदलम्, आतपे शोषितमिति योजना। बदर्य्यातपेति असन्धिविधेरनित्यत्वात् सन्धि॥ ३३॥

अर्कच्छल्लशिले तुल्ये ततोऽर्द्धेन कटुत्रिकम्।
चूर्णितं वह्निनिक्षिप्तं पिबेद् धूमन्तु योगवित्॥
भक्षयेदथ ताम्बूलं पिबेद् दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥ ३४॥

अर्कच्छल्लेत्यादि—अर्कच्छल्ल अर्कमूलत्वक्, शिला मन शिला, ततोऽर्द्धेन कटुत्रिकमिति तत उभयोरर्द्धेन मिलित त्रिकटुकम्॥ ३४॥

मरिचशिलार्कक्षीरैर्वाक्षार्की त्वचमाशुभावितां शुष्काम्।
कृत्वा विधिना धूमं पिबतः कासा शमं यान्ति॥ ३५॥

मरिचेत्यादि स्पष्टम्॥ ३५॥

## दशमूलघृतम्

दशमूलीकषायेण भार्गीकल्कं पचेद् घृतम्।
दक्षतित्तिरिनिर्यूहे तत्परं वातकासनुत्॥ ३६॥

दशमूलीकषायेणेत्यादि—दक्ष कुक्कुट, दक्षतित्तिरिभ्या मिलित्वैव क्वाथः। दशमूलक्वाथेन दक्षतित्तिरक्वाथेन च मिलित्वा चातुर्गुण्यम्॥ ३६॥

## दशमूलाद्यं घृतम्

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीबिल्वसुरसव्योषहिङ्गुभि॥
पेयानुपानं तत् पेयं कासे वातकफाधिके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च॥ ३७॥

दशमूलाढक इत्यादि—वाग्भटस्य। अत्र दशमूलस्य क्वाथ्यस्याढकमानत्वम्, तेन 'क्वाथ क्वाथ्यसमो मत' इति वचनात् पादावशिष्टक्वाथोऽप्याढकमानो भवति। बिल्व बिल्वमूलम्, सुरस पर्णास। पेयानुपानमित्यत्र पयोऽनुपानमिति केचित् पठन्ति, किन्त्वत्र पेयैव वातकफहन्तृत्वात् युक्ता॥ ३७॥

## दशमूलषट्पलकं घृतम्

दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः ।
सनारैः पञ्चकोलैस्तु कल्कितं साधु साधितम् ॥
कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवारणम् ।
कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः ॥ ३८ ॥

दशमूलषट्पलकं घृतं स्पष्टम् ॥ ३८ ॥

## कण्टकारीघृतम्

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ ३९ ॥

## अपरं कण्टकारीघृतम्

घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम् ।
कण्टकारीरसे सर्पिः पञ्चकासनिषूदनम् ॥ ४० ॥

कण्टकारीत्यादि—कण्टकारीगुडूच्योर्मिलित्वा पल ६०, जल शराव ६०, शेष १५ । अन्ये तु जलद्रोणं दत्त्वा शेष १६ इत्याहुः ॥ कण्टकारीत्न इति कण्टकारीस्वरसश्चतुर्गुणः, उक्तञ्च 'निदिग्धिकाया स्वरसं आहरेद् यन्त्रपीडितम् । चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत्' इत्यादि ॥ ३९—४० ॥

## बृहत्कण्टकारी घृतम्

समूलपत्रशाखायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशटीचित्रकैः ॥
सौवर्चलयवक्षारबिल्वामलकपुष्करैः ।
वृश्चीरबृहतीपथ्यायमानीदाडिमर्द्धिभिः ॥
द्राक्षापुनर्नवाचव्यधन्वयासाम्लवेतसैः ।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम् ॥ ४१ ॥

समूलेत्यादि—अयं योगश्चरके वाग्भटे च पठ्यते । अत्र वैद्यकभेदात् पुनर्नवाद्वयम् ॥ ४१ ॥

## रास्नाद्यं घृतम्

द्रोणेऽपां साधयेद्रास्नां दशमूली शतावरीम् ।
पलिकां माणिकांशांस्त्रीन् कुलत्थान् बदरान् यवान् ॥
तुलार्द्धं छागमांसस्य पादशेषेण तेन च ।
घृताढकं समक्षीरं जीवनीयैः पलोन्मितैः ॥
सिद्धं तद्दशभि' कल्कैर्नस्यपानानुवासनै ।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥
पञ्च कासान् क्षयं श्वासं पार्श्वशूलमरोचकम् ।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोदूर्ध्वानिलं जयेत् ॥
जीवकर्षभकौ मेदे काकोल्यौ शूर्पपर्णिके ।
जीवन्ती मधुकश्चैव दशको जीवको गण ॥ ४२ ॥

द्रोणेऽपामित्यादि—अयमपि योगश्चरके वाग्भटे च पठ्यते । पलिकामिति रास्नादित्रयेण सम्बध्यते, दशमूलमपि प्रत्येक पलागम् । पलिकानिति पाठे रास्नादिशतावर्य्यन्ताना पलिकान् भागानिति सम्बन्ध. । माणिका शाण अष्टौ पलानि । अत्र रास्नादिच्छागमासान्तकाथ्ये द्रोणप्रमाण जलम्, तच्च पादावशेषादाढकम्, क्षीरमप्याढकम्, अतो द्विगुण पाक ॥ ४२ ॥

## अगस्त्यहरीतकी

दशमूली स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढकम् ।
हरीतकीशतञ्चैकं जले पञ्चाढके पचेत् ॥
यवैः स्विन्नै कषायं तं पूतं तच्चाभयाशतम् ।
पचेद् गुडतुलां दत्त्वा कुडवञ्च पृथग् घृतात् ॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ।
लिह्याद् द्वे चाभये नित्यमतः खादेद्रसायनात् ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनम् ॥

पञ्चकासान् क्षयं श्वासं हिक्कां सविषमज्वरान् ।
हन्यात् तथा ग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ४३ ॥

दशमूलीमित्यादि—वाग्भटचरकयोः । अत्र शङ्खिन्या बीजम्; तदभावे मूलमपि ग्राह्यमाहुः । यवाढकमिति यवहरीतक्यौ पटे बद्ध्वा दातव्यौ । पञ्चभिराढकैरिति द्वैगुण्यादशीतिशरावा भवन्ति । दशमूल्यादिहरीतक्यन्ता क्वाथ्या एकत्रैव पक्तव्या यवैः स्विन्नैरित्युपलक्षणे तृतीया, तेन स्विन्नैर्यवैरुपलक्षितः कषायो यदा भवति तदा तं कषायं पूतं कृत्वा, तत्र हरीतकीशतं गुडतुलाञ्च दत्त्वा पुनः पचेदिति योज्यम् । यवानाञ्च स्विन्नता चतुर्भागावशिष्टकषाय एव भवतीति कृत्वा चतुर्भागावशिष्टमेव कषायं कुर्वन्ति । अन्ये त्वष्टभागावशिष्टकषायमेवाहुः, तन्न, सुश्रुतसंवादात् । स्विन्नहरीतकीशतस्य वंशशलाकया कृतच्छिद्रस्य भर्जनार्थं घृततैलयोः कुडवे पृथक्, द्वैगुण्याच्च पृथगष्टपलमाने । भर्जनन्तु अवयवदार्ढ्यार्थम् । तन्त्रान्तरे चात्र मधुनश्च पलाष्टकमेवोक्तम्, तुल्यमानत्वेऽपि घृतमधुनोर्द्रव्यान्तरयोगान्न विरुद्धत्वम् । अवतारणसमये पिप्पलीचूर्णकुडवं प्रक्षेप्यम् । लिह्यादिति प्रकृतलेहं लिह्यात् द्वे चाभये खादेदिति योज्यम् । अत्र यद्यपि लेहस्य मानं नोक्तं तथापि सुश्रुतसंवादात् कर्षमानं बोध्यम् । धन्यमिति प्रभावात् किंवा धनार्जनहेतुनैरुज्यसाधकत्वात् ॥ ४३ ॥

## व्याघ्रीहरीतकी

समूलपुष्पच्छदकण्टकार्या-
स्तुलां जलद्रोणपरिप्लुताञ्च ।
हरीतकीनाञ्च शतं निदध्या-
द्यावत् पक्त्वा चरणावशेषम् ॥
गुडस्य दत्त्वा शतमेतदग्नौ
विपक्वमुत्तार्य्य ततः सुशीते ।
कटुत्रिकञ्च द्विपलप्रमाणं
पलानि षट् पुष्परसस्य तत्र ॥
क्षिपेच्चतुर्जातपलं यथाग्नि
प्रयुज्यमानो विधिनावलेहः ।

वातात्मकं पित्तकफात्मकञ्च
द्विदोषकासानपि यांस्त्रिदोषान् ॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात्
सपीनसश्वासमुरःक्षतञ्च ।
यक्ष्माणमेकादशरूपमुग्रं
भृगूपदिष्टं हि रसायने स्यात् ॥ ४४ ॥

इति कासचिकित्सा ।

---

व्याघ्रीहरीतक्यां कटुत्रिक प्रत्येक पलद्वयम् । चातुर्जातमिति मिलित्वा पलम् ॥ ४४ ॥

इति कासचिकित्साविवृति ।

---

# अथ हिक्काश्वासचिकित्सा ।

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते ।
स्निग्धैर्लवणयोगैश्च मृदु वातानुलोमनम् ॥
उद्ध्वाध शोधनं शक्ते दुर्बले शमनं मतम् ॥ १ ॥

तुल्यनिदानत्वात् कासानन्तर हिक्काश्वासचिकित्सामाह हिक्काश्वासातुर इत्यादि—तैलाक्त इति लवणसयोगै सह तैलाक्त इति योज्यम्; तेन सैन्धवसयुक्तेन तैलेनाभ्यक्त इत्यर्थ । स्निग्धैरिति स्निग्धैर्द्रव्यै स्वेद इति योज्य वाग्भटसवादात् । मृदु वातानुलोमनमिति ऊद्ध्वाध शोधनस्य विशेषण वाग्भटसवादात्; किंवा लवणयोगैरुपलक्षित शोधनमिति योज्यम् ॥ १ ॥

कोलमज्जाञ्जनं लाजास्तिक्ता काञ्चनगैरिकम् ।
कृष्णा धात्री सिता शुण्ठी काशीशं दधिनाम च ॥
पाटल्या सफलं पुष्पं कृष्णा खर्जूरमस्तकम् ।
षडेते पादिका लेहा हिक्काघ्ना मधुसंयुताः ॥ २ ॥

शमनमाह कोलेत्यादि—कोलमज्जा वदरास्थिमज्जा, अञ्जनमत्र सौवीराञ्जनम्;

तिक्ता कटुकी, काञ्चनगैरिकमिति उत्तमलोहितगैरिकम्, काशाश धातुकाशीशम्, कास्यमाक्षिकमित्यन्ये, दधिनाम कपित्थफलम् ॥ २ ॥

मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता ।
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् ॥ ३ ॥
स्तन्येन मक्षिकाविष्ठानस्यं वालक्तकाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ ४ ॥
मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत् ॥ ५ ॥
हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ॥ ६ ॥
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ॥ ७ ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम् ॥ ८ ॥
हिक्काश्वासोद्भव भार्गी सविश्वामुष्णवारिणा ।
नागरं वा सिताभार्गी-सौवर्चलसमन्वितम् ॥ ६ ॥

मधुकमित्यादि सौवर्चलान्त स्पष्टम् ॥ ३—६ ॥

शृङ्गीकटुत्रिकफलत्रयकण्टकारी
भार्गी सपुष्करजटा लवणानि पञ्च ।
चूर्णं पिबेद्धि शिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचिपीनसेषु ॥ १० ॥

शृङ्गीत्यादौ—पुष्करजटा पुष्करमूलम् ॥ १० ॥

अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा ।
तोयेनोष्णेन पिबेत् श्वासी हिक्की च तच्छान्त्यै ॥ ११ ॥

अभयेत्यादि—योगद्वय स्पष्टम् ॥ ११ ॥

## पर्णासपञ्चकम्

अमृतानागरफञ्जी-व्याघ्रीपर्णाससाधितः क्वाथः ।
पीत सकणाचूर्णं कासश्वासौ निहन्त्याशु ॥ १२ ॥

अमृतेत्यादौ—फञ्जी ब्रह्मयष्टि' ॥ १२ ॥

दशमूलीकषायस्तु पुष्करेणावचूर्णितः ।

कासश्वासप्रशमनः पार्श्वहृच्छूलनाशन ॥ १३ ॥
कुलत्थनागरव्याघ्रीवासाभिः कथितं जलम् ।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥ १४ ॥
गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥ १५ ॥

दशमूलीकषाय इत्यादि जयेदित्यन्त स्पष्टम् ॥ १३—१५ ॥

शृङ्गीमहौषधकणाघनपुष्कराणां
चूर्णं शटीमरिचशर्करया समेतम् ।
क्काथेन पीतममृतावृषपञ्चमूल्याः
श्वासं ऽयहेण शमयेदतिदोषमुग्रम् ॥ १६ ॥

शृङ्गीत्यादि—शृग्यादीना चूर्णं काथ्यात् पादिकम्, प्रक्षेपत्वात् । अत्र पञ्च-मूली महती, वातकफहन्तृत्वादित्याहु. ॥ १६ ॥

हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम् ।
जह्यात् तैलेन विलिहन् श्वासान् प्राणहरानपि ॥ १७ ॥

हरिद्रामित्यादि—सुश्रुतस्य । स्पष्टमिदम् ॥ १७ ॥

हिक्कां हरति प्रबलां प्रबलं श्वासं च नाशयत्याशु ।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम् ॥ १८ ॥

हिक्कामित्यादौ—शिखी मयूरस्तत्पुच्छस्य भूतिर्भस्म तथा पिप्पलीचूर्णञ्च तन्म मधुना लेह्यम् ॥ १८ ॥

कर्षं कलिफलचूर्णं लीढं चात्यन्तमधुमिश्रम् ।
अचिराद्धरति श्वासं प्रबलामुद्धंसिकाञ्चैव ॥ १९ ॥

कर्षमित्यादि—कलिफल विभीतकम् ॥ १९ ॥

## हिंस्राद्यं घृतम्

हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः ।
द्विक्षीरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम् ॥
कोलमात्रैः पचेत् तद्धि श्वासकासौ व्यपोहति ।

अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥ २० ॥

हिंस्रेत्यादि—सुश्रुतस्य । हिंस्रा काला ओकडा, पूतिक लाटाकरञ्जस्य मूलम् । कोलमात्रैरिति यद्यपि कोलशब्देन माषकाष्टक कर्षश्चोच्यते, यदाह चारपाणि 'शाण-काभ्यान्तु जानीयात् कोल वटकद्रक्षणम् । ताभ्या कर्ष पिचुश्चाच स्वर्ण पाणितल तथा । विडालपदक कोल किञ्चिच्च समुदाहृतम्' इति, तथापि कर्ष एवात्र ग्राह्य । अन्यथा कल्कस्याल्पीयस्त्व स्यात् । वृद्धकाश्यपेनाप्येवमुक्तम्, तस्मात् माधवीय व्याख्येति ॥ २० ॥

## तेजोवत्याद्यं घृतम्

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ।
भूतिकं पौष्करं मूलं पलाशश्चित्रकं शटी ॥
सौवर्चलन्त्वामलकी सैन्धवं विल्वपेशिका ।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः ॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोयचतुर्गुणे ।
एतद् यथाबलं पीत्वा हिक्काश्वासौ जयेन्नर ॥
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव च ॥ २१ ॥

तेजोवतीत्यादि—चरकस्य । तेजोवती चविका, भूतिक कत्तृणम् । हिंगु-पादैरित्येकभागमपेक्ष्य, तेन हिङ्गुनश्चत्वारो माषका ॥ २१ ॥

## भार्गीगुडः

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम् ।
शतं हरीतकीनाञ्च पचेत् तोयचतुर्गुणे ॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते ॥
आलोड्य च तुलां पूतां गुडस्य त्वभयां तत ॥
पुन पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम् ।
शीते तु मधुनश्चात्र षट् पलानि प्रदापयेत् ॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं सञ्चूर्ण्य प्रक्षिपेत् तत ॥

भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपन ॥
पलेऽस्मिन्नागते माने न द्वैगुण्यमिहेष्यते ॥
हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलम् ॥ २२ ॥

भार्गीगुडे दशमूल्यपि मिलित्वा । तोये चतुर्गुण इति अकृतद्वैगुण्यात् दशमूलीशत भार्गीशतञ्च मिलित्वा जलस्य शरावशत देयमित्याहुः । हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलमिति वक्ष्यति, तेन जलस्य षोडशशरावाधिकशरावशतमित्यर्थ । वृन्दस्तु हरीतकीशतैकस्य वारिप्रस्थमिहाधिकमित्याह । वृद्धास्तु सम्यक् वीर्य्याधानार्थमत्र द्रवस्य द्वैगुण्यमिच्छन्ति, तन्मते जलशरावशतद्वयम् । अनेनैव हरीतक्या अपि पाकः । व्यवहारस्तु प्रायश्चतुर्गुणजलेनाकृतद्वैगुण्येन ॥ २२ ॥

## कुलत्थगुडः

कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका ।
शतं शतञ्च संगृह्य जलद्रोणे विपाचयेत् ॥
पादावशेषे तस्मिंस्तु गुडस्यार्द्धतुलां क्षिपेत् ।
शीतीभूते च पक्के च मधुनोऽष्टौ पलानि च ॥
षट् पलानि तुगाक्षीर्य्या पिप्पल्याश्च पलद्वयम् ।
त्रिसुगन्धि सुगन्धं तत् खादेदग्निबलं प्रति ॥
श्वासं कासं ज्वरं हिक्कां नाशयेत् तमकं तथा ।
प्रतिशतं द्रोणनियमाज्ज्ञेयं द्रोणत्रयन्त्विह ॥ २३ ॥

इति हिक्काश्वासचिकित्सा ।

---

कुलत्थमित्यादौ—जलद्रोण इति प्रतिशतमित्यर्थ , एतत्तु चक्रमतम्, वृन्दस्त्वाह ' योगमन्दर्शनादत्र वृद्धवैद्योपदेशत. । जल चतुर्गुण देयमल्पत्वाद्द्रोणवारिण । मानमात्रेऽध्यसवादाद् द्विपल त्रिसुगन्धित ' इति । योगसन्दर्शनादिति समानद्रव्यप्रमाणकुलत्थगुडान्तरे चतुर्गुणजलसन्दर्शनादित्यर्थ , इदन्तु न गृह्यते

द्रोणपदस्य साक्षादुपादानात्, तस्य चतुर्गुणत्वकल्पने द्रोणपदस्य वैयर्थ्यं स्यात् । पिप्पलीपलद्वयमाभिध्यात्, लिसुगन्धि च मिलित्वा पलद्वय तथा तन्त्रान्तरमवादाच्च, यथा एतज्जातीयकुलत्थगुडान्तरे 'मधुन कुडव दद्यात् लिसुगन्धिपलद्वयम्' इति ॥ २३ ॥

इति हिक्काश्वासचिकित्साविवृति ।

—— -०-:—— —

# अथ स्वरभेदचिकित्सा ।

वाते सलवणं तैलं पित्ते सर्पि समाक्षिकम् ।
कफे सक्षारकटुकं क्षौद्रं कवल इष्यते ॥
गले तालुनि जिह्वाया दन्तमूलेषु चाश्रित ।
तेन निष्कृष्यते श्लेष्मा स्वरश्चास्य प्रसीदति ॥ १ ॥

प्राणोदानदुष्टिसाधर्म्यात् हिक्काश्वासानन्तर स्वरभेदचिकित्सामाह वात इत्यादि—तैलमत्र कदुष्ण कृत्वा कवल कार्य्य इत्याहु । क्षारो यवक्षार ॥ १ ॥

आद्ये कोष्णं जलं पेयं जग्ध्वा घृतगुडौदनम् ।
क्षीरान्नपानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः ॥
पिप्पलीं पिप्पलीमूलं मरिचं विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये ॥ २ ॥

आद्य इति वातस्वरभेदे पिबेत् । सर्पिरिति यद्यपि सामान्येनैवोक्त तथापि सुश्रुते श्वासोक्त वासाघृत पित्तकासोक्त वा विदारीगन्धोत्पलशारिवेत्यादिनोक्त ज्ञेयमित्याहुः । पिप्पलीमित्यादि—पिप्पलीत्यादिचूर्णं गोमूत्रेण पेयम् । स्वरसक्षय इति स्वरभेदे ॥ २ ॥

स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ॥ ३ ॥
क्षयजे सर्वजे चापि प्रत्याख्याय समाचरेत् ॥ ४ ॥

स्वरोपघात इत्यादि—सुश्रुतस्य । कफवदिति कफजस्वरभेदवत् । क्षयजे सर्वजे चापीत्यपिशब्दबलात् मेदोजसहजयो परिग्रह । तन्त्रान्तरे हि अनयोरप्यसाध्यत्वमुक्तम्, यथा 'क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजात ।

मेदस्विन सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति।' क्रिया चात्र चयजे क्षयकामोक्ता सर्वजे तु प्रत्येकदोषोक्तैव मिलित्वा कार्य्या ॥ ३ । ४ ॥

चव्याम्लवेतसकटुत्रिकतिन्तिडीक-
तालीशजीवकतुगादहनैः समांशैः।
चूर्णं गुडप्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ५ ॥

चव्याम्लवेतसेत्यादौ—तिन्तिडीक महार्द्रकम्, तुगा वंशलोचना, दहन-श्चित्रक। गुडोऽत्र समुदितचूर्णसम। त्रिसुगन्धि प्रत्येकमेकभागापेक्षया चतुर्थांशेनेति केचित्, एकभागसम मिलितमित्यन्ये ॥ ॥ ५ ॥

तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे।
पथ्यां वा पिप्पलीयुक्तां संयुक्तां नागरेण वा ॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥ ६ ॥

तैलाक्तमित्यादि—श्लोकद्वय स्पष्टम् ॥ ६ ॥

कलितरुफलसिन्धुकणाचूर्णं तक्रेण लीढमपहरति।
स्वरभेदं गोपयसा पीतं वामलकचूर्णञ्च ॥ ७ ॥

कलितरुफलेत्यादि—कलितरुफल विभीतकफलम्। तक्रेणेत्यत्र चुक्रेणेति पाठान्तरम् ॥ ७ ॥

बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ ८ ॥

बदरीपत्रकल्क वेत्यादि—बदरीपत्र ससैन्धव बहुघृते भृष्ट्वा तेनैव घृतेनालोड्य लिहेत् ॥ ८ ॥

शर्करामधुमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहत स्वर ॥ ९ ॥

शर्करेत्यादि—सुश्रुतस्य। मधुरैरिति काकोल्यादिगणै। पय साधनमिह क्षीरपाकपरिभाषया ॥ ९ ॥

## कण्टकारीघृतम्

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः ।
सर्पिः स्वरापघातं हन्यात् कासञ्च पञ्चविधम् ॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे ।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ १० ॥

व्याघ्रीत्यादि—यद्यपि इदं घृतं रास्नेत्यादिना कासेऽप्युक्तं तथाप्यत्र स्वरभेद-हन्तृत्वप्रतिपादनार्थं पुनरप्युक्तम् । स्वरसस्याभावे क्वाथग्रहणमाह शुष्कद्रव्यमित्यादि- पादस्तु चतुर्थभागः । अत्र केचित् स्वरसानुकल्पत्वादष्टावशिष्ट एव क्वाथो युक्तो गुरुत्वा-दिति । पादशब्दस्य मूलवचनत्वेनात्रापि पादशब्दोऽयं मूलीभूतमाद्यभागमाह, तेन यद्भागापेक्षया अष्टगुणत्वं तावानेव भागः स्थापनीय इत्याहुः । अन्ये तु पादावशे-षितमित्यत्र भागावशेषितमिति पठित्वा भागशब्दोऽत्राष्टमो भाग इत्याहुः । व्यवहारस्तु चतुर्थभागेनैव ॥ १० ॥

## भृङ्गराजाद्यं घृतम्

भृङ्गराजामृतावल्लीवासकदशमूलकासमर्दरसैः ।
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥११॥

भृङ्गराजेत्यादि—भृङ्गराजादीनां क्वाथश्चतुर्गुणः, पिप्पल्याः पादिकः कल्कः सिद्धशीते तु घृतात् पादिकं मधु प्रक्षेप्यम् ॥ ११ ॥

इति स्वरभेदचिकित्साविवृतिः ।

---

# अथारोचकचिकित्सा ।

वस्तिं समीरणे पित्ते विरेकं वमनं कफे ।
कुर्य्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ १ ॥
वान्तो वचाद्भिरनिले विधिवत् पिबेत्तु
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम् ।
कृष्णाविडङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥ २ ॥

अरोचकस्याप्यूर्द्ध्वगविकारत्वेन स्वरभेदानन्तरमरोचकमाह, बस्तिमित्यादि—मनोघ्नजे इति मनोविदनाहेतुशोकादित। एतच्चोपलक्षण तेन कायादिजेऽपि ज्ञेयम्। वान्त इत्यादि—सुश्रुतस्य। विधिवत् वान्त कृतवमन, विधिवदित्यनेन लाजपेयादिक्रमञ्च बोधयति तेन वान्त सन् पेयादिक्रमेण जातबलः सन् चूर्णं पिबेन्न सहसेति। अनिल इति कारणे कार्य्योपचारात् अनिलजे, अनिलजेऽपि वमनमिह कफस्थानगतत्वाद्बोदितव्यम्। स्नेहस्तैलमिह वातहन्तृत्वादिति वृन्दटिप्पणी, तन्न, घृतमेव युक्तम्, वक्ष्यमाणवाग्भटवचनात्। यवभस्म इति यवक्षार। लवणोत्तम सैन्धवम्। एल एलवालुकमिति कार्त्तिक॰, एलेत्यन्ये, युक्तञ्चैतत् वाग्भटसंवादात्॥ १। २॥

**पैत्ते गुडाम्बुमधुरैर्वमनं प्रशस्तं**
**लेह ससैन्धवसितामधुसर्पिरिष्टः।**
**निम्बाम्बु छर्दितवतः कफजे तु पानं**
**राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम्।**
**चूर्णं यदुक्तमथवानिलजे तदेव**
**सर्वैश्च सर्वकृतमेवमुपक्रमेच्च॥ ३॥**

गुडाम्बुमधुररिति गुडाम्बुयोगान्मधुरैर्वमनयोगैः; अत्र मदनफलयोगोऽपि ज्ञेय, केवलगुडोदकेन वमनस्यासम्भवात्, अन्ये तु मधुरशब्देनाष्टवर्गमाहु॰, अपरे तु मधुरैरित्यत्र मधुकैरिति पठन्ति। निम्बाम्बुछर्दितवत्, इति आगमशासनमनित्यमिति आगमाभावादत्र केवलश्छकार, तेन न छन्दोभङ्ग॰। चन्द्रटस्तु निम्बाम्बुवमितवत इति पठति। राजद्रुमाम्बुमधुनेति राजद्रुम आरग्वधस्तस्य फलक्काथो मधुना सहित इत्यर्थ, 'कार्त्तिकस्तु राजद्रुमशब्देन आरग्वधादिगणमाह, कफाधिक्येऽस्यैवोचितत्वादिति, किन्तु वाग्भटे एव नोक्त तेन आरग्वधादिगणग्रहण न प्रमाणमिति। दीप्यकाढ्यमिति यवानीचूर्णमत्र प्रक्षेप्यम्। चूर्णं यदुक्तमथवेति अनिलजे यत् चूर्णमुक्त कृष्णादिनागरान्त तदेवेह राजद्रुमाम्बुना पिबेत्। अयञ्च विधिर्वातानुबन्धे सति ज्ञेय॰। सर्वैश्च सर्वकृतमिति प्रत्येकदोषोक्त मेलयित्वा सर्वदोषजमरोचकमुपाचरेदित्यर्थ॰॥ ३॥

**कुष्ठसौवर्चलाजाजी शर्करामरिचं विडम्।**
**धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम्॥**
**लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।**
**आर्द्रदाडिमनिर्यासश्चाजाजीशर्करायुतः॥**

सतैलमाक्षिकाश्चैते चत्वारः कवलग्रहाः ।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान् ॥ ४ ॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकानि च ।
त्वक् च दार्वी यवानी च पिप्पल्यस्तेजोवत्यपि ॥
यवानी तिन्तिडीकञ्च पञ्चैते मुखशोधनाः ।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः ॥ ५ ॥

[illegible] ॥ ४—५ ॥

अम्लीका गुडतोयञ्च त्वगेलामरिचान्वितम् ।
अभक्तच्छन्दरोगेषु शस्तं कवलधारणम् ॥ ६ ॥

अम्लीकेत्यादि—[illegible] ॥ ६ ॥

कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलं गुडं क्षौद्रं सर्वारोचकनाशनम् ॥ ७ ॥

[illegible] ॥ ७ ॥

[illegible]त्र्यूषणानि त्रिफला रजनीद्वयञ्च
चूर्णीकृतानि यवशूकविमिश्रितानि ।
क्षौद्रान्वितानि विदधीत मुखधारणार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि ॥ ८ ॥

[illegible] ॥ ८ ॥

बिडचूर्णमधुसंयुक्तो रसो दाडिमसम्भवः ।
असाध्यानपि संहन्यादरुचिं वक्त्रधारितः ॥ ९ ॥

विट्चूर्णेत्यादि स्पष्टम् ॥ ९ ॥

## यमानीषाडवः

यमानीतिन्तिडीकञ्च नागरञ्चाम्लवेतसम् ।
दाडिमं वदरञ्चाम्लं कार्षिकाण्युपकल्पयेत् ॥
धान्यसौवर्च्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्पीडापार्श्वशूलघ्नं विवन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ १० ॥

यमानीषाडव. अम्लमिति वदराविशेषण, वराङ्गं गुडत्वक् । पिप्पलीना शतमित्याकृतिमानात् । एव मरिचस्यापि शतद्वयम् । एतच्चूर्णं मुखे धृत्वा शनै शनैर्गलाध करणीयमित्युपदिशन्ति । षाडव इति मधुराम्लयोगस्य सञ्ज्ञा, यमान्योपलक्षित. षाडवो यमानीषाडव ॥ १० ॥

## कलहंसः

अष्टादश शिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्य ।
आर्द्रकपलं गुडपलं प्रस्थत्रयमारनालस्य ॥
एतद्बिडलवणयुतं खजाहतं सुरभिगन्धाढ्यम् ।
व्यञ्जनसहस्रघाति ज्ञेयं कलहंसकं नाम ॥ ११ ॥

इत्यरोचकचिकित्सा ।

अष्टादशेत्यादि—शिग्रुफलानि शोभाञ्जनबीजानि । सुरभिगन्धाढ्य चातुर्जातकाढ्यमित्यर्थ. । स्वरवहानाडीशुद्धिकरणत्वेन हंसस्वरजनकत्वेन कलहंससञ्ज्ञा ॥ ११ ॥

इत्यरोचकचिकित्साविवृति ॥

# अथ छर्दिचिकित्सा ।

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
प्राक् कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि ॥ १ ॥

अरोचकवत् पञ्चविधत्वात् तथा छर्द्यामयेऽप्यरुच्ये सम्भवादरोचकानन्तरं छर्दिचिकित्सितमुच्यते, आमाशयेत्यादि—चरकस्य । आम आमरस, तस्याशय आमाशय:, तत्रोत्क्लेश दोषाणामुदीरणं, तद्धेतुकाश्छर्दय, किंवा आमाशयस्याशयविशेषस्योत्क्लेश इति । हिशब्दो हेतौ । यस्मादामाशयोत्क्लेशेन एते छर्दय, आमाशयसमुत्थे च रोगे लङ्घनमुक्त, तस्मादित्यर्थ । उत्सर्गमुक्त्वा अपवादमाह प्राक् कारयेदित्यादिना । यद्यपि वातजायामप्यामशयसम्बन्धेन कफोऽप्यस्ति लङ्घनसाध्यश्च तथापि वातस्य महात्ययस्याशुकारिणो लङ्घनशोधनाभ्यां वृद्धिर्न अत्ययकरो स्यादिति भाव । अत्र लङ्घनमल्पदोषविषय, शोधनञ्च बहुदोषविषयमिति । संशोधनशब्देनात्र वमनविरेचनयोरेव ग्रहणम्, उत्तरस्यापि वमनस्य वक्ष्यमाणत्वात् । अन्ये त्वत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति ॥ १ ॥

हन्यात् क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ।
ससैन्धवं पिबेत् सर्पिर्वातच्छर्दिनिवारणम् ॥ २ ॥

हन्यादित्यादि—सुश्रुतस्य । क्षीरोदकमित्यत्र क्षारघृतमिति डल्वण पठति, व्याचष्टे च—क्षीरमथनादुद्धृतं घृतं क्षीरघृतं क्षीरयुक्तं वा घृतं क्षीरघृतमिति, किन्तु वाग्भटे पीतं तुल्याम्बुना पय इत्युक्त, तेन क्षीरोदकमिति पाठ । ससैन्धवं पिबेत् सर्पिरित्यत्र पक्वं घृतम् ॥ २ ॥

मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम् ।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत् ॥ ३ ॥

मुद्गामलकयूषं वा ससर्पिष्कमिति ससर्पिरिह यूषसन्तलनार्थम् । यवागूमित्यादि—सुश्रुतस्य । पञ्चमूली स्वल्पा इति चक्र, महतीति गयदास, वातजायामप्यामाशयसमुत्थितत्वेनानुबन्धरूपस्य कफस्य विद्यमानत्वात् ॥ ३ ॥

पित्तात्मिकायान्त्वनुलोमनार्थं
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात् ।
कफाशयस्थन्त्वतिमात्रवृद्धं
पित्तं जयेत् स्वादुभिरूर्द्ध्वमेव ॥ ४ ॥

शुद्धस्य काले मधुशर्कराभ्यां
लाजैश्च मन्थं यदि वापि पेयाम् ।
प्रदापयेन्मुद्गरसेन वापि
शाल्योदनं जाङ्गलजै रसैर्वा ॥ ५ ॥

पित्तेत्यादि—चरकस्य । चूर्णीकृता त्रिवृदिति द्राक्षादिरसै प्रत्येकमुपयोज्यमित्याहु । कफाशयस्थमिति आमाशयोर्द्ध्वभागस्थम । स्वादुभिरूर्द्ध्वमेवेति अनन्तरोक्तैर्द्राक्षादिभिरेव । ऊर्ध्वमिति वमनेन हरेदित्यर्थ, अत्रानुक्तमपि मदनफल वमनयोग्यतया ज्ञेयम्, अन्ये तु केवलमेव द्राक्षादिरमभाकण्ठ पीत्वा वमन कार्य्यमित्याहु । काल इति सम्यग्बुभुक्षाकाले । यदि वापि पेयामिति मन्दाग्नि प्रति पेया ज्ञेया ॥ ४ ॥ ५ ॥

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम् ।
पिवेत् माक्षिकसंयुक्तं छर्दिस्तेन निवर्त्तते ॥ ६ ॥
चन्दनञ्चामृणालञ्च बालकं नागरं वृषम् ।
सतण्डुलोदकक्षौद्रः पीतः कल्को वमिं जयेत् ॥ ७ ॥

चन्दनेत्यादि—चरकमवादात् श्वेतचन्दन ज्ञेयम् । चन्दनकल्कापेक्षया चामलकीरसश्चतुर्गुण, पातव्यश्च चतुर्द्रव इत्युक्ते । चन्दनमित्यादौ—अमृणालमुशीरम् ॥ ६ ॥ ७ ॥

कषायो भृष्टमुद्गस्य सलाजमधुशर्करः ।
छर्द्यतीसारतृड्दाहज्वरघ्नः सम्प्रकाशित ॥ ८ ॥

कषाय इत्यादि—मुद्ग भृष्ट्वा क्वाथविधिना कषाय कार्य्यस्ततो लाजचूर्णादिप्रक्षेप ॥ ८ ॥

हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥ ९ ॥

हरीतकीनामित्यादि स्पष्टम् ॥ ६ ॥

गुडूचीत्रिफलारिष्टपटोलै क्वथितं पिबेत् ।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥१०॥

गुडूचीत्यादौ—पित्ताम्लसम्भवामिति अम्लपित्तसम्भवाम् ॥ १० ॥

क्वाथ पर्पटज· पीत सक्षौद्रश्छर्दिनाशन ॥ ११ ॥

क्वाथ इत्यादि स्पष्टम् ॥ ११ ॥

कफात्मिकायां वमनं प्रशस्तं
सपिप्पलीसर्षपनिम्बतोयैः ।
पिण्डीतकै सैन्धवसंप्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ १२ ॥

कफात्मिकायामित्यादौ—सपिप्पलीसर्षपनिम्बतोयैरिति निम्बवल्कलस्यार्द्धशृते क्वाथे पिप्पल्यादीनां प्रक्षेप इति वृन्दटिप्पणी, अन्ये तु तोयशब्देनात्र उष्णोदकमुच्यते, तेन पिप्पल्यादिकल्कमुष्णोदकेन पिबेदित्याहु , वाग्भटेऽप्युक्त ‘ कफजाया वमेन्निम्बकृष्णापिण्डीतसर्षपै । युक्तेन कोष्णतोयेन ’ इति, तत्रानुक्तमपि वमनयोग्यत्वेन सैन्धव बोध्यम् । पिण्डीतको मदनफलम् । कफामाशयशोधनार्थमिति कफपूर्णामाशयशोधनार्थम्, कफस्यामाशयस्य च शोधनार्थमित्यन्ये ॥ १२ ॥

विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत् ।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ १३ ॥

विडङ्गेत्यादौ—प्लव कैवर्त्तमुस्तकम् ॥ १३ ॥

सजाम्बवं वा बदरस्य चूर्णं
मुस्तायुतां कर्कटकस्य शृङ्गीम् ।
दुरालभां वा मधुसम्प्रयुक्तां
लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥ १४ ॥

सजाम्बवमित्यादि—जाम्बव जम्बुफलास्थि । बदरस्य चूर्णमिति बदराम्लचूर्णमिति चरके पठ्यते, तन्मते अम्लबदरस्यैव चूर्णम्, अन्ये तु बदरस्य चूर्णमिति पठित्वा बदरास्थिमज्जचूर्णमित्याहु· । मुस्तायुता कर्कटकस्य शृङ्गीमिति द्वितीयो योग । दुरालभा वेति तृतीयो योग· योगत्रयेऽपि मधु सम्बध्यते ॥ १४ ॥

तर्पणं वा मधुयुतं तिसृणामपि भेषजम्।
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम्।
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम् ॥ १५॥

तर्पणेत्यादि—तर्पण तोयाविप्लुता शक्तव। तिसृणामिति पृथग्वातादिजानाम्, अन्यथा बहुवचननानुपपत्तेः। एतेन त्रिदोषवच्छर्दिहरत्वमस्योक्तं भवति, यतः पृथग्वातादिच्छर्दिभेषजयुक्तमेव सान्निपातिकच्छर्दिभेषजं भवति, चरके तथोक्तत्वात्। कृतमित्यादि—सुश्रुतस्य। अत्रापि पूर्ववत् व्याख्येयम् ॥ १५ ॥

द्रव्यादापोथिताद् तोये प्रतप्ते निशि संस्थितात्।
कषायो योऽभिनिर्याति स शीत समुदाहृतः ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयो।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥ १६ ॥

हिमसंज्ञितमिति शीतकषायसंज्ञित, तदर्थमेव कृष्णात्रेयपरिभाषामाह द्रव्यादित्यादि—व्यवहारस्तु प्रायेण भेषजार्द्धपल जलपलद्वयमिति। रसाख्याया पलद्वयमिति स्वरसाभावे यत्र भेषजचूर्णमुष्णोदके प्रक्षिप्य स्वरसानुकल्प क्रियते तस्मिन् क्वाथे कर्त्तव्ये भेषजस्य पलद्वय दत्त्वा स्वरसानुकल्प कार्य्य ॥ १६ ॥

श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १७ ॥

श्रीफलस्येत्यादि—श्रीफलो विल्व तस्य मूल ग्राह्य, 'विल्वमूल मरुत् श्लेष्मच्छर्दिघ्न न च पित्तकृत्' इति गुणपाठात्, एवमन्यत्रापि। गुडूच्या वा कषाय इति गुडूच्या क्वाथ एव शीतल कार्य्य, न तु शीतकषायः, नागार्जुनसंवादे तस्योक्तत्वात् यथा—'छिन्नरुहाया क्वाथ सुशीत यो नरः पिबेन्मधुना। छर्दि स वातपित्तश्लेष्मसमुत्था निवारयति' इत्यादि ॥ १७ ॥

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्यं
ह्रीवेरवारि मधुना पिबताऽल्पमल्पम्।
छर्दि प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढा निहन्ति मधुनाथ दुरालभा वा ॥ १८ ॥

जम्ब्वाम्रेत्यादि—गवेधुको गुल्मम्, धान्य धान्यकम्, सेव्यमुशीरम्, वारि

शीतकषाय इत्यर्थः । पुनर्दुरालभेति श्लोकानुरोधादुक्तं त्रिसुगन्धियोगेन योगान्तरत्वाद्व न पौनरुक्त्यम् ॥ १८ ॥

## जातीधात्री

जात्या रसं कपित्थस्य पिप्पलीमरिचान्वितं ।
चौद्रेण युक्तं शमयेल्लेहोऽयं छर्दिमुल्वणाम् ॥ १९ ॥

जात्या इत्यादि—जाती आमलकी, कपित्थस्येति कपित्थफलस्य । एक एवायं योगः ॥ १९ ॥

पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चात्र कुडवं सलिलस्य च ।
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥२०॥

पिष्ट्वेत्यादि—इदन्तु अग्न्याद्यपेक्षया पेयम्, शेषं त्याज्यम् ॥ २० ॥

## एलादिचूर्णम्

एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ २१ ॥

एलेत्यादि स्पष्टम् ॥ २१ ॥

कोलामलकमज्जानौ मक्षिकाविट् सिता मधु ।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २२ ॥

कोलेत्यादि—कोलं बदरं तदस्थिमज्जा ग्राह्या । कृष्णातण्डुलं पिप्पलीतण्डुलं ॥ २२ ॥

अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले ।
तत्तोयपानमात्रेण छर्दिं जयति दुस्तराम् ॥ २३ ॥

अश्वत्थेत्यादि स्पष्टम् ॥ २३ ॥

यष्ट्याह्वं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम् ।

तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ २४ ॥

यष्ट्याह्वमित्यादौ—तेन इति चौरेण ॥ २४ ॥

लाजाकपित्थमधुमागधिकोषणानां ।
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ।
पथ्यामृतामरिचमाक्षिकपिप्पलीनां
लेहास्त्रय सकलवम्यरुचिप्रशान्त्यै ॥ २५ ॥

लाजेत्यादौ—कपित्थस्य फलम्, ऊषण मरिचम्; जीरकोऽजाजी ॥२५॥

## पद्मकाद्यं घृतम्

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् ।
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम् ॥
तृष्णारुचिप्रशमनं दाहज्वरहरं परम् ॥ २६ ॥
इति छर्दिचिकित्सा ॥

पद्मकघृते क्वाथ कल्कश्च पद्मकादिपञ्चकस्य ॥ २६ ॥

इति छर्दिचिकित्साविवृति ।

---

# अथ तृष्णाचिकित्सा ।

तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ।
रसाश्च बृंहणा· शीता गुडूच्या रस एव च ॥ १ ॥
पञ्चाङ्गका· पञ्चगणा· य उक्ता-
स्तेष्वम्बु सिद्धं प्रथमे गणे वा ।
पिवेत् सुखोष्णं मनुजोऽल्पशो वा
तृष्णोपरोधं न कदापि कुर्य्यात् ॥ २ ॥

छर्द्यास्तृष्णोपद्रवत्वाच्छर्दनन्तर तृष्णाचिकित्सामाह तृष्णायामित्यादि—वाग्भटस्य । सगुड दधीति गुड प्रक्षेप्यम् । पञ्चाङ्गका इत्यादि—सुश्रुतस्य । पञ्च अङ्गानि येषाम् एवम्भूता ये पञ्चगणा. स्वल्पबृहत्तृणवल्लीकण्टकीसंज्ञकानि पञ्च

पञ्चमूलानि सुश्रुतोक्तानि तेषु । अम्बु सिद्धमिति अम्बु क्वाथोऽम्भश्च वा । एते च पञ्च योगा, प्रत्येक क्वाथविधानाय, प्रथमो गणो विदारीगन्धादिः मौशुत । अल्पश इति स्तोक स्तोकम्, अन्ये तु अल्पश इति तृष्णाविशेषण व्याख्याय अल्पशस्तृष्णाया शमनम्, महत्यां वमनमित्याहु । तृष्णोपरोध न कदापि कुर्यादिति अतोऽल्पाल्प-जलदानात् तृष्णाया उपरोध दु स कदापि न कुर्यात्, किंवा किमर्थं पुनरिदम्-मल्पाल्प जल दीयते इत्याह तृष्णेत्यादि, यस्मात् तृष्णाया उपरोधे सति प्राणत्याग स्यात् अत पुरुष कदापि तृष्णोपरोध न कुर्य्यादित्यर्थ । ईश्वरसेनस्तु 'पिबन् सुखोष्ण मनुजोऽचिरेण तृषो विमुच्येत हि वातजाया ' इति पठति । कश्चित्तु पिबेत् सुखोष्ण मनुजोऽल्पशस्तु जलोष्णदुग्धस्य तथैव पानमिति ॥१ । २ ॥

**पित्तोत्थिता पित्तहरैर्विपक्व**
**निहन्ति तोयं पय एव वापि ॥ ३ ॥**

पित्तोत्थितामित्यादि—सुश्रुतस्य । पित्तहरैरिति काकोल्यादिभि । ईश्वर-सेनस्तु 'पित्तप्रवर्गेस्तु कृत कषाय सशर्कर क्षौद्रयुत सुशीत । पीतस्तृषा पित्तकृतां निहन्ति क्षीर श्रृत वाप्यथ जीवनीयैः' इति पठति, व्याचष्टे च पित्तप्रवर्गैरित्युत्पलादिभि काकोल्यादिभिश्चेति ॥ ३ ॥

**काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम् ।**
**द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ४ ॥**

काश्मर्य्यादिमधुकान्त एको योग । शीतकषायोऽयम् । अन्ये तु कषायकल्कौ जलेन पेय इत्याहु ॥ ४ ॥

**पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रस ।**
**तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा ॥५॥**

पित्तजायामित्यादि—वाग्भटस्य । पक्वोडुम्बरज इत्यपपाठः सुश्रुतवचनात् । हिम इति शीतकषाय । तद्वदिति हिम इत्यर्थ ; शारिवादिगणश्च वाग्भटोक्त ॥५॥

**स्याज्जीवनीयसिद्ध क्षीरघृत वा पित्तजे तर्षे ॥६॥**

स्याज्जीवनीयेत्यादि—चरकस्य । क्षीरघृतमिति क्षीरोत्थ घृतम । पित्तजे तर्ष इति वातजे चेत्यर्थ , न तु ससर्गजे, तेषामसूत्रितत्वात् , किंवा असूत्रितानामपि द्वन्द्वजाना गुल्मानामभिधाने यो न्याय स एवात्राप्यनुसरणीय इति ॥ ६ ॥

**तद्वद् द्राक्षाचन्दनखर्जूरोशीरमधुयुतं तोयम् ॥७॥**

तद्वदित्यादौ—नीय शीतकषायमित्याहु चक्रस्तु तद्वदित्यत्र पैत्त इति पठति, व्याचष्टे च पैत्त इत्यत्र तर्ष इति सम्बन्ध इति ॥७॥

सशारिवादौ तृणपञ्चमूले
तथोत्पलादौ मधुरे गणे वा।
कुर्य्यात् कषायांश्च तथैव युक्तान्
मधूकपुष्पादिषु चापरेषु ॥ ८ ॥

सशारिवेत्यादि—सुश्रुतस्य। सप्तमी षष्ठ्यर्थे, तेन शारिवादिगणचतुष्टयस्य कषाय कुर्य्यादित्यर्थ । मधुरो गण काकोल्यादि ; मधुरो गण इत्यत्र प्रथमो गण इति डल्वण पठित्वा विदारीगन्धादिगण इति व्याचष्टे, तन्न प्रामाणिक, बहुभिरव्याख्यातत्वात्। अनेन गणचतुष्टयेन चत्वार कषाया॰ कार्य्या इति चत्वार एव योगा । तथैव युक्तानिति शीतकषायविधिना कृतान्, सुश्रुते कषायप्रस्तावे अस्य वचनस्य पठितत्वात्, डल्वणस्तु तथैव युक्तानित्यत्र यथेरितान् वेति, पूर्वोक्तविधानेन एतेन जल दत्त्वा प्रवाते निशि वासन कुर्य्यात्। मधूकपुष्पादिषु चापरेष्विति एषाञ्च शीतकषाय कुर्य्यादित्यर्थ । मधूकपुष्पादीनि तु मधूकशोभाञ्जनकोविदारप्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तघ्नत्वेनेह पठितानि, किंवा आदिशब्द प्रकारवाची, तेन मधूकपुष्पद्राक्षाकाश्मर्य्यखर्जूराणीति चत्वारि ॥ ८ ॥

बिल्वाढकीधातकिपञ्चकोल-
दर्भेषु सिद्धं कफजां निहन्ति ॥ ९ ॥
हितं भवेच्छर्दनमेव चात्र
तप्तेन निम्बप्रसवोदकेन ॥ १० ॥
सजीरकाण्यार्द्रकशृङ्गवेर-
सौवर्चलान्यर्द्धजलप्लुतानि।
मद्यानि हृद्यानि च गन्धवन्ति
पीतानि सद्यः शमयन्ति तृष्णाम् ॥ ११ ॥

बिल्वाढकीत्यादि—बिल्वस्य मूलम्, आढकी तुवरी। सिद्धमित्यत पर जलमिति शेष, जलमिति षडङ्गविधानेनेति चक्र, अन्ये क्वाथमाहु । अत्र सुश्रुतटीकाकृतो धातकीपञ्चकोलस्थाने धान्यकपञ्चमूलमिति पठन्ति, पञ्चमूल स्वल्पमित्याहु, सर्वासु तृष्णासु पित्तसम्भवत्वेन पञ्चकोलमनुचितमित्याहु । दर्भ उलुक ।

लाजोदकं मधुयुतं शीतं गुडविमर्दितम्।
काश्मर्य्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः॥ १४॥

लाजोदकमित्यादि—लाजचूर्णभावितमुदकं शीतकषायो वा। काश्मर्य्यं गाम्भारीफलम्॥ १४॥

अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः॥ १५॥

अतिरूक्षेत्यादि—मधुरगणसाधितेनात्र सन्यङ्मधुरता ज्ञेया॥ १५॥

आम्रजम्बुकषायं वा पिबेन्माक्षिकसंयुतम्।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति॥ १६॥

आम्रजम्बुकषाय वेति आम्रजम्ब्वोः फलास्थि उच्यते; पल्लवक्काथोऽपि युज्यते, 'जम्ब्वाम्रपल्लवशृत क्षौद्र दत्त्वा सुशीतलम्' इति पठितत्वात्॥ १६॥

वटशुङ्गसितालोध्रदाडिमं मधुकं मधु।
पिबेत् तण्डुलतोयेन च्छर्दितृष्णानिवारणम्॥ १७॥

वटेत्यादौ शुङ्गादीना चूर्णम्॥ १७॥

गोस्तनेक्षुरसः क्षीरयष्टीमधुमधूत्पलैः।
नियतं नस्यनः पानैस्तृष्णा शाम्यति दारुणा॥ १८॥
क्षीरेक्षुरसमाध्वीकै. क्षौद्रशीधुगुडोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः॥ १९॥

गोस्तनेत्यादि—गोस्तना द्राक्षा। एभि प्रत्येक नस्यम्। माहेश्वरे तु द्राक्षादित्रय द्राक्षायष्टिमधुनीलोत्पल कल्कीकृत्य प्रक्षिप्य मधु च प्रक्षिप्य सर्वमालोड्य पेयमिति। तथा वक्ष्यमाणक्षीरादिभि प्रत्येक गण्डूषा, बहुवचननिर्देशात्। यद्यपि तालुशोषे घृत निषिद्ध, यदुक्त 'तृष्णाच्छर्दिपरीताश्च गर्भिण्यस्तालुशोषिण। न पिबेयुर्घृतम्' इति तथापि चरकमवादादत्र बलवतो वृष्यान्नयुक्त घृतपान बोध्यम्, अतो विशिष्टविधित्वान्न विरोध, यथा बलवाश्च तालुशोषेऽपि पिबेद् घृत वृष्यमन्नमभ्यस्येच्चेति, किंवा वातोल्वणावस्थायामेतद् घृतपान बोध्यम्। तालुशोषश्च तृष्णाप्रकार एव, तेनेह सङ्गतमस्याभिधानम्॥ १८॥ १९॥

तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा॥ २०॥

मूर्च्छाच्छर्दितृषादाहस्त्रीमद्यभृशकर्शिताः।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये ॥ २१ ॥

घृतमण्डमिति घृतस्योपरिभागः, अतएव घृतस्योपरि स्त्यानो भाग इति काम-चिकित्सिते चक्रेणाप्युक्तः। श्रीकण्ठस्तु घृतस्योपरिच्छन्नभागं घृतमण्डमित्याह। मूर्च्छेत्यादि—स्पष्टम् ॥ २० ॥ २१ ॥

धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २२ ॥

धान्याम्लमित्यादि—धान्याम्लं काञ्जिकम् ॥ २२ ॥

वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान्।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २३ ॥

सन्दधाति मुखे व्रणानिति रोपयतीत्यर्थः ॥ २३ ॥

कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २४ ॥

कोलेत्यादौ—चुक्रीका चाङ्गेरी, चुक्रिकेति चुकाइ इति ख्याता। मुखालेप इति मुखकुहरे लेपः, कपोलादौ लेप इति तु निश्चलः ॥ २४ ॥

वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम्।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ २५ ॥

वारि शीतमित्यादि—पित्ततृष्णायामयं योगः। आकण्ठतोयपानादनु किञ्चित् मधुपानमित्युपदिशन्ति वृद्धाः ॥ २५ ॥

वटशुङ्गामयक्षौद्रलाजनीलोत्पलैर्दृढा।
गुटिका वदनन्यस्ता क्षिप्रं तृष्णां नियच्छति ॥ २६ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम्।
भोजयेत् तेन शाम्येत्तु छर्दिस्तृष्णा चिरोत्थिता ॥ २७ ॥

वटशुङ्गेत्यादि—वटशुङ्गो वटप्ररोहः, आमयः कुष्ठम्। मधु तु यावता काठिन्ना गुडिका भवति तावन्मात्रं देयम्। ओदनं रक्तशालीनां शीतमिति मद्यस्क-पानीयमक्तम् ॥ २६ ॥ २७ ॥

पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन्।

न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्य्यते ॥ २८ ॥
इति तृष्णाचिकित्सा।

---

प्रमत्त तृष्णाया जलस्याप्रदाने दोषमाह पूर्वामयेत्यादि—पूर्वामयातुर. सन् ज्वररक्तपित्तादिरोगक्लिष्ट सन्। दीन इति तृष्णापीडितत्वेनैव क्लान्तमना। कथं म्रियत इत्याह तृषित इत्यादि ॥ २८ ॥

इति तृष्णाचिकित्सा-विवृतिः।

---

# अथ मूर्च्छाचिकित्सा।

सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलश्च।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छास्वनिवारितानि ॥ १ ॥

तृष्णाया मोहो भवतीत्यनन्तर मोहचिकित्सामाह, सेकेत्यादि—सुश्रुतस्य। मणयो मुक्तास्फटिकप्रभृतय ते च सहारा हारारोपिता इत्यर्थ। पानानि च गन्धवन्तीति कर्पूरादियोगात् सुरभीणि पानीयानीत्यर्थ। सर्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफकृताया मूर्च्छायामपि हेतुप्रत्यनीकचिकित्साकरणे वारणार्हता, एते शीतविधयो व्याधिप्रत्यनीकतया पित्तानुबन्धाच्च न वारणीया इति दर्शयति ॥ १ ॥

सिद्धानि वर्गे मधुरे पयांसि
सदाडिमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च
मूर्च्छासु शस्ताश्च सतीनमुद्गाः ॥ २ ॥

वर्गे मधुर इति काकोल्यादि। सदाडिमा इति—दाडिमाम्लसहिता इत्यर्थः। सतीनो वर्त्तुलकलाय ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत् ।
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥ ३ ॥

यथादोष कषायाणि ज्वरघ्नानि प्रयोजयेदिति वातादिमूर्च्छासु यथाक्रम वातादि-कषायाणि यानि तानि प्रयोजयेदित्यर्थः । रक्तजायामिति रक्तदर्शनजायाम् ॥ ३ ॥

मद्यजायां वमेन्मद्यं निद्रां सेवेद्यथासुखम् ।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥

मद्यजायामिति मद्यसेवनजायाम् ॥ ४ ॥

कोलमज्जोषणोशीरकेशरं शीतवारिणा ।
पीतं मूर्च्छां जयेत् लीढ्वा कृष्णां वा मधुसंयुताम् ॥५॥

कोलमज्जादौ—ऊषण मरिचम् ॥ ५ ॥

महौषधामृताक्षुद्रापौष्करग्रन्थिकोद्भवम् ।
पिबेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च ॥ ६ ॥
शतावरीबलामूलद्राक्षासिद्धं पयः पिबेत् ।
ससितं भ्रमनाशाय बीजं वाट्यालकस्य वा ॥ ७ ॥
पिबेद् दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
त्रिफलाया प्रयोगो वा प्रयोग पयसोऽपि वा ॥ ८ ॥

महौषधेत्यादौ—क्षुद्रा कण्टकारी, ग्रन्थिक पिप्पलीमूलम् । भ्रम स्मृति-भ्रंशो मोहश्चक्रवद्भ्रान्तिश्च । प्रयोगोऽभ्याम ॥ ६—८ ॥

रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ९ ॥
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः ।
सप्ताहात् पथ्यभुजो मदमूर्च्छाकासकामलोन्मादान् ॥१०॥

कौम्भ सर्पिर्दशवर्षात्मकम्, अन्ये तु ' स्थित वर्षशत श्रेष्ठ कौम्भ सर्पिस्तदुच्यते ' ॥ ९ ॥ १० ॥

अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥ ११ ॥

अञ्जनानीति तीक्ष्णान्यञ्जनानि अपस्मारोक्तानि । अवपीडा नासिकाया निर्गुण्ड्यादिरसा अवपीड्य ये दीयन्ते । धूमा वैरेचनधूमा । प्रधमनं चूर्णनस्यम् ।

मर्म्माभिरित्यादौ पीडा नखान्तर इति नखमांसयोर्मध्ये पीडनम् ॥ ११ ॥

लुञ्चनं केशरोम्णाञ्च दन्तैर्दंशनमेव च।
आत्मगुप्तावघर्षश्च हितास्तस्यावबोधने ॥ १२ ॥
इति मूर्च्छाचिकित्सा।

---

आत्मगुप्ता शूकशिम्बी ॥ १२ ॥
इति मूर्च्छाचिकित्सा-विवृति।

# अथ मदात्ययचिकित्सा।

मन्थ खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः॥
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १ ॥

मूर्च्छातन्मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह। मद एवात्ययकारको मदात्ययः, किंवा मदशब्देनेह मदहेतुतया मद्यमुच्यते, तेन कृतोऽत्ययो मदात्ययः। मन्थ इत्यादि। द्रवेणालोडितशक्तवो मन्था, द्रवश्चेह खर्जूरादीनां ग्राह्य। अम्लीका तिन्तिडीफलम्। छन्दोऽनुरोधाद् ह्रस्वः। सतीनेति सतीनो वर्त्तुलकलायः। सतीनमुद्गमिश्रं वेति पाठे छागरसस्य विशेषणं, चरके हि एतद्वचनात् पूर्वं छागरसमित्युक्तम् ॥ १ ॥

सतीनमुद्गमिश्रान् वा दाडिमामलकान्वितान्।
द्राक्षामलकखर्जूरपरूपकरसेन वा।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥२॥

मद्यमित्यादि—सौवर्च्चलव्योषन्तु लवणकटुत्वमात्रकारकं देयम्। किञ्चिज्जलमष्टभागिकमित्याहुः ॥ २ ॥

मद्यं सौवर्च्चलव्योषयुक्तं किञ्चिज्जलान्वितम्।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ३ ॥
मुद्गयूपः सितायुक्तः स्वादुर्वा पैशितो रसः।

पित्तपानात्यये योज्यः सर्वतश्च क्रिया हिमाः ॥ ४ ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहित ॥ ५ ॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्।
आभिः क्रियाभिर्मिश्राभि शान्ति याति मदात्यय ॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ॥ ६ ॥

मुद्गयूष इत्यादि—स्वादुरित्यनेन सस्कारार्थं कटुद्रव्योपयोगोऽत्र न कार्य्य इति दर्शयति ॥ ३—६ ॥

लङ्घनाद्यैः कफे क्षीणे जातदौर्बल्यलाघवे।
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः ॥ ७ ॥

यस्यामवस्थाया क्षीरप्रयोग कर्त्तव्यस्तामाह लङ्घनाद्यैरिति—आद्यशब्दात् शोधनादीना ग्रहणम् ॥ ७ ॥

क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत् ॥ ८ ॥

क्षीरप्रयोगमित्यादि—एतद्वचनात् पूर्वं पयसा च हृते रोगे बले जाते निवर्त्तयेदिति वचनयन्ति, तेनात्र क्षीरप्रयोगमित्यत्र, पूर्वोक्तेन निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोग क्रमेण निवर्त्तयेत्, मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थ ॥ ८ ॥

## पुनर्नवाद्यं घृतम्

पय पुनर्नवाक्वाथयष्टीकल्कप्रसाधितम्।
घृतं पुष्टिकरं पानान्मद्यपानहृतौजसः ॥ ९ ॥

पय पुनर्नवाक्वाथेत्यादौ—क्षीर घृतसमम्, क्वाथस्त्रिगुणश्चतुर्गुणो वेत्याहु ॥ ९ ॥

## अष्टाङ्गलवणम्

सौवर्च्चलमजाज्यञ्च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ १० ॥

सौवर्च्चलेत्यादि—अत्र सौवर्च्चलादीना समभागता, त्वगेलामरिचाना-

मेकभागापेक्षया प्रत्येकमर्द्धभागिकत्वम्, शर्कराभागोऽपि सौवर्चलाधिकनमद्रव्य-मम ॥ १० ॥

**चव्यं सौवर्च्चलं हिङ्गु पूरकं विश्वदीप्यकम् ।**
**चूर्णं मद्येन पातव्यं पानात्ययरुजापहम् ॥ ११ ॥**

चव्यमित्यादौ—पूरकं बीजपूरस्य फलत्वगिति निश्चल. । दीप्यक यमानी ॥ ११ ॥

**जलाप्लुतश्चन्दनरूषिताङ्गः**
**स्रग्वी सभक्ष्यां पिशितोपदंशाम् ।**
**पिबन् सुरां नैव लभेत रोगान्**
**मनोमतिघ्नश्च मदं न याति ॥ १२ ॥**

मद्य येन प्रकारेण विकार न जनयेत् तदाह जलेत्यादि—सुश्रुतस्य । चन्दनेन रूषित लिप्तमङ्ग यस्य । पिशित मास उपदश भक्ष्यो यस्या सा तथा । मनोमति-घ्नमिति विशेषणात् द्वितीयादिमद न प्राप्नोति, प्रथमन्तु मनोऽनुपघातक लभत एवेत्यथ ॥ १२ ॥

**द्राक्षाकपित्थफलदाडिमपानकं यत्**
**तत् पानविभ्रमहरं मधुशर्कराढ्यम् ॥ १३ ॥**

द्राक्षेत्यादि—सुश्रुतस्य । द्राक्षादिभि पानक सूदशास्त्रानुसारेण कार्य्यम् ॥ १३ ॥

**पथ्याक्काथेन संसिद्धं घृतं धात्रीरसेन वा ।**
**सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥ १४ ॥**
**सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम् ।**
**सद्य प्रशमयेत् पीतमात्रमेवारि शीतलम् ॥ १५ ॥**
**वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्वापि ।**
**शाम्यति पूगफलमदश्चूर्णरुजा शर्कराकवलात् ॥ १६ ॥**
**शङ्खचूर्णरजोघ्राणात् स्वल्पं मदमपोहति ॥ १७ ॥**
**कूष्माण्डकरसः सगुड शमयति मदमाशु मदनकोद्रवजम् ॥ १८ ॥**

धौस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ १६ ॥

इति मदात्ययचिकित्सा ।

पथ्येत्यादि—घृतद्वयमकल्कम् । अत्रैव मदत्वसामान्यात् पृथक् पृथक् चिकित्सा-माह सच्छर्दीत्यादि । वन्येत्यादि—वन जल तद्भवो वन्य शङ्ख इत्यर्थ इति केचित्, करीप इति शुष्कगोमय, अन्ये तु वन्यकरीष वनभवकरीषमाहु । एते च वन्यकरीषादय पृथक् प्रयोक्तव्या । चूर्णजेति अतिमात्रचूर्णभक्षणे यो रसनादि-दाह. । एतच्च सम्पूर्णश्लोकानुरोधाल्लिखितम् । स्वल्प मद पूगभक्षणजमेव । कूष्मा-ण्डकेत्यादि—मदन तृणधान्यविशेष. मयनघास इति ख्यात । धौस्तूरज धुस्तूरफल-भक्षणजम् ॥ १४–१६ ॥

इति मदात्ययचिकित्सा-विवृति ॥

# अथ दाहचिकित्सा ।

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्वमिष्यते ॥ १ ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभि ।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ २ ॥
छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा ।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजित ॥ ४ ॥
सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥ ५ ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये ॥ ६ ॥

मदात्ययवद्दाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकार एव दाहचिकित्सा । शदित्यादि—कोलेत्यादि द्वितीयो योगः, अत्रापि दिह्यादिति योज्यम् । लामज्जमु-शीर, शुक्त सन्धानविशेष , तालवृन्त तालपत्रनिर्मितव्यजनम् ॥ १–६ ॥

क्षीरै' क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः ।
अन्तर्दाहं प्रशमयेदेतैरन्यैश्च शीतलै' ॥ ७ ॥

चोरिकषायो, वटोडुम्बरादिक्काथ । क्षीरादिकञ्चैतत् पानपरिषेकादौ योज्यम् ॥ ७ ॥

## कुशाद्यं तैलं घृतञ्च

**कुशादिशालपर्णीभिर्जीवकाद्येन साधितम् ।**
**तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ८ ॥**

कुशादीत्यादि—कुशादिपञ्चमूल तृणपञ्चमूल, तच्च सुश्रुतोक्त कुशकासनलदर्भ-काण्डेक्षुमूलरूपम् । अत्र शालपर्णीशब्देन विदारीगन्धादिगणस्य ग्रहणमिति वृन्द-टिप्पणी, अन्ये तु शालपर्ण्यादिपञ्चमूलस्य ग्रहणमित्याहु । निश्चलस्त्वादिशब्दा-भावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह । जीवकाद्येनेति जीवकाद्यष्टवर्गेण, जीव-काद्यष्टवर्गश्च जीवकर्षभकमेदामहामेदाकाकोलीक्षीरकाकोलीऋद्धिवृद्धय, एव सर्वत्र सुश्रुतयोगे जीवनीयाष्टकम् । चरकयोगे पुनरेव ऋद्धिवृद्धिरहितमाषपर्णीमुद्गपर्णी जीवन्ती-मधुकसहित जीवनीयदशकं ज्ञेयम् । अत्र कुशादिशालपर्णीभिः क्वाथ , जीवकाद्येन कल्क । अन्ये तु कल्कक्वाथानिर्देशे गणात् तस्मात् समावपेत्' इति वचनात् सर्वैरेव कल्कक्वाथावित्याहुः ॥ ८ ॥

**फलिनी लोध्रसेव्याम्बु हेमपत्रं कुटन्नटम् ।**
**कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ९ ॥**

फलिनीत्यादौ—फलिनी प्रियङ्गु । सेव्यमुशीरम्, अम्बु बालकः हेम नाग-केशर, पत्र तेज पत्र, कुटन्नट कैवर्त्तमुस्तक, कालीयक कालीया इति ख्यात, पीत-काष्ठ, गन्धद्रव्यविशेष , श्वेतचन्दनमिति काश्चित्, कालीयकक्वाथश्च पेषणार्थमिति वदन्ति ॥ ९ ॥

**ह्रीवेरपद्मकोशीरचन्दनक्षोदवारिणा ।**
**सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ १० ॥**

**इति दाहचिकित्सा ।**

ह्रीवेरेत्यादौ—क्षोद चूर्णम् । एषां चूर्णानि शीतलजलेन मिश्रयित्वा अवगा-हन कार्य्यम् ॥ १० ॥

इति दाहचिकित्सा-विवृति ।

# अथोन्मादचिकित्सा ।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम् ।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः ॥ १ ॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते ।
उन्मादे तच्च कर्त्तव्यं सामान्याद्धेतुदूष्ययोः ॥ २ ॥

यद्यपि मदात्ययस्य उन्मादहेतुत्वेन तथा पूर्वोक्तरीत्या च मदात्ययानन्तरमुन्माददाहावेव वक्तुमुचितौ, तथापि सूचिकटाहन्यायेन दाहमभिधाय उन्मादचिकित्सितमुच्यते उन्माद इत्यादि—परो वस्त्यादिकक्रम इति पश्चात् स्नेहवस्तिनिरूहण-शिरोविरेचनात्मकः क्रमः कार्य्यः । चरकेऽप्युक्तं 'निरूहणं स्नेहवस्तिः शिरसश्च विरेचनम् । ततः कुर्य्यात् यथादोषं तेषां भूयस्त्वमाचरेत्' इति । सामान्याद्धेतुदूष्ययोरिति, उन्मादापस्मारयोर्हेतुर्मनःउपघातादिः दूष्यञ्च हृदयं समानमित्यर्थः । सामान्याद्दोषदूष्ययोरिति केचित् पठन्ति ॥ १ ॥ २ ॥

ब्राह्मीकूष्माण्डीफलषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः ।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥
दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं वैककं घृतम् ॥ ४ ॥

ब्राह्म्यादयश्चत्वारो योगाः । कूष्माण्डीफलमत्र पुराणं ग्राह्यमित्याहुः ॥ ३-४ ॥

उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ ५ ॥

पुराणघृतलक्षणमाह उग्रगन्धमित्यादि—चरकस्य । चरकटीकाकृतस्तु केचिदिमं श्लोकमनार्षं वदन्ति, केचिदेकवर्षातीतं घृतं पुराणमिति ब्रुवते तन्नाल्परमवादात् ॥ ५ ॥

श्वेतोन्मत्तोत्तरदिङ्मूलसिद्धस्तु पायसः ।
गुडाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥

श्वेतेत्यादि—श्वेतोन्मत्तः श्वेतधुस्तूरस्तस्य उत्तरदिशि स्थितं मूलं ग्राह्यम् । महेश्वरस्तु उत्तरदिशि स्थितं धवलधुस्तूरमूलं पिष्ट्वा पलं १, क्षुद्रतण्डुलं पलं ८,

दुग्ध शराव ४, पायस साध्य, तदनुरूपे गुडघृते न्त्वा खादयमित्याह ॥ ६ ॥

उन्मादे समधुः पेय शुद्धो वा तालशाखज ।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥

उन्माद इत्यादि—शुद्ध इति केवल.। तालशाखज इति छान्दसत्वात् ह्रस्व । रस इति छेद , तेन कोमलतालशाखाभवो रस मधुप्रक्षेपेण, शुद्धो वा मधुना विनापि ॥ ७ ॥

अपक्वचटकीक्षीरपीतोन्मादविनाशिनी ।
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत् ॥ ८ ॥

अपक्वचटकीति आमचटकीं कल्कीकृत्य। बद्धमित्यादि । एतच्च स्रोतोविशुद्ध्य-थमुद्वेजनार्थञ्च ॥ ८ ॥

सिद्धार्थको हिङ्गु वचा करञ्जौ देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगद पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ९ ॥

सिद्धार्थक इत्यादि—अत्र करञ्जद्वयस्य त्वगित्याहु , श्वेता श्वेतापराजिता, कटभी लताफटकीति ख्याता, अन्ये तु करञ्ज इत्याहु , शिरीषस्य फलम् । अगद इति सयोगविषहर , कृत्या अभिचार, राजद्वारे च शस्यते वशीकरणत्वात् । एतेनेति सिद्धार्थकादीना कल्केन ॥ ९ ॥

## त्र्यूषणाद्या वर्त्तिः

त्र्यूषणं हिङ्गुलवणं वचा कटुकरोहिणी ।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपा. ॥
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता ।

चातुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥ १० ॥

त्र्यूषणमित्यादि स्पष्टम् ॥ १० ॥

शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम् ।
ताडनञ्च मनोबुद्धिस्मृतिसंवेजनं हितम् ॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम् ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ११ ॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ।
परस्परं प्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ १२ ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैश्च तान् जयेत् ॥ १३ ॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥
कल्याणकं महद्वापि दद्याद्वा चैतसं घृतम् ॥
तैलं नारायणञ्चापि महानारायणं तथा ॥ १४ ॥

शुद्धस्येत्यादि—चरकस्य । शुद्धस्येति यमितस्य आचारविभ्रंशे अत्युन्मादे । संवेजनमुद्वेजनं; तर्जनं वचसा, विस्मृतेर्हेतोरिति उन्मादहेतुभयहर्षादिविस्मारकतया प्रभावादेव मनः प्रकृतिं स्वभावं नयन्ति । परस्परप्रतिद्वन्द्वैरिति अन्योन्यप्रत्यनीकैः । तस्य तत्सदृशप्राप्तैरिति भावे क्त, तत्सदृशप्रापणैरित्यर्थः । सान्त्वाश्वासैरिति सान्त्व सामप्रयोग वशीभूतकरणार्थं उपायविशेष, आश्वास मन्तोपवचनम । उत्सादन चूर्णघर्षणम् । नारायणतैल महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥ ११–१४ ॥

## पानीयकल्याणकं घृतम्

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैः प्रस्थसमन्वितैः ।

चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ॥
अपस्मारे ज्वरे कासे शोषे मन्दानल क्षये।
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ॥
वम्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च।
कण्डूपाण्ड्वामयोन्मादे विषमेहगरेषु च ॥
भूतोपहतचित्तानां गद्गदानामरेतसाम् ॥
शस्तं स्त्रीणाञ्च वन्ध्यानामायुर्वर्णबलप्रदम् ॥
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम्।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ १५ ॥

विशालेत्यादि—विशाला गोरक्षकर्कटी, कौन्ती रेणुका, एलवालुक स्वनामख्यात सुगन्धिद्रव्य, स्थिरा शालपर्णी, नत तगरपादुका, तदभावे शियली छोपर, केशरं नागकेशर, मालती जाती, तस्या कुसुम, नवमिति कुसुमविशेषणम्। अष्टाविंशतित्व कल्काना पाठादेव सिद्ध, किमर्थमुच्यते अष्टाविंशतिभिरिति? अत्र यद्यपि त्रिफलाया प्रत्येकमेव भागो गृह्यते उत्सर्गसिद्धत्वात्, तथापि त्रिफलाया प्रत्येकभागग्रहणदार्ढ्यार्थम् अष्टाविंशतिभिरित्युक्तम्। यद्यपि त्रिफलाशब्देन द्राक्षाकाश्मर्य्यपरूषका उच्यन्ते तथापि हरीतक्यादित्रिफलाया एवात्र ग्रहण प्राधान्यादेव, एवमन्यत्रापि। पुसवनेष्विति पुत्रकारकयोगेषु ॥ १३ ॥

## क्षीरकल्याणकं घृतम्

द्विजलं सचतु क्षीरं क्षीरकल्याणकन्त्विदम् ॥ १६ ॥

तदेव घृत यदा जलस्याष्टौ शरावान्, क्षीरस्य षोडश शरावान् दत्त्वा पच्यते तदा क्षीरकल्याणक भवति ॥ १६ ॥

## महाकल्याणकं घृतम्

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम्।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥
वीराद्धिमाषकाकोलीस्वयंगुप्तर्षभर्द्धिभि·।
मेदया च समै· कल्कैस्तत् स्यात् कल्याणकं महत् ॥
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ १७ ॥

भ्य एवेति कल्याणकोक्तविशालादिभ्य । स्थिरादीनीत्युक्तेर्विदारीगन्धादेः पञ्चमूलस्यापि ग्रहणं स्यादत आह एकविंशतिमिति, तद्गुणसंविज्ञानबहुव्रीहिशङ्का-निरासार्थं वा एकविंशतिमित्युक्तम् । गृष्टिरेकवारप्रसूता धेनु । अत्र चतुर्गुणक्षीरस्य निर्दिष्टत्वादुत्सर्गसिद्धो द्रव एव देय, तेनानिर्दिष्टमानक्काथोऽत्र स्नेहसम एवेति पञ्चगुण पाक, युक्तश्चैतत्, पञ्चप्रभृति यत्र स्युरित्यादिपरिभाषार्थनास्यार्थस्य समानन्यायत्वादिति केचित् । अन्ये तु नीरेणैवात्र चतुर्गुणे प्राप्तेऽत्र कषाय 'एकेनापि चातुर्गुण्यम् इत्यादिपरिभाषाया अविषयत्वेन 'स्नेहात् तोयं चतुर्गुणम्' इति द्रवचातुर्गुण्यपरिभाषाया क्षीरमानसामर्थ्याद्वा चतुर्गुणो देय इति वदन्ति । वीरा पृश्निपर्णी, क्षीरविदारीत्यन्ये । द्विमाषेत्यनेन राजमाष-क्षेत्रमाषयोर्ग्रहणमिति केचित्, अन्ये तु मुद्गपर्णीमाषपर्ण्योर्ग्रहणमित्याहु । अपरे तु द्विशब्दस्य काकोलीत्यनेन सम्बन्धात् क्षीरकाकोल्या अपि ग्रहणमित्याहु । तन्न, वाग्भटमतविरोधात्, अन्ये तु वीरार्द्रमाषेति पाठान्तरम्; आर्द्रमाषोऽशुष्कमाष इति व्याचक्षते । वीरादीन्यपरिमितगृहीतानीत्येके, वीरादीना प्रत्येकमेकपलमिति महेश्वर ॥१७॥

## चैतसं घृतम्

पञ्चमूल्यावकाश्मर्यौ रास्नैरण्डत्रिवृद्बला ।
मूर्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमै ॥
कल्याणकस्य चाङ्गेन तद्घृतं चैतसं स्मृतम् ॥
सर्वचेतोविकाराणां शमनं परमं मतम् ।
घृतप्रस्थोऽत्र पक्तव्य. क्वाथो द्रोणाम्भसा घृतात् ।
चतुर्गुणोऽत्र सम्पाद्यः कल्क कल्याणकैरित ॥ १८ ॥

पञ्चमूल्याविति दशमूली गाम्भारीरहिता । द्विपलिकैरिति एषां प्रत्येक द्विपलन् । कल्याणकस्य चाङ्गेनेति पानीयकल्याणकोक्तकल्केन यथोक्तमानेनेत्यर्थ , अन्ये तु यथोक्तमान परित्यज्य घृतात् पादिक मान गृह्णन्ति । यद्यपि 'द्रव्यमापोत्थित कार्य्यं दत्त्वा षोडशिक जलम् । पादावशिष्ट कर्त्तव्यमेष क्वाथविधि स्मृत' इति कृष्णात्रेयपरिभाषया त्रिंशत्पले क्वाथ्ये षष्टि शरावा भवन्ति जलस्य, तथापि क्वाथस्य घृताच्चातुर्गुण्यार्थं द्रोणाम्भसेति चक्रेणोक्तम् ॥ १८ ॥

## महापैशाचिकं घृतम्

जटिला पूतना केशी चारटी मर्कटी वचा ।

त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥
वयःस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम्।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥
महापैशाचिकं नाम घृतमेतद् यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम् ॥ १६ ॥

महापैशाचिके जटिला मामी, पूतना हरीतकी, केशी भूतकेशी, चारटी कुम्भाए, पद्मभृणालमित्यन्ये, मधुयष्टीत्यपरे, मर्कटी शूकशिम्बी, जया जयन्ती, वीरा चीरकाकोली, पृश्निपर्णीत्यपरे; चोरकश्चोरपुष्पी, वयःस्था ब्राह्मी, गुडूचीत्यन्ये अपरे तु निर्गुण्डीत्याहुः; शूकरी वाराहिका, तदभावे चर्मकारालुकः, छत्रा मधुरिका, अतिच्छत्रा शतपुष्पा; पलङ्कषा गुग्गुलु, महापुरुषदन्ता शतावरी; वयःस्था शुकानना, ब्राह्मीत्यन्ये, नाकुलीद्वय रास्नाद्वय रास्ना गन्धरास्ना च, कटम्भरा कटभी प्रसारणी वा, वृश्चिकाली वृश्चिकपत्री, विछाटीति ख्याता, स्थिरा शालपर्णी। स्वल्पपैशाचिकस्याभावात् महच्छब्दोऽस्य महागुणकारकत्वादित्याहुः, अन्ये तु जटिला स्थिराम्बु भूकेशीत्यादिना स्वल्पपैशाचिकस्यापि तन्त्रान्तरे पठितत्वात् तदपेक्षयास्य महत्त्वमाहुः ॥ १६ ॥

## हिङ्ग्वाद्यं घृतम्

हिंगु सौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ २० ॥

हिंग्वित्यादौ—व्योषस्य प्रत्येकं द्विपलांशता ॥ २० ॥

## लशुनाद्यं घृतम्

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु द्वयाढकेऽपां विपाचयेत् ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकैः रसैः ॥

दाडिमाम्बुसुरामस्तुकाञ्जिकाम्लैस्तदर्द्धिकैः ।
साधयेत् त्रिफलादारुलवणव्योषदीप्यकै· ॥
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकै· ।
सिद्धमेतत् पिबेच्छूलगुल्माशोंजठरापहम् ॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषक्रिमिज्वरान् ।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति ॥ २१ ॥

लशुनस्येत्यादौ—अविनष्टस्येति विशुद्धस्य; तुलार्द्ध पञ्चाशत् पलानि, नदर्द्ध दशमूलस्येति दशमूलस्य पञ्चविंशति' पलानि, पादशेष इत्याढके, लशुनस्य रस तथेति प्रस्थमेव । दाडिमाम्बु दाडिमरस । तदर्द्धिकैरित्यत्र तच्छब्देन प्राधान्यात् प्रत्यासत्त्या च घृतपरिमाणात् कोलादिरसै प्रत्येकमर्द्धप्रस्थैरित्यर्थ , अन्ये तु नदर्द्धिकैरित्यत्र तच्छब्देन पादावशिष्टकषाय परमिष्यते, तेन लशुनस्य रसादीना दशानामेव शरावार्द्धिकत्वेन प्रत्येक प्रस्थमानमित्याहु ॥ २१ ॥

सर्पि पानादिरागन्तोर्मन्त्रादिश्चेष्यते विधि· ॥
पूजावल्युपहारेष्टिहोममन्त्राञ्जनादिभि ।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥ २२ ॥

आगन्तून्मादचिकित्सामाह सर्पिरित्यादि—सर्पिरिह भूतहर चैतसादि । पूजेत्यादौ वलि पूजोपकरणम्, उपहार उपढौकनम् । किंवा पूजावल्युपहार उपढौकनमेव । अञ्जनादिभिरिति आदिशब्दात् स्वस्त्ययनादिक बोध्यम्, यदुक्त 'भूतानामधिप देवमीशान जगत प्रभुम् । पूजयन् यत्नतो नित्य नुदत्युन्मादज भयम्' इति ॥ २२ ॥

कृष्णामरिचसिन्धूत्थमधुगोपित्तनिर्मितम् ।
अञ्जनं सर्वभूतोत्थमहोन्मादविनाशनम् ॥ २३ ॥

कृष्णेत्यादौ—गोपित्त गोरोचना ॥ २३ ॥

दार्वीमधुभ्यां पुष्यायां कृतञ्च गुडिकाञ्जनम् ।
मरिचं वातपे मासं सपित्तं हितमञ्जनम् ।
वैकृतं पश्यत· कार्य्यं दोषभूतहतस्मृते ॥ २४ ॥

दार्वीत्यादि स्पष्टम् । मरिचमित्यादि—मरिच गोरोचनया आतप मासैक

भावितमञ्जन कर्त्तव्यम् । दोषभूतहतस्मृतेरिति दोषेण भूतेन वा हता स्मृतिर्यस्येत्यर्थ ॥ २४ ॥

निम्बपत्रवचाहिंगुसर्पनिर्मोकसर्षपैः ।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ २५ ॥

निम्बेत्यादि स्पष्टम ॥ २५ ॥

कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः ।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥२६॥

कार्पमित्यादि—कार्पासास्थि कार्पासबीजम्, निमाल्य शिवनिर्माल्यम्, पिण्डीतक मदनफलम्, त्वग्वाशीति त्वगुशीरम्, वाशी वशलोचना, अन्ये तु त्वग्वाशी वशस्य त्वगित्याहु । वृषदशो विडाल., तस्य विट् पुरीषम्, केशी भूतकेशी, वाल इत्यपरे ॥ २६ ॥

ब्रह्मराक्षसजिन्नस्यं पक्वैन्द्रीफलमूत्रजम् ।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ २७ ॥

ब्रह्मेत्यादि—पक्वैन्द्रीफल परिणतगोरक्षकर्कटीफल गोमूत्रेण सह योज्य नस्य विधेयम् । साज्यमित्यादौ श्वेता श्वेतापराजिता, ज्येष्ठाम्बु तण्डुलाम्बु ॥ २७ ॥

देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ २८ ॥

देवेत्यादौ—क्रूरमिति ताडनबन्धनादिकम । एतच्च परिवर्जन वैद्यातुरोपघातपरिहारार्थम्, उक्तञ्च "वैद्यातुरो विनिघ्नन्ति एव क्रुद्धा महौजस " इति ॥ २८ ॥

प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ २९ ॥

इत्युन्मादचिकित्सा ।

प्रसाद इत्यादि—स्पष्टम् ॥ २९ ॥

इत्युन्मादचीकित्साविवृति ।

# अथापस्मारचिकित्सा ।

वातिकं बस्तिभि प्राय पैत्तं प्रायो विरेचनै. ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ १ ॥

तुल्यचिकित्सितत्वादुन्मादानन्तरमपसारचिकित्सितमुच्यते, वातिकमित्यादि- वमनप्रायैरिति वमनप्रधानै ॥ १ ॥

सर्वत सुविशुद्धस्य सम्यगाश्वसितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥ २ ॥

सर्वत इत्यूर्द्ध्वमधश्च शुद्धस्य। आश्वसितस्येति संशोधनानन्तर ममर्जनक्रमेण मजातबलस्य ॥ २ ॥

मनोह्वा तार्च्यजश्चैव शकृत् पारावतस्य च ।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः ॥ ३ ॥

मनोह्वा मन शिला, तार्च्यज रसाञ्जनम् ॥ ३ ॥

यष्टिहिङ्गुवचावक्रशिरीपलशुनामयैः ।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥ ४ ॥

यष्टेत्यादौ—वक्र तगरम्, शिरीषस्य फलम्, आमय कुष्ठम् ॥ ४ ॥

पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ ५ ॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ।
तुण्डै. पक्षै पुरीषैश्च धूपनं कारयेद्भिषक् ॥ ६ ॥

पुष्येत्यादि—पुष्यानक्षत्रे यदृच्छया मृतकुक्कुरस्य पित्तम्, ग्राह्यमित्याहु, उलूक पेचक ,कीट पश्चिमदेशजो वृश्चिक । एषां तुण्डादिक यथासम्भव आहृतम् ॥ ५ । ६ ॥

कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्ती प्रकल्पयेत् ॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते ।
विषपीते जलमृते चैता स्युरमृतोपमा ॥ ७ ॥

काय्यस्थानित्यादि—कायस्थो निर्गुण्डी। शारदानिति मुद्‌गविशेषण ज्येष्ठ-मासोद्भवमुद्‌गनिरासार्थम्। वर्त्तीरित्यञ्जनवर्त्ती। विषपीत इति पीतविषे; गर संयोग-विषम्। जलमृत इति जलपानेन मृतप्राये, सर्वथा मृते हि भेषज विफलमिति। जलमृतलक्षण यथा "विष्टब्धपायुमूर्द्धाक्षमाध्मातोदरमेहनम्। विद्याज्जलमृत जन्तु गात्रपादकराननम्" इति ॥ ७ ॥

अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ ८ ॥

अपेतराक्षसीत्यादि—अपेतराक्षसी श्वेततुलसी, तस्या स्वरस इत्यर्थ। पूतना हरीतकी, केशी भूतकेशी, चोरश्चारपुष्पी। चरकोक्तपूर्वयोगे वस्तमूत्रसन्दर्शनादत्रापि वस्तमूत्रमेवेत्याहुः। किंवा प्रधानकल्पतयात्र गोमूत्रमेव मूत्रशब्दवाच्यम् ॥ ८ ॥

जतुकाशकृता तद्वद्‌दग्धैर्वा वस्तरोमभि।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥ ९ ॥

जतुकाशकृतेति, जतुका चर्मचटक तस्या पुरीषेण तद्वदित्युत्सादनम्। दग्धैरिति वस्तरोमभिरित्यनेन योज्यम्। अपस्मारेत्यादौ मूत्र गोमूत्रम् ॥ ९ ॥

य खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥ १० ॥

य खादेदित्यादौ—माक्षिकेण मधुना ॥ १० ॥

उल्लम्बितनरग्रीवापाशं दग्ध्वा कृता मसी।
शीताम्बुना समं पीता हन्त्यपस्मरमुद्धतम् ॥ ११ ॥

उल्लम्बित उद्बन्धनमृतो नर, तस्य ग्रीवापाश ग्रीवाबन्धनरज्जुम् ॥ ११ ॥

प्रयोज्यं तैललशुनं पयसा वा शतावरी।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १२ ॥

प्रयोज्यमित्यादि योगत्रय स्पष्टम् ॥ १२ ॥

निर्दह्य निर्द्रवां कृत्वा छागिकामरनालिकाम्।
तामम्लसाधितां खादन्नपस्मारमुदस्यति ॥ १३ ॥

निर्दह्येत्यादौ—अमरनालिका अमराख्यस्थूलनाडी। अम्लसाधितामिति काञ्जिकसाधिताम् ॥ १३ ॥

हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता ।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ १४ ॥

हृत्कम्प इत्यादि स्पष्टम् ॥ १४ ॥

## स्वल्पपञ्चगव्यं घृतम्

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चातुर्थकोन्मादग्रहापस्मारनाशनम् ॥ १५ ॥

गोशकृदित्यादौ—दध्यम्ल परिणतदधि । समशब्दोऽत्र दध्यादिभिश्च सम्ब-ध्यते ॥ १५ ॥

## बृहत्पञ्चगव्यं घृतम्

द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
शम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ।
द्वे शारिवे रोहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्ट्वाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम् ॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च ।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके ।
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थकविनाशनम् ॥ १६ ॥

द्वे पञ्चमूल इत्यादि—द्वे पञ्चमूले विदारीगन्धादिके, रजन्याविति हरिद्रा-द्वयम्, वाग्भटेऽपि 'द्विपञ्चमूलीत्रिफला-द्विनिशाकुटजत्वच' इत्युक्तम् । सप्तपर्णं सप्तपर्णस्य त्वक्, अपामार्गम् अपामार्गस्य मूलं, नीलिनी स्वनामख्याता, शम्पाकः आरग्वधः, फल्गु काकोडुम्बरिकाफलं, डुमर इति लोके, पौष्करं मूल-मित्यन्वयः । भार्गी भार्गीमूलं, त्रिवृता त्रिवृतामूलं, निचुलानि इज्जलस्य

फलानि, श्रेयसीं हस्तिपिप्पलीम्, आढकी तुवरी, तस्या बीज; रोहिष गन्धतृणभेद, भूतिक यमानीं; मदयन्तिका वनमल्लिकाम् । अत्र पादावशिष्टकषायश्चतुर्गुण, गोशकृदिति गोशकृद्रसादयश्च घृतसमा ; तेनाष्टगुणः पाक ॥ १६ ॥

## महाचैतसं घृतम् ।

शणस्त्रिवृत् तथैरण्डो दशमूली शतावरी ।
रास्ना मागधिकाशिग्रु काथ्यं द्विपलिकं भवेत् ॥
विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा ।
एभि॰ खर्जूरमृद्वीकाभीरुयुञ्जातगोक्षुरैः ॥
चैतसस्य घृतस्याङ्गैः पक्तव्यं घृतमुत्तमम् ।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम् ॥
गरोन्मादप्रतिश्यायतृतीयकचतुर्थकान् ।
पापालक्ष्म्यौ जयेदेतत् सर्वग्रहविनाशनम् ॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम् ।
घृतमानं क्वाथविधिरिह चैतसवन्मतः ॥
कल्कश्चैतसकल्कोक्तद्रव्यैः सार्द्धञ्च पादिकः ।
नित्यं युञ्जातकाप्राप्तौ तालमस्तकमिष्यते ॥ १७ ॥

महाचैतसे शणस्य मूल बीज वा, व्यवहारस्तु बीजेनेति । मागधिका पिप्पली। काथ्य द्विपलिक भवेदित्यन्तेन क्वाथ, क्वाथोऽपि पूर्ववत् चैतसक्वाथवत् द्रोणाम्भसा कार्य्य । विदारीप्रभृति कल्क । मेदे मेदे द्वे, खर्जूर खर्जूरस्य फलम्, अभीरु शतावरी, युञ्जातम् औत्तरपाथिक कन्द, तदभावे तालमस्तकम् । चैतसस्य घृतस्याङ्गैरिति पूर्वोक्तचैतसघृतकल्कैर्विशालादिभिः । चैतसस्येत्यादि कल्याणकस्याङ्गैरिति वक्तव्येऽतिदेशातिदेशकरणम्, अत्रोक्तकल्कद्रव्येण सह पादिकार्थम्, अन्यथा कल्याणके तत्राद्यमममन्वितैरित्युक्तत्वादत्रापि अद्यमान प्रसज्यते, अतो विशालात्रिफलेत्यादिना कल्केन सह विदारीमधुकादे कल्कस्य मिलित्वा घृतात् पादिकत्व ज्ञेयम्। अतएव वक्ष्यति कल्कश्चैतसकल्कोक्तद्रव्यै सार्द्धञ्च पादिकमिति ॥ १७ ॥

## कूष्माण्डकघृतम्

कूष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ १८ ॥

कूष्माण्डकघृत स्पष्टम् ॥ १८ ॥

## ब्राह्मीघृतम्

ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च ।
पुराणं मेध्यमुन्मादग्रहापस्मारनुद् घृतम् ॥ १९ ॥

ब्राह्मीघृते—चतुर्गुणे ब्राह्मीरसे घृतपाक ॥ १९ ॥

## पलङ्कषाद्यं तैलम्

पलङ्कषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ २० ॥

पलङ्कषेत्यादि—पलङ्कषा गुग्गुलु, जटिला मांसी । पूतनाकेशी भूतकेशी इति केचित्, अन्ये तु पूतना हरीतकीभेद केशी भूतकेशीत्याहु, जतुकर्णे गोलोमी पठ्यते, न तु पूतना । नाकुली महापैशाचिका व्यवहृता । अतिरसा जलयष्टिमधु, अन्ये तु ज्योतिष्मतीत्याहु, जतुकर्णे मधुकमति । चित्रा दन्ती । मांसाशिनां पक्षिणामिति गृध्रादीनाम् ॥ २० ॥

अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ २१ ॥

इत्यपस्मारचिकित्सा ।

---

अभ्यङ्ग इत्यादि—अकल्कमिदं तैलम् । गोशकृता उत्सादनमुद्वर्त्तन गोमूत्रेण स्नानमिति यथायोग्यतया बोध्यम् ॥ २१ ॥

इत्यपस्मारचिकित्साविवृतिः ।

---

# अथ वातव्याधिचिकित्सा

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः ।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥

वातविशेषस्याक्षेपकादेरपस्मारवद्वेगकर्तृत्वात् तथा प्रायस्तुल्यचिकित्सितत्वाच्चा-पस्मारानन्तरं वातव्याधिरुच्यते। यद्यपि वातव्याधिरित्युक्तेरविकृते वा यावति प्रसङ्ग, तथापि व्याधिपदसामानाधिकरण्याद्विकृतो दुःखकारी वातो व्याधिरित्यर्थो ज्ञेय। ननु वातव्याधिवत् पित्तकफविकारा अपि तृषतोषतृप्त्यादय किमिति पृथक्करणेन नोच्यन्ते? नैवम्, वायोरतिबलत्वेन गरीयस्त्वात्, तद्विकाराणामेव तु दुःसाध्य-त्वात् आशुवात्ययकरत्वात् विशिष्टचिकित्सितत्वाच्च पृथक्करणेनाभिधानं युक्तम्। कफपित्तविकाराणान्तु यथाविधित्वात् विरेचनवमनादिकफपित्तसामान्यचिकित्सोक्तया चिकित्सोक्तेति ज्ञेया। साधारणचिकित्सामाह स्वाद्वम्लेत्यादि ॥ १ ॥

**विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ २ ॥**
**आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥ ३ ॥**

विशेषत इत्यादौ—क्षारं यवक्षारं किंवा ग्रहण्यध्यायनिर्दिष्टं दीपनक्षारम्। आमाशयस्थ इत्यादि—शुद्धस्य वमनविरेचनादिना शुद्धस्य ॥ २ ॥ ३ ॥

**आमाशयगते वाते छर्दिताय यथाक्रमम्।**
**देयः षड्धरणो योग सप्तरात्रं सुखाम्बुना ॥**
**चित्रकेन्द्रयवाः पाठा कटुकातिविषाभयाः।**
**महाव्याधिप्रशमनो योग षड्धरण स्मृत ॥**
**पलदशमांशो धरणं योगोऽयं सौश्रुतस्ततस्तस्य।**
**माषेण पञ्चगुञ्जकमानेन प्रत्यहं देय ॥ ४ ॥**

आमाशयगत इत्यादि—सुश्रुतस्य। छर्दिताय यथाक्रममिति स्नेहस्वेदपेयादि-क्रमानतिक्रमेण, वातस्यापि कफस्थानगतत्वेन। यदुक्त 'स्थानात् स्थानगत दोष स्वनि-वत् समुपाचरेत्' इति। षड्धरणयोगे महाव्याधिप्रशमन इति मेद.कफावृतव्याधि-महाव्याधि। षड्धरण इति षण्णा चित्रकादीना प्रत्येकं धरण पलदशमाशरूप मान यत्र स तथा, एतदेवाह पलदशमाशो धरणमिति। ननु पलद्रव्यव्यवस्थापि चरकसु-श्रुतमतभेदेन द्विधोक्ता, तदिह चरकस्य पलस्य दशमाशो धरणम्, इत्यत आह योगो-ऽयमिति, अयं चित्रकेत्यादियोग' सौश्रुत इति कृत्वा तस्य सुश्रुतस्य पञ्चगुञ्जकमाने-न माषेण यत् पल भवति तस्यैव पलस्य दशमो भाग' प्रत्येक चित्रकादीना षण्णा प्रत्यहं सप्तदिन यावद्देय इत्यर्थ। एवञ्च पञ्चगुञ्जकमानानुसारात् पलदशमाशेन रक्तिद्वयाधिकषण्माषका भवन्ति, षड्भिर्धरणैश्च मिलित्वा पञ्चरक्तिकमाषानुसारेण

सरक्तिद्वयपलमापाधिककर्षद्वय स्यात्, एतदेव व्यवहियमाणेन दशरक्तिकमाषेण सर-क्तिद्वयमाषत्रयाधिककर्षमान भवति तादृङ्मानञ्च प्रत्यहमेव मप्तरात्र यावत् देयम् । उत्सर्गतो हि कर्षश्चूर्णस्य देयो भवति, अत्र सरक्तिद्वयमाषकत्रयाधिककर्षप्रमाणार्थं विशेषवचनमेवेति ॥ ४ ॥

**पक्वाशयगते वाते हितं स्नेहविरेचनम् ।**
**वस्तय शोधनीया या प्राशाश्च लवणोत्तरा ॥ ५ ॥**

वस्तय शोधनीया या इति शोधनवस्तयः; यथा 'शोधनद्रव्यनि क्वाथाम्लत् कल्कस्नेहसैन्धवै । युक्ता खजेन मथिता वस्तय. शोधना मता ' इति । प्राशाश्च लवणोत्तरा इति लवणप्रधाना आहारा किंवा लवणोत्तरा प्राशा स्नेहलवणकल्याणलवणादय ॥ ५ ॥

## स्नेहलवणम्

**स्नुहीलवणवार्त्ताकुस्नेहाश्छन्ने घटे दहेत् ।**
**गोमयैः स्नेहलवणं तत्परं वातनाशनम् ॥ ६ ॥**

तदेव स्नेहलवणमाह स्नुहीत्यादि—अत्र लवणानि पञ्च, स्नेहाश्चत्वार ; छन्न इति शरावादिपिहिते लिप्तमुखे । गोमयैरिति स्नुहीपञ्चलवणवार्त्ताकुफलानि तदनु-घृततैलवसामज्जभि स्निग्धीकृत्य घटे कृत्वा मुखमालिप्य गोमयाग्निना दग्धव्यानि, अत कोष्ठ विभज्य उपयोज्यानि ॥ ६ ॥

**कार्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ७ ॥**
**त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥ ८ ॥**

विधिर्वस्तिविशोधन इति मूत्राघाताश्मरीचिकित्साविधि । त्वगित्यादि—अत्र त्वङ्मासादिगतवाते रक्तमोक्षणरूपमेकमेव चिकित्सितम् आवरकरक्तव्यपगमतया बोध्यम् । अन्ये स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि चेति सुश्रुतवाक्यस्य त्वङ्मामा-सृक्शिराप्राप्त इत्यनेन सह सम्बन्ध विदधति । ततश्च त्वङ्मास सृग्गतवाते स्नेहाभ्य-ङ्गादिकम्, रक्तगतवाते तु योग्यतया रक्तमोक्षणमेवेत्याहु ॥ ७ ॥ ८ ॥

**स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ।**
**स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वाते विचक्षणः ॥ ९ ॥**

स्नेहोपनाहेत्यादि—स्नायुसन्ध्यस्थिगतवातचिकित्सामाह ॥ ९ ॥

**स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नं त्वगाश्रिते ॥ १० ॥**

शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ११ ॥

स्वेदाभ्यङ्गेत्यादिना रसगतानिलचिकित्सामाह। हृद्यमित्यत्र स्पृष्टमिति जेज्जट पठति, किन्त्वत्र त्वक्शब्देन त्वक्स्थत्वाद्रस उच्यते, त्वगाश्रयित्वञ्च रसस्य सर्वगतत्वाद्भवति। अतएव धातुगतकुष्ठाभिधाने त्वग्गतत्वेनैव रसगत्वमुक्तमिति कृत्वा रसगतकुष्ठलक्षण सुश्रुतेनोक्तम्। अतो रसस्य विशेषेण हृदयाश्रितत्वात् हृद्यमेव पाठो युक्त इत्याहु। शीता प्रदेहा इति शीतप्रदेहादिरूपचिकित्साकथनार्थमिह लिखितम्, तेन त्वङ्मांसा-सृगित्यादिसुश्रुतवचनेन पूर्वोक्तेनास्य पौनरुक्त्य नाशङ्कनीयम् ॥ १० ॥ ११ ॥

विरेको मांसमेद स्थे निरूहा शमनानि च ॥ १२ ॥
वाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ १३ ॥

मेद स्थानिलचिकित्सामाह विरेक इत्यादि—मज्जगतानिलचिकित्सामाह वाह्येत्यादि ॥ १२ ॥ १३ ॥

वर्षोऽन्नपानं शुक्रस्थे वलशुक्रकरं हितम्।
विवद्धमार्ग शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ १४ ॥

शुक्रस्थानिलचिकित्सामाह हर्ष इति मनस ॥ १४ ॥

गर्भे शुष्के तु वातेन वालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ १५ ॥
शिरोगतेऽनिले वातशिरोरोगहरी क्रिया ॥ १६ ॥

गर्भ इत्यादौ—मधुककाश्मर्य्यफलाभ्या दुग्ध साध्य, सिता तु प्रक्षेपणीया, केचित् तु सितादिर्दुग्ध साध्यमित्याहुः। उत्थापने पुष्टिजनने ॥ १५ ॥ १६ ॥

व्यादितास्ये हनुं स्विन्नामंगुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नम्य चिवुकोन्नामनं हितम् ॥ १७ ॥
अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिवेत् ॥
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः।
अर्दितं स जहेत् सर्पिः पिवेदौत्तरभक्तिकम् ॥ १८ ॥

व्यादितास्य इत्यादि—व्यादितास्ये विवृतास्ये, प्रदेशिनी अंगुष्ठानन्तरांगुली। उन्नम्येत्यत्र चिवुकमिति शेष। माषेण्डरी माषपिष्टकविकृति। माषेण्डरीभक्षणा-

नन्तर क्षारमामरंभरत्र भुक्त्वा ततो दशमूलीजल पिबेदित्यर्थ । औत्तरभक्तिकमिति भोजनानन्तरकालीनम् ॥ १७ ॥ १८ ॥

पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ।
रूक्ष. स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १९ ॥
वाताद्वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ २० ॥

पञ्चमूलीत्यादि स्पष्टम् । वातादित्यादौ—वाग्धमनी वाग्वाहिनी धमनी ॥ १९ ॥ २० ॥

## कल्याणकलेहः

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नर ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २१ ॥

सहरिद्रेत्यादौ—अजाजी कृष्णजीरकम्; अजमोदा यमानी, यष्टिमधुकशब्देन मधुयष्टीति श्रीकण्ठदत्तो व्याचष्टे, तत्तु न व्यवहारसिद्ध नापि टीकान्तरे दृष्टमिति ॥ २१ ॥

वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजित ॥ २२ ॥

वक्ष इत्यादि—सुश्रुतस्य । त्रिकमिह असद्वयान्तरसन्धि, स हि श्लेष्मस्थान, तद्गत एव वाते वमन नस्यञ्च यौगिकम् । नस्यमिह शिरोविरेचनमिति । कुशलेन प्रयोजितमिति विशेषणात् प्रतिमर्श विना चतुर्विधमप्यत्र नस्यमित्येके ॥ २२ ॥

## माषबलादिः

माषबलाशूकशिम्बीकतृणरास्नाश्वगन्धोरुबूकाणाम् ।
क्वाथो नस्यनिपीतो रामठलवणान्वित कोष्णः ॥

अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम्।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥ २३ ॥

माषबलेत्यादि—कत्तृण गन्धतृणम्; अश्वगन्धाया मूलम्। क्वाथमात्रा चात्र मुखेन पेयक्वाथतुल्या; यस्तु तावन्त क्वाथ नासिकया पातु न शक्नोति, तेनाल्पः स्तोकस्त्याज्य। रामठ हिंगु, तस्य रक्तिकाद्वय सैन्धवस्य तु माषकद्वय प्रक्षिपन्ति वृद्धा। यस्मिन् पार्श्वे पीडा तत्पार्श्वनासापुटेन भोजनसमाप्तौ सायकाले शक्त्यनुरूप पयश्चाय क्वाथ ॥ २३ ॥

दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम्।
सायं भुक्त्वा पिबेन्नस्यं विश्वाच्यामववाहुके ॥ २४ ॥

दशमूलीत्यादौ—तैलाज्यमिश्रितमिति तैलाज्य प्रक्षेपणीयम्। भुक्त्वेति भोजनानन्तर सायकाले शक्त्यनुरूप नासिकया पिबेत् ॥ २४ ॥

मूलं बलायास्त्वथ पारिभद्रात्
तथात्मगुप्तास्वरसं पिबेद्वा।
नस्यन्तु यो मांसरसेन कुर्य्या-
न्मासादसौ वज्रसमानबाहु ॥ २५ ॥

मूलमित्यादि—मूल बलाया इत्येको योग, पारिभद्राच्च मूलमिति द्वितीय, अनयो स्वरस क्वाथो वा। आत्मगुप्तास्वरस पिबेदिति तृतीय, पानमेषा नासिकया। नस्यन्तु यो मासरसेनेति चतुर्थ। अत्र तैलसैन्धवे प्रक्षिपन्ति वृद्धा, अन्ये सैन्धवचूर्णमात्र प्रक्षिपन्ति। नस्यन्तु यो मासरसेनेत्यत्र तयोर्मांसरसेनेति पठित्वा विश्वाच्यववाहुकयोरिति व्याख्यानयन्त्येके ॥ २५ ॥

माषात्मगुप्तकैरण्डवाट्यालकशृतं पिबेत्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥ २६ ॥

माषेत्यादि वचन स्पष्टम् ॥ २६ ॥

बाहुशोषे पिबेत् सर्पिर्भुक्त्वा कल्याणकं महत् ॥ २७ ॥
हृदि प्रकुपिते वाते चांशुमत्या पयो हितम् ॥ २८ ॥

बाहुशोष इत्यादौ—महत् कल्याणकम् उन्मादाधिकारोक्तम्। हृदीत्यादौ—अंशुमती शालपर्णी, तया सिद्ध पय इत्यर्थ ॥ २७ ॥ २८ ॥

हरीतकी वचा रास्ना सैन्धवश्चाम्लवेतसम् ।
घृतमात्रासमायुक्तमपतानकनाशनम् ॥ २६ ॥

हरीतकीत्यादि—क्काथेन चूर्णेन वाय योग । क्काथपक्षे सैन्धवघृते प्रक्षिपेत्; चूर्णपक्षे घृतकर्षद्वयेन, चूर्णस्याष्टौ माषका पेया इत्यर्थ ॥ २६ ॥

## स्वल्परसोनपिण्डः

पलमर्द्धपलञ्चैव रसोनस्य सुकुट्टितम् ।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः ॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोडितम् ।
यथाग्नि भक्षितं प्रातः रुबुकाथानुपानतः ॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् ।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम् ॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे ।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः ।
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः ॥ ३० ॥

पलमर्द्धपल चेति सार्द्धपलम् एव वाशब्दो पूर्वयोगापेक्षया, इवार्थे वाशब्दो वा। पलमर्द्धपलञ्चैवेत्यपि पाठ । त्वगादिरहितपिष्टरसोनस्य किञ्चिदातपेन शुष्कस्य सार्द्धपलमेक, माषकाष्टक माषकदशक वा प्रतिदिन सेवनीयम् । अनयैव मात्रया मासमेक सेवनोपयुक्त न स्यात् अत पुनरपि रसोनपिण्ड करणीय । न च वाच्य यावत्या मात्रया मासोपयोगो भवति तावत्येव मात्रा किमिति न दर्शितेति, यतस्तथा सति वीर्य्यहानि स्यादित्याहु ॥ ३० ॥

हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम् ।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः ॥ ३१ ॥

हन्तीत्यादौ—सवचोषणमिति वचामरिचचूर्णसहितमित्यर्थ ॥ ३१ ॥

वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत् ।
स्नेहैर्मांसरसैर्वापि प्रवृद्धं तं विवर्जयेत् ॥ ३२ ॥

वातघ्नैरिति भद्रदार्वादिगणै, दशमूली च विख्यातैव गणत्वात्, एतै क्वाथस्नेहोपनाहादिक कुर्य्यात् । नवत्वन्तु कुब्जस्य यावत् न रूजावृद्धिरिति ॥३२॥

पिप्पल्यादिरजस्तूनीप्रतितून्यो सुखाम्बुना ।
पिवेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥ ३३ ॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तय ।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधन ॥ ३४ ॥

पिप्पल्यादिगणः सौश्रुत । रजश्चूर्णम् । स्नेहलवणञ्च स्नुहीलवणवार्त्ता-कुस्नेहानित्यादिना पूर्वमुक्तम्, इदमपि सुखाम्बुनैव पिवेदिति । सघृत क्षारहिङ्गु वेनि घृतेनैव यवक्षारहिङ्गुनोश्च पानम् । घृतस्य कर्षैक, यवक्षारस्य चतुर्माषक, हिङ्गुन षड्रक्तिकमिति दीपन पाचनञ्चेति लङ्घनानन्तर दोषशेषशमनार्थ दीपन पाचनञ्च भेषज देयम् ॥ ३३ ॥ ३४ ॥

प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ ३५ ॥
प्रत्याष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत् ॥ ३६ ॥

प्रत्याध्माने तु वमनमिति प्रत्याध्मानस्यामाशयसमुत्थत्वात् ॥ ३५ ॥ ३६ ॥

दशमूलीवलारास्नागुडूचीविश्वभेषजम् ।
पिवेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ ३७ ॥

दशमूलीत्यादि—दशमूल्यादीना क्वाथे एरण्डतैल प्रक्षेप्यम् ॥ ३७ ॥

शेफालिकादलै· क्वाथो मृद्वग्निपरिसाधित· ।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥ ३८ ॥

शेफालिकेत्यादि वचन स्पष्टम् ॥ ३८ ॥

पञ्चमूलीकषायन्तु रुवुतैलं त्रिवृद्घृतम् ।
त्रिवृतेवाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥ ३९ ॥

पञ्चमूलीत्यादि—पञ्चमूली महती ॥ ३९ ॥

तैलं घृतं वार्द्रकमातुलुङ्गयो
रसं सचुक्रं सगुडं पिवेद्वा ।
कटयूरुपृष्ठत्रिकगुल्मशूल-
गृध्रस्युदावर्त्तहर प्रदिष्ट ॥ ४० ॥

तैल घृत वेत्यादौ—आर्द्रकरसमातुलुङ्गफलरसचुक्रगुडादीना तुल्यो भाग, तैले घृत वा दत्त्वा पिवेदिति । पिवेद्वेति वा शब्द· पूर्वयोगापेक्षया, किंवा तैल-

मेव सचुक्रगुडमित्येको योग , तथा घृतमपि सचुक्रगुडमिति द्वितीय तथा मिलितार्द्रकरस मातुलुङ्गीरसोऽपि सचुक्रगुड इति तृतीयो योग । मातुलुङ्गी मधुकुक्कुटी ॥ ४० ॥

तैलमेरण्डजं चापि गोमूत्रेण पिबेन्नर ।
माससेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ४१ ॥

तैलमेरण्डजमित्यादि—योगोऽस्य विरेचकत्वेनाल्पमात्रया प्रत्यह मास याव दुपयोज्य । भूरिमात्रोपयोगे तु बलहानि स्यात्, तेन गोमूत्रस्य पल किञ्चिन्न्यून वा, तथा एरण्डतैलमपि माषकाष्टक किञ्चिन्न्यून वा कोष्ठाद्यपेक्षया प्रत्यह मास यावदुपयोज्यम् ॥ ४१ ॥

गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ४२ ॥

गोमूत्रैरण्डतैलाभ्यामित्यादि—गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयम, पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धा ॥ ४२ ॥

अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम् ।
वार्त्ताकुं गृध्रसीक्षीण· पूर्वामाप्नोत्यसौ गतिम् ॥४३॥

अश्नातीत्यादौ—एरण्डतैलसाधिता सन्तलितामित्यर्थ ॥ ४३ ॥

पिष्ट्वैरण्डफलं क्षीरे सविश्वं वा फलं रुबो ।
पायसो भक्षित सिद्धो गृध्रसीकटिशूलनुत् ॥ ४४ ॥

पिष्ट्वेत्यादि—त्वग्रहितमेरण्डबीज कर्ष किञ्चित्तण्डुलान् दत्वा क्षीरेण विरेचनार्थ पायस साध्य । सविश्व वेति पूर्वयोगापेक्षया वा शब्द , अत्रापि किञ्चित्तण्डुलादीन् दत्वा शुण्ठ्यैरण्डफलाभ्या पिष्टाभ्या कर्षार्द्ध वा कणाशुण्ठ्योरित्यादिपरिमाणया पायस साध्य ॥ ४४ ॥

रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलो ।
सर्पिषा गुडिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ४५ ॥
गृध्रस्यार्त्त नरं सम्यक् पाचनाद्यैर्विशोधितम् ।
ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ४६ ॥

रास्नाया इत्यादि—खादन्तु माषकाष्टकम्, तप्तजलमनुपानम् ॥४५॥४६॥

नादौ वस्तिविधिं कुर्य्याद् यावदूर्ध्वं न शुध्यति ।
स्नेहो निरर्थकस्तस्य भस्मन्येवाहुतिर्यथा ॥ ४७ ॥

नादौ वस्तिविधिं कुर्य्यादित्यादौ—यावदूर्द्ध्वं न शुध्यतीति, उर्द्ध्वमित्यत्र पक्वाशयादिति शेषः, तेन यावद्विरेकवमनाभ्या आमाशयो न शुध्यतीत्यर्थ ॥४७॥

गृध्रस्यार्त्तस्य जङ्घाया स्नेहस्वेदे कृते भृशम् ।
पद्भ्यां निर्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥
अवतार्य्यांगुलौ सम्यक् कनिष्ठायां शनैः शनैः ।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥
तं शस्त्रेण विदार्य्याशु प्रवालांकुरसन्निभम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद् यष्ट्याह्वचन्दनै ॥
विध्येत् शिरामिन्द्रवस्तेरधस्ताच्चतुरंगुले ।
यदि नोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ४८ ॥

गृध्रसीत्यादि—जङ्घाया सकाशात् गृध्रसीं कनिष्ठायामगुलौ अवतार्य्येति योजना । कण्डरा कनिष्ठागुलिसवृता स्थूलशिरा । इन्द्रवस्तिरिह गुल्फजङ्घयोर्मध्यदेश ॥ ४८ ॥

तगरस्य शिफां सार्द्रां पिष्ट्वा तक्रेण यः पिवेत् ।
वङ्क्षणानिलरोगार्त्त स क्षणादेव मुच्यते ॥ ४९ ॥

तगरस्येत्यादि—तगर पिण्डतगर ॥ ४९ ॥

दशमूलीकषायेण पिवेद् वा नागराम्भसा ।
कटीशूलेषु सर्वेषु तैलमेरण्डसम्भवम् ॥ ५० ॥

दशमूलीत्यादि—दशमूलीक्वाथनागरक्वाथौ एरण्डतैल प्रक्षिप्य पिबेत् । नागराम्भ इति अत्यन्तसामतायां बोध्यम् ॥ ५० ॥

विश्वाच्यां खञ्जपङ्ग्वोश्च दाहे हर्षे च पादयोः ।
क्रोष्टुशीर्षे विकारे च विकारे वातकण्टके ।
शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥५१॥
शिराव्यध पाददाहे वातकण्टकवत् क्रिया ॥ ५२ ॥
शतधौतघृतोन्मिश्रैर्नागकेशरकण्टकैः ।
पिष्टैः प्रलेपः सेकश्च दशमूल्यम्बुनेष्यते ॥ ५३ ॥

आलिप्य नवनीतेन स्वेदो हस्तादिदाहहा ।
अग्नितप्तेष्टकाखण्डं काञ्जिकैः परिषिच्य तु ।
तद्बाष्पस्वेदनं कार्य्यं पादहर्षविनाशनम् ॥ ५४ ॥
दशमूलस्य निर्य्यूहो हिङ्गुपुष्करसंयुतः ।
शमयेत् परिपीतस्तु वातं झिञ्झिनिसंज्ञितम् ॥ ५५ ॥

शिरा यथोक्तामिति शिराव्यधविध्यनतिक्रमेण वातकोपभयादल्पमल्पञ्च रक्तस्राव्यम् । सत्रपन्वादौ देशो नोक्तस्तेन खञ्जादिष्वपि रक्तावृतवातवेदनाया जङ्घादिसन्धिगतैव शिरा व्यध्या भवतीति भानुमती ॥ ५१—५५ ॥

गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाम्भसा ।
क्षीरेणैरण्डतैलं वा पिवेद्वा वृद्धदारकम् ॥ ५६ ॥
रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके ।
पिवेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ ५७ ॥
कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः ।
सुखोष्णो मर्द्दने योज्यः खल्लीशूलनिवारणः ॥

गुग्गुलुमित्यादि—एरण्डक्काथेन त्रिफलाक्काथेन वा शोधयित्वा गुग्गुलुर्ग्राह्यः । अत्र एरण्डतैलेन पिष्ट्वा गुग्गुलुं प्रक्षिप्य । क्षीरेणेत्यादि—चतुर्गुणेन दुग्धेन एरण्डतैलं पेयम्, 'मृदुदोषे विरेकार्थं जीर्णे क्षीरान्नभोजनम्' इत्यादि वाग्भटदर्शनात् । पिवेद्वा वृद्धदारकमिति अत्रापि क्षीरेणेति योज्यम् ॥ ५६—५७ ॥

खल्ल्यां स्निग्धाम्ललवणैः स्वेदमर्दोपनाहनम् ॥ ५८ ॥

खल्ल्यामित्यादौ अम्लमिति काञ्जिकम् ॥ ५८ ॥

## आदित्यपाकगुग्गुलुवटकः

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ।
दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम् ॥
दत्त्वा फलानि पञ्चैव गुग्गुलोर्वटकीकृतः ।
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः ।
हन्ति सन्ध्यस्थिमज्जस्थान् वृक्षमिन्द्राशनिर्यथा ॥

भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च ॥
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ५६ ॥

पृथगित्यादौ—त्वगेलयोर्मिलित्वार्द्धपल बोध्यम्, अत्र त्रिफलादिगुग्गुल्वन्त सर्वमेकीकृत्य बोध्यम्। भाव्येत्यादि क्वाथविशेष । तेनेति अष्टांशशेषक्वाथेनार्द्रं कृत्वा दिनैक यावद्भाव्यम्, भावनाविधिसमाप्तिस्तु सप्ताहादिति। इयञ्च परिभाषा वाग्भट-मतानुसारिणी, तेनास्या अमूलकत्व नाशङ्कनीयम् । वृन्दस्तु 'लेहवद्द्विगुणे-नाश्ममालोड्य चातपे स्थित । दशमूलाम्बुना शोध्य सप्तवारञ्च गुग्गुलु' इत्युक्त-वान्, तत् पुनरनार्षमिति निश्चल ॥ ५६ ॥

## त्रयोदशाङ्गगुग्गुलुः

आभाश्वगन्धा हवुषा गुडूची
शतावरी गोक्षुरवृद्धदारकम्।
रास्ना शताह्वा सशटी यमानी
सनागरा चेति समैश्च चूर्णम् ॥
तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्द्धभागम्।
अर्द्धाक्षमात्रन्त्वथ तत् प्रयोगात्
कृत्वानुपानं सुरयाथ यूषै ॥
मद्येन वा कोष्णजलेन वाथ
क्षीरेण वा मांसरसेन वापि ॥
कटीग्रहे गृध्रसिबाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे।
सन्धिस्थिते चास्थिगते च वाते
मज्जाश्रिते स्नायुगते च कोष्ठे ॥
रोगान् जयेद्वातकफानुविद्धान्
वातेरितान् हृद्ग्रहयोनिदोषान्।
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः ॥ ६० ॥

त्रयोदशाङ्गगुग्गुलौ आभमिति स्वनामख्यात वणिजद्रव्यम् । हनुषा स्वनामख्याता । मर्मेरिति सर्वैर्मर्गैरुपलक्षितम् । तुल्य भवेत् कौशिकमिति समुदितसर्वचूर्णसमो गुग्गुलुरित्यर्थ । अतोऽर्द्धभागमिति कौशिकार्द्धभागम् । भिषजस्तु यावता घृतेन गुग्गुलो पेषण भवति तावदेव घृत गृह्णन्ति । सुराद्यनुपानभेदो दोषभेदापेक्षया ॥ ६० ॥

जित्वावरकमग्रे तु वाते वातहरं हितम् ॥ ६१ ॥
अन्नावृते तदुल्लेखो दीपनं पाचनं लघु ॥ ६२ ॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो बुधः ।
दिह्याच्च लवणागारधूमैस्तैलविमर्दितै ॥ ६३ ॥

सङ्क्षेपादावृतवातचिकित्सामाह जित्वेति—आवरकमिति वायोरावरको यो दोषस्तम् । तदुल्लेख इति अन्नस्य वमनम् ॥ ६१—६३ ॥

सर्पिस्तैलवसामज्जपानाभ्यञ्जनवस्तय ।
स्वेदा स्निग्धा निवातश्च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यत्तु तत् सर्वं कर्त्तव्यं वातरोगिणाम् ॥ ६४ ॥

सर्पिरित्यादि क्रियासूत्र चरकस्य ॥ ६४ ॥

पटोलफलकैर्यूषो वृष्यो वातहरो लघुः ।
वाट्यालककृतो यूषः परं वातविनाशन ॥ ६५ ॥

पटोलफलकैरित्यादौ, तथा वाट्यालककृतो यूष इत्यादौ—यूषयोनित्वान्मुद्गादयोऽपि बोध्या, अन्ये तु केवलयोरेव पटोलफलवाट्यालकयोर्यूषाविवेत्याहु ॥ ६५ ॥

बलाया पञ्चमूलस्य दशमूलस्य वा रसे ।
अजाशीर्षाम्बुजानूपक्रव्यादपिशितैः पृथक् ॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योपसंस्कृतान् ।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥ ६६ ॥

बलाया इत्यादि—बलादिभिस्त्रिभि साधनद्रव्यैरजाशीर्षादयस्तु चत्वार पृथक् साध्या, तेन द्वादश रसा भवन्ति । बलादिभिरर्द्धशृत कृत्वा तेन मांसरस करणीय इत्याहु । अन्ये तु प्रास्थिकेऽम्भसि वर्षमान बलामूलमनुरूपमजाशीर्षमामञ्च प्रक्षिप्य पाचनीयम् , परिशिष्टे पलचतुष्टये सति वस्त्रेण छानयित्वा परिभर्जनीयम् ।

तदनुमैन्धवाम्लदाधित्रिकटून्यनुरूपाणि दत्त्वा सस्कार्य्यम् । एव बृहत्पञ्चमूलेन च साधनम् । अजाशीर्षवत् कूर्मकर्कटाद्यम्बुजाना मासेन, तथा महिषवराहादीनामानूपाना मासेन, तथा क्रव्यादाना मासेन रससाधन कुर्य्यादिति ॥ ६६ ॥

**पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ॥ ६७ ॥**

पञ्चमूलीत्यादि—स्वल्पा पञ्चमूली ॥ ६७ ॥

**वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ।**
**द्वे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः ॥ ६८ ॥**

वाजिगन्धेत्यादौ—बलास्तिस्र इति बला, अतिबला, नागबला चेति ख्याता. । अत्र बला पीतपुष्पा, अतिबला श्वेतपुष्पा, नागबला गेरक्ततण्डुला । गृध्रनखीद्वय श्वेतरक्तपुष्पभेदात् । गणत्वादनेन सर्वा क्वाथादिकल्पना कार्य्या ॥ ६८ ॥

**कोलं कुलत्थं सुरदारु रास्ना**
**माषातसीतैलफलानि कुष्ठम् ।**
**वचाशताह्वे यवचूर्णमम्ला**
**न्युष्णानि वातामयिनां प्रदेहः ॥ ६९ ॥**

कोलमित्यादि—कोल बदरफलम् , अतसी तिसीति भाषा, तैलफल तैलविशिष्टफलम् । एतानि समभागचूर्णानि काञ्जिकेन पिष्ट्वा तप्तीकृत्य लेपो देय. ॥ ६९ ॥

**आनूपवेशवारोष्णप्रदेहो वातनाशनः ।**
**निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम् ।**
**कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ ७० ॥**

आनूपवेशवार इति वराहादिमासकृत । तस्य पारिभाषिकी सज्ञामाह निरस्थीत्यादि ॥ ७० ॥

## शाल्वणस्वेदः

**काकोल्यादिः सवातघ्न. सर्वाम्लद्रव्यसंयुत ।**
**सानूपमांसः सुस्विन्न. सर्वस्नेहसमावृत ।**
**सुखोष्ण स्पष्टलवणः शाल्वण परिकीर्त्तितः ॥**
**तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम् ॥**

वातघ्नो भद्रदार्वादिः काकोल्यादिस्तु सौश्रुतः ।
मांसेनाऽऽौषधं तुल्यं यावताम्लेन चाम्लता ।
पट्वी स्यात् स्वेदनार्थञ्च काञ्जिकाद्यम्लमिष्यते ।
चतुःस्नेहोऽत्र तावान् स्यात् सुस्निग्धत्वं यतो भवेत् ॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीतेति वचनं सर्वत्र गणकर्मणि ॥ ७१ ॥

शाल्वणस्वेदमाह काकोल्यादिरित्यादि—काकोल्यादिरिति काकोल्यादिगणः । वातघ्न इति भद्रदार्वादिगणस्य सङ्गः । सर्वाम्लद्रव्यं काञ्जिकमस्तु सौवीरतुषोदकादि । सानूपमांस इति, आनूपाश्च शूकरादयः । सर्वस्नेहाः सर्पिस्तैलवसामज्जानः । उपनाह इति उष्णबहुलप्रलेपः । एकमेव शाल्वणस्वेदं विवृणोति वातघ्न इत्यादि । सौश्रुत इति विशेषणेन सुश्रुतोक्तकाकोल्यादिगणो ग्राह्यः न पुनरष्टवर्गसहित इति । वृद्धसुश्रुते तु काकोल्यादिर्यथा 'काकोल्यौ मधुकामेदे जीवकर्षभकौ तथा । ऋद्धिवृद्धिस्तुगाक्षीरी पुण्डरीकमपद्मकम् । जीवन्ती मानना शृङ्गी मृद्वीका चेति कुत्रचित् । काकोल्यादिरयं पित्तशोणितानिलनाशनः' इति । भद्रदार्वादिर्यथा 'भद्रदारु निशे भार्गी वरुणो मेषशृङ्गिका । जटा झिण्टी त्वाच्छगन्धो वरणोऽतु तण्डुला । अर्कौ सदष्ट्रा गणिका शुस्तुण्डासनभेदकः । वरी स्विन पाटलाक्च वर्षाभूवृहुको यव । भद्रदार्वादिरित्येष गणो वातविनाशनः' इति । मांसेनाऽऽौषधं तुल्यमिति काकोल्यादि भद्रदार्वादिगणद्वयमौषधं मांसेन तुल्यं ग्राह्यम्, यथालाभपक्षेऽपि मानं तुल्यं देयम्, तेन व्यापहतम् । वृन्दस्त्वाह 'अम्लादिभिश्च सन्धार्य्यं काकोल्यादिश्च त्रिभिः' इति । अस्यार्थः—अम्लादिभिः अम्लस्नेहलवणैः संस्कारः कार्यः । संस्कारत्वादम्लत्रयं तावन्मात्रं देयं यावदम्लस्निग्धलवणत्वमत्र स्यादित्यर्थः । काकोल्यादिस्तथा भद्रदार्वादिस्तथानूपमांसम् एतत्त्रयन्तु सन्धार्यम् । सन्धार्य्यत्वादस्य प्राधान्यम् तेन त्रयमेव सन्धार्य्यत्वात् प्रत्येकं तुल्यभागमिति । यावताम्लेन चाम्लता पट्वी स्यादिति पटुशब्दात् इदं ग्रन्थस्य स्यादिति व्याप्तिः काञ्जिकादिशब्दात् सुरासौवीरतुषोदकदध्याम्लदधिमस्त्वम्लिकाकोलादीनां ग्रहणम् ॥ ७१ ॥

## अश्वगन्धाद्यं घृतम्

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम् ।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम् ॥ ७२ ॥

अश्वगन्धाघृते चतुर्गुणक्षीरसाहचर्य्यादश्वगन्धाक्काथोऽपि चतुर्गुण । कल्कोऽप्यश्वगन्धाया एव ॥ ७२ ॥

## दशमूलाद्यं घृतम्

दशमूलस्य निर्य्यूहे जीवनीयैः पलोन्मितै ।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित् ॥
क्काथोऽत्र त्रिगुणः सर्पिःप्रस्थः साध्य पयःसमः ॥ ७३ ॥

दशमूलघृते दशमूलक्काथोऽपि त्रिगुण, क्षीरन्तु स्नेहसममिति चक्र । जेज्जटमते तु स्नेहाच्चतुर्गुण क्काथ क्षीर स्ने.सममिति । अस्मिन्नर्थे परिभाषा 'एकद्वित्रिद्रवैर्द्रव्यै कुर्य्यात् स्नेहचतुर्गुणम् । क्षीर स्नेहसम दध्याचतुर्भिश्च चतुर्गुणम्' इति । अस्यार्थ —यत्रैको द्रव तत्र तेनैव चातुर्गुण्यम्, यत्र तु द्वौ वा तत्र द्वाभ्याम्, यत्र त्रयस्तत्र त्रिभिरिति चातुर्गुण्य मिलित्वा, क्षीरन्तु स्नेहसमम्, चतुर्भिरपि मिलित्वैव चातुर्गुण्यम्, एव सर्वत्र व्याख्येयम् । जीवनीयैरित्यत्र जीवनीयदशकम्, अनुक्तसख्यत्वात्तेनैव कल्क ॥ ७३ ॥

## छागलाद्यं घृतम्

आजं चर्म्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम् ।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम् ॥
छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत् ॥
अर्द्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने ।
जडगद्गदपंगूनां खञ्जे गृध्रसिकुब्जयो. ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
द्रोणे द्रव्यतुलाश्रुत्या स्याच्छागदशमूलयो ।
पृथक् तुलार्द्ध यष्ट्याह्वद्वयं देयं द्विधाक्षित ॥ ७४ ॥

आज चर्म्मविनिर्मुक्तमित्यादि—चर्म्मादिहीन तरुणच्छागमास द्वात्रिंशत्पलमान गृहीत्वा, दशमूलञ्च द्वात्रिंशत्पलमान जलद्रोणे पक्तव्यमित्याह वृन्द । चक्रस्त्वाह त्यक्तशृङ्गखुरादिकमिति अग्रहणयोग्यतादर्शनार्थम्, न पुनराकृतिमानग्रहणार्थञ्च

अत पञ्चाशत्पलानि मांसस्य दशमूलस्य च, अतएव वक्ष्यति द्रोणे इति, एवं मयूरादिषु घृतेष्वपि । वृद्धवैद्यव्यवहारस्त्वाकृतिमानेन । केचित्तु शतावर्य्याः कल्क-माहुः रसस्यानुक्ते, तदयुक्तम्, यतः कल्कद्रव्यमध्ये नोक्तं, अतः क्षीरसाहचर्य्येण रसो ग्राह्यः । क्षीर-शतावरीरसौ प्रत्येकं स्नेहसमौ । यष्ट्याह्वद्वयं देयं द्विधोक्तेति इति स्थलजजलजभेदेन यष्टिमधुद्वयं ग्राह्यमित्यर्थः । वृन्दस्तु 'घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते । तज्ज्ञातव्यमिहार्य्येण भागतो द्विगुणेन च' इति वचनात् यष्टिमधुनो भागद्वयं ग्राह्यमित्याह । व्यवहारस्तु वृन्दोक्तमतेनैव ॥७४॥

## एलादितैलम्

एलामुरासरलशैलजदारुकौन्ती-
चण्डाशटीनलदचम्पकहेमपुष्पम् ॥
स्थौणेयगन्धरसपूतिदलामृणाल-
श्रीवासकुन्दुरुनखाम्बुवराङ्गकुष्ठम् ॥
कालीयकं जलदकर्कटचन्दनश्री-
जात्याः फलं सविकसं सहकुङ्कुमञ्च ।
पृक्कातुरुष्कलघु लाभतया विनीय
तैलं बलाकथनदुग्धयुतञ्च दध्ना ।
सार्द्धं पचेत्तु हितमेतदुदाहरन्ति
वातामयेषु बलवर्णवयःप्रकारि ॥ ७५ ॥

एलेत्यादि—कौन्ती रेणुकम्, चण्डा चोरपुष्पी, नलदं मांसी, हेमपुष्पं नागकेशरपुष्पम्, स्थौणेयं ग्रन्थिपर्णम्, गन्धरसः स्वनामख्यातः, पूति खट्टाशी, दलं तेजपत्रम्; अमृणालम् उशीरम्, श्रीवासो नवनीतखोटिः, कुन्दुरुः कुन्दुरु-खोटिः, नखं नखी; अम्बु बालकम्, वराङ्गं गुडत्वक्, कर्कटः समुद्रकर्कटकः; चन्दनश्रीः श्वेतचन्दनम्, अन्ये तु श्रीः काष्ठखोटिरित्याहुः, जात्याः फलं जातिफलम्, सविकसमिति विकसा मञ्जिष्ठा, पृक्का पिड्किपुष्पं ( पिड्किँ इति भाषा ) तुरुष्कः सिल्हकं, लघु अगुरु । लाभतयेति यथालाभं द्रव्यं मानञ्च ग्राह्यम्, लभ्यत इति लाभः, कर्मणि घञ्, नेह भावप्रत्ययः । विनीय-कल्कीकृत्य । तैलमुत्सर्गात् प्रस्थपरिमितम्, बलाकथनं बलाक्वाथः तस्य च प्रस्थद्वयम्, दुग्धं दधि च प्रत्येकं

स्नेहसमम्, एव मिलित्वा चतुर्गुण पाक । अन्ये तु क्वाथश्चतुर्गुण., दधि दुग्ध प्रत्येक स्नेहसममित्याहु । व्यवहार पुनरनेनैव। इदमेव तैलम् अन्ये पाकभेदेन पठन्ति, यथा,—तिलतैल श. ४, उपेक्षार्थ तिलतैल पल ४, पाकार्थ दधि श ४ दुग्ध श ४, कल्कार्थ मञ्जिष्ठा कर्ष १२, इति प्रथम. पाक. । क्वाथार्थ वारियाला मूल पल ३२, पानीय श: ३२, शेष श ८, कल्कार्थ रेणुका चोरहुल गन्धरस गुड़-त्वक् शठी तेजपत्र उशीर कुड मुथा पृक्का सरल शैलज बला ऐषा प्रत्येक कर्ष १, इति द्वितीयः पाक । तृतीयपाके तु कल्कार्थ एलाचि मुरा चम्पककालिका आढकी नागेश्वर गाठियाला खट्टाशी नवनीतखोटी कुन्दरु नखी श्वेतचन्दनशोधितसमुद्र-कर्कट कालीयक जातीफल कुकुम सिल्हक अगुरु मासी कुड एतत् सर्व चूर्णीकृत्य गन्धोदकेन तैलसमेन तृतीयः पाक ॥ ७५ ॥

## बलाक्षैरीयतैले

बलानि क्वाथकल्काभ्यां तैलं पक्वं पयोऽन्वितम् ।
सर्ववातविकारघ्नमेवं क्षैरीयसाधितम् ॥ ७६ ॥

बलातैले बलाक्वाथस्त्रिगुण , क्षीरन्तु स्नेहसमम्। अन्ये तु बलाक्वाथश्चतुर्गुण , दुग्धन्तु घृतसममित्याहु. । एव क्षैरीयतैलम् ॥ ७६ ॥

## महाबलातैलम्

बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्य पयसा तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकत' ।
पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथागुरु सर्जरसं सरलं देवदारु च ।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुशारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत् साधुसिद्धं सौवर्णे राजते मृण्मयेऽपि वा ।
प्रक्षिप्य कलशे सम्यक् सुनिगुप्तं निधापयेत् ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ।

यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
क्षीणवाते मर्महतेऽभिहते मथितेऽपि वा ।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत् ॥
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ।
हिक्काकासमधीमन्थं गुल्मश्वासं सुदारुणम् ॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
एतद्धि राज्ञा कर्त्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चैव ये नराः ॥ ७७ ॥

बलामूलकषायस्येत्यादि—सुश्रुतस्य । अत्र दशमूलस्य मिलित्वैव क्वाथः, यव-कोलकुलत्थानाञ्च मिलित्वा अपरक्वाथश्च, एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा पयश्चेति द्रवचतुष्टयम् । एषां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाष्टगुणो भागः एवमत्र मिलित्वा तैलात् द्वात्रिंशद् गुणो द्रवो भवति । तैलञ्च मानविशेषानिर्देशात् प्रस्थपरिमितमेव ग्राह्यम् । एकत इति एकीकृत्य । आवाप्य मधुरं गणमिति काकोल्यादिगणं कल्कीकृत्य । सैन्धवसंयुतमिति सैन्धवमगुर्वादि च कल्कीकृत्य पक्तव्यम् । कालानुसारिवा तगरपादिका, तदभावे शियलीबीजपिण्ड । तगरं पिण्ड-तगरमूलं, शारिवा श्यामलता, पुनर्नवान्तं कल्कः । सुनिगुप्तमिति वातातपादिपरिहारेण सुष्ठु रक्षितम् । तैलमिदं सुश्रुते मूढगर्भे पठितं, तेन सूतिकायै प्रदापयेदिति विशेषेणोक्तम् । अन्त्रवृद्धिमपोहतीति अप्राप्तफलकोषामन्त्रवृद्धिं व्यपोहतीति, प्राप्तफलकोषयोः पुनरसाध्यत्वात् । राजमात्रा इति राज्ञ इव मात्रा परिच्छदो येषां ते तथा ॥ ७७ ॥

## विष्णुतैलम्

शालपर्णी पृश्निपर्णी बला च बहुपुत्रिका ।
एरण्डस्य च मूलानि बृहत्यो पूतिकस्य च ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषान्तु पलिकैः कल्कैस्तैलप्रस्थं विपाचयेत् ॥

आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ।
अस्य तैलस्य पक्वस्य शृणु वीर्य्यमतः परम् ॥
अश्वानां वातभग्नानां कुञ्जराणां तथा नृणाम् ।
तैलमेतत् प्रयोक्तव्यं सर्वव्याधिनिवारणम् ॥
आयुष्मांश्च नर पीत्वा निश्चयेन दृढो भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ।
कामलापाण्डुरोगघ्नं शर्कराश्मरीनाशनम् ॥
क्षीणेन्द्रिया नष्टशुक्रा जरया जर्जरीकृता ।
येषाञ्चैव क्षयो व्याधिरन्त्रवृद्धिश्च दारुणा ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रयोजयेत् ॥
एतदङ्गं वरं तैलं विष्णुना परिकीर्त्तितम् ॥ ७८ ॥

शालपर्णीत्यादि—स्पष्टम् ॥७८॥

## नारायणतैलम्

बिल्वाग्निमन्थः श्योणाकः पाटला पारिभद्रक ।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥
वला चातिवला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥
चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
पाने बस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ॥

अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुल पीठसर्पी च तैलेनानेन सिध्यति ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नरा ॥
वधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमत्र स्यादभावे शीतली जटा ॥ ७६ ॥

नारायणतैले पारिभद्रक पालितामादार इति प्रसिद्ध, प्रसारणी गन्धभादालिया इति ख्याता, अतिबला गोरक्षतण्डुला, तगर तगरपादिका, तदभावे शियलीछोपड पिष्टतगरमूलमित्यन्ये । अाज व यदि वा गव्यमिति यद्यपि गव्याजपयसो प्राप्ते तुल्यमास्य तथा च गोक्षीरेण पक्व तैलमित्यनभिष्यन्दि त्रिदोषहरञ्च भवतीति प्रत्येतव्यम्, अन्ये त्वाहु क्षीरान्तरनिवृत्त्यर्थं विशेषख्यापकमिति । नारायणसंज्ञा चास्य विष्णुनिर्मितत्वात्, शतावरीरससाधितत्वाद्वा ॥ ७६ ॥

## महानारायणतैलम्

शतावरी चांशुमती पृश्निपर्णी शटी बला ।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य च ।
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
पादावशेषे पूते च गर्भञ्चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥
शैलेयं तगरं कुष्ठमेला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥

गव्याजपयसो प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ।
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतः परम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ।
तैलमेतत् प्रदातव्यं सर्ववातनिवारणम् ॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ।
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥
तैलमेतद् भगवता विष्णुना परिकीर्त्तितम् ।
नारायणमिति ख्यातं वातान्तकरणं परम् ॥ ८० ॥

महानारायणतैले अंशुमती शालपर्णी; पूतिकस्य नाटाकरञ्ज इति ख्यातस्य मूलं ग्राह्यं; गवेधुक गोरक्षतण्डुला, सहचरो झिण्टी, शताह्वा शुल्फा (सोया) इति ख्याता, चन्दन रक्तचन्दन, शैलेय शैलजं; तगर तगरपादिका, स्थिरा शालपर्णी, अश्वाह्वा अश्वगन्धा । एषां कल्कानां प्रत्येकं पलार्द्धम् । प्रस्थौ द्वौ द्वाविति पृथग् द्वौ द्वौ प्रस्थौ ॥ ८० ॥

## अश्वगन्धातैलम्

शतं पक्त्वाश्वगन्धाया जलद्रोणेऽंशशेषितम् ।
विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ।
कल्कैर्मृणालशालूक-विसकिञ्जल्कमालती-
पुष्पैर्ह्रीवेरमधुक शारिवापद्मकेशरैः ॥
मेदापुनर्नवाद्राक्षामञ्जिष्ठाबृहतीद्वयैः ।
एलैलवालुत्रिफला मुस्तचन्दनपद्मकैः ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्य्यात् कृशानां मांसवर्द्धनम् ॥

रेतोयोनिविकारघ्नं व्रणदोषापकर्षणम्।
पण्ढानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः ॥८१॥

अश्वगन्धतैले अशारोपितमिति पादशेषितम्। मृणाल स्थूलमृणाल, विसन्तु स्वल्पमृणाल, विसशब्देन मृणालनिर्गत प्रतान, किञ्जल्क पद्मवराट, पद्मकेशरस्य उक्तत्वात्, अन्ये तु उत्पलकिञ्जल्कमित्याहु। मेदास्थाने सहेति पाठे सहा महा महा माषपर्णी ॥८१॥

## मूलकाद्यं तैलम्

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम्।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्ना-चविकागुरुचित्रकैः।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीविल्वशताह्वानतदारुभिः।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥८२॥

मूलकेत्यादि—चरकस्य। मूलकस्वरसादीनि चत्वारि द्रवाणि तैलसमानि। बलाचित्रकसैन्धवैरित्यत्र बलाशिग्रुकसैन्धवैरित्येव पाठश्चरकेषु दृश्यते, अन्ये तु उभयत्र चित्रकदर्शनात् एकत्र चित्रकशब्देनैरण्डमूल व्याचक्षते, तत्तु टीकाकृद्भिर्न व्याख्यातमिति ॥८२॥

## रसोनतैलम्

रसोनकल्कस्वरसेन पक्वं
तैलं पिवेद् यस्त्वनिलामयार्त्तः ॥
तस्याशु नश्यन्ति च वातरोगा
ग्रन्था विशाला इव दुर्गृहीता ॥८३॥

रसोनकल्कस्वरसेन पक्वमिति रसोनक्वाथकल्काभ्यामित्यर्थः। अत्र स्वरस एव चतुर्गुण, अन्ये तु स्वरस स्नेहसम, तोय त्रिगुणमिति। तथा वातरोगा नश्यन्ति यथा विशाला दुर्गृहीताः अनधिगतवाक्यार्थाः असंस्कृता वा ग्रन्था शास्त्राणि ॥८३॥

## केतक्याद्यं तैलम्

केतकिनागबलातिबलानां
यद् बहुलेन रसेन विपक्कम्।
तैलमनल्पतुषोदकसिद्धं
मारुतमस्थिगतं विनिहन्ति ॥
अनल्पवचनात् तत्र तुल्ये क्काथतुषोदके।
अल्कोऽपि भवेत् स्नेहो य साध्य. केवले द्रवे ॥ ८४ ॥

केतकीत्यादि—वाग्भटस्य। केतक्यादीनामतिबलान्ताना मिलिताना क्काथ.। बहुलेनेति घनेन, बहुलेनेति वचनात् अष्टभागावशिष्टत्व क्काथस्य, स च चतुर्गुण। अनल्पेति वचनात् काञ्जिकमपि चतुर्गुणमिति चक्र, अतोऽष्टगुण पाक इत्यर्थ ॥८४॥

## सैन्धवाद्यं तैलम्

द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिक-चित्रकात्।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढके ॥
आरनालात् पचेत् प्रस्थं तैलमेतैरपत्यदम्।
गृध्रस्यूरुग्रहार्शोऽर्तिसर्ववातविकारनुत् ॥ ८५ ॥

सैन्धवाद्ये भल्लातकास्थीनि विंशतिरित्याकृतिगणनात ॥ ८५ ॥

## स्वल्पमाषतैलम्

तैलं संकुचितेऽभ्यङ्गो माषसैन्धवसाधितम्।
बाहुशीर्षगते नस्यं पानञ्चौत्तरभाक्तिकम् ॥
क्काथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ ८६ ॥

स्वल्पमाषतैले माषसैन्धवसाधितमिति माषकस्य क्काथ., सैन्धवस्य तु कल्क इति चक्र। अन्ये तु केवलसैन्धवस्य कुत्रापि कल्कादर्शनान्माषसैन्धवयोः कल्क, अनुक्तद्रवत्वाज्जल चतुर्गुणमित्याहु ॥ ८६ ॥

## प्रथमं माषतैलम्

माषात्मगुप्तातिविषोरुबूक-
रास्नाशताह्वालवणै. प्रपिष्टे।

चतुर्गुणे माषबलाकषाये,
तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

माषात्मगुप्तेत्यादौ अतिविषा मूर्वेति निश्चल, यष्टिमध्वित्यन्ये । माषबलयोश्च मिलित्वा चतुर्गुण क्वाथ ॥ ८७ ॥

## द्वितीयं माषतैलम्

माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके ।
पादशेषे रसे तस्मिन् क्षीरं दत्त्वा चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ।
रास्नात्मगुप्तामधुकं बलाव्योपं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे ।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ।
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

माषप्रस्थमित्यादौ—जीवनीयानि यान्यष्टाविति अष्टवर्ग ॥ ८८ ॥

## तृतीयं माषतैलम्

माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोये ।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन बस्तपिशितस्य रसेन चापि ॥
शुण्ठ्या समागाधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या ।
रास्नाबलामृतलताकटुकैर्विपक्वं
माषाख्यमेतदवबाहुहरञ्च तैलम् ॥
अर्द्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम् ।

नस्येन बस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः ॥ ८६ ॥

माषातमीत्यादौ—अतसी वर्त्तुलकलाय, कश्चिदतिविषेत्याह, कुरण्टको झिण्टी, गोकण्टको गोत्तुर, टुण्टुकजटा श्योणाकमूल, कपिकच्छु शूक-शिम्बी। माषादिकपिकच्छ्वन्तेनैकः क्वाथ, कार्पासास्थिप्रभृतिना कोलान्तेनापर क्वाथ, कोलञ्च शुष्कबदरम्। तथा बस्तपिशितस्य छागमांसस्य क्वाथस्तृतीय। त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम्, 'एकद्वित्रिद्रवद्रव्ये कुर्य्यात् स्नेह चतुर्गुणम्' इति वचनात्। सरणी प्रसारणी अमृतलता गुडूची, कटुक मरिच न तु लता-कस्तूरी ॥ ८६ ॥

## महामाषतैलम्

माषस्यार्द्धाढकं दत्त्वा तुलार्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भस पचेत् ॥
पूतशीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम् ॥
आत्मगुप्तोरुबूकश्च शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम् ॥
सव्योषं पिप्पलीमूलं रास्नामधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी।
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना ॥
पक्षाघातार्दिते वाते बाधिर्य्ये हनुसंग्रहे।
कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे ॥
पाणिपादशिरोग्रीवाभ्रमणे मन्दचंक्रमे।
कलायखञ्जे पांगुल्ये गृध्रस्यामवबाहुके ॥
पाने बस्तौ तथाभ्यङ्गे नस्यकर्णादिपूरणे।
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम् ॥ ६० ॥

## त्रिशतीयप्रसारणीयतैलम्

समूलपत्रशाखाञ्च जातसारां प्रसारणीम्।
कुट्टयित्वा पलशतं दशमूलशतं तथा।

अश्वगन्धापलशतं कटाहे समधिक्षिपेत् ।
वारिद्रोणे पृथक् पक्त्वा पादशेषावतारितम् ।
कषाया सममात्रास्तु तैलपात्रं प्रदापयेत् ॥
दध्नस्तथाढकं दत्वा द्विगुणञ्चापि काञ्जिकम् ।
चतुर्गुणेन पयसा जीवनीयैः पलोन्मितैः ॥
शृङ्गवेरपलान् पञ्च त्रिंशद्भल्लातकानि च ।
द्वे पले पिप्पलीमूलाच्चित्रकस्य पलद्वयम् ॥
यवक्षारपले द्वे च मधुकस्य पलद्वयम् ।
प्रसारणीपले द्वे च सैन्धवस्य पलद्वयम् ॥
सौवर्चलपले द्वे च मञ्जिष्ठाया पलद्वयम् ।
सर्वाण्येतानि संस्कृत्य शनैर्मृद्वग्निना पचेत् ॥
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्मनिरूहणे ।
पाने नस्ये च दातव्यं न क्वचित् प्रतिहन्यते ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति ॥
गृध्रसीमस्थिभङ्गञ्च मन्दाग्नित्वमरोचकम् ।
अपस्मारमथोन्मादं विभ्रमं मन्दगामिताम् ॥
त्वग्गताश्चैव ये वाता शिरासन्धिगताश्च ये ।
जानुसन्धिगताश्चैव पादपृष्ठगतास्तथा ॥
अश्वो वाताच्च सम्भग्नो गजो वा यदि वा नरः ।
प्रसारयति यस्माद्धि तस्मादेषा प्रसारणी ॥
इन्द्रियाणां प्रजननी वृद्धानाञ्च रसायनी ।
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत् ॥
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम् ।
अपनयति वलीपलितमुत्पाटयति पक्षाघातम् ।
वातस्तम्भं सर्वाङ्गगतं वातगुल्मञ्च नाशयति ।
एतदुपसेव्यमानः प्रसन्नवर्णेन्द्रियो भवति ॥ ६१ ॥

माषस्यार्द्धाढकमित्यादि—अर्द्धाढक द्वात्रिंशत् पलानि । अत्रापि पूर्ववत् यष्टि-मधुकस्य भागद्वयम् । लवणत्रयमिति सौवर्चल विड सैन्धवञ्च, पुन सैन्धवमिति वचनात् सैन्धवस्यापि भागद्वयम् । जीवनीयानि इति जीवनीयदशकम् । पाणिपादशरोग्रीवाभ्रमण इति पाणिपादादिकम्प इत्यर्थ ॥ ६० ॥ ६१ ॥

## बृहन्माषतैलम्

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसभवे पृथक् ॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्तासिन्धूत्थ-शताह्वैरण्डमुस्तकैः ॥
जीवनीयैर्बलाव्योषैः पचेदक्षसमैर्बुधः ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु च दापयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ।
क्वाथे प्रस्था षडेवात्र विभक्त्यन्तेन भाषिताः ॥ ६२ ॥

महाप्रस्थमाषतैले क्वाथस्य प्रस्थस्याप्यत्वान्माषादीना प्रत्येक प्रस्थो ग्राह्य । मिलितदशमूलप्रस्थ, तथा यवकोलकुलत्थाना मिलित्वैव प्रस्थ. । सर्वत्रैव चतुर्गुण जल देयम्, चतुर्भागोऽवशेष्य । अतएवाह क्वाथप्रस्था षडेवात्रेत्यादि—जीवनी-यैरिति जीवनीयदशकै ॥ ६२ ॥

## महामाषतैलम्

द्विपञ्चमूली नि क्वाथ्य तैलात् षोडशभिर्गुणै ।
माषाढकं साधयित्वा तं निर्य्यूहं चतुर्गुणम् ॥
ग्राहयित्वा तु विपचेत् तैलप्रस्थं पय.समम् ।
कल्कार्थञ्च समावाप्य भिषग् द्रव्याणि बुद्धिमान् ॥

अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम् ।
कुष्ठं परूषकं भार्गीं द्वे विदार्य्यौ पुनर्नवाम् ॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम् ।
शतावरीं गोक्षुरकं पिप्पलीमूलचित्रकम् ॥
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम् ।
तत् साधु सिद्धं विज्ञाय माषतैलमिदं महत् ।
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥
पक्षाघाते हनुस्तम्भे अर्दिते सापतन्त्रके ।
अववाहुकविश्वाच्योः खञ्जपंगुलयोरपि ।
हनुमन्याग्रहे चैव अधिमन्थे च वातिके ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ।
कलायखञ्जशमने भैषज्यमिदमादिशेत् ॥
दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ ६३ ॥

द्विपञ्चमूलीमित्यादि—अत्र माषस्य क्वाथस्याढकमानत्वमुक्तम्, तत्माहचर्य्याद्दशमूलस्यापि क्वाथस्याढकं ज्ञेयम् । तैलात् षोडशभिर्गुणैरिति तैलप्रस्थापेक्षया षोडशगुणजलैरित्यर्थः, प्रस्थः षोडशगुणः सन् द्रोणः भवति, तेन जलद्रोणेनेत्यर्थः । माषढकञ्च तैलात् षोडशगुणैर्जलैः साधयित्वेति योज्यम् । तं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात् तथा ग्राहयित्वा तैलप्रस्थं विपचेदिति योज्यम् । पयः सममिति दुग्धं तुल्यं तेन नवगुणः पाक इति चक्रः । अतएव वक्ष्यति दशमूलाढकं द्रोण इत्यादि । अन्ये तु द्विपञ्चमूलीं माषाढकञ्चैकीकृत्य जलद्रोणमात्रेण साधयेदित्याहुः तन्मते पञ्चगुणः पाकः । अपरे तु दशमूलकषायेण तैलात् षोडशगुणेन माषाढकं साधयित्वा तेन पादावशेषेण तैलप्रस्थपाक इत्याहुः । अत्र पक्षे मिलितदशमूलपल २५६, जलशराव २५६, शेषशराव ६४, किन्तु अयं पक्षो वृद्धैर्नाद्रियते क्वुत्रापि एवंविधकल्पनाया अदृष्टत्वात् । द्वे विदार्य्यौ विदारी कन्दं क्षीरविदारी च, मातुलुङ्गफलं मातुलुङ्गस्य फलम् । जीवनीयगणमिति जीवनीयदशकम् ॥ ६३ ॥

## मज्जस्नेहः

ग्राम्यानूपौदकानान्तु भिन्नास्थीनि पचेज्जले ।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोता विदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत् सिद्धं नावनाभ्यङ्गात् तथा पानानुवासनात् ।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥ ६४ ॥

ग्राम्यनूपौदकानामित्यादौ—द्विगुणक्षीरसाहचर्याद्दशमूलीक्वाथोऽपि द्विगुण एव ग्राह्यः; अन्ये तु चतुर्गुणमित्याहुः । वातघ्नैरिति मधुरलवणस्कन्धायुक्तैर्वातहरद्रव्यैः भद्रदार्वादिगणैः । जीवकर्षभकयोः पुनः पाठो भागद्वयग्रहणार्थः । आस्फोता हाफरमालीति ख्याता ॥ ६४ ॥

## चतुःस्नेहः

प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णगन्धात्वगाढक्यो पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥
सुरारनालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाडिमवृक्षाम्लरसं तैलं घृतं वसाम् ॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट् ।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ।
वेपनाक्षेपशूलेषु तमभ्यङ्गे प्रदापयेत् ॥ ६५ ॥

प्रस्थः स्यादित्यादि—अत्र त्रिफलाया मिलित्वा प्रस्थः, कृष्णगन्धा शोभाञ्जनम् अस्यास्त्वक् मूलत्वक् । अन्ये तु कृष्णगन्धा शमीत्याहुः, तत्र जतूकर्णे "त्रिफ-

लाप्रस्य कुलत्थार्द्धं शिग्रुत्वगाढकी" इत्यादि पाठात्। दशमूल पलोन्मितमिति प्रत्येकम्। प्रस्थोन्मितं पृथगिति सुरादीनां पयोऽन्तानां प्रत्येक प्रस्थ इत्यर्थ । जीवनीयपलानि षडिति मिलित्वा । महास्नेह इति चतुःस्नेहस्य सञ्ज्ञा ॥ ६५ ॥

## कुब्जप्रसारणीतैलम्

प्रसारणीशत क्षुण्णं पचेत् तोयार्मणे शुभे ।
पादशेषं समं तैलं दधि दद्यात् सकाञ्जिकम् ॥
द्विगुणञ्च पयो दत्वा कल्कान् द्विपलिकांस्तथा ।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम् ।
प्रसारण्याश्च मूलानि मासी भल्लातकानि च ।
पचेन्मृद्वग्निना तैलं सर्ववातविकारनुत् ॥
अशीतिं नरनारीस्थान् वातरोगान् व्यपोहति ।
कुब्जस्तिमितपङ्गुत्वं गृध्रसीं खुडकार्दितम् ।
हनुपृष्ठशिरोग्रीवास्तम्भं वापि नियच्छति ॥ ६६ ॥

कुब्जप्रसारणीतैले सममिति पादावशिष्टक्वाथसमम्, आढकमित्यर्थः । दधि दद्यात् सकाञ्जिकमिति दधिकाञ्जिके तैलसमे । तेन तैलदधिकाञ्जिकानां प्रत्येकमाढकम्, द्विगुणञ्च पय इति आढकद्वयमित्यर्थः । अन्ये तु सकाञ्जिकमिति पयोविशेषणं कृत्वा काञ्जिकस्यापि द्वैगुण्यमिच्छन्ति, व्यवहारस्तु पूर्वेणैव । खुडको ग्रन्थिवातः, अन्ये तु वातकण्टक इत्याहुः ॥ ६६ ॥

## त्रिशतीयप्रसारणीतैलम्

प्रसारण्यास्तुलामश्वगन्धाया दशमूलत ।
तुलां तुलां पृथग्वारिद्रोणे पादावशेषिते ॥
तैलाढकं चतु क्षीरं दधितुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षारप्रसारण्यब्दसैन्धवै ।
समञ्जिष्ठाग्नियष्ट्याह्वै पलिकैर्जीवनीयकै ॥
शुण्ठ्याः पञ्चपलं दत्वा त्रिंशद्भल्लातकानि च ।
पचेद्धस्त्यादिना वातं हन्ति सन्धिशिरास्थिगम् ॥

## काञ्जिकषट्पलकं घृतम्

हिंगु त्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥
आरनालाढकं दत्त्वा तत्सर्पिर्जठरापहम् ।
शूलं विवन्धमानाहमामवातं कटीग्रहम् ॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ २८ ॥

काञ्जिकषट्पलके त्रिकटुक प्रत्येक पलिकम् । माणिमन्थ सैन्धवम् ॥ २८ ॥

पुष्ट्यर्थे पयसा साध्यं दध्ना विण्मूत्रसंग्रहे ।
दीपनार्थे मतिमता मस्तुना च प्रकीर्त्तितम् ॥ २६ ॥

पुष्ट्यर्थमित्यादि—उक्तमेतत् काञ्जिकषट्पलक यदि पुष्ट्यर्थं क्रियते, तदा काञ्जिकस्थाने पयो दत्त्वा साध्य , विण्मूत्रसग्रहे कार्य्ये दध्ना साध्य, दीपनार्थ यदि, तदा मस्तुना साध्यमित्यर्थ ॥ २६ ॥

## शुण्ठीघृतम्

सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ ३० ॥

शुण्ठीघृत स्पष्टम् ॥ ३० ॥

## रसोनपिण्डम्

रसोनस्य पलशतं तिलस्य कुडवं तथा ।
हिंगु त्रिकटुकं क्षारौ द्वौ पञ्चलवणानि च ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यमानी च धन्याकश्चापि बुद्धिमान् ॥
प्रत्येकन्तु पलश्चैषां श्लक्ष्णचूर्णानि कारयेत् ।
घृतभाण्डे दृढे चैतत् स्थापयेद् दिनषोडशम् ॥
प्रक्षिप्य तैलमाणीञ्च प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रिते ।

अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ॥
सोन्मादव्रातभग्ने च शूले जन्तुषु शस्यते ॥ ३१ ॥

रसोनपिण्डे निस्त्वचो रसोनस्यापि पिष्टस्य एव तिलस्यापि । तैलस्य भार्गी-त्यनेनाष्टौ पलानि, द्वैगुण्याभावात् । प्रस्थार्द्धमिति षोडशपलानि जन्तुष्विति क्रिमिषु ॥ ३१ ॥

## प्रसारणीसन्धानम्

प्रसारण्याढकक्काथे प्रस्थो गुडरसोनयोः ।
पक्कः पञ्चोषणरजःपादः स्यादामवातहा ॥ ३२ ॥

प्रसारण्याढकमित्यादौ—प्रसारण्या क्काथे आढके षोडशशरावपरिमित इत्यर्थ । गुडरसोनयोश्च मिलित्वा प्रस्थ । पक्क इति कालवशात् परिणत सञ्जा-तरस इत्यर्थ । कालश्च सप्ताह एव वक्ष्यमाणप्रयोगदर्शनात् । पञ्चोषणरज इति मिलितपञ्चकोलचूर्णप्रस्थमपेक्ष्य पादिक चतु पलमित्यर्थ । गन्धभादाली पल ६४, पाकार्थ पानीय शराव ६४, शेष शराव १६, गुडपल ८, रसोनपल ८, सन्धानवशात् परिणते सति प्रक्षेप मिलितपञ्चकोलचूर्ण पल ४ । प्रसारणीसन्धानमेतत् ॥ ३२ ॥

## रसोनसुरा

वल्कलायाः सुरायास्तु सुपक्कायाः शतं घटे ।
ततोऽर्द्धेन रसोनन्तु संशुद्धं कुट्टितं क्षिपेत् ॥
पिप्पलीपिप्पलीमूलमजाजीकुष्ठचित्रकम् ।
नागरं मरिचं चव्यं चूर्णितञ्चाक्षसम्मितम् ॥
सप्ताहात् परतः पेया वातरोगामनाशिनी ।
क्रिमिकुष्ठक्षयानाहगुल्मार्शःप्लीहमेहनुत् ।
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी ॥ ३३ ॥

वल्कलायाः सुराया इति वल्कलीति ख्यातायां सुरायां । शतमिति पलशत घटे घटमध्ये क्षिपेदित्यन्वय. । ततोऽर्द्धेन परिमित रसोनमिति पञ्चाशत्पलमित्यर्थ. । संशुद्धमिति त्वक्शिरारहितम् ॥ ३३ ॥

## शिण्डाकी

सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले ।

मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥
धान्यराशौ ततो दद्यात् सञ्चूर्ण्य पलिकानि च।
अलम्बुषा गोक्षुरकं शतपुष्पीपुनर्नवे।
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च ॥
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता।
भृष्ट्वा सर्षपतैलेन हिंगुसैन्धवसंयुता।
भक्षिता लवणोपेता जयेदामं महारुजम्।
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च।
कट्यूरुवातमानाहजानुजं त्रिकमागतम्।
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी ॥ ३४ ॥

सिद्धार्थकखलिप्रस्थमित्यादि—सर्षपखलीं चूर्णीकृत्य जलेनालोड्य छान-यित्वा निस्तुषीकृत्य आतपे सशोष्य ग्राह्य पल १६, मण्डशराब ४, मिश्रयित्वा धान्यराशौ दिनत्रय स्थाप्यम्। तत इति धान्यराशेराकृष्यालम्बुषादिचूर्णं प्रत्येक पालिक दद्यात्। ततोऽम्लत्वेन सम्यक् पाक सम्यक् परिणतमिति विज्ञाय स्थापनी-यम। ततः प्रत्यह ग्राह्य कर्ष २, तण्डुलचूर्ण पल १, पाकार्थ जल पल ६ यवागू' षड्गुणेऽम्भसत्युक्ते, भर्जनार्थं सर्षपतैलकर्ष १, हिंगुरत्ति ५, सैन्धव माषा २, तत' पुनरपि किञ्चिल्लवण दत्त्वा भक्षणीयेति परिपाटी कथिता। सिद्धा तण्डुलमिश्रितेति एषा शिण्डाकी तण्डुलमिश्रिता सती सिद्धा कार्य्या पेया कार्य्येत्यर्थ। अन्ये तु पिष्टतण्डुलमिश्रणेन वटक कार्य्य इत्याहु। शिण्डाकीति सन्धानविशेषस्य सञ्ज्ञा तीरभुक्तिप्रसिद्धा ॥ ३४ ॥

## सिध्मला

त्वगादिहीना संशुद्धा प्रत्यग्राः शकुलादय।
श्लक्ष्णचूर्णीकृतं तेषां शीते पलशतत्रयम् ॥
शतेन कटुतैलस्य व्योषरामठधान्यकैः।
क्रिमिघ्नदीप्यकनिशा-चविकाग्रन्थिकार्द्रकैः ॥
जीरकद्वयवृश्चीरसुरसार्जकशिग्रुकैः।
दशमूलात्मगुप्ताभ्यां मार्कवैर्लवणैस्त्रिभिः ॥

चूर्णितैः पालिकैः सार्द्धमारनालपरिप्लुतैः ।
विन्यसेत् स्नेहपात्रे तु धान्यराशौ पुनर्न्यसेत् ॥
सप्तरात्रात् समुद्धृत्य पानभक्षणभोजनैः ।
सिध्मलेयं प्रयोक्तव्या सामे वायौ विशेषतः ॥
भग्नरुग्णाश्च्युतहता कम्पिनाः पीठसर्पिणः ।
गृध्रसीमग्निसादञ्च शूलगुल्मोदराणि च ॥
वलीपलितखालित्यं हत्वा स्युरमलेन्द्रिया ॥ ३५ ॥

सिध्मलाया शीत इति शीतकाले । अर्जक सुरमश्च पर्णासभेद । आरनाल परिप्लुतैरिति तावन्मानमारनाल यावता परिप्लव सम्यक् भवति । स्नेहपात्रमिह कटु तैलपात्रमेव यौगिकम् । भक्षणमिति चर्वण, भोजनमन्नादिभोजनम् ॥ ३५ ॥

दधिमत्स्यगुडक्षीरपोतकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो गुर्वभिष्यन्दकारि यत् ॥ ३६ ॥

इत्यामवातचिकित्सा ।

---

माषपिष्टकमिति माषकृत पिष्टक, किंवा माषक पिष्टकञ्च । अभिष्यन्दकारि दोषधातुमलक्लेदकारि ॥ ३६ ॥

इत्यामवातचिकित्साविवृति ।

---

# अथ शूलचिकित्सा ।

---

वमन लङ्घनं स्वेद पाचनं फलवर्त्तय. ।
क्षारचूर्णानि गुडिकाः शस्यन्ते शूलशान्तये ॥ १ ॥
पुंस शूलाभिपन्नस्य स्वेद एव सुखावह ।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वा पिशितोत्करैः ॥ २ ॥

आमवातवत् शूलस्याप्यामजन्यत्वेन तदनन्तर शूलचिकित्सामाह वमन मित्यादि—सुश्रुतस्य । वमनमुत्क्लिष्टकफे, लङ्घनमामपाचनार्थं, स्वेद पित्त विहाय । क्षार इति क्षारवस्ति क्षारप्रयोगो वा । चूर्णगुडिके इहैव वक्ष्यमाणे पुंस इत्यत्र

नस्येति पाठान्तरम्। कृशरास्तिलकल्कः। पायसादिभि पिण्डादिसम्बन्धात् स्वेदो बोध्य, पिशितेति भेकादिमांसै।

## वातशूलचिकित्सा

**वातात्मकं हन्त्यचिरेण शूलं**
**स्नेहेन युक्तस्तु कुलत्थयूषः।**
**ससैन्धवो व्योषयुतः सलावः**
**सहिंगुसौवर्चलदाडिमाढ्यः॥ ३॥**

वातात्मकमित्यादि—यूष इति कुलत्थलावमांसयोर्मिलित्वा पल, जल षोडशपल, पलचतुष्टयस्थिते विमर्द्य वस्त्रेण छानयित्वा हिंगुसहितेन घृतेन भर्जनीय, तदनन्तर सैन्धवादीना चूर्ण मिलित्वा कर्ष प्रक्षेप, पश्चाद्दाडिमबीजरसो योज्यः॥ ३॥

**बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः।**
**सहिंगुलवणं पीतं सद्यो वातरुजापहम्॥ ४॥**

बलेत्यादियोगोऽय क्वाथविधिना। हिंगु लवणञ्च प्रक्षेप्यम्। लवणमत्र सौवर्चल, वातशूलहरत्वादित्याहु॥ ४॥

**शूली निरन्नकोष्ठोऽद्भिरुष्णाभिश्चूर्णिताः पिबेत्।**
**हिंगुप्रतिविषाव्योषवचासौवर्चलाभयाः॥ ५॥**
**तुम्बुरूण्यभया हिंगु पौष्करं लवणत्रयम्।**
**पिबेद् यवाम्बुना वातशूलगुल्मापतन्त्रकी॥ ६॥**

निरन्नकोष्ठ इति अभुक्त इत्यर्थः। अन्ये तु अन्नम् अजीर्णान्न तच्छून्यकोष्ठ इत्याहु। प्रतिविषा अतिविषा, तुम्बुरु स्वनामख्यात, यवाम्बुनेति यवक्काथेन। यवैरण्डाम्बुना पेयमिति तु पीठान्तर, तेन द्वाभ्यामेव क्वाथ॥ ५॥ ६॥

**श्यामा विडं शिग्रुफलानि पथ्या**
**विडङ्गकाम्पिल्लकमश्वमूत्री।**
**कल्कं समं मद्ययुतञ्च पीत्वा**
**शूलं निहन्यादनिलात्मकन्तु॥ ७॥**

श्यामेत्यादि—श्यामा वृद्धदारक, कम्पिल्लको गुण्डारोचनी, अश्वमूत्री

शल्लकी, क्षारो यवक्षार' ॥ ७ ॥

यमानीहिंगुसिन्धूत्थक्षारसौवर्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिषूदनाः॥ ८॥

यमानीत्यादौ—सुरामण्डेनेति सुराया उपरितनस्वच्छद्रवभागेन, एवमन्यत्रापि ॥ ८ ॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिंगुसौवर्च्चलोपेतं सद्यः शूलनिवारणम्॥ ९॥

विश्वमित्यादि—एरण्डमूलस्य भागत्रय शुण्ठ्याश्चैको भाग इत्यर्थ. ॥९॥

हिंगुपुष्करमूलाभ्यां हिंगुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथ. सद्यः शूलनिवारण. ॥ १० ॥
तद्वद्व्रुयवक्वाथो हिंगुसौवर्चलान्वितः॥ ११॥

हिंगुपुष्करेत्यादि, हिंगुपुष्करमूलाभ्या हिंगुसौवर्चलेन वेति उभयत्र सहार्थे तृतीया। तद्वदिति सद्य शूलहर इत्यर्थ ॥ १० ॥ ११ ॥

हिंग्वम्लकृष्णालवणं यमानी-
क्षाराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणिमण्डमिश्रं
शूले प्रवृद्धेऽनिलजे शिवाय॥ १२॥

## नारिकेलखण्डः

सुपक्वनारिकेलस्य शस्यं पलचतुष्टयम्।
पिष्ट्वा घृतपले भृष्ट्वा क्षिपेत् खण्डचतुःपलम्॥
नारिकेलस्य च प्रस्थे किञ्चिच्छस्यवितो जले।
धन्याकं पिप्पली मुस्तं द्विजीरं वंशलोचनाम्॥
शाणमानं चतुर्जातं चूर्णं शीते क्षिपेद् बुधः।
हन्त्यम्लपित्तमरुचिं रक्तपित्तं क्षयं वमिम्॥
शूलञ्च पृष्ठशूलञ्च पित्तरुग्घ्नं रसायनम्।
विशेषाद्बलकृद् वृष्यं पुष्टिमोजस्करं स्मृतम्॥ १३॥

हिंग्वम्लेत्यादि—अम्लोऽम्लवेतस ; कृष्णा पिप्पली; लवणमिह सौवर्चल वेशेषत. शूलहरत्वात् । क्वचित् कृष्णामलकमिति पाठ. स च निश्चलस्यासम्मत । नेश्चलस्तु कृष्णामलकमित्यत्र कृष्णलवणमिति पठति, हारीतमवादात्। छन्दोभङ्गो-पि नाशङ्क्य , अनन्तत्वात् पद्यमार्गस्येति व्याचष्टे ॥ १२ ॥ १३ ॥

सौवर्च्चलाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः ।
मातुलुङ्गरसैः पिष्ट्वा गुडिकानिलशूलनुत् ॥ १४ ॥
हिंग्वम्लवेतसव्योष-यमानीलवणत्रिकैः ।
वीजपूररसोपेतैर्गुडिका वातशूलनुत् ॥ १५ ॥
वीजपूरकमूलञ्च घृतेन सह पाययेत् ।
जयेद् वातभवं शूलं कर्षमेकं प्रमाणतः ॥ १६ ॥

सौवर्चलेत्यादौ—अम्लिका तिन्तिडी । द्विगुणोत्तरैरिति उत्तरोत्तर द्विगुणै-रेत्यर्थ. । एषा गुडिका चतुर्माषकमिता उष्णोदकानुपानेन भक्षणीया, एव वक्ष्य-माणा गुडिकापि । वीजपूरकेत्यादि केवलवातजे ॥ १४–१६ ॥

विल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा ।
गुडिकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥ १७ ॥

विल्वमूलेत्यादि—अम्लतुषाम्भ. अम्लकाञ्जिकम् ॥ १७ ॥

तिलैश्च गुडिकां कृत्वा भ्रामयेज्जठरोपरि ।
गुडिका शमयत्येषा शूलञ्चैवाति दुःसहम् ॥ १८ ॥

तिलैरिति पिष्टै । गुडिकेय कोष्णा उदरे भ्रामयितव्या ॥ १८ ॥

नाभीलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥ १९ ॥

जीवन्तीमूलकल्केनापि लेप ॥ १९ ॥

## पित्तशूलचिकित्सा

गुडशालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ २० ॥

सम्प्रति पित्तशूलचिकित्सानाह गुडेत्यादि—गुडोऽत्र पुरातन. उपहतमलश्च ज्ञेयः, तस्य वातपित्तहरत्वेन यौगिकत्वात् । उक्त हि सुश्रुते—"पित्तघ्नो मधुर.

शुद्धो वातघ्नोऽसृक्प्रसादन । पुराणश्चाधिकगुण स्मृत पथ्यतमो गुड " ॥२०॥

पैत्ते तु शूले वमनं पयोऽम्बु-
रसैस्तथेक्षोः सपटोलनिम्बैः
शीतावगाहाः पुलिनाः सवाताः
कांस्यादिपात्राणि जलप्लुतानि ॥ २१ ॥

पैत्ते तु शूले वमनमित्यादि—पित्तजेऽपि वमनमामाशयस्थपित्तहरणार्थम् । सपटोलनिम्बैरिति पटोलनिम्बकल्कयुतै । मदनफलयोगमप्यत्र केचिदिच्छन्ति ॥२१॥

विरेचनं पित्तहरञ्च शस्तं
रसाश्च शस्ता शशलावकानाम् ।
सन्तर्पणं लाजमधूपपन्नं
योगाः सुशीता मधुसंप्रयुक्ताः ॥ २२ ॥
छर्द्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहे त्वतितर्षिते च ।
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थं ॥ २३ ॥

विरेचन पित्तहरमिति पित्तहरमधुरगणोपहितम् । सन्तर्पण लाजमधूपपन्नमिति लाजशक्तुमधुभ्यां निर्मित सन्तर्पण । यवस्य पेयामिति यवस्य यवागूम् ॥२२॥२३॥

धात्र्या रसं विदार्य्या वा त्रायन्ती गोस्तनाम्बु वा ।
पिबेत् सशर्करं सद्यः पित्तशूलनिसूदनम् ॥ २४ ॥

धात्र्या रसमित्यादि योगत्रयम् । धात्र्या स्वरस , विदार्य्या अपि स्वरस , त्रायन्तीगोस्तनयो क्काथ , शर्करा सर्वत्र प्रक्षेप्या ॥ २४ ॥

शतवरीरसं क्षौद्रयुतं प्रात पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ २५ ॥

शतावरीरसमित्यादि स्पष्टम् ॥ २५ ॥

बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुरालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ २६ ॥

वृहत्यावित्यादि—इन्तुरालिका खागरभेदा ॥ २६ ॥

शतावरीसयष्ट्याह्व-वाट्यालकुशगोक्षुरैः।
शृतशीतं पिवेत् तोयं सक्षौद्रगुडशर्करम्।
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम् ॥ २७ ॥

शतावरीत्यादौ—शृतशीतमिति शृत शीतमेव व्यजनादिभि, न तु शीत-कषायम् ॥ २७ ॥

त्रिफलानिम्बयष्ट्याह्व-कटुकारग्वधैः शृतम्।
पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ॥ २८ ॥
तैलमेरण्डजं वापि मधुकक्वाथसंयुतम्।
शूलं पित्तोद्भवं हन्याद् गुल्मं पैत्तिकमेव च ॥ २६ ॥

त्रिफलेत्यादौ—यष्ट्याह्व यष्टिमधुक, कटुका कटुरोहिणी। तैलमेरण्डज-मिति तैल प्रक्षेप्यम्। अन्ये तु योगद्वयमाहु। तन्मते एरण्डज तैलमित्येक, मधु-कक्वाथसंयुतमेरण्डतैलमिति द्वितीय ॥ २८। २६ ॥

त्रिफलारग्वधक्वाथं सक्षौद्रं शर्करान्वितम्।
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम् ॥ ३० ॥
प्रलिह्यात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥ ३१ ॥

त्रिफलेत्यादि—स्पष्टम्। प्रलिह्यादित्यादौ धात्रीचूर्ण आमलकीचूर्णम् ॥ ३०—३१ ॥

## अपरनारिकेलखण्डः

नारिकेलपलान्यष्टौ शर्कराप्रस्थसंयुतम्।
तज्जलं पात्रमेकन्तु सर्पिः पञ्च पलानि च ॥
शुण्ठीचूर्णस्य कुडवं प्रस्थार्द्धं क्षीरमेव च।
सर्वमेकीकृतं पात्रे शनैर्मृद्वग्निना पचेत् ॥
तुगा त्रिकटुकं मुस्तं चतुर्जातं सधान्यकम्।
द्वे कणे कर्षयुग्मञ्च जीरकञ्च पृथक् पृथक् ॥
श्लक्ष्णचूर्णं विनिक्षिप्य स्थापयेद्भाजने मृदः।
खादेत् प्रतिदिनं शाणं यथेष्टाहारवानपि ॥

सर्वदोषभवं शूलमामवातं विनाशयेत् ।
परिणामभवं शूलमम्लपित्तञ्च नाशयेत् ॥
बलपुष्टिकरञ्चैव वाजीकरणमुत्तमम् ।
रक्तपित्तहरं श्रेष्ठं छर्दिहृद्रोगनाशनम् ।
अग्निसन्दीपनकरं सर्वरोगनिवर्हणम् ॥ ३२ ॥

त्रिफलारग्वधक्वाथमित्यादि स्पष्टम् ॥ ३२ ॥

## कफशूलचिकित्सा

श्लेष्माधिके छर्दनलङ्घनानि
शिरोविरेकं मधुशीधुपानम् ।
मधूनि गोधूमयवानरिष्टान्
सेवेत रूक्षान् कटुकांश्च सर्वान् ॥३३॥

श्लेष्मात्मक इत्यादि—मधुना कृत शीधुर्मधुशीधु, अरिष्टानि सन्धानविशेषान् ॥ ३३ ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी तोयसाधिता ॥ ३४ ॥

पिप्पलीत्यादि स्पष्टम् ॥ ३४ ॥

लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ।
सुखोष्णेनाम्बुना पीतं कफशूलविनाशनम् ॥ ३५ ॥

लवणत्रययुतमिति लवणत्रय सौवर्चलसैन्धवविडम् । समभागचूर्णादष्टमापकमुष्णोदकपलेनालोड्य पेयम् । चूर्णविषये योगोऽयम ॥ ३५ ॥

विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥ ३६ ॥

विल्वमूलादिर्विश्वभेषजान्त अय योग क्वाथविधिना ॥ ३६ ॥

मुस्तं वचां तिक्तकरोहिणीञ्च
तथाभयां निर्दहनीञ्च तुल्याम् ।

पिबेत्तु गोमूत्रयुतां कफोत्थं
शूलं तथामस्य च पाचनार्थम् ॥ ३७॥

मुस्तमित्यादौ—निर्दहनी मूर्वा। मुस्तादि निर्दहन्यन्त एको योग । मुस्तकादिक पिष्ट्वा गोमूत्रेण पेयम् ॥ ३७ ॥

वचाब्दाग्न्यभयातिक्ताचूर्णं गोमूत्रसंयुतम्।
सक्षारं वा पिबेत् क्राथं विल्वादे कफशूलवान् ॥ ३८ ॥

वचेत्यादौ—अग्निश्चित्रक । सक्षारमित्यादिस्तु द्वितीयो योग· विल्वादेर्दशमूलस्य क्राथ पिबेदिति ॥ ३८ ॥

मातुलुङ्गरसो वापि शिग्रुक्राथस्तथापरः।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ ३९ ॥

मातुलुङ्गरस इति मातुलुङ्गमूलक्राथ । योगद्वयेऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥३९॥

—आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥ ४० ॥

आमशूल इत्यादौ आमहर भूत्वा यदग्निवृद्धिकर भवति पञ्चकोलादि, तत् सेव्यम्, न तु घृतादि ॥ ४० ॥

## हिङ्ग्वादिः

सहिङ्गुतुम्बुरुव्योषयमानीचित्रकाभयाः।
सक्षारलवणाश्चूर्णं पिबेत् प्रात सुखाम्बुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ४१ ॥

तुम्बुरु वणिग्द्रव्यविशेष. ॥ ४१ ॥

## धात्रीलौहम्

षट्पलं शुद्धमण्डूरं यवस्य कुडवं तथा।
पाकाय नीरप्रस्थार्द्धं चतुर्भागावशेषितम् ॥
शतमूलीरसस्याष्टावामलक्या रसस्तथा।
तथा दधिपयोभूमिकूष्माण्डस्य चतुःपलम् ॥
चतु पलं शर्कराया घृतस्य च चतुःपलम्।

प्रक्षेपं जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥
मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम्।
रेणुकं त्रिफलाञ्चैव तालीशं नागकेशरम् ॥
प्रत्येकं कार्षिकं चूर्णं णेपयित्वा विनिक्षिपेत्।
भोजनादौ तथा मध्ये चान्ते चैव समाहित ॥
तोलैकं भक्षयेन्नित्यमनुपानं पयोऽथ वा।
शूलमष्टविध हन्ति साध्यासाध्यमथापि वा ॥
वातिक पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
पारिणामसमुत्थांश्च अन्नद्रवसमुद्भवान्।
द्वन्द्वजान् पक्तिशूलांश्च अम्लपित्त सुदारुणम् ॥
सर्वरोगहरं श्रेष्टं धात्रीलौहमिदं स्मृतम् ॥ ४२ ॥

षट्पलमित्यादि—स्पष्टम् ॥ ४२ ॥

चित्रकग्रन्थिकैरण्डशुण्ठीधान्यं जलै शृतम्।
शूलानाहविवन्धेषु सहिंगुविडसैन्धवम् ॥ ४३ ॥

चित्रकमित्यादौ—ग्रन्थिक पिप्पलीमूलम्। सहिंगुविडसैन्धवमित्यत्र सहिंगु-विडदाडिममिति केचित् पठन्ति ॥ ४३ ॥

दीप्यक सैन्धवं पथ्या नागरञ्च चतुःपलम्।
भृशं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम् ॥ ४४ ॥

दीप्यक यमानी मन्दस्यातिमन्दस्य ॥ ४४ ॥

समाधिकं बृहत्यादिं पिबेत् पित्तानिलात्मके।
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके ॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक्।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ४५ ॥

समाधिक बृहत्यादिमिति बृहत्यौ गोक्षुरैरण्डेत्यादिना पूर्वमुक्तम्, अन्ये तु सन्निपातज्वरोक्त बृहत्यादिकमाहुः। व्यवहारस्तु पूर्वयैव। द्वन्द्वजशूलचिकित्सा-माह व्यामिश्रमित्यादि ॥ ४५ ॥

पटोलत्रिफलारिष्टक्वाथं मधुयुतं पिबेत्।

पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये ॥ ४६ ॥

पटोलेत्यादौ—अरिष्टो निम्ब ॥ ४६ ॥

रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकांक्षितः ।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ ४७ ॥

रसोनमित्यादि—निस्तुषपिष्टरसोन माषा ६, मद्य पल १ ॥ ४७ ॥

## बृहद्विश्वादिः

विश्वोरुबूकदशमूलयवाम्भसा तु
हिंग्वारहिंगुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेद् हृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभृशरुग्ज्वरगुल्मशूली ॥
क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता ।
प्रवर्त्तते न तेनात्र चूर्णपेची चतुर्द्रव ॥ ४८ ॥

विश्वोरुबूकेत्यादि—अम्भसेति क्वाथेन । अत्र हिंगुमौवर्चलमित्यादि वक्ष्यमाणयोगे समुदितदशमूलयवयोर्द्वयो प्रत्येक तुल्यभागेन वृद्धाना व्यवहारदर्शना-दत्रापि तथैव मानमाह श्रीकण्ठ । तेन विश्वोरुबूकदशमूलाना मिलितानामेको भाग , यवस्य चापरो भाग इति व्यवहारोऽपि इत्थमेव । हिंग्वारादयस्तु प्रक्षेप-विषये प्रयोज्या , न तु ' पातव्यश्च चतुर्द्रवै. ' इति परिभाषया पानविषये, एव वक्ष्यमाणेष्वपि । एतदेवाह—क्वाथेन चूर्णपान यदित्यादि । अस्यार्थस्तु ज्वरातीसार-चिकित्सायामेवोक्त ॥ ४८ ॥

## रुचकादिः

चूर्णं समं रुचकहिंगुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥
समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः ।
तेनाल्पमानमेवात्र हिंगु सम्परिदीयते ॥ ४९ ॥

हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव ॥५३॥

दग्धमित्यादि—मृगशृङ्गं हरिणशृङ्गम्, तच्च चूर्णीकृत्यान्तर्धूम यथा स्यात् तथा दग्धव्यमित्यर्थ ॥ ५३ ॥

क्रिमिरिपुचूर्णं लीढं सहितं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिरान्नियतं लौहाजीर्णोद्भवं शूलम् ॥५४॥

क्रिमिरिपुचूर्णमित्यादौ—स्वरसेनेति वङ्गसेनपत्रस्य वकपत्रस्य स्वरसेनेत्यर्थ. ॥ ५४ ॥

विदारीदाडिमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम् ॥ ५५ ॥

विदारीत्यादि—विदारी-पक्वदाडिमफलयो स्वरस, भूमिकूष्माण्डरस पक्व-दाडिमफलरस प्रत्येक कर्ष २ त्रिकटुसैन्धव प्र०मा ११ मधु माषा ४ ॥ ५५ ॥

## एरण्डद्वादशकम्

एरण्डफलमूलानि बृहतीद्वयगोक्षुरम्।
पर्ण्यिन्यः सहदेवा च सिंहपुच्छीक्षुरालिका ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत्।
पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा ॥ ५६ ॥

एरण्डद्वादशके—एरण्डस्य फल मूलञ्च। पर्ण्यिन्यश्चतस्र। सहदेवा दण्डोत्पलभेद। सिंहपुच्छी पृश्निपर्णीभेद, सा च कलम्बुपत्रसदृशादीर्घपत्रा काटवा सिंहपुच्छीति ख्याता। इक्षुरालिका लटा वा नड इति नाम्ना ख्याता खग्गडी। डल्वणस्तु इक्षुरालिकास्थाने इक्षुरक पठति। एव सुश्रुतमतानुवादी चन्द्राटोऽपि ॥ ५६ ॥

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥५७॥

गोमूत्रशुद्धमित्यादि—गोमूत्रे सप्तधा निर्वापणेन शुद्ध मण्डूर मिलित-त्रिफलाचूर्णसम पञ्च-षट्-सप्तमाषकाणामन्यतममानेनोपयोज्यम् ॥ ५७ ॥

शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम्।
उष्णोदकेन तत् पीतं शूलं हन्ति त्रिदोषजम् ॥५८॥

शखचूर्णमित्यादि—मनाग् दग्धस्य शखस्य चूर्णं गृह्णन्ति । अस्य माषकमेक किञ्चिदधिक वा, लवणव्योषयोश्च मिलित्वा माषद्वयम्, हिङ्गुनो रक्तिद्वय अथ वा पिबेदित्याहु । अन्ये तु भागानुक्ते सर्वमेव सममिति वदन्ति । श्लेष्मोत्तरेऽय योग ॥ ५८ ॥

**तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।**
**प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥५९॥**

तीक्ष्णाय इत्यादि—मारितपुटितवङ्गलौहचूर्णं कर्ष १, माषा ८, त्रिफलाचूर्णं प्रत्येक मा ८, मिलितचूर्णाच्च ग्राह्य रत्ति ४ । घृतमधुनी दत्त्वा लौहमुद्गरेण सम्मर्द्य भक्षणीयम् । मात्रादिविधिश्च लोहान्तरवत् अन्ये तु त्रिफलाया एकभागसम लौहचूर्णमिति वदन्ति ॥ ५९ ॥

**मूत्रान्तःपाचितां शुष्कां लौहचूर्णसमन्विताम् ।**
**सगुडामभयामद्यात् सर्वशूलप्रशान्तये ॥ ६० ॥**

त्रिफलाक्वाथभावितलौहपत्रिकया अय योगो यदि क्रियते तदा द्वित्रिचतुर्माषकोपयोग । मूत्रान्तःपाचितामिति गोमूत्रेणोत्स्विन्नाम् । लौहचूर्णेन सहैव मूत्रे पाचितामित्यन्ये, शुष्कामित्यातपयोगात् । लौहचूर्णसमन्वितामिति लौहचूर्णञ्च हरीतकीचूर्णसमम् । सगुडामिति चूर्णद्वयसमगुडाम् । अन्ये तु लौहचूर्णगुडहरीतकीना प्रत्येक समानत्वमित्याहु ॥ ६० ॥

## दाधिकं घृतम्

**पिप्पली नागरं बिल्वं कारवी चव्यचित्रकम् ।**
**हिंगुदाडिमवृक्षाम्लवचाक्षाराम्लवेतसम् ॥**
**वर्षाभूकृष्णलवणमजाजी बीजपूरकम् ।**
**दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकं घृतम् ॥**
**गुल्मार्शःप्लीहहृत्पार्श्वशूलयोनिरुजापहम् ।**
**दोषसंशमनं श्रेष्ठ दाधिकं परमं स्मृतम् ॥**

दाधिकघृते बिल्व बिल्वस्य मूलम्, कृष्णलवणन्तु सौवर्चलभेद । उक्त हि 'न काललवणे गन्ध सौवर्चलगुणो हि स ' इति । वृक्षाम्ल महार्द्रकम्, कृष्णलवण सौवर्चलविशेष, बीजपूरक बीजपूरकमूलम् । दध्ना त्रिगुणेनैव पाक ।

स्वरसक्षीरमाङ्गल्यैरित्यादि परिभाषावचनन्तु चतुर्गुणजलदानार्थमुक्तम्, किन्तु प्रायो न समाद्रियते ॥ ६१ ॥

कम्बलावृतगात्रस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तशक्तूनां धूपः शूलहरः परः ॥ ६२ ॥
व्यायामं मैथुनं मद्यं लवणं कटु वैदलम्।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः ॥ ६३ ॥

इति शूलचिकित्सा।

——:०:——

कम्बलेत्यादि—प्राणायाममित्युच्छ्वासरोधनम्, कटुवैदलमित्यत्र शूलिवैदलमिति पाठे शूल जन्यत्वेन इह अस्तीति शूलि वैदलविशेषणम् ॥ ६२ ॥ ६३ ॥

इति शूलचिकित्साविवृतिः।

——:०:——

# अथ परिणामशूलचिकित्सा

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते।
वस्तयश्च हिताः शूले परिणामसमुद्भवे ॥ १ ॥

शूलविशेषत्वात् परिणामशूलमाह वमनमित्यादि—चकाराल्लङ्घनमपि बोध्यम्। तथा वस्तयोऽपि माधुतैलिकादयोऽत्र ज्ञेयाः। उक्तं हि 'लङ्घन वमन शस्त विरेकश्चानुवासनम्। निरूहो वाजिगन्धादिर्माधुतैलिकवस्तय, इति। माधुतैलिकवस्तयश्च मधुतैलप्रधाना सुश्रुतोक्ताः। उक्तं हि 'यस्मान्मधु च तैलञ्च प्राधान्येन प्रदीयते। माधुतैलिकमित्येव भिषग्भिर्वस्तिरुच्यते।' तत्रामाशयस्थे दोषे लङ्घनवमने, पच्यमानाशयस्थे तु विरेकनिरूहौ, पक्काशयस्थे चानुवासनमिति ॥ १ ॥

## विडङ्गादिमोदकः

विडङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम्।
सर्वाण्येतानि संहृत्य श्लक्ष्णचूर्णानि कारयेत् ॥
गुडेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः।

उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम् ॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ २ ॥

विडङ्गेत्यादि—विडङ्गतण्डुल विडङ्गस्य निस्तुषसारभाग । मोदकत्वादत्र द्विगुणो गुड ॥ २ ॥

नागरगुडतिलकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण ॥ ३ ॥

नागरेत्यादि— नागरादिकल्कमुत्कारिकावत् यवागूवद् वा क्षीरेण साधयित्वा भक्षयेत् । शुण्ठीचूर्ण कर्ष १, पुरातनगुड कर्ष १, तिलचूर्ण पल १, गव्यदुग्ध शराव २ ॥ ३ ॥

शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ ४ ॥

शम्बूकजमित्यादि—निर्मांसस्वल्पशम्बूकभव भस्म माषकमेक द्वय वा उष्णाम्बुना गोलयित्वा घृताभ्यक्तमुखकुहरेण पेयम् । अय योग कफे ॥ ४ ॥

अक्षधात्र्यभयाकृष्णाचूर्णं मधुयुतं लिहेत् ।
दध्नानूनसरेणाद्यात् सतीनयवशक्तुकान् ॥
अचिरान्मुच्यते शूलान्नरोऽन्नपरिवर्जनात् ॥ ५ ॥
तिलनागरपथ्यानां भागं शम्बूकभस्मनाम् ।

अक्षेत्यादौ—अनूनसरेणेति अखण्डितस्निग्धभागेनेत्यर्थ । अलूनसरेणेति पाठे स एवार्थ सतीनो वर्त्तुलकलाय । अन्नपरिवर्त्तोऽन्नपरिणाम. ॥ ५ ॥

द्विभागगुडसंयुक्तां गुडीं कृत्वाक्षभागिकाम् ॥
शीताम्बुपानं पूर्वाह्णे भक्षयेत् क्षीरभोजन ।
सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात् ।
परिणामसमुत्थाच्च शूलाच्चिरभवादपि ॥ ६ ॥

तिलेत्यादि—तिलादीना शम्बूकभस्मान्तानां समभाग । मिलितचूर्णापेक्षया च गुडस्य भागद्वयम् । रसकमिति मासरसम् ॥ ६ ॥

शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च ।
समांशां गुडिकां कृत्वा कलम्बकरसेन वा ॥

प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम् ।
शूलाद्विमुच्यते जन्तु सहसा परिणामजात् ॥
यः पिबति सप्तरात्रं शक्तूनेकान् कलाययूषेण ।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम् ॥८॥

शम्बूकमित्यादौ—कलम्बकरसेनेति वा शब्द पूर्वयोगापेक्षया, शम्बूकादि-चूर्णं कलम्बकरसेन संयोज्य चतुर्माषिका गुडिका कार्य्या । अत्र केचिच्छम्बूकशब्देन शम्बूकभस्म गृह्णन्ति, युक्तञ्चैतत् तथा च तन्त्रान्तरमवादात् । 'सपञ्चलवणव्योष-चूर्णं शम्बूकभस्मभि । गुडिका पक्तिशूलघ्नी कलम्बीस्वरसे कृता' इति । शक्तूनिति यवशक्तून् । एकानिति केवलान् । कलाययूष वर्त्तुलकलाययूष । अय योग पित्तकफशूले युक्त ॥ ७ ॥ ८ ॥

लौहचूर्णं वरायुक्तं विलीढ मधुसर्पिषा ।
परिणामशूलं शमयेत् तन्मलं वा प्रयोजितम् ॥ ९ ॥

लौहचूर्णमित्यादि—वरा त्रिफला । लौहचूर्णस्यैको भाग , त्रिफलायाश्च प्रत्येक लौहचूर्णसमभागत्वम् । तन्मल वेति लौहमल, एतदपि वरायुक्तमिति बोध्यम् । लोहमलस्य तु मिलितत्रिफलातुल्यो भाग. । मारितपुटितलौहचूर्णं माषा ८ त्रिफला-चूर्णं प्रत्येक माषा ८ । अन्ये तु लौहचूर्णस्य महावीर्य्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमिति कृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहु । तन्मते त्रिफलाचूर्णं प्र०मा ८, लौहचूर्णं कर्ष १, मा ८, मिलितचूर्णात् प्रथमतो रक्तिचतुष्टय गृहीत्वा घृत-मधुभ्या सम्मर्द्य लेह्यम् । लौहान्तरवत् क्षीर चतुःषष्टिगुण षष्टिगुण वानुपेयम् । दिनत्रयानन्तर रक्तिद्वयेन वृद्धिर्माषकद्वय यावत । सर्वमपर लौहान्तरवत् क्रिया । तथा शोधितमण्डूर पल १, मिलितत्रिफलाचूर्णं पल १, ततो मिलितचूर्णात् ८ माषा मधुघृताभ्या लेह्यम् ॥ ९ ॥

कृष्णाभयालौहचूर्णं गुडेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्येवं जठराग्न्यग्निमन्दताम् ॥
आमवातविकारांश्च स्थौल्यञ्चैवापकर्षति ॥ १० ॥

कृष्णेत्यादि—प्रत्येक समभाग इति निश्चलः । अन्ये तु मिलितसर्वचूर्णसम लौहचूर्णमित्याहु ॥ १० ॥

पथ्यालोहरजः शुण्ठीचूर्णं माक्षिकसर्पिषा ।

परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥ ११ ॥

पथ्येत्यादि—अत्रापि हरीतकीशुण्ठ्योर्मिलितचूर्णेन सम लौहचूर्णं ग्राह्यम् । प्रयोगश्च नवायसादिवदित्याहुः । निश्चलस्तु पथ्यादीना त्रयाणा प्रत्येक समभागतामाह ॥ ११ ॥

## सामुद्राद्यं चूर्णम्

सामुद्रं सैन्धवं क्षारो रुचकं रोमकं विडम् ।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणक समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ।
जीर्णेऽजीर्णे तु भुञ्जीत मांसादि घृतसाधितम् ॥
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत् ।
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवं तथा ॥
शूलानामपि सर्वेषामौषधं नास्ति तत्परम् ।
परिणामसमुत्थस्य विशेषेणान्तकृन्मतम् ॥ १२ ॥

सामुद्रमित्यादि—सामुद्र करकच, रुचक सौवर्चल, रोमक रुमानदीभव तदभावे साम्भरिलवणम् । लौहरज किट्टञ्चेति मारित पुटित लौहचूर्णम् । किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम् । दधिगोमूत्रपयसेति दध्यादेस्त्रय मिलित्वा चतुर्गुण मिलितचूर्णसम वा, दत्त्वा सर्वमेव चूर्णमेकीकृत्य पक्तव्यम् आचूर्णीभावात् । व्यवहारस्तु दध्यादिना चतुर्गुणेनैव ॥ १२ ॥

नारिकेलं सतोयञ्च लवणेन प्रपूरितम् ।
विपक्वमग्निना सम्यक् परिणामजशूलनुत् ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १३ ॥

नारिकेलमित्यादि—नारिकेलमिह सुपक्वम् ॥ १३ ॥

## सप्तामृतं लोहम्

मधुकं त्रिफलाचूर्णमयोरजः समं लिहन् ।
मधुसर्पिर्युतं सम्यग् गव्यं क्षीरं पिबेदनु ॥

छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम्।
आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः ॥ १४ ॥

मधुकमित्यादि—अयोरजः समिति मिलितचूर्णसम लौहरजः। अन्ये त्वेकभागसम लौहरजश्चाहुः। व्यवहारस्तु पूर्वेणैव ॥ १४ ॥

## गुडपिप्पलीघृतम्

सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ॥ १५ ॥

सपिप्पलीगुडमिति, पिप्पलीगुडौ कल्कौ ॥ १५ ॥

## पिप्पलीघृतम्

क्काथेन कल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसंप्रयुक्तम्।
क्षीरानुपानस्य निहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसंज्ञम् ॥ १६ ॥

क्काथेनेत्यादौ—माक्षिकसम्प्रयुक्तमिति सिद्धशीते मधु पादिक प्रक्षेप्यम् ॥१६॥

## कोलादिमण्डूरम्

कोलाग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितं
मण्डूरं सुरभीजलेऽष्टगुणिते पक्त्वाथ सान्द्रीकृतम्।
तं खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुग्-
जेतुं वातकफामयान् परिणतौ शूलञ्च शूलानि च ॥१७॥

कोलेत्यादौ—कोला चवी, चपला पिप्पली, क्षारो यवक्षार। सम चूर्णित मण्डूरमिति सर्वचूर्णसम मण्डूरम्। सुरभीजले गोमूत्रे। अष्टगुणित इति मण्डूरापेक्षया। आसन्नपाके कोलादिचूर्णं प्रक्षेप्यम्। समुदितचूर्णापेक्षयाष्टगुणं गोमूत्रमित्याहुरन्ये। शूलमिति सान्निपातिक, शूलानि चेति वातजादीनि ॥ १७ ॥

## भीमवटकमण्डूरम्

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः।
प्रस्थमयोरजसां पलिकांशैश्चूर्णितैर्मिश्रैः ॥

अष्टगुणमूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्वम् ।
कोलप्रमाणवटिकास्तिस्रो भोज्यादिमध्यविरतौ च ॥
रससर्पिर्यूषपयोमांसैरश्नन् नरो निवारयति ।
अन्नविवर्त्तनशूलं गुल्मं प्लीहाग्निसादांश्च ॥ १८ ॥

भीमवटकमण्डूरे कोलप्रमाणा इति मिलित्वा अष्टमाषकमाना । तेनाष्टमाषकैरेवेति तिस्रो वटिका कार्य्याः । व्यवहारस्तु द्वित्रिचतुर्माषकैरिति । अत्रापि मूत्रस्याष्टगुणत्व पूर्ववत् । अन्नविवर्त्तनशूल परिणामशूलम् ॥ १८ ॥

## क्षीरमण्डूरम्

लौहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढके पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम् । १९।

क्षीरमण्डूर स्पष्टम् ॥ १९ ॥

## चविकादिमण्डूरम्

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षारपिप्पलीमूलपिप्पली॰ ॥
सञ्चूर्ण्य निक्षिपेत् तस्मिन् पलांशाः सान्द्रतां गते ।
गुडिका कल्पयेत् तेन पक्तिशूलनिवारिणी ॥ २० ॥

लौहकिट्टेत्यादौ चविकास्थाने चपलापाठेऽपि चविकैवार्थ, हस्तिपिप्पलीत्यन्ये ॥ २० ॥

मण्डूरं शोधितं पत्रीं लोहजां वा गुडेन तु ।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात् ॥ २१ ॥

मण्डूरमित्यादौ—लोहजा पत्री वज्रपाण्ड्यादिजा सामान्यलोहजा वा पत्री पुटादिशोधिना ग्राह्या ॥ २१ ॥

## शतावरीमण्डूरम्

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिष ।

विपचेत् सर्वमैकध्यं यावत् पिण्डत्वमागतम् ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम्।
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥ २२ ॥

शतावरीमण्डूरे—अग्रतोऽपि वेति वा शब्द समुच्चये, तेन भोजनान्ते भोजनमध्ये भोजनस्याग्रतश्च भक्षयेत् इति ॥ २२ ॥

## तारामण्डूरगुडः

विडङ्गं चित्रकं चव्यं त्रिफला त्र्यूषणानि च।
नवभागानि चैतानि लौहकिट्टसमानि च ॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्द्धिकगुडान्वितम्।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम् ॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञकः ॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः ॥ २३ ॥

तारामण्डूरे नवभागानि चैतानीति विडङ्गादीना प्रत्येकमेकभागतया नव भागा ग्राह्या, वृद्धव्यवहारात्, ते चामन्नपाके प्रक्षेप्या। लौहकिट्टसमानि चेति लौहकिट्टस्यापि नवभागम्। गोमूत्र द्विगुणमिति मिलितचूर्णात्। अत्र पलोल्लेखागतमानत्वात् तथैव व्यवहारात्र द्वैगुण्यम्। मूत्रार्द्धिकगुडान्वितमिति सर्वचूर्णसमो गुड इत्यर्थः। कोलमात्रयेति अष्टमाषकमानेन ॥ २३ ॥

## राममण्डूरम्

वशिरं श्वेतवाट्यालं मधुपर्णी मयूरकम्।

तण्डुलीयञ्च कर्षार्द्धं दत्वाधश्चोर्द्ध्वमेव च ॥
पाक्यं सुजीर्णमण्डूर गोमूत्रेण दिनद्वयम् ।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम् ॥
विचूर्ण्य द्विगुणेनैव गुडेन सुविमर्द्दितम् ।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्ष त्रिभागत. ॥
तक्रानुपानं वर्ज्यञ्च वार्त्तमम्लकमत्र तु ।
अम्लपित्ते च शूले च हितमेतद् यथामृतम् ॥ २४ ॥

वशिरमित्यादि—वशिर सूर्य्यावर्त्त , मधुपर्णी गुडूची, मयूरकोऽपामार्ग । पाक्य सुजीर्णमण्डूरमिति गोमूत्रेण दिनत्रयमिति गोमूत्रमल्पमल्प दत्त्वा दिनद्वय पक्तव्य यथा मण्डूर न दह्यते। गोमूत्रन्तु एकदैव बहुतर न देय तथा सत्युत्तानधारण कर्त्तुमशक्यमिति। अवतार्य्य शरावेण पिधाय दिनत्रय स्थाप्यम्, तदनु प्रक्षाल्य शोधयित्वा ग्राह्यम्। भक्ष्य कर्ष त्रिभागत इति कर्षमेव भागत्रय कृत्वा खाद्यम्, व्यवहारस्तु मापकचतुष्टयेन । वार्त्ताम्लकमिति वदरीन्तिर्डीकादिकम् । रामकृतत्वाद्राममण्डूरमेतत् ॥ २४ ॥

## बृहच्छतावरीमण्डूरम्

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले ।
अजायाः पयसः प्रस्थे प्रस्थे धात्रीरसस्य च ।
लौहकिट्टपलान्यष्टौ शर्करायाश्च षोडश ।
दत्वास्य कुडवञ्चैव पचेन्मृद्वग्निना शनैः ॥
सिद्धशीते घटे नीते चूर्णानीमानि दापयेत् ।
विडङ्गत्रिफलाव्योपयमानीगजपिप्पली ॥
द्विजीरकघनानाञ्च श्लक्ष्णाण्यक्षसमानि च ।
खादेदग्निवलापेक्षी भोजनादौ विचक्षणः ॥
निहन्ति पक्तिशूलञ्च अम्लपित्तं सुदारुणम् ।
रक्तपित्तञ्च शूलञ्च पाण्डुरोगं हलीमकम् ॥ २५ ॥

शतावरीत्यादि—सुरभीजले गोमूत्रे ॥ २५ ॥

## रसमण्डूरम्

कुडवं पथ्याचूर्णं द्विपलं गन्धाश्म लोहकिट्टञ्च ।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य ।
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दण्डसङ्घृष्टम् ।
शुष्कं घृतमधुयुक्तं मृदितं स्थाप्यञ्च भाण्डके स्निग्धे ॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान् ।
शूलं तथाम्लपित्तं ग्रहणीञ्च कामलामुग्राम् ॥ २६ ॥

कुडवमित्यादौ—गन्धाश्म शोधितगन्धकचूर्णं द्विपलं शोधितलौहमलञ्च प्रत्येकं द्विपलमित्यर्थः । रसगन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्यां सह मिश्रीकृत्य भृङ्गराजस्वरसं केशराजस्वरसञ्च प्रत्येकं प्रस्थमानं दत्त्वा तावद् घर्षणीयं लौहपात्रे लौहदण्डेनैव यावच्चूर्णप्रायं भवति, अत प्रथमतः रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां सम्मर्द्य लेह्यम्, क्षीरादिकमनुपेयम् । ध्यन्तर रक्तिद्वयं कृत्वा वृद्धिर्माषकद्वयं यावत् ॥ २६ ॥

## त्रिफलालौहः

अक्षामलकशिवानां स्वरसैः पक्वं सुलोहजं चूर्णम् ।
सगुडं यद्युपयुङ्क्ते मुञ्चति हि त्रिदोषजं शूलम् ॥२७॥

अक्षामलकेत्यादौ—स्वरसैरिति मिलित्वा चतुर्गुणैः, प्रत्येकमित्यन्ये । व्यवहारस्तु पूर्ववैव स्वरसाभावे क्वाथ । सगुडमिति लौहरज समगुडम् । पाकश्चास्य मुद्रया । तदुक्त—'गुडादि प्रविशेद् यत्र तत्र पाकश्च मुद्रया ।' लौहान्तरवद्विधिरत्र ॥ २७ ॥

## लौहगुडिका

लोहस्य रजसो भागास्त्रिफलायास्त्रयस्तथा ।
गुडस्याष्टौ तथा भागा गुडान्मूत्रं चतुर्गुणम् ॥
एतत् सर्वञ्च विपचेद् गुडपाकविधानवित् ।
लिहेच्च तद् यथाशक्ति क्षये शूले च पाकजे ॥ २८ ॥

लौहस्येत्यादि—भाग इत्येको भागः, त्रिफलायास्त्रय इति मिलित्वा । लिहेच्च

रक्तिचतुष्टयादिक्रमेणेत्याहुः ॥२८ ॥

## धात्रीलौहम्

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लोहचूर्णस्य ।
यष्टीमधुकरजश्च द्विपलं दद्यादुपलघृष्टम् ॥
अमृताक्वाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ॥
चण्डातपेषु शुष्कं भूय पिष्ट्वा नवे घटे स्थाप्यम् ॥
घृतमधुना सह युक्तं भक्तादौ मध्यतोऽन्ते च ।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन ॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान् ।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम् ॥
पानान्नकृतान् दोषान् भक्तान्ते शीलितं जयति ।
एवं जीर्यति चान्ने शूल नृणां सुकष्टमपि ॥
हरति सहसा युक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यः पलितघ्न· कफपित्तसमुद्भवान् जयेद्रोगान् ।
प्रसादयति च रक्त पाण्डुत्वं कामलां जयति ॥ २९ ॥

धात्रीत्यादि—अमृताक्वाथेनामलकीक्वाथेन । अन्ये त्वमृता गुडूचीमाहुः । व्यवहारस्तु पूर्ववदेव । जरत्पित्तमम्लपित्तम् ॥ २९ ॥

## लौहामृतम्

तनूनि लोहपत्राणि तिलोत्सेधसमानि च ।
कशिकामूलकल्केन संलिप्य सर्षपेण वा ॥
विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत ।
त्रिफलाया जले ध्मातं वापयेच्च पुनः पुनः ॥
ततः सञ्चूर्णितं कृत्वा कर्पटेन तु छानयेत् ।
भक्षयेन्मधुसर्पिर्भ्यां यथाग्न्येतत् प्रयोजयेत् ॥
माषकं त्रिगुणं वाथ चतुर्गुणमथापि वा ।
छागस्य पयसः कुर्य्यादनुपानमभावत ॥

गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च।
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम्।
लोहामृतमिदं श्रेष्ठं ब्रह्मणा निर्मितं पुरा।
ककारपूर्वकं यच्च यच्चाम्लं परिकीर्त्तितम्।
सेव्यं तन्न भवेदत्र मांसञ्चानूपसम्भवम्॥ ३०॥

तनूनीत्यादि—कशिकामूलकल्केन श्वेतार्कमूलकल्केन, तथा श्वेतसर्षपकल्केन वा पुन पुनः परिलिप्य पुन पुनः चातपे सशोष्य, ततो दग्ध्वा त्रिफलाक्वाथे निर्वापण तावत् कार्य्यं यावत् सर्वलोहस्य जारणम् भवेत्। तत प्रक्षाल्य संशोष्य चूर्णीकृत्य रक्तिचतुष्टयादिक्रमेण नवायसादिवदस्योपयोग। कश्चिच्च अत्र कशिकामूलकल्केनेत्यत्र श्वेतसर्षपकल्केन परिलिप्य पुन पुनरिति पाठान्तरम्॥ ३०॥

## खण्डामलकी

स्विन्नपीडितकूष्माण्डात् तुलार्द्धं भृष्टमाज्यतः।
प्रस्थार्द्धं खण्डतुल्यन्तु पचेदामलकीरसात्॥
प्रस्थे सुस्विन्नकूष्माण्डरसप्रस्थे विघट्टयन्।
दर्व्या पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत्॥
द्वे द्वे पले कणाजाजीशुण्ठीनां मरिचस्य च
पलं तालीशधन्याकचातुर्जातकमुस्तकम्।
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च॥
पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत्।
छर्द्यम्लपित्तमूर्च्छाश्च कासश्वासावरोचकम्॥
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत्।
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम्॥ ३१॥

खण्डामलक्या खण्डतुल्यमिति खण्डस्य पञ्चाशत्पलानि। मरिचस्य तु पलमित्यन्वय। तालीशादिकञ्च प्रत्येक कर्षमानमित्यर्थ॥ ३१॥

## नारिकेलखण्डः

कुडवमितमिह स्यान्नारिकेलं सुपिष्टं

पलपरिमितसर्पिः पाचितं खण्डतुल्यम् ।
निजपयसि तदेतत् प्रस्थमात्रे विपक्वं
गुडवदथ सुशीते शाणभागान् क्षिपेच्च ॥
धन्याकपिप्पलिपयोदतुगाह्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्ण्यं ।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्त
शूलं वमिं सकलपौरुषकारि हारि ॥ ३२ ॥

कुडवमित्यादि—अत्र केचिन्नारिकेलस्यार्द्रत्वेन द्वैगुण्यमिच्छन्ति । अतएवोक्त— 'अष्टौ पलानि कुडवो नारिकेले तथैव च' इति । ये च न द्वैगुण्यमिच्छन्ति तेषामय-मभिप्रायो नारिकेलस्याष्टपलत्वे खण्डस्याप्यष्टपलत्व, खण्डतुल्यमिति वचनात् । अतश्चात्र नारिकेलोदकप्रस्थस्य द्रवत्वेनोपादानात् पाकस्य द्वैगुण्य प्रसज्येत, चतुर्गुण स्तूत्सर्गसिद्ध किञ्च तन्त्रान्तरे चातुर्गुण्यमप्युक्त यथा—'कुडव नारिकेलस्य श्लक्ष्ण दृशादि पेषितम् । शुद्धखण्डस्य कुडव मर्वमेतच्चतुर्गुणे । आलोड्य नारिकेलस्य जले मृद्वग्निना पचेद्' इति । अस्मिन् वचने शर्कराया अपि कुडवमुक्तम्, तत्र च न द्वैगुण्य 'प्राधास्तत्त्वणमेव न द्विगुणिता ये चेक्षुजाता घनाः' इत्युक्ते । अत्र च खण्डतुल्य-मिति पठ्यते । तत नारिकेलस्य शास्त्रकुडवाद् द्वैगुण्येन परमनयोर्नारिकेलखण्डयो मम-ता स्यात्, नान्यथेति । तेन द्वैगुण्याभावपक्ष एव साधीयान् । नारिकेले तथैव चेति वाक्य नादरणीयमार्षत्वे प्रमाणाभावादित्याहु. । तुगा वंशलोचना । नागकेशरसहित त्रिजात मिलित्वा शाणमात्र पुन शाणमित्युक्ते । पौरुष शुक्रम् । हारि मनोहारि ॥ ३२ ॥

## कलायगुडिका

कलायचूर्णभागौ द्वौ लौहचूर्णस्य चापरः ।
कारवेल्लपलाशानां रसेनैव विमर्दितः ॥
कर्षमात्रां ततश्चैकां गुडिकां भक्षयेन्नरः ।
मण्डानुपानाज्जयति जरत्पित्तं सुदुर्जयम् ॥ ३३ ॥

कलायेत्यादि—कलायो वर्त्तुलकलाय । लौहचूर्णस्यापर इत्येको भाग । पलाशा नामिति पत्राणाम् । मण्डो यवमण्ड । जरत्पित्तमम्लपित्तम् ॥ ३३ ॥

लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमान्वितम् ।

यष्टिचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्गदे ॥ ३४ ॥

लिह्यादित्यादि—मिलितत्रिफलाचूर्णस्य लौहचूर्णसमत्वम्। अन्ये तु त्रिफलाया प्रत्येक लौहचूर्णसमोऽश इत्याहुः। तद्गद इति जरत्पित्ते ॥ ३४ ॥

पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम्।
अन्नद्रवे च तत्कार्य्यं जरत्पित्ते यदीरितम्।
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम्।
माषेण्डरी सतुषिका स्विन्ना सर्पिर्युता हिता ॥ ३५ ॥

पित्तान्तमित्यादौ—अन्नद्रव इति, "भुक्ते जीर्य्यति जीर्णे वा यच्छूलमुपजायते" इत्यादिनोक्त शूलविशेषोऽन्नद्रव। माषेण्डरी सतुषिकेति सतुषमाषकृता माषेण्डरी माषपिष्टकविकृतिर्भक्ष्यविशेष ॥ ३५ ॥

गोधूममण्डकं तत्र सर्पिषा गुडसंयुतम्।
ससितं शीतदुग्धेन मृदितं वा हितं मतम् ॥
शालितण्डुलमण्डं वा कवोष्णं सिक्थवर्जितम्।
वाट्यं क्षीरेण संसिद्धं घृतपूरं सशर्करम् ॥ ३६ ॥

गोधूममण्डको गोधूमकृतो भक्ष्यविशेष पश्चिमदेशे प्रसिद्ध। मृदित वा हित मतमिति, मृदित सयावाकृतिर्लेह। वाट्य यवमण्डम्। वाट्यमिव मण्डमिति पाठे शालितण्डुलकृतमण्ड इत्यर्थ। किन्तु यवस्य सर्वथा शूलघ्नत्वात् वाट्यमिति पाठ एव श्रेयान्। गोधूमचूर्णकृत. भृष्टो घृतपूरो भक्ष्यविशेष ॥ ३३ ॥

शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत्।
पटोलपत्रयूषेण खादेच्चणकशक्तुकान् ॥ ३७ ॥
अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद् यतः।
तस्मादत्रान्नपानानि मात्राहीनानि कल्पयेत् ॥ ३८ ॥
इति परिणामशूलचिकित्सा।

पटोलेत्यादौ—यूषो मुद्गादियोगात्, किंवा क्वाथ. ॥ ३७ ॥ ३८ ॥

इति परिणामशूलचिकित्सा-विवृति।

# अथोदावर्त्त-चिकित्सा ।

त्रिवृत्सुधापत्रतिलादिशाक-
ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भि-
रद्यात् प्रसन्नागुडशीधुपायी ॥ १ ॥

पवनाविनाभावित्वसाधर्म्यात् शूलानन्तरमुदावर्त्तं । उदावर्त्ते हि सर्वत्र शूल-वदवश्यम्भावी वायु । यदुक्तं सुश्रुते—'सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः । वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये' इति । उत्कृतेन वेगविधारणेनावृतस्य निरुद्धवायोर्वर्त्ता वर्त्तनमुदावर्त्त इति निरुक्तिरस्य । त्रिवृदित्यादि—त्रिवृत्सुधयो पत्रम् आदिशब्दात् सप्तलादिपत्रपरिग्रह । अन्यैरिति विण्मूत्राद्यनुलोमनै· क्षीरादिभि । प्रसन्ना मदिराविशेषः, गुडकृतशीधुर्गुडशीधुः ॥ १ ॥

आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते ।
पुरीषजे तु कर्त्तव्यो विधिरानाहिकस्तु यः ॥ २ ॥

आस्थापनमित्यादि—सुश्रुतस्य । मारुतजे इति मारुतवेगविघातजे, एव पुरीषज इत्यत्रापि व्याख्येयम् । विधिरानाहिक इति फलवर्त्त्यादिः ॥ २ ॥

क्षारवैतरणौ वस्ती युञ्ज्यात् तत्र चिकित्सकः ॥ ३ ॥
श्यामा दन्ती द्रवन्तीत्वक् महाश्यामा स्नुही त्रिवृत् ।
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः ॥
कम्पिल्लकः करञ्जश्च स्वर्णक्षीरी त्वयं गण ।
सर्पिस्तैलरजःक्वाथकल्केष्वन्यतमेन च ॥
उदावर्त्तोदरानाहविषगुल्मविनाशनः ॥ ४ ॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतु पञ्चभागिकाः ।

आस्थापन विवृणोति क्षारवैतरणावित्यादिना । श्यामेत्यादि—श्यामा श्याममूला त्रिवृत् । द्रवन्ती मूषिकपत्रा दन्ती, अस्यास्त्वक्, त्वगित्यत्र स्नुगिति पाठे सीजुभेदो वा, किन्तु सुश्रुते वाग्भटे च स्नुहीद्वय न पठ्यते । महाश्यामा वृद्धदारक ।

त्रिवृदित्यरुणमूला त्रिवृत्। सप्तला चर्मकषा, नीलबुह्नेत्येके। शङ्खिनी श्वेतबुह्ना। ढोलकलम्बीत्यन्ये। श्वेता श्वेतापराजिता कटभी वा। राजवृक्ष. शोणालुफलम्। तिल्वकोऽत्र नावरलोध्र। काम्पिल्लो गुण्डारोचनी। हेमक्षीरी कक्कुष्ठ.। अन्यतमेनेति सर्पिरादिकल्पमध्ये चैकतमेन कल्पेन प्रयुक्त इति शेष ॥ ३ ॥ ४ ॥

गुडिका गुडतुल्यास्ता विड्विबन्धगदापहाः ॥ ५ ॥

त्रिवृदित्यादौ—द्विगुण पञ्चभागिका इति यथाक्रमम्। गुडतुल्या इति समुदितचूर्णतुल्यो गुडभाग. ॥ ५ ॥

हरीतकी यवक्षारः पीलुनी त्रिवृता तथा।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ६ ॥

हरीतकीत्यादौ—पीलुनीति मूर्वा, पीलूनी इति पाठान्तरे पीलु औत्तरापथिकफलम्, इदमेव चुक्र स्रसकत्वात् ॥ ६ ॥

हिङ्गुकुष्ठवचासर्ज्जी विडञ्चेति द्विरुत्तरम्।
पीतं मद्येन तच्चूर्णमुदावर्त्तविनाशनम् ॥ ७ ॥

हिंग्वित्यादि—सुश्रुतस्य। सर्जिः सर्जिक्षार.। द्विरुत्तरमिति यथोत्तर द्विगुणम् ॥ ७ ॥

## नाराचचूर्णम्

खण्डपलं त्रिवृतासममुपकुल्याकर्षचूर्णितं श्लक्ष्णम्।
प्राग् भोजने च समधु विडालपदकं लिहेत् प्राज्ञः ॥
एतद् गाढपुरीषे पित्ते कफे च विनियोज्यम्।
सुस्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥ ८ ॥

नाराचचूर्णे त्रिवृतासममिति त्रिवृच्चूर्णस्यापि पलम्। उपकुल्या पिप्पली। प्राग्भोजन इति भोजनपरिणामे भोजनसन्निधाने वा ॥ ८ ॥

रसोनं मद्यसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितम्।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम् ॥ ९ ॥

रसोनमित्यादि—यद्यप्ययं योगः शूलाधिकारे पूर्वमुक्त एव तथाप्युदावर्त्तेऽपि विहितत्वात् पुनरप्यत्र लिखितः ॥ ९ ॥

हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्म्मिताम्।

घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम् ॥ १० ॥

हिंगुमाक्षिकेत्यादि—हिंगु माषा ८, सैन्धव कर्ष १, मधु पल १, एष व्यवहाराद् गृहीत्वा पक्त्वा च फलवर्त्तिं कुर्य्यात्। हिंगुसैन्धवे समे वर्त्तिकरणोचित मधु देयमित्यन्ये। गुडपाकवदस्य पाक, तदवस्थायामेव वर्त्तिः कर्त्तव्या। ततो घृतेनाभ्यज्य गुदे क्षिपेत्॥ १०॥

मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः।
गुडक्षारसमायुक्ता फलवर्त्तिः प्रशस्यते ॥ ११ ॥

मदनमित्यादौ—गुडो मिलितचूर्णसम। गुडस्य मनाक् जल दत्वा पक्त्वा च वर्त्तिं कुर्य्यादित्यर्थ ॥ ११ ॥

आगारधूमसिन्धूत्थ-तैलयुक्ताम्लमूलकम्।
क्षुण्णं निर्गुण्डिपत्रं वा स्विन्नं पायौ क्षिपेद् बुधः ॥१२॥

आगारधूमेत्यादि—आगारधूमोऽन्तर्धूम, अम्लमूलकं काञ्जिकमूलकं अत्र क्षुण्णम् अन्तर्धूमसैन्धवचूर्णतैले मर्द्दयित्वा स्वेदेन गुदे प्रक्षेप्यम्। निर्गुण्डी सिन्धुवार। तत्पत्रमपि चूर्णीकृत्य चागारधूमादिसंश्लिष्टं स्विन्नं गुदे निक्षेप्यम् ॥१२॥

सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एला वाप्यथ मद्येन क्षीरवारि पिबेच्च सः ॥ १३ ॥

सौवर्चलेत्यादि—सुश्रुतस्य। अत्र सिन्धूत्थजरणापाम्तु शारिरस्य चेत्यत्राद्रिपदेन सगृहीतत्वात् सौवर्चलस्य माषकचतुष्टयम्, मदिरा नाहारकल्पत्वात् प्रचुरमात्रा। व्यवहारस्तु मदिरापलद्वयेन। एला वाप्यथ मद्येनेति एलाचूर्णस्याष्टौ माषकाः, मद्यस्य च पलद्वयमित्याहु क्षीरवारीति समभागेण मिश्रित वारीत्यर्थः ॥ १३ ॥

दुःस्पर्शास्वरसं वापि कषायं ककुभस्य वा।
एर्वारुबीजं तोयेन पिबेद्वा लवणीकृतम् ॥ १४ ॥

दुःस्पर्शेत्यादि—सुश्रुतस्य। दुःस्पर्शा दुरालभा, दुःस्पर्शास्वरसमिति पाठे दुःस्पर्शा कण्टकारीत्यन्ये। ककुभोऽर्जुनः। एर्वारुः ग्रीष्मभवा कर्कटीति डल्हणः। अलवणीकृतमिति सैन्धवयोगादीषल्लवणीकृतमिति। एतच्च एर्वारुबीजमित्यनेनैव सम्बध्यते, न तु पूर्वेण ॥ १४ ॥

पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा।

सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १५ ॥

पञ्चमूलीति—पञ्चमूली स्वल्पा, समानतन्त्रभोजसवादात्। यथा,—"लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नरः" इति। श्रीकण्ठदत्तस्तु तृणपञ्चमूलीत्याह। सर्वथैव सुश्रुतेऽपि निरवशेषित इत्युक्तम् ॥ १५ ॥

स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत् ॥ १६ ॥

अश्रुमोक्षोऽश्रुजे कार्य्यः स्वप्नो मद्यं प्रियाः कथाः ॥१७॥

क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत् क्षवम्।

तथोर्द्ध्वजत्रुगोऽभ्यङ्गः स्वेदो धूमः सनावनः ॥

हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम् ॥ १८ ॥

उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ १९ ॥

स्नेहेत्यादौ—जृम्भजमिति जृम्भावेगविघातजम्, एवमुत्तरत्रापि। अश्रुमोक्षोऽश्रुनि सारणम्, तच्च तीक्ष्णाञ्जनादिविधिना। क्षवपत्रेणेति छाञ्चियापत्रेण। ऊर्द्ध्वजत्रुगोऽभ्यङ्ग इति ऊर्द्ध्वजत्रुदेशगतोऽभ्यङ्गः कार्य्यः। आद्य मद्यम्। क्रमोपेतमिति स्नैहिकधूमपानोक्तक्रमयुक्तम् ॥ १६—१९ ॥

छर्द्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत्।

भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम्।

रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ २० ॥

छर्द्द्याघातमित्यादि—सुश्रुतस्य छर्द्द्याघातमिति छर्द्दिवेगविघातजं रोगं कुष्ठविसर्पादिकम्, कार्य्यकारणयोरभेदोपचारात्, एवं क्षुद्विघात इत्याद्यपि व्याख्येयम्। यथादोषमिति यस्तत्रानुदूषको दोषश्छर्द्दिविघातजरोगे जातस्तद्विपरीतैर्नस्यादिभिर्जयेदित्यर्थः ॥ २० ॥

बस्तिशुद्धिकरावापं चतुर्गुणजलं पयः।

आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः ॥

रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम्।

अत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः।

शालिः पयोनिरूहाश्च हितं मैथुनमेव च ॥ २१ ॥

क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ॥ २२ ॥

तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥ २२ ॥

वस्तिशुद्धिकरावापमित्यादि—वस्तिशुद्धिकराणीह तृणपञ्चमूलवीरतरादीनि, आवाप इति क्षीरसाधनार्थं कल्कः स यत्र तत्तथा । रमयेयुः मैथुने योजयेयुः । अव-गाहो वातपित्तहरद्रव्यक्वाथे कोष्णे बोध्यः । चरणायुधाः कुक्कुटाः । निरूहाश्चेति निरूहः उत्तरवस्तिर्वस्तिश्चेति चकारात् ॥ २१—२३ ॥

रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ॥ २४ ॥
निद्राघाते पिबेत् क्षीरं स्वप्नं संवाहनानि च ॥ २५ ॥

इत्युदावर्त्तचिकित्सा ।

सुविश्रान्त इति विरतक्रियः । निद्राघात इत्यादौ—क्षीरमिह माहिषं, निद्रा-करत्वादित्याहुः । अन्ये तु प्रधानकल्पनया गोक्षीरम्, अतएव तन्त्रान्तरे—"निद्रा-घाते पिबेत् क्षीरं गोः स्वप्यादथ वा नरः" इति ॥ २४ ॥ २५ ॥

इत्युदावर्त्तचिकित्साविवृतिः ।

# अथानाहचिकित्सा ।

उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम् ॥ १ ॥

द्विरुत्तरा हिङ्गु वचा सकुष्ठा
सुवर्च्चिका चेति विडङ्गचूर्णम् ।
सुखाम्बुनानाहविसूचिकार्त्ति-
हृद्रोगगुल्मोर्द्ध्वसमीरणघ्नम् ॥ २ ॥
वचाभयाचित्रकयावशूकान्
सपिप्पलीकातिविषान् सकुष्ठान् ।
उष्णाम्बुनानाहविमूढवातान्
पीत्वा जयेदाशु हितोदनाशी ॥ ३ ॥

आनाहचिकित्सामाह उदावर्त्तेत्यादि—द्विरुत्तरा इत्यादि—यथोत्तरं द्विगुणा,

इत्यर्थ । सुखाम्बुनेत्यनन्तर पीतमिति शेष ॥ १—३ ॥

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ४ ॥

त्रिवृदित्यादि—त्रिवृदित्यरुणमूला त्रिवृत्, श्यामा श्याममूला त्रिवृत् । वटिकेय माषकद्वयेन व्यवहृता । योगोऽयमतिक्रूरकोष्ठे ॥ ४ ॥

फलञ्च मूलञ्च विरेचनोक्तं
हिङ्ग्वर्कमूलं दशमूलमग्र्यम् ।
स्नुक्चित्रकौ चैव पुनर्नवा च
तुल्यानि सर्वैर्लवणानि पञ्च ॥
स्नेहैः समूत्रैः सह जर्जराणि
शरावसन्धौ विपचेत् सुलिप्ते ।
पक्वं सुपिष्टं लवणं तदन्नैः
पानैस्तथानाहरुजाघ्नमग्र्यम् ॥ ५ ॥

फलञ्चेत्यादौ—विरेचनोक्तमिति दीर्घञ्जीवितीयेऽप्यमार्गतण्डुलीये वा विरेचनकल्पे वा विरेचनकर्मणि यदुक्तम् । हिङ्गुस्थाने हिंस्रेति पाठान्तरम् । शरावसन्धाविति अन्त स्थभेषजस्थालीशरावसन्धावित्यर्थः । विपचेदिति दहेत् । पक्वमिति दग्धम् । अग्र्यमिति श्रेष्ठम् ॥ ५ ॥

राठधूमविडव्योषगुडमूत्रैर्विपाचिता ।
गुदेऽङ्गुष्ठसमा वर्त्तिर्विधेयानाहशूलनुत् ॥ ६ ॥

राठेत्यादि—राठो मदनफल, धूमो गृहधूम अलन्धूम इति यावत् । यावन्ता गुडेन मूत्रेण च पाकाद् वर्त्तिः कर्त्तुं शक्यते तावदुभय देयमिति ॥ ६ ॥

वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।
मधुनि गुडे वा पक्त्वा पाय्वीरिता चाङ्गुष्ठपरिमाणा ॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता ।
आनाहोदावर्त्तप्रशमनी जठरगुल्मविनाशिनी ॥ ७ ॥

वर्त्तिरित्यादि—मिलिता त्रिकट्वादीनां कर्ष १, मधुपल १, गुडकर्ष १

इत्येके । युक्त्या त्रिकटुकादिकं गृहीत्वा वर्त्तिः कर्त्तव्येत्यन्ये । गुदे वेति वाशब्दोऽपि पूर्वयोगापेक्षया समुच्चये वा द्रष्टव्यः ॥ ७ ॥

## शुष्कमूलकाद्यं घृतम्

मूलकं शुष्कमार्द्रञ्च वर्षाभूमूलपञ्चकम् ।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद् घृतम् ।
तत्पीयमानं शमयेदुदावर्त्तमसंशयम् ॥ ८ ॥

मूलकमित्यादि—सुश्रुतस्य । शुष्कमिति मूलकविशेषणम् । आर्द्रकमित्यार्द्रकन्द । डल्वणस्तु शुष्कमिति मूलकार्द्रयोर्विशेषणमाह । मूलपञ्चकमिति बिल्वादिपञ्चमूल, कफवातकृतविबन्धहन्तृत्वादिति जेज्जट, स्वल्पपञ्चमूलमिति भानुमती । आरेवतफल स्वर्णालुफलम् । अकल्कमिदं घृतम् ॥ ८ ॥

## स्थिराद्यं घृतम्

स्थिरादिवर्गस्य पुनर्नवायाः
सम्पाकपूतीककरञ्जयोश्च ।
सिद्धः कषायो द्विपलांशिकानां
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते ॥ ९ ॥
इत्यानाहचिकित्सा ।

स्थिरादीत्यादि—स्थिरादिवर्गस्य शालपर्ण्यादिपञ्चमूलस्य । सम्पाक शोणालुफलम् । द्विवचनबलात् पूतिकेति करञ्जफलविशेषण, तेन लाटाकरञ्ज इत्यर्थः ॥ ९ ॥

इत्यानाहचिकित्साविवृतिः ।

# अथ गुल्मचिकित्सा ।

लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
बृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ।

स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्वा विवन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २ ॥

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्म ॥ १ ॥ २ ॥

कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः ॥ ३ ॥

कुम्भीत्यादि—सुश्रुतस्य । वातहरक्वाथादिभि पूर्णाभि अन्तर्भौष्माभि कुम्भीभि कलसीभि. स्वेदन, तथा उत्स्विन्नमाषादिपिण्डकैर्वस्त्रवद्धै स्वेद पिण्ड-स्वेद, इष्टकया च तप्तया वातहरक्वाथसिक्तया स्वेद इष्टकास्वेद. । शाल्वणादय इत्यादिशब्देन वेशवारादिपरिग्रह ॥ ३ ॥

स्थानावसेको रक्तस्य वाहुमध्ये शिराव्यधः ।
स्वेदोऽनुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ४ ॥

स्थानावसेको रक्तस्येति—स्थिरगुल्मे गुल्मस्थानाद्रक्तावसेक । वाहुमध्ये शिराव्यध इति वाहुमध्ये सन्धेरधस्तात् स्वल्पशिरा वेध्या, न तु मध्या न वा बृहती, तस्या मर्मत्वात् । शिराव्यधश्च यस्मिन् पार्श्वे गुल्मस्तत्पार्श्वस्थवाहौ । अयञ्च विधि दोषचिकित्सया गुल्मस्याप्रशमने स्वेदादिना च शोणितदुष्टौ सत्या बोध्य । स्वेद इत्यादिकश्चार्द्ध पद्य सम्पूर्णश्लोकानुरोधादेवोक्तम् ॥ ४ ॥

पेया वातहरैः सिद्धा कौलत्था धन्वजा रसाः ।
खडाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥ ५ ॥

आहारविधिमाह पेयेत्यादि—वातहरैर्दशमूलादिभि । पञ्चमूलञ्चेह विल्वादिपञ्चमूलम्, उष्णवीर्य्यतया विशेषेण वातहरत्वात् ॥ ५ ॥

## वातगुल्मचिकित्सा

मातुलुङ्गरसो हिंगु दाडिमं विडसैन्धवम् ।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ६ ॥

मातुलुङ्गेत्यादि—मातुलुङ्गरसादिक प्रक्षिप्य सुरामण्ड पेय सुरामण्डश्चाहारद्रव्यतया प्रभूतो ग्राह्य, न तु चूर्णाच्चतुर्गुण, एवमन्यत्रापि सुरया भेषजपाने ज्ञेयम् ॥ ६ ॥

नागरार्द्धपलं पिष्टं द्वे पले लुञ्चितस्य च ।

तिलस्यैकं गुडपलं क्षीरेणोष्णेन पाययेत् ।
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ ७ ॥

नागरेत्यादौ—लुञ्चितस्येति निस्तुषीकृतस्य । अत्र च भूरिमानोपयोगो व्याधिमहिम्नैव भवतीति ज्ञेयम् । वाग्भटे पुनरेतदर्द्धमानेनायं योगो पठ्यते । यथा,—"शुण्ठ्या कर्षं गुडस्य द्वौ धौतात् कृष्णतिलात् पलम् । खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानु योजयेत् । वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान्" इति । अन्ये तु नागरार्द्धपलमिति पुरुषस्य बलाबलमुद्दिश्य, हीनपुरुषे तु तृतीयभागेन कर्त्तव्यमित्याहुः ॥ ७ ॥

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ८ ॥

पिबेदित्यादि—योगद्वयम् । पूर्वयोगः कफानुबन्धवायौ, द्वितीयस्तु पित्तानुगे । उक्तं हि चरके—"पूर्वं कफानुबन्धे च हितं पित्तानुगे परम्" इति, पूर्वमिति वारुणीसंयुक्तमेरण्डतैलम्, परमिति पयःसंयुक्तमेरण्डतैलम् ॥ ८ ॥

साधयेच्छुष्कशुद्धस्य रसोनस्य चतुःपलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम् ।
हृद्रोगं विद्रधिं शोषं नाशयत्याशु तत् पयः ॥
एवन्तु साधिते क्षीरे स्तोकमप्यत्र दीयते ॥ ९ ॥

साधयेदित्यादि—निस्तुषतया शुद्धं पूर्णवीर्य्यतया च शुष्कं इत्यर्थः । क्षीरोदकेऽष्टगुणित इति क्षीरोदकयोश्च समासकरणान्मिलित्वैवाष्टगुणत्वं इदम्, भागानुक्तेश्च समभागत्वमिति । तेन रसोनचतुःपलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः । अनयोश्च द्रवत्वेऽपि न द्वैगुण्यम्, रसोनपलोल्लेखेनाष्टगुणत्वविधानात् । जलक्षयादवशिष्टं क्षीरम् । यद्यपि षोडशपलत्वेन बहु भवति तथापि दीप्ताग्नयो महाकाया इत्यादि वचनाद् गुल्मस्य बहुमात्राभिहिततया षोडशपलक्षीरमपि न दोषावहमिति; किंवा अग्न्युपघातभयात् स्तोकं देयम्, अत एवोक्तम् एवन्तु साधित इत्यादिना । दुग्धरसोनयोश्चात्र न योगविरुद्धत्वमाशङ्कनीयम्, व्याधिप्रभावान्महर्षिवचनाच्चेत्यर्थः ॥ ९ ॥

सर्जिकाकुष्ठसहितः क्षारः केतकिजोऽपि वा ।

तैलेन पीतः शमयेद् गुल्मं पवनसम्भवम् ॥ १० ॥

मर्जिकेत्यादि—सुश्रुतस्य । सर्जिकाया माषकद्वयम्, एवं कुष्ठस्यापि, केतकीजटाक्षारस्य माषकचतुष्टयमिति निश्चलः वाशब्द पूर्वक्षारयोगापेक्षया । डल्वणस्तु क्षारो यवक्षार । अत्र सर्जिकाकुष्ठसहितो यवक्षारस्तैलेनेत्येको योगः । केतकिजेऽपि वेत्यत्र क्षार इति सम्बध्यते, तेन केतकिजोऽपि क्षारस्तैलेनेति, द्वितीयो योग । गौडास्तु सर्जिकाकुष्ठसहित केतकिजक्षारस्तैलेनैकमेव योगमाहुः । तैलेनेति तिलतैलेन । अन्ये तु यौगिकत्वादेरण्डतैलमाहु ॥ १० ॥

वातगुल्मे कफे वृद्धे वान्तिश्चूर्णादिरिष्यते ॥ ११ ॥

अवस्थाया क्रियासूत्रमाह वातगुल्म इत्यादि—गुल्मे यद्यपि "न वामयेत्" इत्यादिवचनात् वमन निषिद्ध तथाप्यवस्थाविशेषेऽप्यपवादरूपतया तन्न दूष्यते । चूर्णादीत्यादिशब्दात् फलवर्त्तिगुडिकादयश्च ॥ ११ ॥

## पित्तगुल्मचिकित्सा

पित्ते तु रेचनं स्निग्धं रक्ते रक्तस्य मोक्षणम् ।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ॥ १२ ॥

पित्ते त्वित्यादि—स्निग्ध विरेचनमित्यैरण्डतैलादिना ॥ १२ ॥

रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम् ।
काकोल्यादिमहातिक्तवासाद्यैः पित्तगुल्मिनम् ।
स्नेहितं स्रंसयेत् पश्चाद् योजयेद्वस्तिकर्मणा ॥ १३ ॥

रूक्षोष्णेन तु सम्भूत इत्यत्रापि पैत्तिक इति शेष । काकोल्यादिमहातिक्तवासाद्यैरित्यनन्तर घृतैरिति शेष. । काकोल्यादिगणक्वाथकल्कसाधित घृत काकोल्यादिघृतम्, महातिक्तघृतञ्च कुष्ठोक्तम्, वासाद्यघृतञ्च रक्तपित्तोक्तम् । स्रंसयेदिति विरेचयेत् । वस्तिकर्मणेत्यनुवासननिरूहाभ्याम् ॥ १३ ॥

स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत् ।
रेचनार्थी रसं वापि द्राक्षायाः सगुडं पिबेत् ॥ १४ ॥
दाहशूलानिलक्षोभस्वप्ननाशारुचिज्वरैः ।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥ १५ ॥
पक्के तु व्रणवत् कार्य्यं व्यधशोधनरोपणम् ।

स्वयमूर्ध्वमधो वापि स चेद्दोषः प्रपद्यते ॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान् ।
परन्तु शोधनं सर्पिः शुद्धे समधु तिक्तकम् ॥ १६ ॥

स्निग्धोष्णज इत्यादौ—काम्पिल्ल गुण्डारोचनी । विदह्यमानमिति पच्यमानम् । उपनाहयेदिति व्रणशोथोक्तपाचनापिण्डे प्रलेपयेत् । ननु सुश्रुते गुल्मस्य पाको निषिद्ध यथा "स यस्मादात्मनि चय गच्छत्यप्स्विव बुद्बुद । अन्त सरति यस्माच्च न पाकमुपयात्यत ।" इति । आत्मनीति स्वावयवे गुल्मारम्भकदोषरूपे; नतु मासरक्तादौ । चयमिति वृद्धिम् । अप्स्विव बुद्बुद इति यथा जलावरुद्धो वायुरेव जले बुद्बुदरूपो भवति, तथा कफपित्ताभ्यामवरुद्धो वायुरेव कुण्डलीभूतो गुल्म इत्यर्थ । अन्त सरति यस्माच्च इत्यनेनापि रक्तादिरहितकोष्ठविवरमात्राश्रयत्वमस्य दर्शितम् । एतेन दोषमात्राश्रयित्वे गुल्मे मासशोणितयो पाकाश्रययोरभावादपाकित्वमुक्तम् । तत्राहु, गुल्मो यद्यपि दोषमात्राश्रय एव, तथापि यदा कारणवशादग्निय मामादिकमासाद्य कृतवास्तुपरिग्रहो भवति वातोपशमनार्थं कृत स्वेदादिभिर्वा दुष्ट रक्तं सहकारि लभते, तदा गुल्मस्यापि पाक कथ प्रत्याख्येय ? केवल चरके गुल्मे इत्युच्यते सुश्रुते तु विद्रधिसज्ञयेति सज्ञामात्रे विवाद । अकृतवास्तुपरिग्रहस्तु दोषमात्राश्रयत्वान्न पच्यते इति चरकेणाप्यनुमत एवेति । अन्ये तु अपाकार्थमुक्तहेतुद्वयस्य वातिक एव सङ्गतत्वाद्वातिक एव गुल्मो न पच्यते अस्थिरत्वाद्दारुस्वभावाच्च। अन्ये तु पठन्ति भेद पुनरय विद्रधिगुल्मयो ,विद्रधिरचिरकालपाकश्चिरपाकश्च गुल्म इति । अतएव माधवकरोऽप्याह "प्रायो न पच्यते गुल्मो वातजस्तु विशेषत । रक्तपित्तादिवृद्धत्वात् पच्यतेऽन्यो यदृच्छया" इति । स्वयमित्यादि स्वयमेवान्तर्भिन्ने सति दोष पूयरूप ऊर्ध्वमधो वा गच्छति, तदा द्वादशाहमुपेक्षेत, न शोधनरोपणादिक कुर्यात् । उपद्रवान् ज्वरादीन् । उपद्रवेभ्यो ज्वरादिभ्यश्चातुर रक्षन्नित्यर्थ । परन्तु शोधन सर्पिरिति द्वादशाहात् पर शोधनद्रव्यसाधित घृत पेयम् । शुद्धे समधुतिक्तकमिति शुद्धे सति तिक्तद्रव्यसाधित घृत पेयम्। शुद्धे समधुतिक्तकमिति शुद्धे सति तिक्तद्रव्यसाधित घृतं समधु मधुसहित देय रोपणार्थमिति शेष ॥ १४—१६ ॥

रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः ।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले ॥
द्विपलञ्च मसूराणां साध्यमष्टगुणे जले ।

घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम् ॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छाऽरतिस्तथा ॥१७॥
दीप्ताग्नयो महाकायाः स्नेहसात्म्या महाबलाः ।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ।
ज्येष्ठां मात्रां पिबेयुस्त पलान्यष्टौ विशेषतः ॥ १८ ॥

रोहिण्यीत्यादि—रोहिणी कटुकेति कटुरोहिणी । त्रिफलात्वच इति निरस्थित्रिफलाया. । एते त्रायमाणान्ता· प्रत्येक कर्षांशाः । पटोलत्रिवृतापले इति द्विवचनात् प्रत्येक पलमेकम् । अष्टगुणे इति घृतादष्टगुण योज्यम् ; घृत चतु.पलमेवोक्तम् । तेन घृतेन सम्मूर्छितमेकीकृतम्, एतेन क्वाथघृताभ्या मिलित्वाष्टौ पलानि । इयञ्च मात्रा व्याधिमहिम्ना न दोषावेहत्येतदेवाह दीप्ताग्नय इत्यादि ॥ १७ ॥ १८ ॥

## कफगुल्मचिकित्सा

लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ सम्प्रधुक्षिते ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ १९ ॥

लङ्घनेत्यादौ—घृत सक्षारकटुकमिति यवक्षारत्रिकटुकल्कसाधितमित्यर्थः । वमनोपग इति वमनेनोपगम्येत उपचर्य्यते यः स वमनोपगः । पूर्व वातिकगुल्म एवावस्थाया वमनमुक्तम्, इह तु कफगुल्म इत्येवेति न पौनरुक्त्यम् ॥ १९ ॥

मन्देऽग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ।
गुडिकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ।
क्षारारिष्टगणश्चापि दाहशेषे विधीयते ॥ २० ॥

मूढ इत्यादृते । गुडिकादय इहैव हिंग्वादिप्रभृतयो वक्तव्या. । क्षारारिष्टगण इति प्रतिसारणीयक्षारस्यानुशस्ततया शल्यतन्त्र एव तदभिध.न ज्ञेयम् । पानीयक्षाराश्चात्रापि ग्रहणयध्यायोक्ताश्चानुसर्त्तव्याः । अरिष्टाश्चरकग्रहण्यर्शश्चिकित्सितोक्ताः ज्ञेयाः । उक्त हि—"य एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् । आरिष्टयोगाः

सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते" इति । दाहस्तु शरलौहादिभिः । उक्तं हि—"तस्य दाहो हृते रक्ते शरलौहादिभिर्हितः" इति । दाह शेष इति दाहस्य दारुणत्वात् क्रियान्तरासिद्धौ शेष एव कर्त्तव्यता युक्ता ॥ २० ॥

पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥ २१ ॥

पञ्चमूलीत्यादि—पञ्चमूली महती कफप्रत्यनीकत्वात् । माध्वीकं मधु ॥ २१ ॥

तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्मामयं पात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ २२ ॥
यमानीचूर्णितं तक्रं विडेन लवणीकृतम् ।
पिबेत् सन्दीपनं वातमूत्रवर्चोऽनुलोमनम् ॥ २३ ॥
व्यामिश्रदोषे व्यामिश्रः सर्व एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ।
यथोक्तेन सदा कुर्य्याद् भिषक् तत्र समाहितः ॥२४॥

स्वेदमाह तिलेत्यादि । गुल्मामयमिति गुल्मस्थानम् । त्रिदोषघ्नो विधिरिति वाताद्युक्तयोगा एव एकीकृत्य योज्याः, प्रकृतिसमसमवेतत्वात्, विकृतिविषमसमवेतस्य तु चरकेऽसाध्यतोक्ते ॥ २२—२४ ॥

वचाविडाभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशिकाः क्रमात् ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ २५ ॥

वचेत्यादौ—अभया हरीतकी; अग्निश्चित्रकः, दीप्यको यमानी । आदिशब्दा-दुष्णोदकादीनां ग्रहणम् ॥ २५ ॥

यमानीहिङ्गुसिन्धूत्थक्षारसौवर्च्चलाभयाः ।
सुरामण्डेन पातव्या गुल्मशूलनिसूदनाः ॥ २६ ॥

यमानीत्यादौ—क्षारो यवक्षारः । योगोऽयमुष्णाम्बुना प्रचरति ॥ २६ ॥

## हिङ्ग्वाद्यं चूर्णम्

हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम्

अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ॥
दाडिमं पौष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भुक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्बस्तिशूलेषु गुल्मे वाते कफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥
ग्रहण्यर्शोविकारे च प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
वहुशो गुडिकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥२७

हिङ्ग्वादिचूर्णे अजमोदा यमानी; अजगन्धा क्षेत्रयमानी, तिन्तिडीक महार्द्रक, द्वौ क्षारौ यवक्षारसर्जिकाक्षारौ, लवणे द्वे सैन्धव-सौवर्च्चले । प्राग्भुक्तमिति भोजनस्य प्राक् परिणामे, भोजनाव्यवहितपूर्वकाले वा । प्रकारान्तरमाह भावितमित्यादि । वहुश इति सप्ताह सप्ताह भावनाविधिरित्युक्तत्वात् । मातुलुङ्गरसेन सप्तदिनान्यातपे भाव्य, तदनु चाष्टमाषकमिता वटिका कार्य्या । एका खादित्वा तप्तजलाद्यनुपेयमिति । कार्मुका कर्मकारका. ॥ २७ ॥

पूतीकपत्रगजचिर्भिटिचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ २८ ॥

पूतीकपत्रेत्यादि—वाग्भटस्य—पूतीको लाटाकरञ्ज , गजचिर्भिटी गोरक्ष-कर्कटी, वह्निश्चित्रक , सस्तरचितमिति सस्तररूपतया विहितम् । लवणोपधान सैन्धवगर्भम् । सैन्धवञ्च पूतीकपत्रादिकमम ग्राह्यम् । सौश्रुतपत्रलवणविधौ टीका-कृद्भिरेव व्याख्यातत्वात् । पूतीकपत्रादिसस्तरे सैन्धव दत्त्वा तदुपरि पुन पूतीक-पत्रादिक विभज्य चान्तर्धूम दग्धव्यम् ॥ २८ ॥

हिंगुपुष्करमूलानि तुम्बुरूणि हरीतकीम् ।

श्यामा विडं सैन्धवञ्च यवक्षारं महौषधम् ॥
यवक्काथोदकेनैतद् घृतभृष्टन्तु पाययेत् ।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ २६ ॥

हिङ्ग्वित्यादौ—तुम्बुरु स्वनामख्यात, श्यामा त्रिवृत् । हिङ्गुप्रभृतीनां चूर्णं प्रसूतं कृत्वा स्थाप्य, ततो योग्यां मात्रां गृहीत्वा यवक्काथेन भावयित्वा घृते परिभृष्टं पाययेदित्यर्थः । यवक्काथोदकेन यवक्काथेनोष्णोदकेनेत्यर्थः । अस्मिन् प्रयोगे हि वृन्दप्रभावके उष्णोदकमेरण्डतैलञ्चाधिकं पठितं, तद्यथा,—'उष्णोदकेन पातव्यमेतत् सुरुवूतैलकम्' इति । अन्ये तु उदकशब्दोऽयं द्रववचनः, तेन यवक्काथरूपेण द्रवेणेत्याहुः । यवनालोदकेनेति पाठान्तरमसङ्गतम्, वृद्धवाग्भटे यवक्काथस्योक्तत्वात् । भिद्यते विलीयते, न तु पक्वः सन् भेदं गच्छति । सपरिग्रह इति वास्तुपरिग्रहसहितः सोपद्रव इति वा ॥ २६ ॥

## वचाद्यं चूर्णम्

वचाहरीतकीहिङ्गुसैन्धवं साम्लवेतसम् ।
यवक्षारं यमानीञ्च पिबेदुष्णेन वारिणा ॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम् ।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च ॥ ३० ॥

वचेत्यादि—हारीतस्य । इमं योगं भोजनादिमध्यावसानेष्वपि कारयन्तीति निश्चलः । तत्र, हारीते हि—'शाम्यते योगराजेन त्रिः प्रयुक्तेन योगतः' इत्येवोक्तम्, न तु भोजनादिमध्यावसानेष्वपीति ॥ ३० ॥

पिप्पलीपिप्पलीमूलचित्रकाजाजिसैन्धवैः ।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥ ३१ ॥
पिप्पलीत्यादि—अयं योगो वातश्लेष्मणि ज्ञेयः ॥ ३१ ॥

नादेयीकुटजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटापामार्गनीपाग्निकान् ।
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितं
हिङ्ग्वादि प्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ३२ ॥

नादेयीत्यादि—नादेयी भूमिजम्बुका, व्याघ्री कण्टकारी, किंशुकः पलाशः,

पारिभद्रकजटा पारिभद्रमूलम्, अग्निश्चित्रक । सलवणा ससैन्धवा, लवणा ज्योतिष्मतीत्येके । नादेयीप्रभृतीन् दग्ध्वा क्षार. कार्य्य । अस्याढक पलशत वा पानीयक्षारविधिना चतुर्गुणेन षड्गुणेन वा उदकेन पक्त्वा चतुर्भागावशेषे कल्कमपनीय, एकविंशतिवारान् परिस्राव्य स्थापयेत् । अस्य कर्षमर्द्धपल वा हिंग्वादिचूर्णपादिक दत्त्वा मासघृतक्षीराणामन्यतमेषु प्रक्षिप्य पिबेत्, मासरसादिमिश्र मोक्षन्यमोजोरक्षणार्थम् । अन्ये त्वाहु एकदा विपाच्य स्थापिते क्षारोदकेऽम्लत्वादिदोषशङ्का स्यात्, अत. कृतक्षाराग्नेर्वलाद्यपेक्षया पलादिपरिमित क्षार गृहीत्वा प्रत्यहमनन्तरोक्तक्काथविधिना क्षारोदक कार्य्यमिति । हिंग्वादिप्रतिवापमिति हिंग्वादेः पादिकस्य प्रतिवाप प्रक्षेपो यत्र तत् तथा । एतदिति क्काथक्षारजलम् । यस्य तन्त्रस्याय प्रयोगस्तत्रोक्तहिंग्वाद्यपरिज्ञानात् वक्ष्यमाणहिंग्वादेरनन्तरपठितत्वात् सग्रहकारस्याभिमतो लक्ष्यते ॥ ३२ ॥

हिंगूग्रगन्धाविडशुण्ठ्यजाजी-
हरीतकीपुष्करमूलकुष्ठम् ।
भागोत्तरं चूर्णितमेतदिष्टं
गुल्मोदराजीर्णविसूचिकासु ॥ ३३ ॥

हिंग्वादौ—उग्रगन्धा वचा । भागोत्तरमिति उत्तरोत्तरमेकभागवृद्धम् । उष्णाम्बुनास्य पानमुपदिशन्ति ॥ ३३ ॥

त्रिफलाकाञ्चनक्षीरीसप्तलानीलिनीवचाः ।
त्रायन्तीहवुषातिक्ताव्रिवृत्सैन्धवपिप्पलीः ॥
पिबेद्धिचूर्णं मूत्रोष्णवारिमांसरसादिभिः ।
सर्वगुल्मोदरप्लीहकुष्ठार्शःशोथपीडितः ॥ ३४ ॥

त्रिफलेत्यादौ—काञ्चनक्षीर्य्या अभावात् कङ्कुष्ठमाहु । सप्तला चर्मकषा, नीलिना नीलबुह्वा । विरेकार्थोऽस्य योग ॥ ३४ ॥

## काङ्कायनगुडिका

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढकीम् ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुनः ।

यवक्षारपले द्वे च द्वे पले चाम्लवेतसात् ॥
यमान्यजाजीमरिच धन्याकञ्चेति कार्षिकम् ।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि ॥
मातुलुङ्गरसेनैव गुडिका कारयेद्भिषक् ।
तासामेकां पिवेद् द्वे वा तिस्रो वापि सुखाम्बुना ॥
अम्लैश्च मद्यैर्यूषैश्च घृतेन पयसाथवा ।
एषा काङ्कायनेनोक्ता गुडिका गुल्मनाशिनी ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम् ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत् ॥ ३५ ॥

शटीमित्यादौ—यमान्यादीना प्रत्येक कर्षं । उपकुञ्ची कृष्णजीरकम्, अजमोदा यमानी, अनयो प्रत्येकम् अष्टमिकामर्द्धपलमित्यर्थ ॥ ३५ ॥

## हवुषाद्यं घृतम्

हवुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद् घृतम् ॥
सकोलमूलकरसं सक्षीरं दधि दाडिमम् ।
तत् परं वातगुल्मघ्नं शूलानाहविवन्धनुत् ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।
पार्श्वहृद्वस्तिशूलञ्च घृतमेतद्व्यपोहति ॥ ३६ ॥

हवुषेत्यादि—हवुषा स्वनामख्याता, पृथ्वीका कृष्णजीरकम्, हिङ्गुपत्रिकेत्यन्ये, दीप्यको यमानी । सकोलमूलकरसमिति कोल शुष्कवदर तस्य क्वाथ, मूलकस्यापि शुष्कस्य क्वाथ, न पुनर्नवद्रव्यस्य स्वरस, तस्य तु गुल्मे निषिद्धत्वात् । दाडिमस्याप्यत्र स्वरस, द्रवसाहचर्य्यात् । विश्वामित्रेणापि दाडिमरस एवोक्त । एव पञ्चभिर्द्रवै प्रत्येक स्नेहसमै पाक ॥ ३६ ॥

## पञ्चपलकं घृतम्

पिप्पल्याः पिचुरध्यर्द्धो दाडिमाद् द्विपलं पलम्।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम्॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरान्॥ ३७॥

पिप्पल्या इत्यादि—पिचुरध्यर्द्ध इति सार्द्धकर्ष। पल धान्यादिति योज्यम्। पञ्च घृतादिति पञ्च पलानीत्यर्थः। क्षीर चतुर्गुणमिति घृतपञ्चपलापेक्षया चतुर्गुण विंशति पलानि क्षीरस्येत्यर्थः॥ ३७॥

## त्र्यूषणाद्यं घृतम्

त्र्यूषणत्रिफलाधान्यविडङ्गचव्यचित्रकैः।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत्॥ ३८॥

त्र्यूषणादिघृते सक्षीरमिति चतुर्गुणक्षीरसहित, द्रवान्तराभावात्॥ ३८॥

## त्रायमाणाद्यं घृतम्

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः॥
रोहिणीकटुकीमुस्त-त्रायमाणादुरालभाः।
कल्कैस्त्वामलकीवीराजीवन्तीचन्दनोत्पलैः॥
रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च।
पलानि पृथगष्टाष्टौ दत्वा सम्यग्विपाचयेत्॥
पित्तगुल्मं रक्तपित्तं विसर्पं पैत्तिकं ज्वरम्।
हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम्॥
पलोल्लखागते माने न द्वैगुण्यमिहेष्यते।
चत्वारिंशत्पलं तेन तोयं दशगुणं भवेत्॥ ३९॥

जल इत्यादौ—पञ्चभागस्थितमिति पञ्चभागावशिष्ट, तेन क्वाथस्याष्टौ पलानीत्यर्थः। कल्कैरित्यत्र व्यवहितैरप्यामलक्यादिभिः सम्बध्यते; न केवलमेतैः कल्कैः कटुरोहिण्यादयश्च कल्का इति योजना। कल्का इति श्लोकपादपूरणार्थमिति

हरिचन्द्रः । वीरा क्षीरकाकोली । पलोल्लेखागमनमानत्वादिह न द्वैगुण्यमित्याह पलानीत्यादि ॥ ३९ ॥

## द्राक्षाद्यं घृतम्

द्राक्षामधुकखर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम् ॥
जलाढके पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥
साधयेत तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ।
साहचर्य्यादिह पृथग्घृतादेः क्वाथतुल्यता ॥ ४० ॥

द्राक्षेत्यादौ—मधुक यष्टिमधु । शर्कराक्षौद्रपादिकमिति मिलित्वा । अत्र क्वाथशेषस्य प्रस्थमानस्य साहचार्य्याद् घृतादीनामपि प्रस्थमानत्वमित्याह साहचर्य्यादित्यादि ॥ ४० ॥

## क्षीरषट्पलकं घृतम्

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिःप्रस्थं विपाचयेत् ॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ४१ ॥

क्षीरषट्पलके घृते क्षीरप्रस्थेनैव केवलेन घृतसमेन पाक इति अन्ये, अन्ये तु त्रिगुण जल ददति, तन्न, सर्वथा द्रवानुक्तौ हि जल द्रव भवतीत्याह चक्र. ॥ ४१ ॥

## धात्रीषट्पलकं घृतम्

धात्रीफलानां स्वरसैः षडङ्गं विपचेद् घृतम् ।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ४२ ॥

धात्रीत्यादि— सुश्रुतस्य । धात्रीफलस्वरसश्चतुर्गुण । षडङ्गमिति यवक्षार सहितपञ्चकोलकल्कित प्रत्येक पलिकम् । उक्त हि—" पञ्चकोलघृत क्षारे प्रत्येक

पालिके पचेत्। क्षीरे धात्रीरसे वापि सितासैन्धवयोजितम्।" शर्करासैन्धवोपेतमिति शर्करासैन्धवयोर्मिलित्वा पादिकयो प्रक्षेप । अत्रापि शर्करापादत्रय, सैन्धवस्यैकपाद इति वदन्ति ॥ ४२ ॥

## भार्गीषट्पलकं घृतम्

षड्भिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावककल्कपक्वम्।
प्रस्थं घृतस्य दशमूल्युरुबूकभार्गी-
क्वाथेऽप्यथो पयसि दध्नि च षट्पलाख्यम् ॥
गुल्मोदरारुचिभगन्दरमग्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान्।
सद्यः शमं नयति ये च कफानिलोत्था
भार्ग्याख्यषट्पलमिदं प्रवदन्ति वैद्याः ॥ ४३ ॥

षड्भि पलैरित्यादि—मगधजा पिप्पली, तस्या , फल मूलञ्च; ज्वलनश्चित्रक , यावको यवक्षार । यावजेति पाठे स एवार्थ अत्र चीर स्नेहसम, "द्रवान्तरेण योगे हि क्षीर स्नेहसम भवेत्" इत्युक्ते । दधिकाथौ तु मिलित्वा स्नेहात् त्रिगुणौ। अत चतुर्गुण पाक, एकेनापि चातुर्गुण्य त्रिभिरपि चातुर्गुण्य चतुर्भि सममिति वचनात्। अन्ये तु काथो द्विगुण, क्षीर दधि च प्रत्येक स्नेहसममित्याहु । निश्चलस्तु काथश्चतुर्गुण , दधि च चतुर्गुण, क्षीरन्तु स्नेहसममिति नवगुण पाक इत्याह। अन्ये तु दधिकाथौ मिलित्वा चतुर्गुणौ क्षीरन्तु स्नेहसममिति पञ्चगुण पाक इत्याहु ॥ ४३ ॥

## भल्लातकं घृतम्

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढके।
पादावशेषे पूते च पिप्पलीं नागरं वचाम्।
विडङ्गं सैन्धवं हिंगु यावशूकं विडं शटीम् ॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥

एतद्भल्लातकं नाम कफगुल्महरं परम् ।
प्लीहपाण्ड्वामयश्वासग्रहणीकासगुल्मनुत् ॥ ४४ ॥

भल्लातकघृत द्विगुणाद्रवेणैव पक्तव्य, निर्दिष्ट तद्वदेव हि वचनात् । पञ्चमूल स्वल्प, तदेव विदारीगन्धाढ्य प्रत्येक पलोन्मितम् । भल्लातक नामेत्यनन्तर सर्पिरिति शेष , चरके तु एतद्भल्लातकघृत कफगुल्महर परमित्येव पाठ ॥ ४४ ॥

## रसोनाद्यं घृतम्

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम् ।
सुरारनालदध्यम्लमूलकस्वरसैः सह ॥
व्योपदाडिमवृक्षाम्लयमानीचव्यसैन्धवैः ।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च पलांशिकैः ।
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान् ।
कासापस्मारमन्दाग्निप्लीहशूलानिलान् जयेत् ॥ ४५ ॥

रसोनेत्यादौ—पञ्चमूल महत् पञ्चमूल वातकफहरत्वात् , तस्य रस क्वाथ । रसोनस्वरसादीना पएणा स्नेहसमत्वम् । दीप्यक चेत्रयमानी ॥ ४५ ॥

## दन्तीहरीतकी

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ।
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडम् ।
ताश्चाभयास्त्रिवृच्चूर्णात् तैलाच्चापि चतुःपलम् ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्रं तैलसमं दत्वा चातुर्जातपलं तथा ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोपप्रस्थमनामयः ॥
प्लीहश्वयथुगुल्मार्शो-हृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेशविषम-ज्वरकुष्ठान्यरोचकाः ॥ ४६ ॥

जलद्रोण इत्यादौ—विंशतिः पञ्च चाभया इत्याकृतिमानात् । हरीतकी-

फलानि कर्पटे पोट्टलीं बद्ध्वा अगस्त्यहरीतकीवत् कथनीयानि। । तैलार्द्धकुडवमिति पाठे च पलचतुष्टयमित्यर्थः । तैलमुत्स्विन्नहरीतकीभर्जनार्थं, न तु त्रिवृच्चूर्णपरिभर्जनार्थं, भर्जनेन विरेचनशक्त्यपकर्षप्रसङ्गात् । पलमेकं कणाशुण्ठ्योर्मिलित्वा, एवं चातुर्जातपलमपि । प्रस्थमत्र दोषस्य सार्द्धत्रयोदशपलमानम् । उक्तं हि भोजे—" वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः " इति ॥ ४६ ॥

## वृश्चीराद्यरिष्टः

**वृश्चीरमुरुबूकञ्च वर्षाह्वं बृहतीद्वयम् ।**
**चित्रकञ्च जलद्रोणे पचेत् पादावशेषितम् ॥**
**मागधीचित्रकक्षौद्र-लिप्तकुम्भे निधापयेत् ।**
**मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ।**
**व्युषोषितं दशाहञ्च जीर्णभक्तः पिबेन्नरः ।**
**अरिष्टोऽयं जयेद् गुल्ममविपाकं सुदुस्तरम् ॥ ४७ ॥**

वृश्चीरमित्यादि—वृश्चीरं श्वेतपुनर्नवा । वृश्चीरादीनां मिलित्वा पलशतम् । " द्रोणे द्रव्यतुला मता " इति वचनात्, अन्ये त्वाढकमाहुः । मागधी पिप्पली । मधुनः प्रस्थमिति शरावचतुष्टयम् । पथ्याचूर्णार्द्धसंयुतमिति हरीतकीचूर्णप्रस्थार्द्धमष्टौ पलानि, तेन संयुतम् । व्युषोषितं तुषधान्यराशिमध्ये स्थितम् । जीर्णभक्तः परिणताहारः लघुकोष्ठ इत्यर्थः । अस्य पलमर्द्धपलं वा प्रातरुपयोज्यम् ॥ ४७ ॥

**रौधिरस्य च गुल्मस्य गर्भकाले व्यतिक्रमे ।**
**स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम् ॥ ४८ ॥**

रौधिरस्येत्यादौ—गर्भकालव्यतिक्रमे" इति उचितगर्भकालस्य दशमासरूपकालस्य व्यतिक्रमे । अयञ्च समयनियमो रक्तगुल्मस्यौषधार्हसमयप्रदर्शनार्थमेवोक्तः ज्वरे सप्तदिवसात् परतः पाचनवत् । न तु गर्भकालशङ्कानिरासार्थम्, दशमासातिक्रमेणापि गर्भावस्थादर्शनात् । उक्तं हि—" तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात् " इति । तथा पिण्डितस्पन्दनमस्य गर्भलक्षणात् विरुद्धलक्षणमुक्तं 'यः स्पन्दते पिण्डित एव नाङ्गैः' इति एतेन दशमासादर्वागपि शोणितगुल्मावधारणं भवत्येव । तस्माद् व्याधिमहिम्ना अस्य दशमासातिक्रमे सत्येव सुखचिकित्स्यत्वप्रदर्शनार्थमिदमुक्तम् । अर्वाक् चिकित्सायान्तु शोणितातिस्रुतौ गर्भाशयोप-

घातादिक स्यादिति ॥ ४८ ॥

शताह्वाचिरिविल्वत्वग्दारुभार्गीकणोद्भवः ।
कल्कः पीतो हरेद् गुल्मं तिलक्काथेन रक्तजम् ॥ ४६ ॥

शताह्वेत्यादि—शताह्वादिकणान्ताना प्रक्षेप । चिरिबिल्वत्वक् लाटाकरञ्जत्वक् । तिलक्काथेनेति तिलफलक्काथेनेत्यर्थ, एवमुत्तरयोगेऽपि तिलफलस्यैव क्काथ । केचित्तु तिलनालकक्काथकृतक्षारोदकेनापि व्यवहरन्ति । रक्तजमित्यार्त्तवरक्तजम् ॥ ४६ ॥

तिलक्काथो गुडव्योषहिंगुभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ५० ॥

तिलक्काथ इत्यादौ—गुडादय प्रक्षेप्या । नष्टे पुष्पे इत्यदृष्टार्त्तवे ॥ ५० ॥

सक्षारं त्र्यूषणं मद्यं प्रपिवेदस्रगुल्मिनी ।
पलाशक्षारतोयेन सिद्धं सर्पिः पिवेच्च सा ॥ ५१ ॥

सक्षारेत्यादौ—क्षारो घण्टापारुल्यादिकृत, अन्ये तु यवक्षार इत्याहु । पलाशक्षारतोयेनेत्यादि—अकल्कमिद घृतम् । पलाशभस्माढकमुदकाढकै मयोज्याग्नौ माधनीयम् । तत्राच्छपैच्छिल्यादिलक्षणोदये तृतीयभागेऽवशिष्टे त्रि सप्तवारान् परिस्राव्य क्षारोदक घृताच्चतुर्गुण ग्राह्यम्, तेन घृतस्य पाक इति चक्र. । अन्ये तु पानीयक्षारविधिना स्रावितक्षाराम्बुना घृतपाकमुपदिशन्ति कार्त्तिक पुन पलाशक्षारतोयेनेत्यनेन स्नेहपाकोक्तविधिना पलाशक्षारकाथकरणमित्याह ॥ ५१ ॥

उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः ।
न प्रभिद्येत यद्येवं दद्याद् योनिविशोधनम् ॥
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः ।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरी क्रिया ॥ ५२ ॥

उष्णैर्वेति—उष्णैरित्युष्णवीर्य्यै सुरासौवीरादिभि । भिन्न इनि भृश स्रवति रक्ते । योनिविशोधनमिति वर्त्तिरूपतया योनिविरेचनमित्यर्थ । क्षारेणेत्यादि—पलाशक्षारेण सह पलल तिलचूर्णं किञ्चिज्जल दत्त्वा वर्त्तिं विधाय योन्यभ्यन्तरे दद्यात् । अथवा पलाशादिक्षारतिलचूर्णं स्नुहीक्षीरेण मिश्रणीयम्, तेन सूक्ष्मवस्त्र ग्रन्थयित्वा वर्त्ति कार्य्या, सा च योन्यभ्यन्तरे देया । रुधिर इत्यादि स्पष्टम् ॥५२॥

भल्लातकात् कल्ककषायपक्वं
सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तगुल्मं विनिहन्ति पीतं
बलासगुल्मं मधुना समेतम्॥ ५३॥

भल्लातकादित्यादि—अत्र पादिकशर्कराप्रक्षेपः, एवं मध्वपि, 'कल्कवन्मधुशर्करे' इत्युक्तेः। बलासः कफः। कफगुल्मे शर्करास्थाने मधु देयमित्यर्थः॥५३॥

वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेच्चालुकं गुल्मी मधुराणि फलानि च॥ ५४॥
इति गुल्मचिकित्सा।

---

वल्लूरमित्यादि—सुश्रुतस्य। वल्लूरं शुष्कमांसम्, शुष्कमूलकस्य वातहरत्वेन पृथक्त्वान्न निषिद्धम्। एतच्च हरितवर्गोपलक्षणं गुल्मे हरितवर्गस्याप्यहितत्वात्। वैदलं मुद्गादि, आलुकं पिण्डालुकम्। मधुराणि फलानि क्षीरिवृक्षफलानि, क्षारपाणौ न्यग्रोधादिफलवर्जनस्योक्तत्वात्। चकारात् हरीतकीवर्गोपलक्षणम्, गुल्मे हरीतकीवर्गस्याप्यहितत्वात्॥ ५४॥

इति गुल्म-चिकित्सा-विवृतिः।

---

# अथ हृद्रोग-चिकित्सा

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम्।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च॥ १॥
पिप्पल्येलावचाहिंगुयवक्षारोऽथ सैन्धवम्।
सौवर्च्चलमथो शुण्ठी अजमोदा च चूर्णितम्॥
फलधान्याम्ल-कौलत्थ-दधिमद्यासवादिभिः।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा॥ २॥

गुल्मस्य हृदयं स्थानमुक्तम्, अतः स्थानसाम्यात् तदनन्तरं हृद्रोग उच्यते।

वातोपसृष्ट इत्यादि—सुश्रुतस्य । अत्रानुक्तमपि मदनफलादिचूर्णं बोध्यम्, वमनयोग्यत्वात् । वातजेऽपि वमनविधानं हृदयस्य कफस्थानत्वात्, उक्तं हि 'स्थानिस्थानगतं दोषं स्थानिवत् समुपाचरेत्' इति । एवं पित्तजे वमनं बोध्यम् । चरके हृद्रोगिणो यद्यप्यवस्था उक्तास्तथापि कफोत्क्लेशे बलीयसि सर्वत्रैव वमनं ज्ञेयम् । पिप्पल्याद्यन्यतमेन वेत्यन्तं सुश्रुतस्य । फलाम्लं मातुलुङ्गदाडिमफलादि हृद्यत्वात् तस्य रसो ग्राह्यः पानोपयोगित्वात् । वाते धान्याम्लं काञ्जिकम् । कौलत्थं कुलत्थयूषं । स्नेहानामन्यतमेन वेति घृतादीनामन्यतमेन, फलधान्याम्लादिबहुद्रवोपदर्शनं सात्म्यापेक्षम् ॥ १ ॥ २ ॥

नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम् ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥ ३ ॥

नागरमित्यादि—नागरं नागरकृतकषायं पिबेत् । वाशब्दः पूर्वयोगापेक्षया ॥ ३ ॥

श्रीपर्णीमधुकक्षौद्र-सितागुडजलैर्वमेत् ।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥ ४ ॥

पैत्तिकचिकित्सामाह श्रीपर्णीत्यादि—सुश्रुतस्य । श्रीपर्णी गाम्भारी तस्याः फलमत्र देयम् । जलं श्रीपर्णीमधुकयोरेव तयोरेव योग्यत्वात्, जलमत्रार्द्धशृतक्वाथः । अत्र क्षौद्रसितागुडान् प्रक्षिप्य पित्तजे वमेत् । किंवा जलस्य श्रीपर्ण्यादिभिः पञ्चभिः सम्बन्धात् पञ्च योगा अमी । अत्राप्यनुक्तमपि मदनफलादि पूर्ववद् बोध्यम् । डल्वणस्तु सितागुडजलैरित्यत्र सितोत्पलजलैरिति पठित्वा उत्पलं कुष्ठमिति व्याचष्टे । मधुरैः शृतं घृतमिति काकोल्यादिगणक्वाथकल्कसाधितं घृतम् ॥४॥

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्यात्
शुद्धे च पित्तापहमन्नपानम् ॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च ॥ ५ ॥

शीता इत्यादि—द्राक्षादिभिर्युक्तमन्नपानं मण्डयूषादिपानवमनविरेचनशुद्धे

कार्य्यमित्यर्थ इति केचित्। अन्ये तु—" पित्ते द्राक्षेक्षुनिर्यासमिताक्षौद्रपरूषकै। युक्तो विरेको हृद्य स्यात्।" इति तन्त्रान्तरदर्शनात् द्राक्षादिभिर्युक्तो विरेक इत्याहु। सितानलेनेति शर्करामिश्रितजलेनेत्यर्थ। मिता जलेनेति पाठोऽपि ज्ञेय.। उक्त हि वाग्भटे " यष्टीमधुककल्कञ्च पिबेत् ससितमम्भसा इति॥ ५॥

अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा वलया मधुकेन वा॥ ६॥
घृतेन दुग्धेन गुडाम्भसा वा
पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं
हत्वा भवेयुश्चिरजीविनस्ते॥ ७॥

अर्जुनस्येत्यादि—क्षीरपरिभाषया अर्जुनत्वगादिभि प्रत्येक साधित सितया मह पेयमिति चत्वारो योगा। केचित्तु केवलवारिसाधितक्षीरे सिताप्रक्षेपाद्धिति पञ्च योगानाहु। पञ्चमूली चात्र स्वल्पा। एते च योगा वातपित्ते ज्ञेया.॥ ६—७॥

वचानिम्बकषायाभ्यां वान्तं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत्॥ ८॥

वचेत्यादि—सुश्रुतस्य। वचाकषायेण निम्बकषायेण वा वमनम्, किंवा वचाकल्को निम्बस्य कषाय ताभ्या मिलित्वा वमनम्। हृदीति हृद्रोगे। तात्स्थ्यात् मञ्चा क्रोशन्तीतिवत्। वातहृद्रोगहृच्चूर्णं पिप्पल्यादि चेति। अत्रैव वातहृद्रोगे पिप्पल्यादिना यच्चूर्णमुक्त तत् पाययेदित्यर्थ.। वाग्भटेऽप्युक्तम्—कफोद्भवे वमेत् स्विन्न पिचुमर्दवचाम्भसा। कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः। पिबेच्चूर्णं वचाहिंगुलवणद्वयनागरान्। सैलायमानिककणा यवक्षारान् सुखाम्बुना। फलधान्याम्ल-कौलत्थयूषामूत्रासवैस्तथा।" इति वातहृच्चूर्णं पिप्पल्यादिक तथा पिप्पल्यादिगण पाययेदित्याहुरन्ये॥ ८॥

त्रिदोषजे लङ्घनमादितः स्या-
दन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिमध्यत्वमवेक्ष्य चैव
कार्य्यं त्रयाणामपि कर्म शस्तम्॥ ९॥

त्रिदोपज इत्यादि—लङ्घनविधान हृदयस्य कफस्थानतया। त्रिदोपजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोपजे डल्वण' दोपतया चिकित्सा-सूत्रमाह हीनाधीत्यादि—अधिशब्दोऽधिकदोपहन्तृतया तत् कार्य्यमिति वाक्याथ ॥ १० ॥

चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम्।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ १० ॥

चूर्णमित्यादि स्पष्टम् ॥ १० ॥

तैलाज्यगुडविपक्वं चूर्णं गोधूमपार्थजं वापि।
पिवति पयोऽनु च स भवेज्जितसकलहृदामयः पुरुपः ॥ ११ ॥

तैलाज्येत्यादि—तैलाज्यगुडान् मिलित्वा पादिकान् दत्त्वा गोधूमपार्थचूर्ण-स्तोकमात्रेण तोयेनोत्कारिकावद्विपाच्य भक्ष्यम्। किंवा गोधूमपार्थचूर्णसमो गुड, तैलाज्ये तु सस्कारार्थं स्तोकमात्रेण देये। पार्थोऽर्जुनवृक्ष। वाशब्द पूर्वयोगा-पेक्षया ॥ ११ ॥

गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा पक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥१२॥

गोधूमेत्यादि—ककुभोऽर्जुन.। अत्रापि योगे सर्पिर्मधुशर्कराणा पूर्ववन्मान हित्वा छागक्षीरेणोत्कारिकावत् पाक। मधु पर सिद्धशीते देयम् ॥ १२ ॥

मूलं नागवलायास्तु चूर्णं दुग्धेन पाययेत्।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥
रसायनं परं वल्यं वातजिन्मासयोजितम्।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ १३ ॥

मूल नागवलाया इति, मूल चूर्णमिति चूर्णरूप मूलमित्यर्थ। ककुभस्य वल्कलमिति ककुभस्य त्वक्चूर्णमपि दुग्धेन पेयम्। योगद्वयमेतत् ॥ १३ ॥

हिङ्गूग्रगन्धाविडविश्वकृष्णा
कुष्ठाभयाचित्रकयावशूकम्।
पिवेच्च सौवर्च्चलपुष्कराढ्यं
वचाम्भसा शूलहृदामयघ्नम् ॥ १४ ॥

दशमूलीकषायन्तु लवणक्षारसंयुतम् ।
श्वासं कासञ्च हृद्रोगं गुल्मं शूलञ्च नाशयेत् ॥ १५ ॥
पाठां वचां यवक्षारमभयां साम्लवेतसाम् ।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रयम् ॥
शटीं पुष्करमूलञ्च तिन्तिडीकं सदाडिमम् ।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥
सुखोदकेन मद्यैर्वा प्लुतान्येतानि पाययेत् ।
अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥ १६ ॥

हिंग्वित्यादि—पुष्करस्याभावात् कुष्ठस्यैव भागद्वयम् । हिंग्वादिपुष्करान्तानां चूर्णं यवक्वाथे प्रक्षिप्य पिबेत् ॥ १४—१६ ॥

पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः ।
हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥ १७ ॥

पुटेत्यादि—हरिणशृङ्गं कुशेन सवेष्ट्य मृदा प्रलिप्य च गोमयाग्नौ निर्धूमाङ्गारे वा दग्ध्वा शिलापिष्टं घृतेन पेयमित्यर्थः ॥ १७ ॥

क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥
सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ।
विडङ्गगाढं धान्याम्लं पाययेद्धितमुत्तमम् ॥ १८ ॥

क्रिमीत्यादि—अतः परमित्यन्तं सुश्रुतस्य । पिशितप्रधानमोदनं पिशितौदनम्, तच्च दध्ना पललेन च संयुक्तं च त्र्यहं भोजयेत् । पललं तिलचूर्णम् । एतच्च पिशितौदनभोजनं क्रिमीणामुत्क्लेशार्थम् । पश्चादिति क्रिम्युत्क्लेशानन्तरं विरेचयेत् । कैर्विरेचयेदित्याह सुगन्धिभिरित्यादि—योगैरिति विरेचनयोगैः । कीदृशैः सुगन्धिभिः?—चातुर्जातकयोगैरिति शेषः । सौगन्ध्यकरणञ्च वान्तिशङ्कानिरासार्थम् । वमनञ्च क्रिमिहृद्रोगे निषिद्धम्, क्रिमिजर्जरितहृदयत्वात् । तथा वमनेन क्रिमिभिः शिरोगतैरिन्द्रियोपघातभयाच्चेति । सलवणैरित्यत्र सपललैरिति पठित्वा सभृष्टतिलचूर्णैरिति व्याख्यानयन्ति केचित् । पीतविरेकस्यानुपानमाह विडङ्गगाढमित्यादि—विडङ्गगाढं विडङ्गचूर्णोत्कटम्; धान्याम्लमिति काञ्जिकम् । विडङ्गगाढैरिति पाठे योगैरित्यस्य विशेषणम् ॥ १८ ॥

क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम्।
हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम्।
यवान्नं वितरेच्चास्मै सविडङ्गमतः परम्॥ १९॥

विरेचनयोगान्तरमाह क्रिमिजे चेत्यादि—विडङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं वा विरेकार्थं पिबेत्। यद्यप्ययं योगः सुश्रुते नास्ति तथापि तन्त्रान्तरीयः एवायं विरेचनप्रस्तावे संग्रहकारेण लिखितः। विरेचनानन्तरमग्निसन्धुक्षणार्थं परिशिष्टक्रिमिविनाशार्थञ्चान्नसंस्कारमाह यवान्नमित्यादि—यवान्नमिति यवपेयादिकम्। सविडङ्गमिति षडङ्गविधिना विडङ्गकषायसाधितम्। अतः परमिति विरेकानन्तरमित्यर्थः॥ १९॥

## वल्लभघृतम्

मुख्यं शतार्द्धञ्च हरीतकानां
सौवर्च्चलस्यापि पलद्वयञ्च।
पक्वं घृतं वल्लभकेति नाम्ना
हृच्छ्वासशूलोदरमारुतघ्नम्॥ २०॥

वल्लभघृते—मुख्यमिति श्रेष्ठम्। हरीतकीं सौवर्च्चलञ्च कल्कः, घृतस्य प्रस्थः, जलेन च पाकः॥ २०॥

## श्वदंष्ट्राद्यं घृतम्

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्य्यकत्तृणम्।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा॥
पलिकान् साधयेत्तेषां रसे क्षीरे चतुर्गुणे।
कल्कैः स्वगुप्तर्षभकमेदाजीवन्तिजीवकैः॥
शतावर्य्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत्॥
मूत्रकृच्छ्रप्रमेहार्शःश्वासकासक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः॥ २१॥

। श्वदंष्ट्राद्ये—पलाशः किंशुकः, तस्य मूलम्। अन्ये तु पलाशः शटीमाहुः। एतद्दिमिन्नेकादशपले क्वाथ्येऽष्टगुणं जलमेकादशशरावं दत्त्वा क्वाथः कार्य्यः। पादशेषश्च

पाद्रेनशरावत्रयम्, ततश्चतुर्गुणं चीरमेकादशशरावरूपमिति किञ्चिदूनचतुर्गुण पाक। अन्ये तु एकादशपले क्वाथ्य एवाढकजल दत्त्वा पादशेषश्च प्रस्थ इत्याहु। अतश्चतुर्गुण चीरमाढक एव पञ्चगुण पाक इति। व्यवहारोऽपीत्थमेव। श्रावणी मुण्डितिका। बिस मृणालम् ॥ २१ ॥

## बलाद्यं घृतम्

घृतं बलानागबलार्जुनाम्बु-
सिद्धं सयष्टीमधु पादकल्कम्।
हृद्रोगशूलक्षतरक्तपित्तं
कासानिलासृक् शमयत्युदीर्णम् ॥ २२ ॥

घृतमित्यादौ—बलाघृते—नागबला गोरक्षतण्डुला, अम्बु क्वाथ ॥ २२ ॥

## अर्जुनघृतम्

पार्थस्य कल्कस्वरसेन पक्वं
शस्तं घृतं सर्वहृदामयेषु ॥ २३ ॥
इति हृद्रोगचिकित्सा।

अर्जुनघृत स्पष्टम् ॥ २३ ॥
इति हृद्रोगचिकित्साविवृति।

# अथ मूत्रकृच्छ्रचिकित्सा।

वातमूत्रकृच्छ्रे—

अभ्यञ्जनस्नेहनिरूहबस्ति-
स्वेदोपनाहोत्तरबस्तिसेकान्।
स्थिरादिभिर्वातहरैश्च सिद्धान्
दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ १ ॥

सप्तोत्तरे मर्मशते त्रीणि मर्माणि शिरोहृदयबस्तय प्रधानानि। ततो हृद्रोगचिकित्सामभिधाय बस्तिरोगचिकित्सामाह अभ्यञ्जनेत्यादि—स्थिरादिभिरिति शालपर्ण्यादिभि पञ्चमूलै। वातहरैरिति वातहरत्वेनोक्तै ॥ १ ॥

अमृता नागरं धात्रीवाजिगन्धात्रिकण्टकान् ।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ २ ॥

अमृतेत्यादि—योगोऽयं क्वाथेन ॥ २ ॥

पित्तमूत्रकृच्छ्रे—

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविकाराः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥ ३ ॥

ग्रैष्मो विधिरिति नशर्कर मन्थमित्यादि वाग्भटस्य अशीतीयोक्त । द्राक्षाविदारीक्षुरसैर्घृतैश्चेति सहार्थे तृतीया ॥ ३ ॥

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ।
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ ४ ॥

कुश इत्यादौ—तृणोद्भव पञ्चमूलमिति योज्यम् । दर्भ उलुयामूलम् ॥ ४ ॥

शतावरीकाश-कुशश्वदंष्ट्रा
विदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुसिद्धं मधुशर्कराक्तं
पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥ ५ ॥

शतावरीत्यादौ—शालीति शालिधान्यमूलम् ॥ ५ ॥

हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं
कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ६ ॥

हरीतकीत्यादौ—राजवृक्षः शोणालुफलम्, धन्वयवासको दुरालभा ॥ ६ ॥

गुडेनामलकं वृष्यं श्रमघ्नं तर्पणं परम् ।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ७ ॥

गुडेनेति गुडामलकफले तुल्यमाने ॥ ७ ॥

एर्वारुबीजं मधुकञ्च दार्वीं
पैत्ते पिबेत् तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन
समाक्षिकां पैत्तिकमूत्रकृच्छ्रे ॥ ८ ॥

एर्वारु कर्कटी। समाक्षिकामित्यस्य दार्वीमित्यनेनैव सम्बन्ध, न तु पूर्वेण ॥ ८ ॥

कफमूत्रकृच्छ्रे—

क्षारोष्णतीक्ष्णोषणमन्नपानं
स्वेदो यवान्नं वमनं निरूहा।
तक्रं सतिक्तौषधसिद्धतैला-
द्यभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ९ ॥

क्षारेत्यादि—कफकृच्छ्रभेषज क्षारादिभिर्युक्तमन्नपानम्। ऊषण त्रिकटुकामिति चक्र, अतएव औषधमिति पाठोऽशुद्ध एव, वाग्भटेऽपि "कफजे वमनस्वेदौ तीक्ष्णोष्णकटुभोजनम्" इत्युक्तत्वात् ॥ ९ ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय श्लक्ष्णं पिष्ट्वा त्रुटिं पिबेत् ॥ १० ॥

मूत्रेणेत्यादौ—त्रुटि सूक्ष्मैला वाग्भटसवादात्। "पिबेन्मूत्रेण सूक्ष्मैला धात्रीफलरसेन वा। इति।" अन्ये तु एलामात्रमाहुः। कदलीस्वरसेनेति कदलीमूलस्वरसेन च ॥ १० ॥

तक्रेण युक्तं शितिमारकस्य
बीजं पिबेत् कृच्छ्रविनाशहेतोः।
पिबेत् तथा तण्डुलधावनेन
प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ ११ ॥

श्वदंष्ट्रा विश्वतोयं वा कफकृच्छ्रविनाशनम् ॥ १२ ॥

तक्रेणेत्यादौ—शितिमार' शालिञ्च, प्रवालो विद्रुम ॥ ११ ॥ १२ ॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम् ।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ १३ ॥

समकुपितदोषत्रयारब्धमूत्रकृच्छ्रचिकित्सामाह सर्वमित्यादि—वातजादिमूत्रकृच्छ्रनिर्दिष्टं भेषजं सर्वं समत्रिदोषजे मूत्रकृच्छ्रे मिलितं कार्य्यम् । तच्च वायोः स्थानानुपूर्व्या कर्त्तव्यं, न तु त्रिदोषजज्वर इव कफस्थानानुपूर्व्या । समत्रिदोषजारब्धमूत्रकृच्छ्रस्य वातस्थानभवत्वेन वायोरेव प्रथमं चिकित्सा कार्य्या, चिकित्स्यत्वादिति भावः । विषमसन्निपातकृच्छ्रचिकित्सामाह त्रिभ्य इत्यादि—त्रिभ्योऽधिक इति वाक्यं कफे पित्ते वाते इत्येतैः क्रमेण सम्बध्यते । अत्र मूत्रकृच्छ्रानारम्भकमाशयान्तरस्थं कफमप्यपेक्ष्य मूत्रकृच्छ्रारम्भककफभागस्याधिक्यमस्तीति कृत्वा त्रिभ्योऽधिक इत्युक्तम् । एवं पित्तपवनयोरपि पित्तपवनान्तरापेक्षया आधिक्यं व्याख्येयम् । अन्ये त्रिभ्य इति छान्दसत्वात् षष्ठ्यर्थे पञ्चमीत्याहुः । तेन त्रयाणां मध्ये इत्यर्थः ॥ १३ ॥

बृहतीधावनीपाठायष्टीमधुकलिङ्गकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ १४ ॥

बृहतीत्यादौ—धावनी कण्टकारी । कृच्छ्रदोषत्रयापह इति कृच्छ्रजनकदोषत्रयापह इत्यर्थः ॥ १४ ॥

तथाभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम् ।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया ॥ १५ ॥
स्वेदचूर्णक्रियाभ्यङ्गवस्तयः स्युः पुरीषजे ।
क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत् ।
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं विनाशयेत् ॥ १६ ॥

वातहरी क्रियेति आनाहोक्ता क्रिया । स्वेदेत्यादौ—चूर्णक्रियेति फलवर्त्ति, किंवा विरेचनद्रव्यचूर्णं दत्त्वा गुदे नलिकया फूत्करणम् ॥ १५ । १६ ॥

क्रिया हिता त्वश्मरिशर्करायां
या मूत्रकृच्छ्रे कफमारुतोत्थे ॥ १७ ॥
लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ १८ ॥

अश्मरीशर्कराजमूत्रकृच्छ्रचिकित्सामाह क्रिया हितेत्यादि—अश्मरीशर्करा-भ्यामिति चरके पाठ ॥ १७ । १८ ॥

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत् ॥ १९ ॥
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते
तत्कारयेच्छोणितमूत्रकृच्छ्रे ॥ २० ॥

एलेत्यादौ—एलाहिंगुनी प्रक्षिप्य ससर्पि क्षीर पिबेदित्यर्थ ॥१९॥२०॥

त्रिकण्टकारग्वधदर्भकाश-
दुरालभापर्वतभेदपथ्याः ।
निघ्नन्ति पीता मधुनाश्मरीञ्च
सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥२१॥

त्रिकण्टकेत्यादौ—पर्वतभेद पाषाणभेद । एषा कषाये मधु प्रक्षेप्यम् ॥ २१ ॥

कषायोऽतिबलामूल-साधितोऽशेषकृच्छ्रजित् ॥२२॥

कषाय इत्यादौ—अतिबला श्वेतबला ॥ २२ ॥

एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा ।
यद्वा गुडेन सहितान्यवलिह्य सम्यक्
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥२३॥

एलादिचूर्णानि तण्डुलजलेन पातव्यानि, किंवा गुडेन लेह्यानीति ॥२३॥

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः ।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥२४॥

अय इत्यादि—मारितपुटितवज्रादिलौहचूर्णं रत्ति ५, मधुमाषेण लौहपात्रे मर्दयित्वा लेह्य रक्तिकादिक्रमेण माषकद्वयपर्य्यन्तम् । त्रिभिर्लेहैरिति दिनत्रयेणे-त्यर्थ । निदिग्धिकारस इति कण्टकारीस्वरस. । उक्त हि वाग्भटे—" स्वरस

कण्टकार्य्या वा पाययेन्माक्षिकान्वितम् " इति ॥ २४ ॥

## शतावरीघृतक्षीरे

शतावरीकाशकुशश्वदंष्ट्रा-
विदारिकेक्ष्वामलकेषु सिद्धम् ।
सर्पिः पयो वा सितया विमिश्रं
कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥ २५ ॥

शतावरीत्यादौ—घृतसाधनपक्षे शतावर्य्यादीनां कल्कः जलञ्च चतुर्गुणम्, शर्करा तु प्रक्षेप्या ॥ २५ ॥

## त्रिकण्टकाद्यं घृतम्

त्रिकण्टकैरण्डकुशाद्यभीरु-
कर्कारुकेक्षुस्वरसेन सिद्धम् ।
सर्पिर्गुडार्द्धांशयुतं प्रपेयं
कृच्छ्राश्मरीमूत्रविघातहेतोः ॥ २६ ॥

त्रिकण्टकेत्यादौ—कुशादि तृणपञ्चमूलम्, अभीरु शतावरी, कर्कारुक कुष्माण्डभेद कूष्माण्डाकृति उत्कलदेशे प्रसिद्ध । त्रिकण्टकादीना सर्वेषा स्वरस तदभावे कषाय । गुडार्द्धांशयुतमिति घृतापेक्षया अर्द्धांशो गुड इति षोडशपल इत्यर्थ । गुडश्च प्रक्षेप्य अन्ये तु गुड दत्त्वैव पाक इत्याहु ॥ २६ ॥

## सुकमारकुमारकघृतम्

पुनर्नवामूलतुला दशमूलं शतावरी ।
वला तुरगगन्धा च तृणमूलं त्रिकण्टकम् ॥
विदारिगन्धा नागाह्वा गुडूच्यतिवला तथा ।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ।
तेन पादावशेषेण घृतस्यार्द्धाढकं पचेत् ॥
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पलीः ।
द्विपलिका पृथग्दद्याद् यमान्याः कुडवं तथा ॥
त्रिंशद् गुडपलान्यत्र तैलस्यैरण्डजस्य च ।

प्रस्थं दत्त्वा समालोड्य सम्यङ्मृद्वग्निना पचेत् ॥
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ।
राज्ञां राजसमानाञ्च वहुस्त्रीपतयश्च ये ॥
मूत्रकृच्छ्रे कटीस्तम्भे तथा गाढपुरीषिणाम् ।
मेढ्रवङ्क्षणशूले च योनिशूले प्रशस्यते ॥
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये ।
वल्यं रसायनं शीतं सुकुमारकुमारकम् ।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथाऽपरः ॥२७॥

इति मूत्रकृच्छ्र-चिकित्सा ।

---

पुनर्नवेत्यादौ —दशमूलस्य मिलित्वा दश पलानि तृणमूल तृणपञ्चमूलम् , एतदपि मिलित्वा दशपलमानम् । विदारिगन्धा शालपर्णी । नागाह्वा नागवला, गोरक्ष-तण्डुला इत्यर्थ । अतिवला श्वेतवला । द्रोण इति द्रव्यतुलाद्वये प्रत्येक द्रोण इत्यर्थ । द्विपलिका इति पलद्वयमाना । गुडमेरण्डतैलञ्च दत्त्वैव पाक । देयोऽन्येषु तथापर इति अन्येषु दशमूलादिष्वपरद्रोण इत्यर्थ । सुकुमारेति सुकुमाराः सुखिन , कुमारा शिशव , एतदुभयोर्हितत्वात् सुकुमारकुमारकसञ्ज्ञा ॥ २७ ॥

इति मूत्रकृच्छ्रचिकित्साविवृति ॥

---

# अथ मूत्राघात-चिकित्सा ।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥
कल्कमेर्वारुवीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्रघाताद्विमुच्यते ॥ १ ॥

मूत्रगतविकारसाधर्म्यादनन्तर मूत्राघातचिकित्सारम्भ. ।—मूत्रस्याघातो विवन्ध मूत्राघातः । मूत्राघातमूत्रकृच्छ्रयोश्चाय भेद ,—मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विवन्ध ,

मूत्राघाते तु विबन्धो महान् कृच्छ्रत्वमल्पमिति। कल्कमित्यादि—सुश्रुतस्य। एर्वारुशीर्ष्णिमकर्कटीति डल्वण। धान्याम्ल काञ्जिकम्॥ १॥

पाटल्या यावशूकाच्च पारिभद्रात् तिलादपि।
क्षारोदकेन मदिरां त्वगेलोपणसंयुताम्।
पिबेद् गुडोपदंशान् वा लिह्यादेतान् पृथक् पृथक्॥२॥

पाटल्या इत्यादि—सुश्रुतस्य। तिलादिति तिलनालात्। इहापि वक्ष्यमाण पृथक् पृथगिति सम्बन्धनीयम्, तेन पृथक् पाटल्यादीना क्षारस्रावोदकेन समा मदिरा त्वगेलोपण प्रक्षिप्य पिबेत्। ऊपण मरिचम्। अन्ये तु पाटलीयावशूकयोर्मिलित्वा क्षार। केवलयवक्षारस्यादृष्टत्वात्, अतएव वाग्भटे आयुर्वेदसारे च "पाटलीयावशूका-भ्यामिति मिलित्वा पठ्यते" इत्याहु। अरुणदत्तोऽप्येव वाग्भटटीकाया व्याख्यात-वान्। कार्त्तिकस्तु मदिरामित्यस्य स्थाने मतिमानिति पाठ स्वीकृत्य चूर्णकमिति चा-ध्याहृत्य एव व्याचष्टे,—पाटल्यादीना चूर्णं क्षारोदकेन मुष्ककक्षारवारिणा पिबेदि-ति। यदाह विश्वामित्र "पाटले पारिभद्राद् वा तिलाद् वापि यवाग्रजात्। कर्णै-लात्वग् युत चूर्णं मुष्ककक्षारवारिणा। पिबेद् गुडेन मिश्र वा लिह्यान् मूत्रविघात-जित्।" इति एतत् सवादात्। अत्र ऊपण पिप्पली। गुडोपदशान् वा लिह्यादेता-निति एतान् पृथक् पृथक् पाटल्यादिक्षारान् गुडोपदंशान् गुडमिश्रान् वा लिह्यात्। डल्वणस्तु मतिमानित्यत्र मदिरामिति पाठ तथा गुडेन मिश्रानित्यत्र गुडोपदशानिति पाठश्चानार्षमाह॥ २॥

त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत्।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम्॥ ३॥

त्रिफलेत्यादि—सुश्रुतस्य। अत्रापि पान क्षारोदकेनेत्यनुवर्त्तयति कार्त्तिक। अन्ये तु "अभयामलकाक्षाणा कल्क बदरसम्मितम्। अम्भसा लवणोपेत पिबेन्मूत्र-रुजापहम्" इति वचन मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम्। अतस्तद्दर्शनादत्राप्यम्भसैव पानम्, तथा मिलित्वाष्टमाषक मानञ्चेत्याहु। त्रिफलाकल्क, माषा ६, सैन्धवमाषा २। द्वितीययोगे तान्तवस्रुतमिति वस्त्रगालितम्। मधुयोगादप्यय योग पेय। यदाह वाग्भटः—"स्वरस कण्टकार्य्या वा पाययेन्माक्षिकान्वितम्" इति॥ ३॥

जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्॥ ४॥

जल इत्यादि—सुश्रुतस्य। अत्र कुकुमकल्क शीतकषायविधिना जले पर्य्युषित प्रातर्वस्त्रस्रुत मद्यौद्र पिवेत्। "पिवन् कुकुमकर्ष वा मधूदकममाप्लुतम्। रात्रिपर्य्युषित प्रातस्तथा सुखमवाप्नुयात्" इति पाठान्तर सुश्रुतटीकाकृत. पठन्ति, व्याख्यानयन्ति च,—कुकुमकर्ष मधूदकाभ्यामाप्लाव्य रात्रौ स्थाप्य तत. पातव्यम्" इति। सतैलमित्यादि द्वितीयो योग सुश्रुतस्यैव। वाशब्द पूर्वयोगापेक्षया। क्षारवद्वा परिस्रुतमिति, परिस्रुत पाटलाभस्म। किं विशिष्ट क्षारवत् यवक्षारयुक्त पिवेदिति केचिद् व्याचक्षते। अन्ये तु क्षारवत् पानीयक्षारमिव सप्तकृत्व परिस्रुत पाटलाभस्म तेन सहित पिवेदित्याहु। युक्तश्चैतत्, यदाह वाग्भट —"सतैल पाटलाक्षार सप्तकृत्वोऽथवा स्रुतम्" इति। सुश्रुतेऽपि मूत्रकृच्छ्रप्रतिषेधे—"पलाशक्षारमाहृत्य सप्तकृत्व परिस्रुतम्" पिवेन्मूत्रविकारघ्न ससृष्ट तैलमात्रया।" इति पठ्यते तैलस्य मात्रया स्तोकतैलेनेत्यर्थ इति। यथामात्रा खादेद् बुभुक्षित इति॥ ४॥

**सुरां सौवर्च्चलवतीं मूत्राघाती पिवेन्नरः।**
**दाडिमाम्लयुतं मुख्यमेलावीजं सनागरम्।**
**पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते॥ ५॥**

सुरामित्यादि—सुश्रुतस्य। पिवेन्नर इत्यन्त एक एवाय योग। वाग्भटेऽपि "सौवर्चलाढ्या मदिरां पिवेन्मूत्ररुजापहाम्" इत्येवोक्तम्। दाडिमेत्यादि नागरान्तो द्वितीयो योगः। दाडिमाम्बुयुतमिति दाडिमरसयुतम्। रसाभावे तु क्वाथः। मुख्यमित्येलाबीजविशेषणम्। पीत्वा सुरा सलवणामिति तृतीयो योग। सलवणामिति ससैन्धवाम्। वस्तुतस्तु दाडिमाम्लयुता मुख्यामिलाजीरकनागरैरित्यनेन सुरामिति सम्बध्यते। "पीत्वा सुरा सलवणाम्" इत्येव पाठ सुश्रुते पठ्यते टीकाकारैश्च व्याख्यात। तस्मात् दाडिमाम्लादि सलवणामित्यन्त एक एवाय योगो युक्त, दाडिमाम्लामिति दाडिमयोगादम्लाम्। मुख्या सुरामिति पैष्टिकीम्॥ ५॥

**पिवेच्छिलाजतु क्वाथे गणे वीरतरादिके।**
**रसं दुरालभाया वा कषायं वासकस्य वा॥ ६॥**

पिवेदित्यादा—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिवेदित्यर्थ। अत्र व्याधौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभाक्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति॥ ६॥

**त्रिकण्टकैरण्डशतावरीभिः**
**सिद्धं पयो वा तृणपञ्चमूलैः।**

गुडप्रगाढं सघृतं पयो वा
रोगेषु कृच्छ्रादिषु शस्यते तत् ॥ ७ ॥

त्रिकण्टकेत्यादि—योगत्रयम् । गुडप्रगाढमिति पूर्वेण योगद्वयेन सम्बध्यते । त्रिकण्टकादिमिद्धं वा तृणपञ्चमूलमिद्धं वा पयो गुडप्रगाढं हितम् । सघृतं पय इति तृतीयो योगः ॥ ७ ॥

नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां सासिताम् ।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥ ८ ॥
गोधावत्या मूलं क्वथितं घृततैलगोरसैर्मिश्रम् ।
पीतं निरुद्धमचिराद्भिनत्ति मूत्रस्य सङ्घातम् ॥ ९ ॥

नलेत्यादौ—शिफा मूलम्, तच्च नलादिभिः प्रत्येकं सम्बध्यते । कच बृहस्पतेः पुत्रः । गोधावती गोहालिया इति ख्याता । गोरसोऽत्र तक्रम् ॥ ८ । ९ ॥

जलेन खदिरीबीजं मूत्राघाताश्मरीहरम् ।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत् ॥ १० ॥

जलेनेत्यादौ—खदिरीबीजमशोकबीजमित्याहुः ॥ १० ॥

मूत्रे विबन्धे कर्पूर-चूर्णं लिङ्गे प्रवेशयेत् ॥ ११ ॥
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना ।
पिबेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते ॥
शीतोऽवगाह आबस्तेरुष्णवातनिवारणः ।
कूष्माण्डकरसश्चापि पीतः सक्षारशर्करः ॥ १२ ॥

मूत्र इत्यादौ—लिङ्ग इति लिङ्गरन्ध्रे श्लक्ष्णदूर्वाकाण्डादिना च कर्पूररजःप्रक्षेपः । एवं स्त्रीयोनावपि, लिङ्गवचनस्य सामान्यवचनत्वात् । शृतेत्यादौ—श्रेष्ठं चन्दनमिति योज्यम्, तेन श्वेतचन्दनमित्यर्थः । शृतशीतपयसा अन्नभोजनशीलः । आबस्तेरिति बस्तिभागपर्य्यन्तम् । कूष्माण्डरसः कूष्माण्डमाञ्जिकास्वरसः ॥ ११ ॥ १२ ॥

स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते ।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः ॥ १३ ॥

मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तस्य रक्तस्यापि विधानमुपदिशन्नाह स्त्रीणामित्यादि—सुश्रुतस्य । सुश्रुतेऽमुं ग्रन्थं कार्त्तिककुण्डो न पठति, शुक्रक्षयलिङ्गेनैवोक्तत्वात् । जेज्जटस्तु प्रकरणान्तरत्वात् शिष्यहितैषितया पठति ॥ १३ ॥

स्वगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः।
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च॥
सर्वं सम्यग्विमथ्याक्षमात्रं लीढ्वा पयः पिबेत्।
हन्ति शुक्राशयोत्थांश्च दोषान् बन्ध्यासुतप्रदम् ॥१४॥

स्वगुप्तेत्यादौ—स्वगुप्ताफल शूकशिम्बीवीजम्। मृद्वीका द्राक्षा। कृष्णा पिप्पली, न तु कृष्णेति इक्षुरकविशेषणम् सुश्रुते पिप्पलीपाठात्। इक्षुरक कोकिलाक्ष तस्य वीजम्। सिता शर्करा। रजश्चूर्णम्। अर्द्धभागानि क्षीरक्षौद्रघृतानि चेति समुदितचूर्णात् क्षीरादीनि प्रत्येकमर्द्धभागानि। सुश्रुते पुनरस्य योगोऽन्यथा पठ्यते,— क्षौद्रार्द्धभाग कर्त्तव्यो भाग स्यात् क्षीरसर्पिषो। शर्करायाश्च चूर्णानि द्राक्षा- चूर्णञ्च तत्समम्। स्वयगुप्ताफलञ्चैव तथैवेक्षुरकस्य च। पिप्पलीना तथा चूर्णमर्द्ध- भाग प्रदापयेत्। तदैकध्य समानीय खजेनाभिप्रमथ्य च। तस्य पाणितल चूर्ण लिह्यात् क्षीर तत पिवेत्।" इति ॥ १४ ॥

## चित्रकाद्यं घृतम्

चित्रकं शारिवा चैव वला कालानुशारिवा।
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत्॥
तथैव मधुकं दद्याद् दद्यादामलकानि च।
घृताढकं पचेदेभिः कल्कैरक्षसमन्वितैः॥
क्षीरद्रोणे जलद्रोणे तत् सिद्धमवतारयेत्।
शीतं परिस्रुतञ्चैव शर्कराप्रस्थसंयुतम्॥
तुगाक्षीर्य्याश्च तत् सर्वं मतिमान् प्रतिमिश्रयेत्।
ततो मितं पिवेत् काले यथादोषं यथावलम्॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत्।
रक्तरेता ग्रन्थिरेताः पिवेदिच्छन्नरोगिताम्॥
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम्।
प्रजाहितञ्च धन्यञ्च सर्वरोगापहं शिवम्॥
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात्।

असृग्दोषान् जयेच्चापि योनिदोषांश्च संहतान् ।
मूत्रदोषेषु सर्वेषु कुर्य्यादेतच्चिकित्सितम् ॥१५॥
इति मूत्राघातचिकित्सा ।

चित्रकमित्यादि—सुश्रुतस्य । कालानुसारिवा तगरपादिका । विशाला गोरक्षकर्कटी । विशालेति पाठे काष्ठपाटला व्यवहारस्तु विशालयैव । चित्रफला गोडुम्बा कर्कटीभेदः । तुगाक्षीर्य्या इत्यत्र प्रथममयुतमित्येतत् समासप्रविष्टमप्याकृष्य सम्बन्धनीयम् । काले जीर्णान्नलक्षणे । यथादोषं यथाबलमिति मिलितदेहाग्निबलानुरूपम् सुश्रुते एतद् घृतात् पूर्वमतिबलं नाम घृतमुक्तम् । तेन सर्पिरेतन्महाबलमित्यपि एतस्यास्य नामेति टीकाकृत ॥ १५ ॥

इति मूत्राघातचिकित्साविवृतिः ।

# अथाश्मरी-चिकित्सा ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ।
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ॥ १ ॥

मूत्रविरोधित्वसामान्यादश्मरीचिकित्सितमुच्यते वरुणस्येत्यादि —श्रेष्ठामिति कीटाद्यनुपद्रुताम् । यवक्षारगुडौ प्रक्षेप्यौ ॥ १ ॥

## वीरतरादिगणः

वीरतरः सहचरौ दर्भो वृक्षादनी नलः ।
गुन्द्राकाशकुशाश्मभेदमोरटटुण्टुकाः ॥
कुरुण्टिका च वशिरो वसुकः साग्निमन्थकः ।
इन्दीवरी श्वदंष्ट्रा च तथा कपोतवक्त्रकः ॥
वीरतरादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः ॥ २ ॥

वीरतर इत्यादौ—वीरतर शरः, सहचरौ झिण्टीद्वय पीतनीलपुष्पभेदात्

दर्भ उलयातृण; वृक्षादनी वन्दाक ; गुन्द्रा गुलुञ्च , मोरटामिक्षुमूल; टुण्टुक श्योणाक , कुरुण्टिका श्रीहरितनी, ब्रह्मदत्तस्तु कृष्णसूक्ष्मफला मस्तकमञ्जरी दक्षिण देशे मितचराख्येत्याह । इन्दीवर चुँग्राकः । वशिर सूर्य्यावर्त्तभेद , वसुको वसुहट्ट , कपोतवक्त्रक· कडई इति ख्यात , स च शिरीषसदृशः स्वल्पपत्र. स्वल्प-विटप । गणत्वादनेन सर्वकल्पना ॥ २ ॥

शुण्ठ्यग्निमन्थपाषाणशिग्रुवरुणगोक्षुरैः ।
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः ॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ।
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥ ३ ॥

शुण्ठीत्यादौ—पाषाणः पाषाणभेदी ॥ ३ ॥

## पाषाणभेदाद्यं घृतम्

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा ।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका ॥
कपोतवक्त्रार्त्तगलकाञ्चनोशीरगुल्मकाः ॥
वृक्षादनी भल्लुकश्च वरुणः शाकजं फलम् ॥
यवा· कुलत्थाः कोलानि कतकस्य फलानि च ।
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ।
क्षारान् यवागूः पेयानि कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने ॥ ४ ॥

पाषाणभेद इत्यादि—सुश्रुतस्य । अश्मन्तकोऽम्ललोटक कोविदारसदृशपत्रः आर्त्तगल आगडा इति ख्यात । होगल इत्यन्ये । काञ्चनो जलजो विटपश्चीरित-पत्र । गुल्मको गुलुञ्च । भल्लूक· श्योनाकशाक कर्कशमसृणपृष्ठोदरपत्रः प्रायो मरुदेशे भवति तस्य फलम् । कतक तोयप्रसादनफल प्रायो मगधे भवति । ऊष-कादिप्रतिवापमिति ऊषकादिरग्रे वक्ष्यमाणस्तत्कल्क । एषामिति पाषाणभेदादीनाम् घृतसाधनौषधवर्गेण क्षारादयोऽपि साध्या इत्याह क्षारानिति पानीयक्षारान् । यदि

चूर्णरूप क्षार पीयते, तदा वस्तिशोधनद्रवेण मस्त्वादिना । क्षारोदकपानपक्षे तु क्षारस्य कर्षद्वय कर्षत्रय वा षड्गुणेन जलेन बहुश परिस्राव्य शृत पेयम् । पेयानीति यूषरसादीनि, पेयाश्चेति पाठेऽपि यूषादीनित्यर्थ । यूषाश्चेत्यपि पाठान्त रम् । पेयाश्चेति तु पाठ सुश्रुतपुस्तकेषु न दृश्यते, तट्टीकाकृद्भिश्च न व्याख्यात । भोजनानीति विलेपीभक्तसूपलेह्यानि, यवाग्वश्च पृथगुपादान विशेषेण मूत्रप्रवर्त्तक-तया प्राधान्यख्यापनार्थम् । वर्गेऽस्मिन् वातनाशन इति पाषाणभेदादिकनकान्त-काथ्यस्य द्रव्यवर्गे । ऊषकादिकन्तु प्रतीवापद्रव्य कफहरमिति शक्तिविशेषसाधनार्थं संयोज्यमान क्षारादिष्वेव प्रक्षेपविधया देयमित्याहु । अयमर्थो वृन्देनाप्युक्त यथा,—"कुर्य्यात् क्षारादिक क्वाथ्यैस्तस्मिन् क्षेपमवापकैः" इति । क्षेपमिति प्रक्षेप्यम्, आवापकैरिति आवापरूपै कल्कद्रव्यैरित्यर्थ , छन्दोभङ्गानुरोधाद् ह्रस्वत्वम्। एव वर्गेऽस्मिन् पित्तनाशन इत्यादावपि व्याख्येयम् ॥ ४ ॥

## ऊषकादिः

ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलु । 
शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः ॥ 
ऊषकादिः कफं हन्ति गणो मेदोविशोधन । 
अश्मरीशर्करामूत्रशूलघ्नः कफगुल्मनुत् ॥ ५ ॥

ऊषकादिवर्गमाह ऊषकमित्यादि—सुश्रुतस्य । ऊषक क्षारमृत्तिका । तद्भव लवणमित्यन्ये । काशीशद्वयमिति धातुकाशीश पुष्पकाशीशञ्च, तत्राद्य भस्म सदृश किञ्चिदम्ल, लवणरसञ्च, द्वितीयन्त्वीषत्पीत कषायरसम्, तुत्थक तूतिया इति प्रसिद्धम् ॥ ५ ॥

## कुशाद्यं घृतम्

कुशः काशः शरो गुल्म उत्कटो मोरटोऽश्मभित् । 
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥ 
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरण्टकः ॥ 
पुनर्नवे शिरीषश्च कथितास्तेषु साधितम् ॥ 
घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च । 
त्रपुषैर्वारुकादीनां बीजैश्चावापितं शृतम् ॥ 
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव च ।

क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ ६ ॥

कुश इत्यादौ—सुश्रुतस्य । मोरट इक्षुमूल; गुन्म गुलुञ्च, दर्भ उलुया, वाराही वाराहीकन्द, नदमावे चर्मकाराल्लुक, भल्लूक श्योनाक, पत्तूरः शालिञ्च; पुनर्नवे पुनर्नवाद्वयम्; एषा सर्वेषा क्वाथ । शिलाह्वादीना कल्क । शिलाह्वमधुक-बीजैरित्यत्र बीजपद समासप्रविष्टमपि इन्दीवरस्येत्यनेन सह सम्बन्धनीय, न तु बीजो बीजक पीतशाल, वाग्भटमवादात् । यथा,—पिष्टेन त्रपुषादीना बीजे-नेन्दीवरस्य च । मधुकेन शिलाजेन तत् पित्ताश्मरिनाशनम्" इति । इन्दीवरञ्च नुञाक । एतेन "मधुक कृतह्रस्वत्वाद् बीजो बीजक उच्यते, इत्यपि वृन्दवचन-मवोधविन्यस्तमेव । अस्यार्थ—ह्रस्वमधुकशब्देन यष्टिमधुकमेवोच्यते, न तु तस्य बीजेनाव्यवहारात् बीजो बीजक इति । आवापित कल्किनम् ॥ ६ ॥

## वरुणाद्यं घृतम्

गणे वरुणकादौ च गुग्गुल्वेलाहरेणुभिः ।
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च ।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु ॥
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् कफनाशने ॥ ७ ॥

गण इत्यादि—सुश्रुतस्य । अत्र वरुणादिगणेन क्वाथ, शेषेण च कल्क, ऊषकादिगणेन कल्करूपेण सिद्धमित्यर्थ । अजासर्पिरित्यत्र वाग्भटे तु घृतमित्येवोक्तम् ॥ ७

## वरुणादिगणः

वरुणोऽर्त्तगलः शिग्रुतर्कारीमधुशिग्रुकाः ।
मेषशृङ्गी करञ्जौ च बिम्ब्यग्निमन्थमोरटाः ॥
शैरीयौ बशिरो दर्भौ वरी वसुकचित्रकौ ।
बिल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च ॥
वरुणादिगणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माद्यन्तरविद्रधीन् ॥ ८ ॥

वरुणत्वक्कषायस्तु पीतस्तु गुडसंयुतः ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनः ॥ ६ ॥

तथा " भिनत्ति कफजामाशु साधित घृतमश्मरीम् " इति वरुणादिगणे अर्त्तगल खग्गड, छोगल इत्यन्ये, अर्जुन इति तु भानुमती । तर्कारी जयन्ती, तन्मूल, मधुशिग्रु रक्तशोभाञ्जन, करञ्जौ करञ्जलाटाकरञ्जौ, बिम्बी तेलाकुचा, मोरट इक्षुमूलम्, अङ्कोलपुष्पमिति भानुमती, हस्तिकर्णपलाश इत्यन्ये । शैरीयौ पीतनीलपुष्पझिण्टीद्वयं, दर्भ कुश उलुखा, वरी शतावरी, वसुको वसुहट्ट इति ख्यात, अजशृङ्गी आवर्त्तलिका ॥ ८ ॥ ६ ॥

यवक्षारं गुडोपेतं पिवेत् पुष्पफलोद्भवम् ।
रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥ १० ॥

पुष्पफलोद्भव रसमिति पुराणकूष्माण्डरसम् ॥ १० ॥

पिवेद्वरुणमूलत्वक् क्वाथं तत् कल्कसंयुतम् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ॥ ११ ॥
नागरवरुणगोक्षुरपाषाणभेदकपोतवक्त्रजः क्वाथः ।
गुडयावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ १२ ॥
वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्कराश्च भिनत्त्यपि ॥ १३ ॥
श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ।
एतत् क्वाथवरं प्रातः पिवेदश्मरिभेदनम् ॥ १४ ॥

पिवेदित्यादि—पिवेदश्मरीभेदनमित्यन्त स्पष्टम् ॥ ११—१४ ॥

मूलं श्वदंष्ट्रेक्षुरकोरुवूकात्
क्षीरेण पिष्टं बृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयं
दिनानि सप्ताश्मरिभेदनार्थम् ॥ १५ ॥

मूलमित्यादि बृहतीद्वयान्त एको योग । इक्षुरक कोकिलाक्ष । सर्व मिलित्वा माषकचतुष्टय दुग्धेन पिष्ट्वा अनम्लदध्ना पेयम् ॥ १५ ॥

पक्वेक्ष्वाकुरसः क्षारः सितायुक्तोऽश्मरीहरः ॥

पाषाणरोगपीडां सौवर्च्चलयुक्ता सुरा जयति ।
तद्वन्मधुदुग्धयुता त्रिरात्रं तिलनालभूतिश्च ॥ १६ ॥

पक्केत्यादौ—इक्ष्वाकुस्तिक्तालाबूस्तस्या मज्जिकास्वरस । पाषाणरोगोऽश्मरी । तिलनालभूतिस्तिलनालक्षार ॥ १६ ॥

## एलादिः

एलोपकुल्यामधुकाश्मभेद-
कौन्तीश्वदंष्ट्रावृषकोरुवूकैः ।
क्वाथं पिवेदश्मजतुप्रगाढं
सशर्करे चाश्मरिमूत्रकृच्छ्रे ॥ १७ ॥

एलेत्यादौ—उपकुल्या पिप्पली । अत्र शोधितशिलाजतुनो मापकत्रय चतुष्टय वा प्रक्षेप्यमित्याहु. ॥ १७ ॥

त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम् ।
अविक्षीरेण सप्ताहं पिवेदश्मरिनाशनम् ॥ १८ ॥
शुक्राश्मर्य्यान्तु सामान्यो विधिरश्मरिनाशनः ॥ १६ ॥

शुक्राश्मर्य्यान्तु सामान्यो विधिरिति अश्मरीमात्रसाधारणविधि. ॥१८॥१६॥

## पाषाणभेदाद्यं चूर्णं घृतञ्च

पाषाणभेदो वृषक' श्वदंष्ट्रा
पाठाभयाव्योषशटीनिकुम्भाः ।
हिंस्राखराश्वा सितमारकाण-
मेर्वारुकाच्च त्रपुषाच्च वीजम् ॥
उपकुञ्चिका हिङ्गु सवेतसाम्लं
स्याद्'द्वे वृहत्यौ हवुषा वचा च ।
चूर्णं पिवेदश्मरिभेदि पक्कं
सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥ २० ॥

पाषाणभेद इत्यादौ—निकुम्भो दन्ती, खराश्वा अजमोदा, सितमारक शालिञ्चः, उपकुञ्चिका कृष्णजीरकम् । चूर्णं पिवेदिति विशेषानभिधानाज्जलेनैव । तैः पाषाणभेदादिभिरेव कल्करूपै. पक्क सर्पिश्च पेयमित्यन्वय ॥ २० ॥

## कुलत्थाद्यं घृतम्

कुलत्थसिन्धूत्थविडङ्गसारं
सशर्करं शीतलियावशूकम् ।
बीजानि कूष्माण्डकगोक्षुराभ्यां
घृतं पचेन्ना वरुणस्य तोये ॥
दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं
मूत्राभिघातञ्च समूत्रबन्धम् ।
एतानि सर्वाणि निहन्ति शीघ्रं
प्ररूढवृक्षानिव वज्रपातः ॥ २१ ॥

कुलत्थघृते शीतली शियलीक्षोपड ; तथाच रत्नकोष, "शीयली शातकुम्भी च शुक्लपुष्पा जलोद्भवा। कालानुशारिवा तस्याः परोक्षे नतवद्गुणैः ।" इति। अन्ये तु शीतलीयावशूक शियतियवक्षार , स तु स्फटिकसैन्धवसङ्काश इत्याहु , व्यवहारस्तु पूर्वथैव। शर्करापि कल्करूपा॥ २१ ॥

## शरादिपञ्चमूलघृतम्

शरादिपञ्चमूल्या वा कषायेण पचेद् घृतम् ।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम् ॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥ २२ ॥

शरादिपञ्चमूलमित्यत्र शरादीति विशेषणात् चरकोक्त तृणपञ्चमूल ग्राह्य, यथा,—"शरेक्षुदर्भकाशाना शालीना मूलमेव च" इति । अत्र शर्करा प्रक्षेप्या । वा शब्दः पूर्वयोगापेक्षया ॥ २२ ॥

## वरुणघृतम्

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥
वरुणं कदली बिल्वं तृणजं पञ्चमूलकम् ।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम् ।
शतपर्वा तिलक्षारं पलाशक्षारमेव च ।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥

अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ।
जीर्णे तस्मिन् पिबेत् पूर्वं गुडं जीर्णन्तु मस्तुना ।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ २३ ॥

वरुणादिघृते—कदल्याः फलमाम मूल वा, अश्मज शिलाजतु, त्रपुष माया-म्बुफलम्; शतपर्वा वशास्तस्य नली मूल वा । तस्मिन्निति घृते; पूर्वमिति भोजनात् पूर्वम् ॥ २३ ॥

## वीरतराद्यं तैलम्

अश्माधिकारे यत् तैलं सैन्धवाद्यं प्रकीर्त्तितम् ।
तत् तैलं द्विगुणं क्षीरं पचेत् वीरतरादिना ॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः ।
एतत् तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथितेऽपि वा ।
भग्ने श्रमाभिपन्ने च सर्वथैव प्रशस्यते ॥ २४ ॥

भग्नाधिकार इत्यादि—तत् तैलमिति भग्नाधिकारोक्तविधिना सिद्ध तैल पुनरपि द्विगुण क्षीर दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा, पूर्वकल्केनेति सैन्धवाद्यकल्केन पचेत् । अन्ये तु केवल तैलमेव द्विगुणक्षीरादिना पचेदिति वदन्ति, तत्तु न व्यवहारासिद्धम् । यद्यपि सैन्धवाद्यतैले तिलतैलमेरण्डतैलञ्चोक्त तथाप्यत्र उत्तर-बस्त्यादौ तिलतैलस्यैव सूक्ष्मस्रोतोऽनुसारित्वेन यौगिकत्वाद् ग्रहणमित्याहु । पिच्चित इत्यागन्तुकव्रणविशेषे, मथित इति चूर्णिताख्यभग्ने ॥ २४ ॥

## वरुणाद्यं तैलम्

त्वक्पत्रपुष्पमूलस्य वरुणात् सत्रिकण्टकात् ।
कषायेण पचेत् तैलं बस्तिनास्थापनेन च ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ २५ ॥
शल्यवित् तामशाम्यन्तीं प्रत्याख्याय समुद्धरेत् ॥ २६ ॥

त्वक्पत्रेत्यादि—क्वाथार्थं वरुणस्य यथालाभ त्वक्पत्रमूलपुष्प पल ३२, गोक्षुर पल ३२, जल श ६४, शेष श १६ । अकल्कमिद तैलम् ॥ २५ ॥ २६ ॥

पायुत्तिप्ताङ्गुलिभ्यान्तु गुदमेढ्रान्तरीकृताम्।
सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्य तु।
व्रणं कृत्वाश्मरीमात्रं कर्षेत् तां शस्त्रकर्मवित्॥
भिन्नेऽपि वस्तौ त्वज्ञानान्मृत्युः स्यादश्मरीं विना।
निःशेषामश्मरीं कुर्य्यात् वस्तौ रक्तञ्च निर्हरेत्॥
हृताश्मरीकमुष्णाम्बु गाहयेद्भोजयेच्च तम्।
गुडं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तं व्रणं ततः॥
दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः।
आदशाहं ततो दद्यात् पयसा मृदुभोजनम्॥
स्वेदयेद् यवमध्वाढ्य कषायैः क्षालयेद् व्रणम्॥
प्रपौण्डरीकमञ्जिष्ठायष्टीलोध्रैश्च लेपयेत्॥
एतैश्च सनिशैः सिद्धं घृतमभ्यञ्जने हितम्।
अप्रशान्ते तु सप्ताहाद् व्रणे दाहोऽपि चेष्यते।
दैवान्नाडे तु या लग्ना तां विपाट्यापकर्षयेत्॥ २७॥

इत्यश्मरीचिकित्सा।

---

सव्यपार्श्वे इति वामपार्श्वे। निःशेषामश्मरीं कुर्य्यादिति सशेषायान्तु पुनरप्यश्मवृद्धिसम्भवात्। वस्तौ रक्तञ्च निर्हरेदिति वस्तिगतरक्तमित्यर्थः। तथा सति वस्तिरसृजा न प्रपूर्य्येत इति भावः। हृताश्मरीमित्यादौ गुडं भोजयेदित्यन्वयः। मूत्रशोधिभिरिति तृणपञ्चमूलादिभिः। तत इति त्र्यहादूर्द्ध्वम्, आदशाहं दशाहपर्य्यन्तम्। पयसा दुग्धेन मृदु भोजनं कोमलं भक्तं दद्यात्; तथा स्वेदयेच्च, आदशाहमित्यनेन दशाहाभ्यन्तर एव स्वेदोऽप्युक्तः, उक्तं हि दशरात्रञ्चैनमप्रमत्तः स्वेदयेत्" इति। स च स्नेह एव स्वेदः रक्तपित्तानुगतत्वाद्द्वयोरिति गयदासः। भोजेऽप्युक्तम् "स्नेहस्वेदविधिस्तु कुर्य्याद् वातरुजापहम्" इति यवमध्वाढ्यमिति मृदुभोजनमित्यस्य विशेषणम्, यवकृतं भक्तप्रधानं मधुप्रधानञ्चेत्यर्थः। कषायैः क्षालयेद् व्रणमिति दशाहादूर्द्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं बोध्यं भोजसंवादात्। सनिशैरित्यनेन घृतसाधनद्रव्यमभिधीयते, न तु लेप इति सुश्रुतसंवादात्॥ २७॥

इत्यश्मरीचिकित्साविवृतिः॥

# अथ प्रमेहचिकित्सा।

### कुशावलेहः

वीरणश्च कुशः काशः कृष्णेक्षुः खागडस्तथा।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
अष्टभागावशेषन्तु कषायमवतारयेत्।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत्।
मधुकं कर्कटीबीजं कर्कारुं त्रपुषं तथा ॥
शुभामलकपत्राणि एलात्वङ्नागकेशरम्।
वरुणामृतप्रियङ्गूणां प्रत्येकञ्चाक्षसम्मितम् ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातं तथाश्मरीम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
हन्त्यरोचकमेवाग्रं तुष्टिपुष्टिकरस्तथा ॥ १ ॥
✓श्यामाककोद्रवोद्दालगोधूमचणकाढकी।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा।
जाङ्गलं तिक्तशाकानि यवान्नञ्च श्रमो मधु ॥ २ ॥
पारिजातजयानिम्बवह्निगायत्रीणां पृथक्।
पाठायाः सागुरोः पीताद्वयस्य शारदस्य च ॥
जलेक्षुमद्यसिकताशनैर्लवणपिष्टकान्।
सान्द्रमेहान् क्रमाद् घ्नन्ति चाष्टौ क्वाथाः समाक्षिकाः ॥३॥

अश्मर्य्यनन्तर बस्तिविकृतिसाम्यात् प्रमेहप्रतिकार उच्यते श्यामाकेत्यादि—उद्दालो वनकोद्रव, आढकी तुवरी, यवान्नमिति यवशक्त्वादिकम्। पारिजातेत्यादि—पारिजात पारिभद्रः, जया जयन्ती; वह्निश्चित्रक , गायत्री खदिर.; पाठाया. सागुरोरित्येक. क्वाथ.। पीताद्वय हरिद्राद्वयम्। अयमप्येक । शारद सप्तपर्ण । पारिभद्रेत्यादयोऽष्टौ क्वाथा·। जलाद्यष्टौ मेहान् क्रमाद् घ्नन्तीत्यन्वय ॥ १—३ ॥

दूर्वाकेशरुपूतीककुम्भीकसवशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥
त्रिफलारग्वधद्राक्षाकषायो मधुसंयुत ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥ ४ ॥
लोध्राभयाकट्फलमुस्तकानां
विडङ्गपाठार्जुनधन्वनानाम्
कदम्बशालार्जुनदीप्यकानां
विडङ्गधात्रीबहुशल्यकानाम् ।
चत्वार एते मधुना कषायाः
कफप्रमेहेषु निषेवणीयाः ॥ ५ ॥

दूर्वेत्यादौ—पूतिक करज तस्य त्वक्। कुम्भीक पाढा; सव कैवर्त्तमुस्तकम् । योगेऽत्र मधु प्रक्षिपन्ति वृद्धा सुश्रुतमवादात्। त्रिफलेत्यादि स्पष्टम् । लोध्रेत्यादि । योगद्वय वाग्भटस्य, कदम्बेत्यादि योगद्वय चरकस्य, चक्रेण प्रतिसंस्कृत्य लिखितम्। धन्वनो धामनी, दीप्यको यमानी, शल्यक खदिर , बहुशल्य इति खदिरस्य सज्ञा, उक्त हि "बहुशल्यश्च सम्प्रोक्तो याज्ञिक कुष्ठनाशन " इति । तेनैकदेशोऽपि मज्ञिन गमयति यथा भीमो भीमसेन । उक्त हि चरके "दार्वी विडङ्ग खदिरो धवश्च" इति। वाग्भटेऽप्युक्त—"गायत्रीदार्वीक्रिमिजिद्धवानाम्" इति । अन्ये तु शल्यक मदनफल-माहु ॥ ४ ॥ ५ ॥

अश्वत्थाच्चतुरङ्गुलान्न्यग्रोधादे फलत्रयात् ।
सजिङ्गीरक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः ॥
नीलहारिद्रशुक्लाख्यक्षारमाञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेहजित् ।
क्वाथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः ॥ ६ ॥
लोध्रार्जुनोशीरकुचन्दनाना-
मरिष्टसेव्यामलकाभयानाम् ।
धात्र्यर्जुनारिष्टकवत्सकानां
नीलोत्पलानां तिनिशार्जुनानाम् ॥

चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसम्प्रयुक्ताः ॥ ७ ॥

पित्तमेहस्य याप्यत्वेन यापनार्थं चिकित्सामाह अश्वत्थादित्यादि—नीलादिषु पञ्चसु मेहेषु क्रमेण एते पञ्च योगा बोध्याः। अत्र अश्वत्थक्राथनैको योग, चतुरङ्गुलादिति द्वितीय, न्यग्रोधोडुम्बराश्वत्थसप्तमधुककुभजम्बूद्वयपियालमधुकरोहिणी-वञ्जुलकदम्बवदरतिन्दुकशल्लकीलोध्रभल्लातकपलाशनन्दीवृक्षाश्चेति, अत्र सप्त पाकडि। ककुभोऽर्जुन। नन्दीवृक्षो गन्धमुण्ड। अन्ये तु न्यग्रोधादिशब्देन पञ्चवल्कलमाहु.। फलत्रयादिति चतुर्थ। समिङ्गीरक्तसारादिति—जिङ्गी मञ्जिष्ठा। रक्तसारो रक्तचन्दनम्। अयन्तु पञ्चम। हन्युरिति यापयेयुरित्यर्थ। किंवा "अनत्यन्तदुष्टमेदसि पित्त-जानामपि साध्यत्व "साध्यास्तु मेदो यदि न प्रदुष्टम्" इति चरकवचनात्। शुक्ता-ख्यो मेहोऽम्लमेह। सुश्रुते कालमेहस्थाने अम्लमेह पठ्यते। उक्त हि सुश्रुते निदान-स्थाने "अम्लमेहिन न्यग्रोधादिकषाय वा पाययेत्" इति। रक्तमेहचिकित्सामाह मञ्जिष्ठ इत्यादिना कृत इत्यन्तेन। अत्र खर्जूरकाश्मर्य्योः फल; तिन्दुकस्य च फला-स्थि। अमृता गुडूची। सुश्रुतेऽपि "शोणितमेहिन गुडूचीतिन्दुकास्थिकाश्मर्य्यखर्जू-रकषाय मधुमधुर पाययेत्" इति। लोध्रेत्यादौ—कुचन्दन रक्तचन्दन, अरिष्टो निम्ब, सेव्यमुशीर; नीलोत्पलानामित्यत्र नीलोत्पलैला इति पाठान्तर, किन्त्वार्षे न दृष्ट, तिनिशा अ हुक. ॥ ६ ॥ ७ ॥

छिन्नावह्निकषायेण पाठाकुटजरामठम्।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिमेहे पिवेन्नरः ॥ ८ ॥
कदरखदिरपूगक्राथं क्षौद्राह्वये पिवेत् ॥ ६ ॥
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत् ॥ १० ॥
पाठाशिरीषदुःस्पर्शमूर्वाकिंशुकतिन्दुकम्।
कपित्थानां भिषक् क्राथं हस्तिमेहे प्रयोजयेत् ॥ ११ ॥
कम्पिल्लसप्तच्छदशालजानि
वैभीतरौहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि
क्षौद्रेण लिह्यात् कफपित्तमेही ॥ १२ ॥

इदानीमसाध्येष्वपि वातिकमेहेषु यापनार्थं योगानाह छिन्नेत्यादि—वह्नि-

श्चित्रक । पाठादिकुष्ठान्ताना चूर्ण गुडूचीचित्रककषाये प्रक्षिप्य पिवेत्। कदरो विट खदिर , खदिरस्तु तदितर., पूग पूगफलम् । पाठेत्यादौ—तिन्दुककपित्थयो फल, तिन्दुकश्च तेन्दुफलम् । पाठादिकपित्थान्तमेकमेव पदम् । वातमेहेष्वमाध्येष्वपि चिकित्साविधानमिद मेहाना चिरानुवन्धित्वेन किञ्चिद्विशेपलाभेन यापनार्थम् । सुश्रुतेऽप्युक्तम् "अन उदृर्ध्वमसाध्येष्वपि योगान् यापनार्थं वक्ष्याम " इति। कम्पिल्लेत्यादौ चूर्णानीति विशेष्यपद द्रष्टव्यम्, एव चैमीतकेत्यादावपीति केचित् अन्ये तु कपित्थपुष्पाणि चेति चकारात् कम्पिल्लादीनामपि कुसुममेव ग्राह्यमित्याहु । युक्तञ्चैतत् । उक्त हि वाग्भटे "शालसप्ताह्वकम्पिल्लवृन्तकाक्षकपित्थजम् । रोहीतज च कुसुम मधुनाद्याद् सुशंकरन् " इति । एव वृद्धवाग्भटेऽपि शालादीनामिति कुसुममित्येवोक्तन् । कफपित्तमेहीति कफमेही पित्तमेही चेत्यर्थ ॥ ८—१२ ॥

सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः ।
कषायस्त्रिफलदारुमुस्तकैरथवा कृत ॥ १३ ॥

सर्वमेहेत्यादि—अय योगो वान्तिविरेकादिशुद्धे ज्ञेय सुश्रुतमवादात् । धात्र्या रस स्वरस , स्वरस एव व्यवहारात् न तु क्वाथ इत्याहु । कषाय इत्यादिद्वितीययोगेऽपि क्षौद्रनिशायुत इति सम्बन्धनीयम् ॥ १३ ॥

फलत्रिकं दारुनिशां विशालां
मुस्तञ्च निःक्वाथ्य निशांशकल्कम् ।
पिवेत् कषायं मधुसम्प्रयुक्तं
सर्वप्रमेहेषु समुत्थितेषु ॥ १४ ॥
कटङ्कटेरीमधुकत्रिफलाचित्रकैः समैः ।
सिद्धः कषायः पातव्य प्रमेहाणां विनाशनः ॥ १५ ॥
त्रिफलादारुदार्व्यव्दक्वाथ क्षौद्रेण मेहहा ॥ १६ ॥
कुटजाशनदार्व्यव्दफलत्रयकृतोऽथवा ॥ १७ ॥

फलत्रिकमित्यादौ—दारुनिशा दारुहरिद्रा, विशाला गोरक्षकर्कटी । निशांशकल्कमिति—निशाभागकल्क तत्सहितमेव त्रिफलादिद्रव्य नि क्वाथ्य कषाय पिवेदित्येके । अन्ये तु अशशब्दोऽर्द्धाभिधायी, तेन फलत्रिकादीना समुदितानामेको भाग , निशायाश्चापरो भाग एतद्भागद्वय नि क्वाथ्य कषाय पिवेदित्यर्थ । अपरे तु निशाया अशश्चतुर्थो भाग समुदितक्वाथ्यापेक्षया स एव कल्क प्रक्षेपरूप-

श्चूर्णो यत्र तत्तथेति व्याचष्टे । व्यवहारस्त्वनेनैव । कटङ्कटेरी दारुहरिद्रा । कुटजाशनेत्यादावपि चौद्रिणेत्यनुवर्त्तते । असन. पीतशाल । दार्वी दारुहरिद्रा । अब्दो मुस्तकम् । निश्चलस्तु अब्दस्थाने अग्नीति पठति । व्यवहारस्तु मुस्तकेनैव ॥ १४—१७ ॥

त्रिफलालौहशिलाजतुपथ्याचूर्णञ्च लीढमेकैकम् ।
मधुनामरास्वरस इव सर्वान् मेहान् निवारयति ॥१८॥
शालमुष्कककम्पिल्लकल्कमक्षसमं पिबेत् ।
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥ १९ ॥

त्रिफलेत्यादि—समुदितत्रिफलयैवैको योग , तेन चत्वारो योगा॰ । अमरा गुडूची, अयञ्च पञ्चमो योग । लौहञ्च मारितपुटितवज्रादिर्लौहचूर्णम् । शालेत्यादि—शालस्य सार. । मुष्कको घण्टापारुली तस्या मूलम् । कम्पिल्लस्य त्वक् ॥ १८ ॥ १९ ॥

## न्यग्रोधाद्यं चूर्णम्

न्यग्रोधोदुम्बराश्वत्थश्योणाकारग्वधाशनम् ।
आम्रजम्बूकपित्थञ्च पियालं ककुभं धवम् ॥
मधूको मधुकं लोध्रं वरुणः पारिभद्रकम् ॥
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढकी ॥
करञ्जत्रिफलाशक्रभल्लातकफलानि च ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ।
फलत्रयरसाञ्चानुपिबेन्मूत्रं विशुध्यति ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पिडका न च जायते ।
न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्ब्वस्थि गृह्यते ॥ २० ॥

न्यग्रोधादिचूर्णे—न्यग्रोधो वट , अशन पीतशाल. । आम्रजम्बूकपित्थञ्चेति आम्रजम्बूफलास्थि कपित्थस्य तु फलमित्याहु. । ककुभोऽर्जुन । धव स्वनामख्यात । मधूको मधूकसार । आढकी तुवरी । करञ्जस्य फलम् । शक्र कुटज ॥ २० ॥

## त्रिकण्टकाद्यं घृतं तैलं यमकञ्च

त्रिकण्टकाश्मन्तकसोमवल्कै-
भल्लातकैः सातिविषैः सलोध्रैः ।
वचापटोलार्जुननिम्बमुस्तै-
र्हरिद्रया दीप्यकपद्मकैश्च ॥
मञ्जिष्ठपाठागुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद् घृतन्तु
पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ २१ ॥

त्रिकण्टकेत्यादौ—अश्मन्तको मानुआक इति ख्यात । सोमवल्क खदिर, न तु कट्फल जतूकर्णमवादात । सर्वैरित्युक्ते पृथगपि सर्वे स्नेहसाधन स्यादत आह समस्तैरिति मिलितैरित्यर्थं, यथालाभपरिहारार्थमिति वा । कफजेषु वातजेषु च मेहेषु तैलम्, पैत्तिकेषु घृतम्, मिश्र त्रिषु लक्षणेष्विति दोषत्रयलक्षणप्रादुर्भावे सति मिश्र तैलघृतयमक पचेदित्यर्थं । त्रिदोषजत्वञ्च कफपित्तमेहेष्वेवानुबन्ध्यानुबन्धकृत मन्तव्यम् । किंवा सर्वेषामेव मेहाना त्रिदोषजत्वादुद्भूतदोषाविर्भाव कदाचिद्भवतीति ज्ञेयम् ॥२१॥

कफमेहहरक्काथसिद्धं सर्पिः कफे हितम् ।
पित्तमेहघ्ननिर्य्यूहसिद्धं पित्ते हितं घृतम् ॥२२॥

कफमेहेत्यादौ क्वाथनिर्यूहेति पदोपादानादकल्कत्व बोध्यम् ॥ २२ ॥

## धान्वन्तरं घृतम्

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी ।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥
सुधानीपकदम्बाश्च विल्वभल्लातकानि च ।
शटीपुष्करमूलञ्च पिप्पलीमूलमेव च ॥
पृथग्दशपलान् भागान् ततस्तोयार्मणे पचेत् ॥
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत् ॥

तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली ॥
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकं तथा ।
गर्भेणानेन तत्सिद्धं पाययेत्तु यथाबलम् ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम् ।
कुष्ठं गुल्मप्रमेहांश्च श्वयथुं वातशोणितम् ॥
प्लीहोदरं तथार्शांसि विद्रधिं पिडकाश्च याः ।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥
पृथक् तोयार्मणे तत्र पचेत् द्रव्याच्छतं शतम् ॥
शतत्रयाधिके तोयमुत्सर्गक्रमतो मतम् ॥२३॥

दशमूलेत्यादौ—करञ्जयो फल न तु मूलम्, फलस्यैव मेहहरत्वात् यदुक्तम्—'करञ्जकिंशुकारिष्टफल जन्तुप्रमेहनुत्' इति । सुधा स्नुही तस्या मूलम् तन्त्रान्तरे मूलपाठात् । नीपकदम्बौ स्वल्पवृहत्कदम्बौ, किंवा कदम्बो भूकदम्ब म त्वालम्बुष , तन्त्रान्तरे भूमिकदम्बपाठात्, नीपस्थाने क्वापि निम्ब पठ्यते । पृथग्दश-पलान् भागानिति दशमूलमपि प्रत्येक दशपलम्, तत्र प्रतिशत तोयार्मणदानम् । शतत्रयधिके द्रव्ये पुनरुत्सर्गसिद्धमष्टगुणमेव जल देयम् । एतदेव वक्ष्यति ' पृथक् तोयार्मणे' इत्यादि । अर्मणो द्रोण , वृन्दस्त्वाह ' पाठान्तरे मत तोय क्वाथ्यादष्ट-गुणन्त्विह ' इति । अस्यार्थ एतदेव घृत तन्त्रान्तरेऽन्यथा पठ्यते । तत्र च क्वाथार्थम-ष्टगुणन्तोयमुक्तम्, तत्प्रामाण्यादिहाप्यष्टगुण तोय देयम् । तन्त्रान्तरीयपाठान्तर यथा 'दशमूल हरीतकी देवदारु करञ्जद्वय वर्षाभूद्वय दन्ती भूमिकदम्ब भल्लातक पुष्कर-मूलार्कमूल स्नुहीमूल वरुणमूल पिप्पलीमूलमिति प्रत्येक दशपलोन्मितानि । यवकोल-कुलत्थप्रस्थद्वय चाष्टगुणेऽम्भसि पादशेष कषायमवतारयेत्' इत्यादि । अर्मणशब्दश्चेह भूरिजलोपलक्षण इति वृन्दस्याशय । व्यवहारस्त्वधुना चक्रमतेनैव । निचुल इज्जल , रोहिष गन्धतृणम् ॥ २३ ॥

## दाडिमाद्यं घृतम्

दाडिमस्य फलप्रस्थं यवप्रस्थौ तथैव च ।
कुलत्थकुडवश्चापि क्वाथयित्वा यथाविधि ।

तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
चतुःषष्टिपलं क्षीरं क्षीरतुल्यं वरीरसम् ॥
दत्वा मृद्वग्निना कल्कैरक्षमात्रायुतैः सह ।
द्राक्षाखर्जूरकाकोलीदन्तीदाडिमजीरकैः ॥
तथा मेदामहामेदात्रिफलादारुरेणुकैः ।
विशालारजनीदारुहरिद्राविकपामयैः ।
क्रिमिघ्नभूमिकूष्माण्डश्यामैलाभिर्भिषग्वरः ।
पाने भोज्ये प्रदातव्य सर्वर्त्तुषु च मात्रया ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातास्तथाश्मरीम् ।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतद्रसायनम् ।
शूलमष्टविधं हन्ति ज्वरमष्टविधं तथा ।
कामला पाण्डुरोगांश्च हलीमकमथारुचिम् ॥
श्लीपदञ्च विशेषेण घृतेनानेन नश्यति ।
इदमायुष्यमोजस्यं सर्वरोगहरं परम् ।
दाडिमाद्यमिदं नाम अश्विभ्यां निर्मितं महत् ॥२४॥

दाडिमस्येत्यादि—स्पष्टम् ॥ २४ ॥

## त्र्यूषणादिगुडिका

त्रिकटुत्रिफलाचूर्णं तुल्यगुग्गुलुना युतम् ।
गोक्षुरकाथसयुक्तं गुडिका कारयेद्भिषक् ॥
दोपकालबलापेक्षी भक्षयेच्चानुलोमिकीम् ।
न चात्र परिहारोऽस्ति कर्म कुर्य्याद् यथेप्सितम् ॥
प्रमेहान् मूत्रघातांश्च वातरोगोदरं जयेत् ॥ २५ ॥

त्रिकटुत्रिफलेत्यादि—त्रिकटुत्रिफलाचूर्णेन तुल्य गुग्गुलु, किं विशिष्टम्—युक्त मिश्रितम्, पुन कीदृशम्—गोक्षुरकाथेन सम्यग्युत भावितम्, एवं कृत्वा गुडिका कारयेदित्यर्थः । मिलितत्रिकटुचूर्णं पल १, मिलितत्रिफलाचूर्णं पल १, गुग्गुलु पल २, चूर्णयुक्तगुग्गुलभावनार्थं गोक्षुर पल ४, क्वाथार्थं जल श ४, एवं सप्ताहमातपे भावयेत्, तदनु षडष्टमाषकमिता वटिका कार्य्या ॥ २५ ॥

## शिलाजतुप्रयोगः

शालसारादितोयेन भावितं यच्छिलाजतु ।
पिबेत् तेनैव संशुद्धदेहः पिष्टं यथाबलम् ॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम् ।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥
मधुमेहं विहायासौ शर्करामश्मरीं तथा ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ २६ ॥
माक्षिकं धातुमप्येवं युञ्ज्यादस्याप्ययं गुणः ॥ २७ ॥
शालसारादिवर्गस्य क्वाथे तु घनतां गते ॥
दन्तीलोध्रशिवाकान्तलौहताम्ररजः क्षिपेत् ।
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति ॥
व्यायामजातमखिलं भजन् मेहान् व्यपोहति ॥ २८ ॥
पादत्रच्छत्ररहितो भिक्षाशी मुनिवद् यतः ।
योजनानां शतं गच्छेदधिकं वा निरन्तरम् ॥
मेहान् जेतुं वने वापि नीवारामलकाशनः ॥ २९ ॥

शालसारादितोयेनेत्यादि—शालसारादि सौश्रुतो गण तस्य तोय. क्वाथ । तद्विधान " तुल्यं गिरिजेन जले चतुर्गुणे भावनौषध क्वाथ्यम् " इत्यादि रसायन-वक्ष्यमाणविधिना ज्ञेयम् । तेनैवेति शालसारादितोयेनैव पिबेत् । सशुद्धदेह इति वमनादिना । पिष्टमिति चूर्णितम् । तुला यावदुपयुञ्जीतेति प्रतिदिनमर्द्ध-कर्षादिमात्रया तावानुपयोगोऽस्य यावता तुला न पूर्य्यते न तु पिप्पलीवर्द्धमानवत् । मधुमेह विहायेति उत्पन्नमात्र मधुमेह जित्वा इत्यर्थः । चिरजस्य असाध्यत्वात् किंवा महाप्रभावत्वात् । योगोऽयमसाध्यमपि मधुमेह साधयति । उक्तविधिं स्वर्णमाक्षिकेऽप्यतिदिशति माक्षिक धातुमप्येवमिति । शालसारादिवर्गस्येत्यादि—शालसारादिगणस्य चतुर्थभागावशिष्टे क्वाथे पुन पाकाद् घनीभूते दन्त्यादीना मिलितानां चूर्ण पादिक प्रक्षिप्य कुटजलेहवत् । शिवा हरीतकी । कान्तेति—मारितपुटितकान्तलौहादिचूर्णम्, अस्य सर्वो विधिर्लौहान्तरवत् । व्यायामजनितमिति मल्लयुद्धादिजनितम् । नीवारेत्युपलक्षणम्, तेन श्यामाकादिकमपि बोध्य यदाह

सुश्रुते—"महावने वा श्यामाकनीवारामलककपित्थतिन्दुकाश्मन्तककन्दमूला-हारो मृगैः सह वसेत्" इति ॥ २६—२९ ॥

शराविकाद्याः पिडकाः साधयेच्छोथवद्भिषक्।
पक्वाश्चिकित्सेद् व्रणवत् तासां पाने प्रशस्यते।
क्वाथं वनस्पतेर्वास्तं मूत्रञ्च व्रणशोधनम्।
एलादिकेन कुर्वीत तैलञ्च व्रणरोपणम् ॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च।
शालसारादिसेकञ्च भोज्यादिञ्च कणादिना ॥ ३० ॥
सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुडम्।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ३१ ॥
प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम्।
विशदं कटु तिक्तञ्च तदारोग्यं प्रचक्षते ॥ ३२ ॥

इति प्रमेहचिकित्सा।

---

प्रमेहपिडकाचिकित्सामाह शराविकाद्या इत्यादि—शोथवदिति व्रणशोथवत्। वनस्पतेरिति वटादेः, वास्तं मूत्रं छागमूत्रम्। एलादिकेनेत्यादि—एलादिगणश्च सौश्रुतः, "कल्ककाथावनिर्देशे गणात्तस्मात् समावपेत्" इति वचनात् एलादिगणस्य क्वाथः कल्कश्च। अन्ये तु एलादिगणस्य कल्को जलञ्च चतुर्गुणमित्याहुः। आरग्वधादिरपि सौश्रुतो गणः। क्वाथमिति पानार्थं परिषेकार्थञ्च। भोज्यादिमित्यादि शब्दात् पानमपि बोद्धव्यम्। कणादिनेति पिप्पल्यादिगणेन सौश्रुतेन। निदानवर्ज्जनमाह सौवीरकमित्यादि ॥ ३०—३२ ॥

इति प्रमेह-प्रमेहपिडका-चिकित्सा-विवृतिः।

# अथ स्थौल्यचिकित्सा।

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत् ॥ १ ॥

प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डञ्च पिवन् कृशतनुर्भवेत् ॥ २ ॥
सचव्यजीरकव्योषहिंगुसौवर्चलानलाः।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ ३ ॥

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तर स्थौल्यचिकित्सामाह प्रमेत्यादि—मधुयुत वारीति अत्र सक्षारत्वेन कर्षणत्वात् कोप जलमेव यौगिकमिति वृद्धा। सचव्येत्यादौ—अनलश्चित्रक। शक्तव इह वक्ष्यमाणव्योषादिशक्तुप्रयोगन्यायात् सर्वचूर्णात् षोडशगुणा। अनेन एकवार भोजनमाहाररूपत्वादित्याहु ॥ १—३ ॥

## विडङ्गाद्यं चूर्णम्

विडङ्गनागरक्षारकाललोहरजोमधु।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः ॥ ४ ॥

विडङ्गेत्यादौ—क्षारो यवक्षारः, काललोहो वज्रादि अस्य चूर्णं मारणपुटननिष्पन्न ग्राह्यम्। अत्र सर्वचूर्णानामेव समभाग ग्राहयन्ति, किन्तु लौहस्य महावीर्य्यत्वेन प्राधान्यादितरामलितचूर्णमनमत्तम्। लोहस्याधिको भाग मधुना चात्रावलेह इत्यप्याहु ॥ ४ ॥

## विडङ्गाद्यं लौहम्

विडङ्गत्रिफलामुस्तैः कणानागरकेण च।
बिल्वचन्दनह्रीवेरपाठोशीरं तथा बला ॥
एषां सर्वसमं लौहं जलेन वटिकां कुरु।
घृतयोगेन कर्त्तव्या माषिका वटिका शुभा ॥
अनुपानं प्रयोक्तव्यं लौहस्याष्टगुणं पयः।
सर्वमेहहरं बल्यं कान्त्यायुर्बलवर्द्धनम् ॥
अग्निसन्दीपनकरं वाजीकरणमुत्तमम्।
सामरोगं निहन्त्याशु भास्करस्तिमिरं यथा ॥
विडङ्गाद्यमिदं लौहं सर्वरोगनिसूदनम् ॥ ५ ॥

विडङ्गेत्यादि—स्पष्टम् ॥ ५ ॥

## व्योषाद्यशक्तुप्रयोगः

व्योषं विडङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिंगुकेबुकमूलानि यमानीधान्यचित्रकम् ।
व्योषं विडङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिंगुकेबुकमूलानि यमानीधान्यचित्रकम् ।
सौवर्च्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
शक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ॥
प्रयोगात् तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ॥
प्लीहपाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ६ ॥

व्योषमित्यादौ—तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वम्, शक्तूनाञ्च षोडशगुणो भागः समुदितचूर्णापेक्षया । सन्तर्पणमिति जलालोडितशक्तुस्वरूपतया । तेन सन्तर्पणशब्दस्याप्यसन्तर्पणता ज्ञेया । मात्रा चास्य आहारद्रव्यप्रधानत्वात् भूयसी । मूढवातो वाताप्रवृत्तिः । श्वैत्र्यं श्वित्रत्वम् । श्वैत्यमिति पाठे श्वेतावभासता, सा च कफकृता ॥ ६ ॥

बदरीपत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यनुत् स्यात् साग्निमन्थरसं वापि शिलाजतु ॥ ७ ॥

बदरीत्यादि—बदरीपत्रपलं पिष्ट्वा काञ्जिकद्रवेण पेया साध्या । साग्निमन्थेत्यादि—द्वितीयो योगः । रसः क्वाथः । शिलाजतु प्रक्षेप्यम् ॥ ७ ॥

## अमृताद्यगुग्गुलुः

अमृतात्रुटिवेल्लवत्सकं
कलिङ्गपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं
पिडका स्थौल्यभगन्दरं जयेत् ॥ ८ ॥

अमृतेत्यादौ—त्रुटि सूक्ष्मैला; वेल्लो विडङ्ग; कलिङ्ग इन्द्रयवः, केचिच्छन्दो-भङ्गभिया कलिपाठं कुर्वन्ति, तन्मते कलिर्विभीतकः किन्तु महेश्वरपिन्नक यामपि इन्द्रयव एव व्याख्यात । तस्मादनन्तत्वाच्छन्दोमार्गाणामत्र छन्दोभङ्गदोषो नाशङ्कनीय । क्रमवृद्धमिति अमृताया एको भाग, द्वौ त्रुटेरित्यादि । मधुना आलोड्य पेयम् ॥८॥

## नवकगुग्गुलुः

व्योषाग्नित्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम् ।
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ॥९॥

व्योषेत्यादौ—अग्निश्चित्रकः ॥ ९ ॥

## लौहरसायनम्

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी ।
एषां दशपलान् भागांस्तोये पञ्चाढके पचेत् ।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥
पलं द्वादशकं देयं तीक्ष्णलौहं सुचूर्णितम् ।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम् ॥
पचेत् ताम्रमये पात्रे सुशीते चावतारिते ।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम् ।
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम् ।
मरिचञ्चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम् ॥
पलद्वयन्तु काशीशं श्लक्ष्णचूर्णीकृतं बुधैः ।
चूर्णं दत्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥

ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ॥
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम् ।
कामलां पाण्डुरोगञ्च श्वयथु सभगन्दरम् ॥
मूर्च्छामोहविपोन्मादगराणि विविधानि च ।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौपधम् ॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ।
बल्य रसायन मेध्य वाजीकरणमुत्तमम् ॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाश्नीयात् कदलीं कन्दं काञ्जिकं करमर्दकम् ।
करीरं कारवेल्लञ्च पद् ककाराणि वर्जयेत् ॥ १० ॥

गुग्गुलुरित्यादि—अत्र पिण्डितस्य न गुग्गुलो शोधितस्य च क्वाथकरणमनय एव क्वाथमध्ये प्रक्षेप । अलम्बुपा मुण्डिरी । पुराण सर्पिर्दशवर्पस्थितम्, यदुक्तं, "उग्रगन्ध पुराण स्याद् दशवर्षस्थित घृतम् । लाक्षारसनिभ शीत प्रपुराणमत परम्" इति । एलात्वचोर्मिलित्वा पलार्द्धम्, मरिचादीना त्रिफलान्तानां प्रत्यक पलद्वयम्, अञ्जन रसाञ्जनम्; शिलाजतुपलद्वयञ्च शोधित मान्त्रितञ्च ग्राह्यम् । एषा चूर्णाना पाणिसह्यत्वमात्रोष्णदशाया प्रक्षेप , मधुनस्तु दिनान्तरे । मधुन प्रस्थार्द्ध षोडश- पलानि । खण्डरायलौहवदस्य पाक । लौहान्तरवदस्य मर्दनादिक्रिया बोध्या ॥ १० ॥

## त्रिफलाद्यं तैलम्

त्रिफलातिविपामूर्वात्रिवृच्चित्रकवासकैः ।
निम्बारग्वधपड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्पपनागरैः ।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम् ॥
पानाभ्यञ्जनगण्डूपनस्यवस्तिषु योजितम् ।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान् ॥ ११ ॥

त्रिफलाद्यतैले इन्द्रसुरा गोरक्षकर्कटी निर्गुण्डी वा । सुरसादिरसाप्लुतमिति सुश्रुतोक्तसुरसादिगणस्य क्वाथश्चतुर्गुण ॥ ११ ॥

शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बु लौहाभयचन्दनानि
शरीरदौर्गन्ध्यहरः प्रदेहः॥ १२॥ ✓

मेदोदोषजन्ययोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह, शिरीषेत्यादि—लामज्जकमुशीरम्, हेम नागकेशरचूर्णम्, पत्र तेजपत्र तमालपत्रमित्यन्ये, अम्बु वालकम्, लोहमगुरु, चन्दन श्वेतचन्दनम्॥ १२॥

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः।
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः॥ १३॥

वासेत्यादि—शङ्खचूर्णेन संयुत इति दग्धशङ्खचूर्णेन मिश्रित। एव बिल्वपत्ररसोऽपि॥ १३॥

हरीतकीलोध्रमरिष्टपत्रं
चूतत्वचो दाडिमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानां
जङ्घाकषायश्च नराधिपाणाम्॥ १४॥

हरीतकीत्यादौ—अरिष्टपत्र निम्बपत्र, दाडिमवल्कल वृक्षस्य फलस्य वा, अङ्गरागो वर्णप्रसाद। जङ्घाकषाय इति गजवाजिवाहनेन विवर्णयोर्जङ्घयोर्वर्णप्रसादनार्थं कषायो विलेपनम्। यदुक्त, मेदनीकरकोषे 'कषयो रसभेदे च निर्य्यासे च विलेपने' इति॥ १४॥

गोमूत्रपिष्टं विनिहन्ति कुष्ठं
वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः
शस्तं वशीकृद्रजनीद्वयेन॥ १५॥

गोमूत्रपिष्टमित्यादि—योगान्तरम्। वर्णोज्ज्वल हरिताल गन्धक इत्यन्ये। हरिताल गोमूत्रपिष्ट सत् कुष्ठ निहन्ति। गोपयसा युक्तमिति पिष्ट तदेव दौर्गन्ध्यहर, तथा रजनीद्वयेन सहित तदेव हरिताल पयसा चीरेण पिष्ट्वा तिलकदानेन वशीकरण भवतीत्यर्थ॥ १५॥

चिञ्चापत्रस्वरसम्रक्षितं कत्तादियोजितं जयति ।
पुटदग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥ १६ ॥

चिञ्चेत्यादि—चिञ्चापत्रस्वरसेनादौ म्रक्षण कक्षयोस्तदनन्तर पुटदग्धहरिद्रां पिष्ट्वा उद्वर्त्तन कार्य्यमित्यर्थ ॥ १६ ॥

दलजललघुमलयाभयविलेपनं हरति देहदौर्गन्ध्यम् ।
विमलारनालसहितं पीतामिवालम्बुषाचूर्णम् ॥
हस्तपादच्युतौ योज्यो गुग्गुलु पाञ्चतिक्तक ।
अथवा पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः ॥ १७ ॥

इति स्थौल्यचिकित्सा ।

---

दलेत्यादि—दल तेजपत्र, जल वालक, लघु अगुरु, मलयज श्वेतचन्दनं, अभयमुशीर, अलम्बुषा मुण्डिरी ॥ १७ ॥

इति स्थौल्याचिकित्साविवृति ।

---

# अथोदर-चिकित्सा ।

उदरे दोपसम्पूर्णे कुक्षौ मन्दो यतोऽनल ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ॥ १ ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगान् द्विजान् ।
पयोमूत्रासवारिष्टमधुशीधु तथा पिवेत् ॥ २ ॥

उदरोत्सेधसाधर्म्याद् स्थौल्यानन्तरमुदरचिकित्सामाह उदर इत्यादि—उदर इति उदररोगे ॥ १—२ ॥

वातोदरं वलवत पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥ ३ ॥

वातोदरमित्यादि—ननु 'विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी' इति वचनात् स्नेहपान निषिद्ध, तथा 'नोदरी नातिसारी च' इत्यादिना च स्वेदोऽपि निषिद्ध', तत् कथमत्र स्नेहस्वेदोपदेश उच्यते ? स्वतन्त्रयोर्निषेधो बोध्यः न तु शोधनाङ्गभूतयोः, अन्यथा दोषहरणस्य दुष्करत्वात् । परिम्लानमिति चीणम् । तथेति वस्त्रवेष्टनेन ॥ ३ ॥

दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥
विरिक्ते च यथादोषहरैः पेया शृता हिता ॥ ४ ॥

उदरे पुन पुन. शोधनायोपपत्तिमाह दोषातिमात्रेत्यादि—स्रोतोमार्ग. स्रोतोमुख, मार्गशब्दोऽत्र मुखरूपमार्गवाची । यथादोषहरैरिति यस्मिन्नुदरे यो दोष उद्भूतस्तत्र तद्दोषप्रत्यनीकैर्दशमूल्यादिभिः ॥ ४ ॥

वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ५ ॥

वातोदरीत्यादि—स्पष्टम् ॥ ५ ॥

यमानीसैन्धवाजाजिव्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥ ६ ॥

यमानीत्यादि नातिपेलवमित्यन्तेनैको योगः, नातिपेलव नातितनु । अन्ये तु कफोदरीत्यन्त एको योग एवेत्याहु. । तन्न, 'यमानीसैन्धवाजाजीमधुव्योष. कफोदरे' इति वाग्भटविरोधात् ॥ ६ ॥

मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तु दकोदरी ॥
बद्धोदरी तु हवुषादीप्यकाजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ ७ ॥

मधुतैलेत्यादौ—जातमिति च्छेदः, सुजातदधिभवमित्यर्थ. । सव्योषन्तु दकोदरीति—दकोदरी तु सव्योष तक्र पिबेदित्यर्थः । दीप्यक यमानी । निचयोदरी सन्निपातोदरी ॥ ७ ॥

गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ८ ॥

गौरवेत्यादौ—असंस्कृतस्य केवलतक्रस्यायं गुण इति ज्ञेयम् ॥ ८ ॥

वातोदरे पयोऽभ्यासो निरूहो दाशमूलिकः ।
सोदावर्त्ते वातघ्नाम्लशृतैरण्डानुवासनः ॥ ९ ॥

वातोदर इत्यादि—पयोऽभ्यास इति क्रमेण, बलार्थं, बलजननानन्तरं पयो निवर्त्तनीयम् । निरूहो दाशमूलिक इति दशमूलक्वाथेन निरूहः कार्य्य इत्यर्थः । किंवा 'द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वकल्कः । त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः' इति । अयञ्च तीक्ष्णविरेचनद्रव्ययुक्तः कार्य्यः, चरकप्रामाण्यात् । सोदावर्त्ते वातोदर इत्यन्वयः । वातघ्नाम्लशृतैरण्डानुवासन इति वातघ्नैर्द्रव्यैस्तथा अम्लैश्च काञ्जिकादिभिः शृतमेरण्डमित्येरण्डतैलमनुवासनं यस्य वर्त्तते स तथा इति । अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेनैरण्डतैलमुच्यते ॥ ९ ॥

## सामुद्राद्यं चूर्णम्

सामुद्रसौवर्च्चलसैन्धवानि
क्षारं यमानीमजमोदकञ्च ।
सपिप्पलीचित्रकशृङ्गवेरं
हिंगुर्विडञ्चेति समानि कुर्य्यात् ॥
एतानि चूर्णानि घृतप्लुतानि
भुञ्जीत पूर्वं कवलं प्रशस्तम् ।
वातोदरं गुल्ममजीर्णभुक्तं
वायुप्रकोपं ग्रहणीञ्च दुष्टाम् ।
अर्शांसि दुष्टानि च पाण्डुरोगं
भगन्दरञ्चेति निहन्ति सद्यः ॥ १० ॥

सामुद्रेत्यादि—यवानां क्षारो यवक्षारः । अस्य हिङ्ग्वष्टकवदुपयोगः । चूर्णानीत्यनन्तरं सम्मिश्र्येति शेषः ॥ १० ॥

**पित्तोदरेषु बलिनं पूर्वमेव विरेचयेत्।**
**अनुवास्याबलं क्षीरवस्तिशुद्धं विरेचयेत्॥**
**पयसा सत्रिवृत्कल्केनोरुवूकश्रृतेन वा॥**
**सातलात्रायमाणाभ्यां श्रृतेनारग्वधेन वा॥ ११॥**

पित्तोदरे त्वित्यादि—क्षीरप्रधानो वस्ति क्षीरवस्ति। अत्र बलिन पुरुष पूर्वमिति अनुवासनमकृत्वैव विरेचयेत्। अनुवासनव्यतिरिक्तस्तु स्नेह कर्त्तव्य एव। अतएवोक्त वाग्भटे—'बलिन स्वादुसिद्धेन पैत्ते सस्नेह्य सर्पिषा। श्यामा-त्रिभण्डीत्रिफलाविपक्केन विरेचयेत्' इति। अबल पुनरादौ अनुवास्य तत क्षीर-वस्तिशुद्ध विरेचयेत्। विरेकोऽत्राग्निबलजननानन्तरमेव कार्य्य.। उक्त हि वाग्भटे—'दुर्बल त्वनुवास्यादौ शोधयेत् क्षीरवस्तिभि। जाते चाग्निबले स्निग्धे भूयो भूयो विरेचयेत्' इति। केन विरेचयेदित्याह पयसेत्यादि। अत्र तु उरुवूकस्य फल ग्राह्य विरेचकत्वात्, एवमारग्वधस्यापि फलम्। सातला चर्मकषा। पयसेति सर्वत्र सम्बध्यते। सत्रिवृत्कल्केन पयसेत्येको योग, उरुवूकश्रृतेनेति द्वितीय, सातला-दिरारग्वधान्तस्त्वपर, जतूकर्णसवादात्। अन्ये तु सत्रिवृत्कल्केनोरुवूकश्रृतेनेत्येको योग, तथा सत्रिवृत्कल्केन सातलारग्वधान्तेन तु द्वितीयो योग इत्याहुः॥ ११॥

**कफादुदरिणं शुद्धं कटुक्षारान्नभोजितम्।**
**मूत्रारिष्टायस्कृतिभिर्योजयेच्च कफापहैः॥ १२॥**

कफादित्यादि—शुद्धमिति वमनव्यतिरिक्तशोधनेन विशुद्धमित्यर्थ, वमनस्यो-दरे निषिद्धत्वात्। कटुक्षारान्नभोजितमिति कटुक्षारयुक्तैरन्नै. पेयादिभिः कृतससर्जन-मित्यर्थ। अयस्कृतिर्नवायसादि, किंवा अयस्कृतयो रसायनोक्तलौहप्रयोगाश्च-रकोक्ता ज्ञेया.॥ १२॥

**सन्निपातोदरे सर्वा यथोक्ता कारयेत् क्रियाः॥ १३॥**

सन्निपातोदर इत्यादौ सर्वा यथोक्ता इति प्रत्येक वातोदरादिविहिता. सर्वा एव सन्निपातोदरे कार्य्या॥ १३॥

**प्लीहोदरे प्लीहहरं कर्मोदरहरं तथा॥ १४॥**

प्लीहोदर इत्यादौ—प्लीहहर कर्म वक्ष्यमाण तथोदरहर कर्मेति प्लीहोदर-हरम्। प्लीहोदरचिकित्सा च वाच्या॥ १४॥

**स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम्।**

सतैललवणं दद्यान्निरूहं सानुवासनम् ॥
परिस्रंसीणि चान्नानि तीक्ष्णञ्चैव विरेचनम् ॥ १५ ॥

स्विन्नायेत्यादि—निरूहस्य उत्सर्गत एव सतैललवणत्वे सिद्धे सतैललवण-मिति पद तैललवणयोरत्राधिकदानोपदर्शनार्थम् । बद्धच्छिद्रदकोदराणाञ्च यद्यप्या स्थापन निषिद्ध तथापि तदेकमाध्यायामवस्थायां निरूहदानामिह ज्ञेयम् । परिस्रंसी-णीत्यनुलोमनानि ॥ १५ ॥

छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥ १६ ॥
जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च ।
जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥ १७ ॥

छिद्रोदरमित्यादि—वाग्भटस्य । 'यद्यपि प्रायो भवत्यभावाय छिद्रान्त्र-श्चोदर नृणाम्' इत्यनेन छिद्रोदरमसाध्यमुक्त तथापि प्राय शब्देन तत्रासाध्यता-व्यभिचारस्य दर्शितत्वात् चिकित्सितमिद यापनार्थम् । 'तथा हन्ति सर्वोदराण्ये-तच्चूर्णं जातोदकान्यपि' इत्यनेन सर्वोदरचिकित्सैव बोध्या । अन्ये तु सर्वोदर-हन्तृत्वकथन न पारमार्थिक किन्तु स्तुतिरित्याहु । ऋते स्वेदादित्यनेन स्वेदस्य छिद्रोदरे क्लेदयुक्तेऽत्यर्थक्लेदकरतया निषेध । शास्त्रोक्तमिति—शल्यशास्त्रोक्तम् ॥ १६—१७ ॥

देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशन ॥
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥ १८ ॥

देवदार्वित्यादौ—पलाश किंशुकस्तस्य फल ग्राह्य उदरहन्तृत्वात् । स्नुही-पय इत्यादि—भावनमत्रैकविंशतिवारान् यदाह क्षारपाणि । व्यवहारस्तु सप्त-वारभावनया । एतान् पिप्पलीगुटिकाश्चतुर पञ्च वा कोष्ठानुरूप प्रत्यहमेका-न्तर द्व्यन्तर वा विरेचनार्थं क्षीरेण पिबेत् । सहस्रन्तु प्रयुञ्जीतेति उपयुक्तपिप्पली-गणनया यावता कालेन सहस्र पूर्य्यत इत्यर्थ । एतच्चोत्सर्गवचनम्, तेन सहस्रा-दर्वागपि विधिर्बोध्य ॥ १८ ॥

शिलाजतूनां मूत्राणां गुग्गुलोस्त्रैफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ १६ ॥

शिलाजतूनामित्यादौ—समासान्तर्गतमपि प्रयोग इति पद चकाराच्छिला-जत्वादिभि सह प्रत्येक सम्बन्धनीयम् । प्रयोगोऽभ्यास । त्रैफलस्य गुग्गुलोरिति त्रिफलागुग्गुलोरित्यर्थः ॥ १६ ॥

स्नुहीपय परिभावितत‌ण्डुलचूर्णैर्विनिर्मित पूप ।
उदरमुदारं हिंस्याद् योगोऽयं सप्तरात्रेण ॥ २० ॥
पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ २१ ॥

स्नुहीपय इत्यादौ—पूप· पिष्टकम्, स्नुहीवृक्षक्षीरेण त्रि सप्तकृत्व पिप्पली-भावयित्वा एका द्वे तिस्रो वा प्रयच्छेत् विरेकार्थमिति । उदारमिति प्रवृद्धम् । कल्पदृष्टमिति चरकोक्तरसायनविधिदृष्टम्, तञ्च विधिं सोहयक्ष्मचिकित्सते दर्शयि-ष्याम ॥ २०—२१ ॥

## पटोलाद्यं चूर्णम्

पटोलमूलं रजनी विडङ्गं त्रिफलात्वचम् ।
कम्पिल्लकं नीलिनीञ्च त्रिवृताञ्चेति चूर्णयेत् ॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वै पिबेत् ॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम् ।
मण्डं पेयाञ्च पीत्वा च सव्योषं षडहं पय ॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुन पुन ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ॥ २२ ॥

पटोलमूलमित्यादौ—त्वच इति निरास्थित्रिफलाग्रहणार्थम् । षडाद्यान् कार्षि-कानिति पटोलमूलादीना त्रिफलान्ताना षण्णा प्रत्येक कर्षभागानित्यर्थ । त्रींश्च द्वित्रिचतुर्गुणानिति कम्पिल्लकादयस्त्रय क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणा-नित्यर्थ । नीलिनी नीलवुह्वा, तस्याश्चात्र फल वृद्धवाग्भटसंवादात् । मुष्टिरिति

पलम् । विरिक्तो जाङ्गलरसैरित्यादि—विरेचनदिने जीर्णे भेषजे मृद्वोदनमण्डपेया-नामन्यतममग्निबलापेक्षया उपयोक्तव्यम् । तत ऊर्द्ध्वं षडह यथोक्तपयोवृत्तिना भवितव्यम् । तत पुन सप्तमेऽहनि पटोलादिचूर्णं पेयम्, एव पुन. पुनः कार्य्यम् ॥ २२ ॥

## नारायणचूर्णम्

यमानी हवुषा धान्यं त्रिफला सोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ।
द्वौ क्षारौ पौष्कर मूल कुष्ठं लवणपञ्चकम् ॥
विडङ्गञ्च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥
एष नारायणो नाम चूर्णो रोगगणापह' ।
नैन प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः ॥
तक्रेणोदरिभि· पेयो गुल्मिभिर्बदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसि ।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २३ ॥

यमानीत्यादौ—उपकुञ्चिका कृष्णजीरक , कारवी स्वल्पप्रमाण जीरकमीषत् कृष्ण, जीरकशब्देन च प्रसिद्ध महज्जीरकम् । अजगन्धा अजमोदा, स्वर्णक्षीरी कङ्कुष्ठः, दन्त्या भागत्रयमाद्यभागापेक्षया एव त्रिवृद्विशालयोरप्याद्यभागापेक्षया प्रत्येक द्वैगुण्यम् । सातला चर्मकषा । नारायणसञ्ज्ञानिमित्तमाह नैनमित्यादि । एतेन नारायणमधर्मत्वान्नारायणसञ्ज्ञेत्युक्त भवति । गरोऽविषद्रव्यसयोगज विष कालान्तरफलदायि, कृत्रिमन्तु स्थावरजङ्गमविषमयोगादुत्कृष्टशक्तिक विष तत्कालफल-

ण्यपि। यथार्हमिति वचनादन्यैरपि दोषव्याधिविपरीतैर्द्रव्यै पानमिति दर्शयति। यथाऽस्निग्धकोष्ठेनेति पाठे यो यस्योचित स्तेहस्तेन स्निग्धकोष्ठेन पेयमिदम्॥ २३॥

दन्ती वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिबेदेतत् कल्कं जठरनाशनम्॥ २४॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥ २५॥
गवाक्षीशङ्खिनीदन्तीनीलिनीकल्कसंयुतम्।
सर्वोदरविनाशाय गोमूत्रं पातुमाचरेत्॥ २६॥

दन्तीत्यादौ—गवाक्षी गोरक्षकर्कटी। शङ्खिनी श्वेतबुह्ना। सक्षीरमित्यादौ—माहिषमूत्रपलमेक द्वय वा पीत्वा विरेके सति गोक्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति। वाग्भटेऽप्युक्त "गव्य मूत्र माहिषमेव वा पिबेद् गोक्षीरभुक् स्याद्वा करभीक्षारवर्त्तन" इति। गोक्षीरभुगिति गोक्षीरमात्रभोजी। अत एव माहिष मूत्र पीत्वा तत्क्षीराहार एव नर" इति निश्चलेन यदुक्त तदपास्तम्, उक्तवाग्भटवचनविरोधात्॥ २४-२६॥

अर्कपत्रं सलवणमन्तर्धूमं दहेत् ततः।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम्॥ २७॥
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वित।
अम्लवेतससंयुक्त शिग्रुक्वाथः ससैन्धव॥ २८॥
गृहीत्वा यस्य सञ्ज्ञा पाटयित्वेन्द्रवारुणीमूलम्।
प्रक्षिप्यते सुदूरे शाम्येत् प्लीहोदरं तस्य॥ २९॥

अर्कपत्र सलवणमिति सैन्धवेन तुल्य परिणतार्कपत्र गृह्णन्ति। पीत इत्यादौ—पिप्पल्यादिद्रव्यचतुष्टय प्रक्षेप्यम्॥ २७-२९॥

रोहीतकाभयाक्षोद-भावितं मूत्रमम्बु वा।
पीतं सर्वोदरप्लीहमेहार्शः क्रिमिगुल्मनुत्॥ ३०॥

रोहीतकेत्यादौ—रोहीतकहरीतक्योश्चूर्णकर्षेण पलद्वयपरिमित गोमूत्रमम्बु वा भाव्यमिति केचित्, अन्ये तु रोहीतकहरीतक्यो क्षोदै. खण्डखण्डरूपै शिलाया किञ्चिदवक्षुण्णैः सप्ताह भावित मूत्रमम्बु वेत्याहु. वाग्भटप्रामाण्यात्, यथा,

" रोहीतकलता॰ क्लृप्ता खण्डश सामयाजले। मूत्रे वा सुनुयात्तच्च सप्तरात्र-स्थित पिवेत्" इति। सुनुयादिति भावयेत्॥ ३०॥

देवद्रुमं शिग्रु मयूरकञ्च
गोमूत्रपिष्टामथवाश्वगन्धाम्।
पीत्वाशु हन्यादुदरं प्रवृद्धं
क्रिमीन् सशोथानुदरञ्च दूष्यम्॥ ३१॥

इदानीमुदर एवोपद्रवभूतप्रभूतशोथसम्बन्धे सति चिकित्साविशेषमाह, देवद्रुममित्यादि—मयूरकमपामार्गमूलम्। मूत्रमत्र योगद्वयेऽपि, मूत्रेण पेषण पानञ्चेत्याहु वृन्दटिप्पणिकायान्तु देवद्रुमादिरश्वगन्धान्त एको योग, अथशब्दोऽपि पूर्वयोगापेक्षया इत्युक्तम्, व्यवहारस्तु योगद्वयेनेति॥ ३१॥

दशमूलदारुनागरच्छिन्नरुहापुनर्नवाभयाक्काथ।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च॥३२॥

दशमूलेत्यादौ—क्काथ इत्यत्र युक्त इति पाठे क्काथ इति शेषः॥ ३२॥

हरीतकीनागरदेवदारु-
पुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतस्तु पेय
शोथोदराणां प्रवर प्रयोगः॥ ३३॥

हरीतक्यादौ—प्रतिदिनोपयोगे गुग्गुलोर्माषकचतुष्टय गोमूत्रस्यार्द्धपल कर्षो वा प्रक्षेप्यः, विरेचने तु कर्त्तव्ये प्रचुरत्वमनयो, अत्यन्तवद्धकोष्ठे तु गोमूत्रेणैव क्काथ कृत्वा गुग्गुलुमात्र प्रक्षिप्य वृद्धा व्यवहरन्ति॥ ३३॥

एरण्डतैलं दशमूलमिश्रं
गोमूत्रयुक्तस्त्रिफलारसो वा।
निहन्ति वातोदरशोथशूलं
क्काथ॰ समूत्रो दशमूलजश्च॥ ३४॥

एरण्डतैलमित्यादि—एरण्डतैलप्रक्षेपाद्दशमूलक्काथ इत्येको योग, गोमूत्रप्रक्षेपात् त्रिफलाक्काथ इति द्वितीयः, अत्यन्तवद्धकोष्ठे तु गोमूत्रेणैव त्रिफलाक्काथ कार्य्य इति वदन्ति। एव गोमूत्रप्रक्षेपाद्गोमूत्रेण वा दशमूलक्काथोऽपीत्याहुः॥३४॥

पुनर्नवानिम्बपटोलशुण्ठी-
तिक्तामृतादार्व्वभयाकषाय ।
सर्वाङ्गशोथोदरकासशूल-
श्वासान्वितं पाण्डुगदं निहन्ति ॥ ३५ ॥

पुनर्नवेत्यादि—स्पष्टम् ॥ ३५ ॥

पुनर्नवां दार्व्वभयां गुडूचीं
पिबेत् समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोथोदरपाण्डुरोग-
स्थौल्यप्रसेकोर्द्ध्वकफामयेषु ॥ ३६ ॥

पुनर्नवामित्यादि—पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयम्, तथा च तन्त्रान्तरम्—गोमूत्रेणाथवा दारुवर्षाभूचेतकीरजः । पिबेद् गुग्गुलुसंयुक्तं शोथोदरविनाशनम् " इति । अत्र चेतकी हरीतकी । गुग्गुलुश्च मिलितचूर्णसम इत्याहु । अन्ये तु पुनर्नवादीनां क्वाथं गोमूत्रं गुग्गुलुश्च प्रक्षिप्य व्यवहरन्ति ॥ ३६ ॥

गोमूत्रयुक्तं महिषीपयो वा
क्षीरं गवां वा त्रिफलाविमिश्रम् ।
क्षीरान्नभुक् केवलमेव गव्यं
मूत्रं पिबेद्वा श्वयथूदरेषु ॥ ३७ ॥

गोमूत्रेत्यादौ—क्षीरं गवां वा त्रिफलाविमिश्रमिति त्रिफलायाः क्वाथः कल्को वा । क्षीरान्नभुगिति क्षीरमात्रेणान्नभुक् ॥ ३७ ॥

पुनर्नवा दार्व्वमृता पाठा विल्वं श्वदंष्ट्रिका ।
वृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम् ॥
समभागानि चूर्णानि गवां मूत्रेण वा पिबेत् ।
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम् ॥
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ ३८ ॥

पुनर्नवेत्यादौ—विल्वस्य मूलम् । शोथोदराण्यष्टाविति सशोथान्यष्टावुदराणीत्यर्थः ॥ ३८ ॥

पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम् ।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसन्तु तत् ॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्यय ॥ ३९ ॥

पुराणमित्यादि—पुराणमाणवस्य मूल पलमात्र दरदलिततण्डुलस्य पलद्वय क्षीरतोयाभ्या समाभ्या साधयित्वा पायस कार्य्यः । अत्युपयोगेऽपरम-न्नव्यञ्जन नाश्नीयादित्याहु । योगोऽय शोथमात्रेऽपि प्रभवति ॥३९॥

## दशमूलषट्पलकं घृतम्

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलकैः पलिकैः ।
सिद्धं घृतार्द्धपात्रं द्विमस्तुकमुदरगुल्मघ्नम् ॥ ४० ॥

दशमूलषट्पलके दशमूलस्य तुलार्द्धं पञ्चाशत्पलानि, तस्य क्वाथ इत्यर्थः । घृतस्यार्द्धपात्रमर्द्धाढक प्रस्थद्वयमित्यर्थः । द्विर्मस्तुकमिति घृतमपेक्ष्य द्विगुण मस्त्वित्यर्थः । चरकोक्तदशमूलषट्पलकेऽपि द्वि शब्द प्रस्थेन तथार्द्धपालिकैरित्यनेन च योज्य । तेन पिप्पल्यादीना द्विगुणार्द्धपलं षट्पलानि भवन्ति तथा प्रस्थेन च द्विःशब्दसम्बन्धात् प्रस्थद्वय भवतीति एकवाक्यता बोध्या । ननु क्रियाभ्यावृत्ता-वेव सुच्प्रत्ययो दृश्यते न तु अभ्यावृत्तिमात्रेणैव, द्विरष्टमवत्सरवारसुन्दरीत्यादौ क्रियाभ्यावृत्तिं विनापि सुच्प्रत्ययस्य दर्शनात् ॥ ४० ॥

## चित्रकघृतम्

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले ।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ४१ ॥

चतुर्गुण इत्यादि—अत्र सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलमेक देयम्, अत्रार्थे तन्त्रान्तर यथा 'अग्निक्षारपलाभ्या द्विर्मूत्र चतुर्जलञ्च घृतप्रस्थम्' इति ॥ ४१ ॥

## विन्दुघृतम्

अर्कक्षीरपले द्वे च स्नुहीक्षीरपलानि षट् ।
पथ्या कम्पिल्लक श्यामा सम्पाकं गिरिकर्णिका ॥

नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकन्तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थ विपाचयेत्॥
अथास्य मलिने कोष्ठे विन्दुमात्रं प्रदापयेत्।
यावतोऽस्य पिबेद्विन्दूंस्तावद्वारान् विरिच्यते॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृत्तमिन्द्राशनिर्यथा॥
एतद्विन्दुघृतं नाम येनाभ्यक्तो विरिच्यते॥ ४२॥

अर्कक्षीरेत्यादि—श्यामा श्याममूला त्रिवृत्। गिरिकर्णिका श्वेतापराजिता, नीलिनी नीलबुह्ना, शङ्खिनी श्वेतबुह्ना। अत्र पाकार्थं जलं चतुर्गुणं देयम्, अतएव क्वचित् वृन्दसंग्रहे दृश्यते 'स्नुह्यर्कयोस्तु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं विन्दुसर्पिषि' इति। मात्रा तु अस्य कोष्ठानुरूपा, माषकमेकं द्वयं वा प्रचरति। मलिन इति मलबहुले॥ ४२॥

## दधिमण्डाद्यं घृतम्

दधिमण्डाढके सिद्धात् स्नुक्क्षीरपरिकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये॥
तथासिद्धं घृतप्रस्थं पयस्यष्टगुणे पचेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च॥ ४३॥

दधिमण्डेत्यादि—तद्वदिति पूर्वोक्तप्रकारेणोत्थिताद् घृतात्। चरके हि 'क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धसहितं दधि' इत्यादि। पूर्वयोगे क्षीरद्रोणे सुधाक्षीर-प्रस्थार्द्धं प्रक्षिप्य दधि करणीयं, ततस्तद्दधि मथित्वा घृतं सम्पादनीयमिति प्रकार उक्त इति। तथा सिद्धमित्यादि—अत्रापि पूर्वोक्तप्रकारनिष्पादितदधिमन्थनसिद्धं घृतमिति तथा शब्दार्थः। एतयोर्घृतयोरनुपानं तथा विरेकान्तरीयो विधिश्च चरकोक्त एवानुसरणीय इति॥ ४३॥

## नाराचघृतम्

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम्।

घृतं विपक्वं कुडवप्रमाणं
तोयेन तस्याद्गमथार्द्धकर्षम् ॥
पीत्वोष्णमम्भोऽनुपिवेद्विरिक्ते
पेयां सुखोष्णां वितरेद्विधिज्ञ ।
नाराचमेतज्जठरामयाणां
युक्त्योपयुक्तं शमनं प्रदिष्टम् ॥ ४४ ॥
इत्युदर-चिकित्सा ।

---

स्नुक्क्षीरेत्यादौ—सिंही कण्टकारी, युक्त्योपयुक्तमिति कोष्ठाद्यग्निबलापेक्षय इत्यर्थ ॥ ४४ ॥

इत्युदरचिकित्साविवृति ।

---

# अथ प्लीह-यकृच्चिकित्सा

यमानिकाचित्रकयावशूक-
षड्ग्रन्थिदन्तीमगधोद्भवानाम् ।
प्लीहानमेतद्विनिहन्ति चूर्ण-
मुष्णाम्बुना मस्तुसुरासवैर्वा ॥ १ ॥

प्लीहवृद्धया उदरस्य सम्भवादनन्तर प्लीहचिकित्सामाह यमानिकेत्यादि—षड्ग्रन्थि पिप्पलीमूल उक्त हि रत्नकोषे—' ग्रन्थिक पिप्पलीमूल षड्ग्रन्थि चटका शिर ' इति ॥ १ ॥

पिप्पलीं किंशुकक्षारभावितां सम्प्रयोजयेत् ।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम् ॥ २ ॥

पिप्पलीमित्यादि—किंशुक पलाशस्तत्क्षारोदके सप्तधा भाविता पिप्पल पिप्पलीवर्द्धमानक्रमेण प्रयोजयेत्, दुग्धपानमप्यत्रोपदिशन्ति वृद्धा ॥ २ ॥

विडङ्गाज्याग्निसिन्धूत्थशक्तून् दग्ध्वा वचान्वितान् ।
पिबेत् क्षीरेण सञ्चूर्ण्य गुल्मप्लीहोदरापहान् ॥ ३ ॥

विडङ्गेत्यादि—विडङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दाहयेत् । तत मन्चूर्णं क्षीरेण सह पिबेत् । अन्ये तु कपाले कृत्वा एवमेव दहेत् न पुनरन्तर्धूममित्याहुः । व्यवहारः पूर्ववदेव ॥ ३ ॥

**तालपुष्पभवः क्षारः सगुडः प्लीहनाशनः ।**
**रोहीतकाभयाक्वाथः कणाक्षारसमन्वितः ॥ ४ ॥**

तालपुष्पेत्यादावप्यन्तर्धूमक्षारः—सगुड इति समगुडः । क्षारस्य च माषकचतुष्टयेन व्यवहारः ॥ ४ ॥

**क्षारं वा विडकृष्णाभ्यां पूतिकस्याम्लनिःस्रुतम् ।**
**प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम् ॥ ५ ॥**

क्षारं वेत्यादि—पूतिकस्य लाटाकरञ्जमूलस्य क्षारम् । अम्लनिःस्रुतमिति अम्ले काञ्जिके निःस्रुतं सप्तधा परिस्रुतं पूतिकरञ्जक्षारं विडलवणपिप्पलीचूर्णप्रक्षेपेण पिबेत् । वाग्भटेऽप्युक्तम् ‘ अम्लस्रुतं विडकणाचूर्णाढ्यं नक्तमालजम् ’ इति । वाग्भटटीकायामपि अम्लैः काञ्जिकादिभिः परिस्रुतमिति व्याख्यातम् । सुश्रुतेऽपि ‘ अम्लस्रुतं पूतीकरञ्जक्षारं विडलवणपिप्पलीप्रगाढं पाययेत् ’ इत्युक्तम् । तेन अम्बुनि जले निःस्रुतमित्यसदर्थं एव । वाशब्दः पूर्वयोगापेक्षया ॥ ५ ॥

**पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ।**
**पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ ६ ॥**

पातव्य इत्यादौ—उदधिशुक्तिर्मुक्तास्फोटः । युक्तित इति वयोबलाद्यपेक्षया । पयसा वेत्यादि श्लोकार्द्धं वृन्दे पठ्यते, तद्दर्शनाच्चक्रप्रहेऽपि केचित् पठन्ति, किन्तु वृन्दे पिप्पलीवर्द्धमानं न पठ्यते, तेन तत्र तत्पाठो युज्यत एव, इह तु अग्रे पिप्पलीवर्द्धमानं वक्तव्यमेवेति पयसा वेत्यादि श्लोकार्द्धमत्र न पठनीयमेव । अतएव निश्चलेनापि नोपन्यस्तमिति ॥ ६ ॥

**भल्लातकाभयाजाजीगुडेन सह मोदकः ।**
**सप्तरात्राद्विहन्त्याशु प्लीहानमतिदारुणम् ॥ ७ ॥**

भल्लातकेत्यादि—स्पष्टम् ।

**शोभाञ्जनकनिर्य्यूहं सैन्धवाग्निकणान्वितम् ॥ ८ ॥**
**पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥ ९ ॥**

शोभाञ्जनेत्यादौ—निर्यूहः क्वाथ, अग्निश्चित्रक । पलाशक्षारयुक्त वेति पलाशक्षारोदकयुक्तम्, उक्त हि सुश्रुते 'प्रस्रुतेन वा पलाशक्षारेण यवक्षारम्' इति ॥ ८—९ ॥

तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ॥ १० ॥
प्लीहोद्दिष्टां क्रियां सर्वा यकृत सम्प्रयोजयेत् ॥ ११ ॥

तिलान् सलवणानिति कृष्णतिला एव ससैन्धवा भक्ष्याः, अन्ये तु तिल-नालक्षारोदक सलवण पेयमित्याहु । व्यवहारस्तु पूर्वेणैव । घृत षट्पलकमिति ज्वरोक्तम् ॥ १०—११ ॥

लशुनं पिप्पलीमूलमभयाश्चैव भक्षयेत् ।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १२ ॥
प्लीहजिच्छरपुङ्खाया कल्कस्तक्रेण सेवितः ।
शरपुङ्खैव सञ्चूर्ण्य जग्धा पेयाभुजाथवा ॥ १३ ॥

लशुनमित्यादौ—गोमूत्रगण्डूषेणानुपानम् । शरपुङ्खाया इति शरपुङ्खा मूलस्य ॥ १२—१३ ॥

शार्ङ्गष्ठानिर्य्यूहः ससैन्धवस्तिन्तिडीकसम्मिश्रः ।
प्लीहव्युपरमो योगः पक्वाम्ररसोऽथवा समधुः ॥ १४ ॥

शार्ङ्गष्ठा काकजघा गुञ्जा वा अनयोर्मूलम् । तिन्तिडीक महार्द्रकम् । पक्वाम्ररस समधुर्वातोल्वणे ॥ १४ ॥

रोहीतकाभयाक्षोदभावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीहमेहार्शःक्रिमिगुल्मनुत् ॥ १५ ॥

रोहितकेत्यादौ—क्षोदश्चूर्णम्, गोमूत्र विरेकार्थम्, अम्बु तु शमनार्थमिति व्यवस्था ॥ १५ ॥

दध्ना भुक्तवतो वामबाहुमध्ये शिरां भिषक् ।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ।
प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥ १६ ॥

दध्नेत्यादौ—दधिभोजन शोणितोत्क्लेशनार्थम् । वामबाहुमध्य इति कूर्परसन्धे-रधस्तात् । स्नेहस्वेदावप्यत्र कार्य्यौ सुश्रुतमवादात् । प्लीहान मर्दयेदिति शिराया

विद्धाया, तेन प्लीह्नो दुष्टरक्तं निःसरति ॥ १६ ॥

## माणाद्यगुडिका

माणमार्गामृतावासास्थिराचित्रकसैन्धवम् ।
नागरं तालखण्डञ्च प्रत्यग्रन्तु त्रिकार्षिकम् ॥
विडसौवर्चलक्षारपिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढके पचेत् ॥
सान्द्रीभूते गुडीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यत्कृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहर. ॥
योग परिकरो नाम्ना अग्निसन्दीपन. पर ॥ १७ ॥

माणेत्यादौ—मार्गोऽपामार्गः, स्थिरा शालपर्णी प्रत्यग्रमित्यभिनवम् । त्रिकार्षिकमिति प्रत्येक । परिकरो नाम्नेति परिकरो विरेकस्तत्कारकत्वात् परिकरो योग , उक्त हि "भवेत् परिकर. सङ्घे समारम्भविरेकयोः" इति ॥ १७ ॥

पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
चूर्णं पीतं विडार्द्धांशं प्लीहघ्नमुष्णवारिणा ॥ १८ ॥

पिप्पलीत्यादौ—द्विगुणाभया इत्येकभागापेक्षया द्वैगुण्यम् । एव विड्लवणस्याप्येकभागापेक्षयार्द्धभागत्व ज्ञेयम् ॥ १८ ॥

## पिप्पलीवर्द्धमानानि

क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥
जीर्णेऽजीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायन· ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोग सोऽवरः स्मृतः ॥
बृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयस स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥
पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानक· ॥

पिष्टास्ता बलिभिः पेया शृता मध्यबलैर्नरैः ।
शीतीकृता ह्रस्वबलैर्देहदोषामयान् प्रति ॥ १६ ॥

दशभि. पिप्पलीवर्द्धमानमाह क्रमेत्यादि—दश पिप्पल्यः यत्र वर्द्धन्ते तद्दिन दशपिप्पलिकम्, तेन दश पिप्पल्यः प्रत्यह वर्द्धनीया इत्यर्थः । उक्त हि "दशभिर्दशभिः शश्वत् पिप्पलीभिस्तु वर्द्धयेत्" इति । अतश्चोनविंशतिदिनैर्वृद्धिहानिक्रमेण एतेनैव सहस्र पूर्ण भवति । पयसा सार्द्धमित्यनेन पयसोऽपि वृद्धिरित्याहु, । केचित्तु चूर्णीकृता इत्यत्र शीतीकृता इति पठित्वा शीतकषायीकृता इति व्याख्यानयन्ति । पिप्पलीवर्द्धमानस्य त्रैविध्यमाह दशपैप्पलिक इत्यादि । षट्प्रकीर्तित इति षड्वृद्धया आचार्य्यैरुक्त इत्यर्थ । त्रिपिप्पलिपर्य्यन्त इति तिस्रः पिप्पल्य पर्य्यन्ते यस्य स तथा तेन पिप्पलीत्रयेण यत्र वृद्धि स प्रयोग उच्यते, तत्रैव प्रयोगसमाप्तौ पिप्पलीत्रयावस्थानम् । पञ्चभि. पञ्चभिः पिप्पलीभिर्वृद्धिस्तु व्यवह्रियते इति प्रतिपादयितु चक्रः स्ववचनमुपन्यस्यति पञ्चपिप्पलिक इत्यादि । विदेहेऽप्युक्तम्—"दशभिर्दशभि· शश्वत् पिप्पलीभिस्तु वर्द्धयेत् । पञ्चभि. पञ्चभिर्वापि शतादवतरेत् पुन" इति ॥ १६

## पिप्पलीचित्रकघृतम्

पिप्पलीं चित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत् ।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम् ॥ २० ॥

पिप्पलीत्यादि—अत्र पिप्पली च चित्रकञ्चेति समासो न कार्य्यः, तथा सति पिप्पलीमूलस्यैव ग्रहण स्यात्, तच्च न व्यवहारसिद्धम् ॥ २० ॥

## लोकनाथरसः

शुद्धसूतं द्विधा गन्धं खल्वे कुर्य्याच्च कज्जलीम् ।
सूततुल्यं जारिताभ्रं सम्मर्द्य कन्यकाम्बुना ॥
गोलं कुर्य्यात् ततो लोहं ताम्रञ्च द्विगुणीकृतम् ।
काकमाचीरसैः पिष्ट्वा गोलं ताभ्याञ्च वेष्टयेत् ॥
वराटिकाया भस्माथ रसतस्त्रिगुणं क्षिपेत् ।
ततश्च सम्पुटं कृत्वा मूषायुग्मं प्रकल्पयेत् ॥
तन्मध्ये गोलकं कृत्वा शरावेण पिधाप्य ।

पुटेद् गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत् ॥
शिवं सम्पूज्य यत्नेन द्विजांश्च परितोषयेत् ।
खादेद्रक्तिद्वयं चूर्णं मूत्रञ्चापि पिबेदनु ॥
मधुना पिप्पलीचूर्णं सगुडाम्बुहरीतकीम् ।
अजाजीं वा गुडेनैव भक्षयेदस्य मानतः ॥
यकृद्गुल्मोदरप्लीहश्वयथुज्वरनाशनम् ।
वह्निमान्द्यप्रशमनं सर्वान् व्याधीन् नियच्छति ॥ २१ ॥

लोकनाथरसे—शुद्धसूतं विशुद्धपारदं, रसशास्त्रोक्तमर्दनाद्यष्टसंस्कारसंस्कृतमिति यावत् । उक्तं च "विशुद्धो रसराजस्तु सत्यं पीयूषसोदरः । सदोषस्तु रसो वैद्यैर्यमोऽयमपरः स्मृतः" ॥ इति रसतरङ्गिण्याम् । विशुद्धिश्च सप्तकञ्चुकपरिहाराय नैसर्गिकदोषापहरणाय च क्रियते ॥ अष्टौ संस्कारास्तु रसशास्त्रे द्रष्टव्याः । अथवा जम्बीररसमर्दिताद् हिङ्गुलाद् ऊर्ध्वपातनेन रसो ग्राह्यः। स च विशुद्ध एव। द्विधा गन्धमिति पारदस्यैको भागः, गन्धकस्य च द्वौ भागौ ग्राह्यौ । गन्धकमपि नवनीताख्यं ग्राह्यं यद्धि 'आमलासार' इति नाम्ना ख्यातम् । तच्चापि सम्यग्विशुद्धं रसायने प्रयुज्यते । गन्धकशोधनविधिर्यथा—साज्यं भाण्डे पयः क्षिप्त्वा मुखं वस्त्रेण बन्धयेत् । तत्पृष्ठे गन्धकं क्षिप्त्वा शरावेण पिधापयेत् ॥ भाण्डं निक्षिप्य भूम्यन्तरूर्ध्वे देयं पुटं लघु । ततः क्षीरे द्रुतं गन्धं शुद्धं योगेषु योजयेत् ॥ अथवा—लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद् गन्धकजं रजः । विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिक्षिपेत् । एवं गन्धकशुद्धिः स्यात् सर्वरोगेषु योजयेत् ॥ सूतं गन्धं च पाषाणमये खल्वे एकत्र सम्मर्द्य कज्जलीं कुर्यात् । सूततुल्यमिति पारदतुल्यं, एकभागमित्यर्थः । जारिताभ्रं यथावच्छोधनपुटननिष्पन्नं अभ्रकम् । कज्जलीं अभ्रकञ्च एकत्र कन्यकाम्बुना कुमारीरसेन सम्मर्द्य गोलं कुर्यात् । ततश्च लौहमिति, लौहभस्म, ताम्रमिति अमृतीकृतं ताम्रभस्म । द्विगुणितमिति पृथक् पृथक् सूताद्द्विगुणितम् । ताभ्यामिति लौहताम्राभ्यां एकत्र काकमाचीरसपिष्टाभ्याम् । रसतस्त्रिगुणं वराटिकाभस्म गृहीत्वा, ग्रन्थान्तरदर्शनात् जम्बीरनीरेण मर्दयेत् । ततश्च सम्पुटमिति सम्पुटाकारं कृत्वा मूषायुग्मं प्रकल्पयेत् । शरावेणेति शरावसम्पुटेन । तन्त्रान्तरेष्वयं बृहल्लोकनाथ इति नाम्ना प्रसिद्धः । परं तत्र तत्र वराटिकाभस्मनो माने भेदो दृश्यते । रसेन्द्रसारसंग्रहे तु—सूताच्च द्विगुणं गन्धं वराटीसम्भवं रजः । पिष्ट्वा जम्बीरनीरेण मूषायुग्मं प्रकल्पयेदित्युक्तम् । अत्र द्विगुणमिति । अत्र गन्ध-

मिति पाठोऽसाधुर्नान्यत्रोपलम्भात्। तत्स्थाने देय, कार्य वा पठनीयम्। भैषज्य-रत्नावल्या "सूतान्नवगुण देय वराटीमम्भव रजः" इति पाठ समुपलभ्यते अधुना तु भैषज्यरत्नावलीकारमतमनुसृत्यैव व्यवहार प्रचरति। तथा च वराटीपर्यन्ताना भेषजाना एकत्र कन्याम्बुना काकमाचीरसेन च क्रमश सम्मार्दिताना गोलक क्रियते। तच्च शरावसम्पुटे निरुद्ध्य पच्यते। पाचनञ्च लघुपुटेनैव। अतएवास्माभि संस्कृताया भैषज्यरत्नावल्या गजपुटे इत्यत्र लघुपुटे इति पाठः स्वीकृत इति। "अस्य मानत" इत्यत्र 'तुल्ययोगतः' "अनुपानत" इति च पाठान्तरद्वयमुपलभ्यते[1] ॥२१॥

## पिप्पलीघृतम्

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम्।
पचेत् प्लीहाग्निसादादि-यकृद्रोगहरं परम् ॥ २२ ॥

पिप्पलीघृत—स्पष्टम् ॥ २२ ॥

## चित्रकघृतम्

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालं तद्‌द्विगुणं दधिमण्डं चतुर्गुणम् ॥
पञ्चकोलकतालीशक्षारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत् ॥
प्लीहगुल्मोदराध्मान-पाण्डुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरुशूलोदावर्त्तपीनसान् ॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति ॥ २३ ॥

चित्रकघृते—तुलाक्वाथ इति षष्ठीतत्पुरुष। आरनाल तद्‌द्विगुणमिति घृता-पेक्षया, एव दधिमण्डस्यापि चातुर्गुण्यम्। दधिमण्डो दधिमस्तु, क्षारो यवक्षार, लवण सैन्धवम्, अन्ये तु यवक्षार सर्जिक्षार, लवण पञ्चलवणमाहु ॥ २३ ॥

---

[1] अस्य टीकाकारकृता टीका नास्त्यत संशोधकेन स्वकृता टीकात्र सन्निवेशिता ॥

## रोहीतकघृतम्

रोहीतकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत्॥
पलिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत्॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम्।
तथा गुल्मज्वरश्वास-क्रिमिपाण्डुत्वकामलाः॥ २४॥

रोहीतकेत्यादि—वाग्भटस्य। श्रेष्ठा इत्यत्र कृत्वेति वाग्भटे पठ्यते। रोहीतको रोहड इति ख्यातस्तरुस्तस्य पञ्चविंशतिपलैः कोलप्रस्थद्वयेन मिलित्वा सप्तपञ्चाशत्पलानि क्वाथ्यानि स्युः, तेष्वष्टगुणं जलमुत्सर्गसिद्धं देयम्। पादशेषश्च कषायो द्विपलाधिकचतुर्दशशरावाः। वृन्दप्रसारके तु षोडशगुणं जलमुक्तम्। अन्ये तु जलद्रोणं दत्त्वा शेषमाढकं कषायमित्याहुः। तैः सर्वैश्चापि तुल्ययेति पञ्चकोलैस्तुल्यया पञ्चपलमानया इत्यर्थः। रोहीतकत्वचा पिष्टयेति योज्यम्॥ २४॥

## महारोहीतकघृतम्

रोहीतकात् पलशतं क्षोदयेद्बदराढकम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते॥
तस्मिन् दद्यादिमान् कल्कान् सर्वांस्तानक्षसम्मितान्॥
व्योषं फलत्रिकं हिङ्गु यमानीं तुम्बरु विडम्।
अजाजीं कृष्णलवणं दाडिमं देवदारु च॥
पुनर्नवां विशालाञ्च यवक्षारं सपौष्करम्।
विडङ्गं चित्रकञ्चैव हवुषां चविकां वचाम्॥
एतैर्घृतं विपक्वन्तु स्थापयेद्भाजने शुभे।
पाययेत् त्रिपलां मात्रां व्याधिं बलमवेक्ष्य च॥
रसकेनाथ यूषेण पयसा वापि भोजयेत्।
उपयुक्ते घृते तस्मिन् व्याधीन् हन्यादिमान् बहून्॥
यकृत्प्लीहोदरञ्चैव पार्श्वशूलमरोचकम्।
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम्॥

छर्द्यतीसारशमनं तन्द्राज्वरविनाशनम् ।
महारोहीतकं नाम्ना प्लीहघ्नन्तु विशेषतः ॥ २५ ॥

इति प्लीह-यकृच्चिकित्सा ।

महारोहीतकघृते—वदरचूर्णस्य आढक चतु षष्टिपलानि, अत्र एकेनैव जलद्रोणेन वदरचूर्णाढकसहितस्य रोहीतकपलशतस्य क्वाथ करणीय , तथैव निर्दिष्टत्वात् । तन्त्रान्तरेऽपि—'रोहीतकशत क्षुण्ण कोलचूर्णाढकान्वितम् । नि क्वाथ्य सलिलद्रोणे चतुर्भागस्थिते रस ' इति । अन्ये तु जलस्याल्पत्वमाशङ्क्य द्रोणपदमावृत्त्या रोहीतकपलशतमित्यनेन तथा वदराढकमित्यनेन च प्रत्येक योज्यम् । एतेनैकेन जलद्रोणेन रोहीतकपलशतस्य क्वाथ , अपरेण वदराढकस्येत्याहु , व्यवहारोऽप्यनेनैव । कृष्णलवण सौवर्चलमत्र आयुर्वेदसारे रुचकपाठात् ॥ २५ ॥

इति प्लीहयकृच्चिकित्सा-विवृति ।

# अथ शोथचिकित्सा ।

शुण्ठीपुनर्नवैरण्ड-पञ्चमूलशृतं जलम् ।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे ।
दशमूलं सर्वथा च वातशोथे विशेषत ॥ १ ॥

उत्सेधसाधर्म्यादनन्तर शोथचिकित्सामाह । शुण्ठीत्यादौ—पञ्चमूल महत् वृद्धव्यवहारात् । पानाहारपरिग्रह इति अन्नपानसंस्कारे । सर्वथेति कल्कक्वाथादिविधया ॥ १ ॥

क्षीराशन पित्तकृतेऽथ शोथे
त्रिवृद्गुडूचीत्रिफलाकषायम् ।
पिवेद्गवां मूत्रविमिश्रितं वा
फलत्रिकाच्चूर्णमथाक्षमात्रम् ॥ २ ॥

क्षीरेत्यादि—योगद्वयम् । गवामित्यादि द्वितीयो योग ॥ २ ॥

पृश्निपर्णीघनोदीच्य-शुण्ठीसिद्धन्तु पैत्तिके ॥ ३ ॥

अभया दारु मधुकं तिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं दार्वी त्रायमाणेन्द्रवारुणी ॥
एषां क्वाथः ससर्पिष्क श्वयथुज्वरदाहहा।
विसर्पतृष्णासन्ताप-सन्निपातविषापहा ॥ ४॥

पृश्निपर्णीत्यादि—स्पष्टम्। अभयेत्यादौ—सर्पि. प्रक्षेप्यम ॥ ३ ॥ ४ ॥

शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत् ५॥

शीतवीर्यैरिति शीतवीर्य्या काकोल्यादिशारिवाद्युत्पलादिगणा. तत्कृते स्नेहादिभिरभ्यङ्गादीन् कल्पयेत्। हिमजलैरिति शीतलजलैः ॥५॥

पुनर्नवाविश्वात्रिवृद्गुडूची-
सम्पाकपथ्यामरदारुकल्कम्।
शोथे कफोत्थे महिषाक्षयुक्तं
मूत्रं पिबेद्वा सलिलं तथैषाम् ॥ ६॥

श्लैष्मिकशोथचिकित्सामाह पुनर्नवेत्यादि—पुनर्नवादीना कल्क गुग्गुलुयुक्त गोमूत्रेण पिबेत्। पिबेद्वा सलिल तथैषामिति एषा पुनर्नवादीना क्वाथ वा गुग्गुलु गोमूत्रे प्रक्षिप्य पिबेत्। महिषाक्षो गुग्गुलु ॥ ६ ॥

कफे तु कृष्णासिकतापुराण-
पिण्याकशिग्रुत्वगुमाप्रलेप।
कुलत्थशुण्ठीजलमूत्रसेक-
श्चण्डागुरुभ्यामनुलेपनञ्च ॥ ७ ॥

कफे त्वित्यादौ सिकता वालुका, पुराणपिण्याकः पुराणसर्षपखलि, उमा अतसी, एभिर्मूत्रपिष्टैर्लेपः। उक्तञ्च वाग्भटे "कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसी। प्रलेपोन्मर्दने युञ्ज्यात् सुखोष्णा मूत्रकल्किता"। कुलत्थशुण्ठक्वाथेन तथा गोमूत्रेण च कुलत्थशुण्ठीसिद्धेन सेकः कार्य्यः। उक्त हि वाग्भटे "स्नान मूत्राम्भसि सिद्धे कुष्ठनक्तारिचित्रकै। कुलत्थनागराभ्या वा" इति। चण्डा चोरपुष्पी। अनुलेपन स्नानानन्तरमेव लेपनमिति चक्र. ॥ ७ ॥

अजाजिपाठाघनपञ्चकोल-
व्याघ्रीरजन्यः सुखतोयपीताः।

शोथं त्रिदोषं चिरजं प्रवृद्धं
निघ्नन्ति भूनिम्बमहौषधे च ॥ ८ ॥

अजाजीत्यादि—वाग्भटस्य । तेषां चूर्णमुष्णोदकेन पेयम् । एवं भूनिम्ब-महौषधयोरपि । यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पठ्यते, तथापि तत्र चविकैव ग्राह्या, गजपिप्पलीशब्देन चविकाया अप्यभिधानात्, यदुक्तं निघण्टौ—'चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते' इति । जतूकर्णादावपि चविकैव पठ्यते, तस्मात् चव्येव युक्ता । एतेन 'पिप्पल्यादिगणो नाम्ना चरके पठ्यते त्वयम् । योगेऽत्र चविकास्थाने ग्राह्या मातङ्गपिप्पली' इति वृन्दोक्तमतमपास्तम् । ननु चरके त्रिदोषजशोथस्यासाध्यत्वेनोक्तत्वात् कथं त्रिदोषं शोथं घ्नन्तीत्युक्तम् । नैवम् । चरके अहीनमामन्येत्यादिना ग्रन्थेनैकदोषस्य तथा नवस्य च सुखसाध्यत्वाभिधानेन द्विदोषजत्रिदोषजयोस्तथा चिरजस्य च कृच्छ्रसाध्यत्वमेवोक्तं न पुनरसाध्यत्वमिति ॥ ८ ॥

पुनर्नवानिम्बपटोलशुण्ठी-
तिक्तामृतादार्व्यभयाकषायः ।
सर्वाङ्गशोथोदरकासशूल-
श्वासान्वितं पाण्डुगदं निहन्ति ॥ ९ ॥

पुनर्नवेत्यादि—तिक्ता कटुकी, दारु देवदारु, वृन्दे त्वयं योगः शोथोदरे पठ्यते ॥ ९ ॥

आर्द्रकस्य रसः पीतः पुराणगुडमिश्रितः ।
अजाजीराशिनां शीघ्रं सर्वशोथहरो भवेत् ॥ १० ॥

आर्द्रकस्येत्यादि—स्पष्टम् ॥ १० ॥

पुनर्नवादारुशुण्ठीक्वाथे मूत्रे च केवले ।
दशमूलरसे वापि गुग्गुलुः शोथनाशनः ॥ ११ ॥

पुनर्नवेत्यादि—स्पष्टम् ॥ ११ ॥

बिल्वपत्ररसं पूतं सोषणं श्वयथौ त्रिजे ।
विड्सङ्गे चैव दुर्नाम्नि विदध्यात् कामलास्वपि ॥ १२ ॥
गुडपिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम् ।

**आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ १३ ॥**
**पुरो मूत्रेण सेव्येत पिप्पली वा पयोऽन्विता ।**
**गुडेन वाभया तुल्या विश्वं वा शोथरोगिणाम् ॥ १४ ॥**

सोषणमिति समरिचम् । गुडेत्यादौ—गुड एकभागमम· । पुर इति–पुर गुग्गुलुः । पिप्पली वा पयोऽन्वितेति पिप्पलीवर्द्धमानन्यायेन इतरकल्कवद्वा पिप्पली-कल्क· पयसा सेव्य । विश्व वेति गुडेन तुल्यमित्यत्रापि योज्यम् ॥ १२–१४ ॥

**गुडार्द्रकं वा गुडनागरं वा**
**गुडाभयां वा गुडपिप्पलीं वा ।**
**कर्षाभिवृद्ध्या त्रिपलप्रमाणं**
**खादेन्नरः पक्षमथापि मासम् ॥**
**शोथप्रतिश्यायगलास्यरोगान्**
**सश्वासकासारुचिपीनसादीन् ।**
**जीर्णज्वरार्शोग्रहणीविकारान्**
**हन्यात् तथान्यान् कफवातरोगान् ॥ १५ ॥**

गुडार्द्रक वेत्यादि—गुडार्द्रकादयश्चत्वारो योगा एते तुल्यभागा सन्तः प्रतिदिन मिलित्वा कर्षेण कर्षेण वर्द्धयितव्या· । एव द्वादशभिर्दिनैस्त्रिपल पूर्य्यते । ततस्त्रिपल कृत्वा प्रत्यह पक्ष मास वा यावत् खादेत् । किंवा प्रथमदिने कर्षमेक खादेत्, ततः कतिचिद्दिनानि कर्षस्यैवाभ्यास , तत परमपरकर्ष वर्द्धयेत्, तस्यापि पुनरभ्यासः । एव कर्षेण कर्षेणाभिवृद्धया यथा पक्षेण मासेन वा त्रिपल भवति तथा कार्य्यम् । अन्ये तु ब्रुवते पक्षपरोऽप्यथापिशब्दो मासमित्यनन्तर ज्ञेय , स च समुच्चयार्थः, तेन पक्ष मासञ्च व्याप्य सार्द्धमास व्याप्येत्यर्थः। सार्द्धमासेन च त्रिपल कर्षोपयोगात् प्रभृति प्रत्यह माषचतुष्टयाधिकाविधिना भवति । अस्मिन् व्याख्याने कर्षादारभ्य माषकचतुष्टयमेव वृद्धिर्नाधिका । व्यवहारोऽपीत्थमेव ॥ १५ ॥

**स्थलपद्ममयं कल्कं पयसालोड्य पाययेत् ।**
**प्लीहामयहरश्चैव सर्वाङ्गैकाङ्गशोथजित् ॥ १६ ॥**

स्थलपद्ममय कल्कमिति—स्थलपद्म माणकन्दः, स च पुराणो ग्राह्यः । कल्कमिति चूर्णम् ॥ १६ ॥

दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित् ॥ १७ ॥
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित् ॥ १८ ॥

दार्वित्यादौ—वर्षाभ्वित्यादौ—च योगे गोमूत्रेणैव पान ज्ञेयम् ॥ १७-१८ ॥

सिंहास्यामृतभण्टाकीक्काथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ १९॥

सिंहास्येति—सिंहास्य वासकमूलम् । भण्टाकी कण्टकारी ॥ १९ ॥

भूनिम्बविश्वकल्कं जग्ध्वा पेयः पुनर्नवाक्काथः ।
अपहरति नियतमाशु शोथं सर्वाङ्गगं नृणाम् ॥ २० ॥

भूनिम्बेत्यादौ—पेय पुनर्नवाक्काथ इत्यनुपानमिदम् । एतच्च पुनर्नवामूलकर्षं निःक्वाथ्य कार्य्यम् । अतोऽधिकमात्रया तु करणे भूरिभेषजत्वेनाग्निवधादिदोष स्यादिति । एव सर्वत्र क्वाथेनानुपान ज्ञेयम् ॥ २० ॥

शोथनुत् कोकिलाक्षस्य भस्म मूत्रेण वाम्भसा ।
क्षीरं शोथहरं दारुवर्षाभूनागरैः शृतम् ।
पेयं वा चित्रकव्योष त्रिवृद्दारुप्रसाधितम् ॥ २१ ॥

शोथनुदित्यादि—अम्भसेत्यन्त एको योगः, मूत्रेण कफे, अम्भसेति पित्ते । शृतमित्यन्तो द्वितीयः । चित्रकेत्यादिस्तृतीय. । अत्रापि क्षीरमिति योज्यम् ॥ २१

पुनर्नवामूलकपित्थदारु-
च्छिन्नोद्भवाचित्रकमूलसिद्धाः ।
रसा यवाग्वश्च पयांसि यूषाः
शोथे प्रदेया दशमूलगर्भाः ॥ २२ ॥

पुनर्नवेत्यादौ—कपित्थस्य फलम् । पुनर्नवादीनामर्द्धशृत कृत्वा दशमूलस्यानुरूप कल्क दत्वा रसादय साध्या इत्यर्थः ॥ २२ ॥

## क्षारादिगुडिका

क्षारद्वयं स्याल्लवणानि चत्वा-
र्य्ययोरजोव्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं
मुस्ताजमोदामरदारुबिल्वम् ॥

कलिङ्गकाश्चित्रकमूलपाठे
यष्ट्याह्वयं सातिविष पलांशम् ।
सहिङ्गुकर्षं तनुशुष्कचूर्णं
द्रोणं तथा मूलकशुण्ठकानाम् ॥
स्याद्भस्मनस्तत्सलिलेन साध्य-
मालोड्य यावद्घनमप्यदग्धम् ।
स्त्यानं ततः कोलसमाश्च मात्रां
कृत्वा सुशुष्कां विधिना प्रयुञ्ज्यात् ॥
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥
सौवर्च्चलं सैन्धवञ्च विडमौद्भिदमेव च ॥
चतुर्लवणमत्र स्याज्जलमष्टगुणं भवेत् ॥ २३ ॥

क्षारेत्यादि—क्षारद्वयं यवक्षारमर्जिकाक्षारौ । लवणानि चत्वारीति सामुद्रवर्जितानि । अयोरजो लोहचूर्णं मारितपुटित ग्राह्यम् । पलांशमिति प्रत्येकम् । अणुशुष्कचूर्णमिति शुष्कसूक्ष्मचूर्णमित्यर्थः तत्सलिलेनेति, क्षारसलिलेन क्षारद्वयादिचूर्णापेक्षया चतुर्गुणेन, अन्ये त्वष्टगुणमाहुः । अत्र मूलकभस्मद्रोणे षड्द्रोणं वा जल दत्त्वा त्रिभागावशिष्टमर्द्धभागावशिष्ट वा कार्य्यम्, ततः परिस्राव्यम् ततः क्षारद्वयादिचूर्णापेक्षया चतुर्गुणं क्षारजल गृहीत्वा पक्तव्यम् । पाकाच्च घनीभावे जाते क्षारद्वयादिचूर्णप्रक्षेप इत्याहु. ॥ २३ ॥

## पुनर्नवाद्यं घृतम्

पुनर्नवाचित्रकदेवदारु-
पञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये
घृतोत्तमं शोथनिसूदनञ्च ॥२४॥

पुनर्नवेत्यादौ—पञ्चोषणं पञ्चकोलम् ॥ २४ ॥

## स्वल्पपुनर्नवाघृतम्

पुनर्नवाक्वाथकल्कसिद्धं शोथहरं घृतम् ॥ २५ ॥

पुनर्नवेत्यादि—स्पष्टम् ॥ २५ ॥

## पञ्चकोलाद्यं घृतम्

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः ।
पुनर्नवाया कल्केन घृतं शोथविनाशनम् ॥ २६ ॥

रस इत्यादि—रस क्वाथ इत्यर्थः। पञ्चकोलकुलत्थयोरिति द्विवचननिर्देशात् पञ्चकोलस्य मिलित्वा एको भाग , अपरश्च कुलत्थानामिति वदन्ति ॥ २६ ॥

## शुण्ठीघृतम्

विश्वौषधस्य कल्केन दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम् ॥ २७ ॥

शुण्ठीघृते—पाण्डुतामयमिति पाण्डुरोगम् ॥ २७ ॥

## चित्रकाद्यं घृतम्

सचित्रका धान्ययमानिपाठाः
सदीप्यकत्र्यूषणवेतसाम्ला ।
विल्वात् फलं दाडिमयावशूकं
सपिप्पलीमूलमथापि चव्यम् ॥
पिष्ट्वाक्षमात्राणि जलाढकेन
पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात् ।
अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ २८ ॥

सचित्रकेत्यादौ—दीप्यक जीरकमिति निश्चल , तन्न, 'यवानक यवक्षार यमानी पञ्चकोलकम्, इति वाग्भटवचनविरोधात्। तस्माद्दीप्यकमजमोदा। वेतसाम्लोऽम्लवेतस । विल्वात् फलमित्यत्र निल्वात् पलमिति न पाठ , वाग्भटे 'बालविल्वञ्च कर्षांशम्' इत्युक्तत्वात् ॥ २८ ॥

## चित्रकघृतम्

क्षीरं घटे चित्रककल्कलिप्ते
दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलकल्कं
तक्रेण सिद्धं श्वयथुघ्नमग्र्यम्॥
अर्शोऽतिसारानिलगुल्ममेहां-
स्तद्धन्ति संवर्द्धयते च वह्निम्॥ २६॥

क्षीरमित्यादौ—दध्यागतमिति दधिभावेन परिणतम्। तेनेति यथोक्तदधि-मथनजातेन तक्रेणेत्यन्वयः। तज्ज घृतमिति यथोक्तदधिभव घृतमिति॥ २६॥

## माणकघृतम्

माणकक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति॥ ३०॥

माणकघृते माणकक्वाथार्थमष्टगुण जल देय न तु मृदुत्वाच्चतुर्गुणम्, तथा सति यवागूवत् क्वाथ स्यादिति। अन्ये तु तन्त्रान्तरदर्शनात् माणककन्दस्य पल-शत तोयद्रोणे पक्त्वा गृह्णन्ति। व्यवहारस्तु पूर्वेणैव। माणकन्द चार्द्रमेव गृह्णन्ति वृद्धा॥ ३०॥

## स्थलपद्मघृतम्

स्थलपद्मपलान्यष्टौ त्र्यूषणस्य चतुःपलम्।
घृतप्रस्थं पचेदेभिः क्षीरं दत्त्वा चतुःपलम्।
पञ्च कासान् हरेच्छीघ्रं शोथञ्चैव सुदुस्तरम्॥ ३१॥

स्थलपद्मघृते स्थलपद्म माणमूलमेव। त्र्यूषणस्य च मिलित्वा चतुः-पलम्॥ ३१॥

## शैलेयाद्यं तैलम्

शैलेयकुष्ठागुरुदारुकौन्ती-
त्वक्पद्मकैलाम्बुपलाशमुस्तैः।
प्रियङ्गुथौणेयकहेममांसी-

तालीशपत्रप्लवपत्रधान्यैः ॥
श्रीवेष्टकध्यामकपिप्पलीभि
पृक्कानखैर्वापि यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं
सिद्धं सुपिष्टैरपि च प्रदेहम् ॥ ३२ ॥

शैलेयेत्यादौ—कौन्ती रेणुका, पलाश शटी; थौणेयक ग्रन्थिपर्णम्, छान्दसत्वादत्र सकारलोप । हेम नागकेशरम्, सव कैवर्त्तमुस्तकम्, श्रीवेष्टको नवनीतखोटी, ध्यामक गन्धतृणम् एषा कल्क, जल चतुर्गुणमर्थात् । यथोपलाभमिति यथालाभम् । तैल सिद्ध सुपिष्टैरिति—शैलेयादिभिः सुपिष्टैस्तैल सिद्धमुशन्ति, तथा तैरेव सुपिष्टै प्रदेहश्चोशान्ति कथयन्ति इच्छन्ति वा ॥ ३२ ॥

## शुष्कमूलाद्यं तैलम्

शुष्कमूलकवर्षाभू-दारुरास्नामहौषधै ।
पक्कमभ्यञ्जनात् तैल सशूलं श्वयथुं जयेत् ॥ ३३ ॥

शुष्कमूलकेत्यादि—स्पष्टम् ॥ ३३ ॥

## पुनर्नवावलेहः

पुनर्नवामृतादारु-दशमूलरसाढके ।
आर्द्रकस्वरसप्रस्थे गुडस्य तु तुलां पचेत् ॥
तत् सिद्धं व्योषपत्रैला-त्वक्चव्यैः कार्षिकै पृथक् ।
चूर्णीकृतै विपेच्छीते मधुन कुडवं लिहेत् ॥
लेहः पौनर्नवो नाम शोथशूलनिसूदनः ।
श्वासकासारुचिहरो वलवर्णाग्निवर्द्धनः ॥ ३४ ॥

पुनर्नवेत्यादौ—पुनर्नवादीना दशमूलान्ताना मिलित्वा चतु षष्टिपलानि, जलस्य चतु षष्टिशरावा, शेषस्तु आढक । व्योषेत्यादौ—सहार्थे उपलक्षणे वा तृतीया । मधुन कुडवमष्टौ पलानि । शूलशोथनिसूदन इति पाठान्तरम्, आयुर्वेदसारेऽपि कफशोथविनाशन इत्युक्त ॥ ३४ ॥

## दशमूलहरीतकी

दशमूलकषायस्य कंसे पथ्याशतं पचेत् ।

तुलां गुडाद् घने दद्याद्व्योषचारं चतु पलम् ॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे ।
दशमूलीहरीतक्य शोथान् हन्यु सुदारुणान् ॥
ज्वरारोचकगुल्मार्शो-मेहपाण्डूदरामयान् ।
प्रत्येकमेव कर्षांशं त्रिसुगन्धमितो भवेत् ॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा ।
एतन्मानेन तुल्यत्वं तेन तत्रापि वर्ण्यते ॥ ३५ ॥

दशमूलेत्यादो—कंस इत्याढक । अत्र कषायस्य कसमानतानिर्देशेन अनुक्तमपि क्वाथ्यजलयोर्मानमनुमीयते, यतः क्वाथ कसश्चतु.षष्टिपले क्वाथे जलद्रोण-दानाच्चतुर्भागावशेषे सति भवति । पथ्याशतमाकृतिमानात् । व्योषचारच्चतु पलमिति मिलित्वा, निर्देशस्य मानप्रधानत्वात् । त्रिसुगन्धन्तु प्रत्येक सुवर्णांश कर्षांशम् , निर्देशस्य द्रव्यप्रधानत्वात् । प्रस्थार्द्ध मधुन इति षोडशपलानि । एतत्प्रयोगोक्तमान-संवादाच्चरकोक्तकसहरीतक्यामपि प्रक्षेप्यद्रव्यमान कल्पनीयमित्याह प्रत्येकमित्यादि । इत इति सप्तम्यन्तात् तसि अत्रेत्यर्थ । चरके पठ्यतेऽन्यथेति एतेन पाठभेद , पर न तु योगभेद इत्यर्थ. । एतेन मानभेदाद् योगभेद इति वृन्दोक्तमपास्तम् ॥३५॥

## कंसहरीतकी

द्विपञ्चमूलस्य पचेत् कषाये
कंसेऽभयानाञ्च शतं गुडाच्च ।
लेहे सुसिद्धे च विनीय चूर्णं
व्योषत्रिसौगन्ध्यमुपास्थिते च ।
प्रस्थार्द्धमात्रं मधुन सुशीते
किञ्चिच्च चूर्णादपि यावशूकात्
एकाभयां प्राश्य ततश्च लेहा-
च्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम
कासज्वरारोचकमेहगुल्मान्
प्लीहत्रिदोषोदरपाण्डुरोगान् ।
कार्श्यामवातावसृगम्लपित्तं

वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥
अत्र व्याख्यान्तरं नोक्तं
व्याख्या पूर्वैव यत् कृता ॥ ३६ ॥

चरके पठ्यतेऽन्यथेत्युक्तम् अतस्तमेव पाठभेदं दर्शयितुं चरकोक्तकसहरीतकीमाह द्विपञ्चमूलस्येत्यादि—लेह्याच्च शुक्तिमित्यर्द्धपलं प्राश्येति योज्यम् । व्योषत्रिसुगन्धयोर्यद्यप्यत्र मानं नोक्तम्, तथापि पूर्वोक्तदशमूलहरीतक्यनुसारेणात्रापि कल्पनीयम् । एवं यवक्षारस्यापि । किञ्चिच्छब्दोऽत्राप्यल्पवचनः, तेन व्योषक्षारयोर्मिलित्वा चतुःपलग्रहणेऽपि व्योषभागापेक्षया यवक्षारस्य किञ्चिन्न्यूनता कल्पनीयेत्यर्थः । वृन्दस्त्वाह—"किञ्चिच्च कर्षपर्य्यायः शुक्तिरर्द्धपलं तथा । सान्निध्यान्मधुनो मानं व्योषादेर्मिलितस्य च" इति ॥ ३६ ॥

लेपोऽरुष्करशोथं निहन्ति तिलदुग्धमधुनवनीतैः ।
तत्तरुतलमृद्भिर्वा शालदलैर्वापि न चिरेण ।
शोथे विषनिमित्ते तु विषोक्ता सम्मता क्रिया ॥ ३७ ॥

लेप इत्यादि—योगत्रयम् ॥ ३७ ॥

ग्राम्याब्जानूपपिशितलवणं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि सकृशरं निर्जलं मद्यमम्लम् ।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च ॥ ३८ ॥

इति शोथचिकित्सा ।

---

ग्राम्येत्यादौ—पिशितञ्च लवणञ्चेति समाहारः, तस्य विशेषणं ग्राम्याब्जानूपमिति । तत्र छागादिमांसं ग्राम्यम्, लवणञ्च यत् पाकेनाभिनिर्वृत्तं तत् ग्राम्यम् । अब्जं कच्छपादिमांसम्, लवणञ्च सामुद्रं करकचेति ख्यातं तदब्जम् । आनूपं शूकरादिमांसम्, लवणञ्च समुद्रतीरजं साम्भरीति ख्यातम्, तदप्यानूपम् । गौडं गुडविकारम् । धाना अङ्कुरितभृष्टयवाः । वल्लूरं शुष्कमांसम् । समशनं पथ्यापथ्ययोरेकत्र भोजनम् । अरात्राविति दिने ॥ ३८ ॥

इति शोथचिकित्सा-विवृतिः ।

# अथ वृद्धिव्रध्नचिकित्सा ।

गुग्गुलुं रुवुतैलं वा गोमूत्रेण पिबन् नर ।
वातवृद्धिं निहन्त्याशु चिरकालानुवन्धिनीम् ॥ १ ॥

पूर्वोक्तसङ्गत्यैव शोथानन्तर वृद्धिव्रध्नचिकित्सितमुच्यते । वृद्धि कुरण्ड । गुग्गुलुमित्यादि—गोमूत्रपलद्वये एरण्डतैलपिण्डितगुग्गुलुमाषकाष्टक प्रक्षिप्य पेयम् । तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेक प्रक्षिप्य पिवेत् । इमौ योगौ क्रमात् कफानुवन्धे वाते च योज्यावित्याहु ॥ १ ॥

सक्षीरं वा पिवेत् तैलं मासमेरण्डसम्भवम् ।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा ।
पाने वस्तौ रुवोस्तैलं पेयं वा दशकाम्भसा ॥ २ ॥

सक्षीरमित्यादि—सुश्रुतस्य । गव्यदुग्ध पल २, एरण्डतैल कर्ष १, अय योग पित्तानुवन्ध इत्याहु । पुनर्नवातैलन्तु पुनर्नवाक्वाथकल्काभ्या साध्यमित्याहु । पाने वस्ताविति पूर्वेण सह सम्वध्यते । रुवोस्तैलमेरण्डतैलम् । दशकस्य दशमूलस्याम्भसा क्वाथेन पेयम् ॥ २ ॥

चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम् ।
क्षीरपिष्टै प्रदेह स्याद्दाहशोथरुजापहः ॥ ३ ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम् ॥ ४ ॥
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ॥ ५ ॥

पैत्तिकवृद्धिभेषजमाह चन्दनमित्यादि—पद्म पद्मकेशरम् । रक्तजे रक्तमोक्षणमिति अपक्वरक्तजवृद्धौ रक्तमोक्षण जलौकोभि कार्य्यं, सुश्रुतमवादात् ॥ ३–५ ॥

श्लेष्मवृद्धिन्तूष्णवीर्य्यैर्मूत्रपिष्टै प्रलेपयेत् ।
पीतदारुकषायञ्च पिवेद्वा मूत्रसंयुतम् ॥ ६ ॥

श्लेष्मेत्यादौ—उष्णवीर्य्यैरिति अजगन्धादिभि. मिश्रकोक्तैः । पीतदारु देवदारु, गोमूत्रेणैव देवदारुक्वाथः कार्य्यमित्याहु । व्यवहारस्तु प्रक्षेपविधया । वाग्भटे तु—"गोमूत्रेण पिबेत् कल्कं श्लैष्मिके पीतदारुजम्" इत्युक्तम् ॥ ६ ॥

स्विन्नं मेदःसमुत्थन्तु लेपयेत् सुरसादिना ।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतै ॥ ७ ॥

स्विन्नमित्यादि—सुश्रुतस्य । गोमयपिण्टादिना मृदु स्विन्नम् । चरके "हृदय वृषणौ दृष्टौ स्वेदयेन्मृदु वा न वा" इत्युक्तत्वात् । सुरसादिना सुरसादिगणेन शिरोविरेचनद्रव्यै पिप्पलीमरिचविडङ्गापामार्गादिभिः संशोधनसंशमनीयोक्तैः मूत्रमयुतैरिति मूत्रपिष्टैर्लेपयेदिति पूर्वेणान्वय॰ ॥ ७ ॥

संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ।
सीवन्या पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन वै ॥ ८ ॥

मूत्रजवृद्धिचिकित्सामाह, संस्वेद्येत्यादि—सुश्रुतस्य । मूत्रप्रभवामिति मूत्रवेगसन्धारणजा, संस्वेदनं कर्त्तव्यं, शस्त्रकर्मवेदनानिवारणार्थं त्वगादिमृदुकरणार्थञ्च, वस्त्रपट्टेन घटिकाकृतिवस्त्रेण वेष्टनं कर्त्तव्यं, शस्त्रकर्मणः सौकर्य्यार्थं व्रीहिमुखेन शस्त्रविशेषेण वेध्यः । व्यधश्च मूत्रस्रावणार्थम् । एतदनन्तरं यदाह सुश्रुत —"अथात्र द्विमुखीं नाडीं दत्वा विस्रावयेद्भिषक् । मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत्" इति ॥ ८ ॥

शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ९ ॥

अप्राप्तफलकोषान्त्रवृद्धिचिकित्सामाह, शङ्खेत्यादि—सुश्रुतस्य । त्यक्त्वा सेवनीमिति केशान्तसेवनीं मर्मत्वात् परित्यज्य, अतएवोक्तं वाग्भटे 'षट् कूर्चा सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः । शस्त्रेण ताः परिहरेत्' इति । व्यत्यासादिति वामकोषवृद्धौ दक्षिणे, दक्षिणकोषवृद्धौ तु वामे, यदि तु पुनरुभयतो वृद्धिस्तदोभयभागे । वाशब्दो विध्यन्तरापेक्षया ॥ ९ ॥

अङ्गुष्ठमध्ये त्वचं छित्त्वा दहेदङ्गविपर्य्यये ॥ १० ॥

अङ्गुष्ठेत्यादि—सुश्रुतस्य । हस्तस्य वृद्धाङ्गुष्ठमध्ये त्वङ्मात्रं छित्त्वा दहेत् न तु वातकफवृद्धिवत् स्नायुमपि । त्वक्शब्दस्य नपुंसकलिङ्गता समाधेया छान्दसत्वात् । अङ्गविपर्य्यय इति विपर्य्ययार्थं पूर्ववदिति ॥ १० ॥

रास्नायष्ट्यमृतैरण्ड-बलागोक्षुरसाधितः ।
काथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ११ ॥

रास्नेत्यादि—स्पष्टम् ॥ ११ ॥

तैलमेरण्डजं पीत्वा बलासिद्धपयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ १२ ॥

बलामिद्धपयोऽन्वितामिति। इह क्षीरसाधनपरिभाषया बलामूलसाधिते क्षीरे एरण्डतैलं प्रक्षिप्य पेयमित्यर्थः ॥ १२ ॥

हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ १३ ॥

हरीतकीमित्यादौ—तैलमेरण्डतैलमित्याहुः। अस्य योगस्य विरेचनत्वान्मूत्रेणैव पानमिच्छन्ति, अन्ये तु उष्णोदकेन पानमित्याहुः ॥ १३ ॥

गोमूत्रसिद्धां रुवुतैलभृष्टां
हरीतकीं सैन्धवचूर्णयुक्ताम्।
खादेन्नरः कोष्णजलानुपानां
निहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥ १४ ॥

गोमूत्रेत्यादि—पूर्वयोगापेक्षया, भृष्टामिति विशेषः। कोष्णजलानुपानामिति पाठपक्षे क्रियाविशेषणम् ॥ १४ ॥

त्रिफलाक्वाथगोमूत्रं पिबेत् प्रातरतन्द्रितः।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥ १५ ॥

त्रिफलेत्यादौ—गोमूत्र प्रक्षेप्यम् ॥ १५ ॥

सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसम्पिष्टं शोथघ्नं कफवातनुत् ॥ १६ ॥

सरलेत्यादौ—सरल सरलकाष्ठ, लेपोऽयं योगः ॥ १६ ॥

भृष्टो रुवुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥ १७ ॥

भृष्ट इत्यादियोगो भक्षणविधया ॥ १७ ॥

गव्यं घृतं सैन्धवसम्प्रयुक्तं
शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं
हन्यात् कुरण्डं चिरजं प्रवृद्धम् ॥ १८ ॥

शम्बूकभाण्ड इति—शम्बूकरूपभाण्डे, शम्बूकभाण्डञ्च सघस्क ग्राह्य, न तु

पुराणमित्याहु । घृतात् पादिकञ्च सैन्धवमिति च वदन्ति । लेपविधया योज्यमेतत् ॥ १८ ॥

ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्दितम् ।
त्र्यहाद्गोपयसा पीतं सर्ववृद्धिनिवारणम् ॥ १६ ॥
रुद्रजटामूललिप्ता करटव्यङ्कचर्मणा ।
वद्धा वृद्धि शमं याति चिरजापि न संशय ॥ २० ॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम् ।
लेपो वृद्धयामयं हन्ति बद्धमूलमपि दृढम् ॥ २१ ॥

ऐन्द्रीत्यादि—ऐन्द्री गोरक्षकर्कटी । रुद्रजटेति रुद्रजटा रुजड इति ख्याता । आदौ रुद्रजटामूलकल्केन लिप्त्वा तदनु करटवी कटा इति ख्याता नकुलाकारा प्रायशो वृक्षोपरि तिष्ठति, तस्या अङ्कचर्मणा क्रोडचर्मणा वद्धा वृद्धिरित्यर्थ । निष्पिष्टमित्यादि—रूपिका अर्कपर्णं ॥ १६—२१ ॥

वचासर्षपकल्केन प्रलेपो वृद्धिनाशन ॥२२॥

वचेत्यादि—स्पष्टम् ॥ २२ ॥

लज्जागृध्रमलाभ्याञ्च लेपो वृद्धिहरः पर ॥ २३ ॥

लज्जेत्यादौ—लज्जा वराहक्रान्ता, गृध्रपक्षिणो मल विट् ॥ २३ ॥

मूलं विल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्बिश्वौषधारुष्करम् ।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितं
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं वध्नजित् २४

सम्प्रति व्रध्नचिकित्सामाह । व्रध्नलक्षणञ्च यद्यपि रुग्विनिश्चये नास्ति तथापि तन्त्रान्तरादनुसर्त्तव्यम्, यथा, 'अत्यभिष्यन्दिगुर्वन्नसेवनान्निचय गत । करोति ग्रन्थिवच्छोथ दोषो वङ्क्षणसन्धिषु । ज्वरशूलाङ्गदाहाढ्य त व्रध्नमिति निर्दिशेत्' इति । व्रध्नस्तु लोके भाडुभीति नाम्ना ख्यातः । मूलमित्यादि—वाग्भटस्य । मूलमिति पञ्चयन्तैः सर्वैर्योज्यम् । अरलुक' श्योनाक अग्निश्चित्रकः, श्यामा वृद्धदारकः, पूतिकरञ्जो लाटाकरञ्जः, काञ्जिककोष्णतोयमथितानामन्यतमेन पान प्रकृत्याद्यपेक्षया ज्ञेयम् ॥ २४ ॥

अवीक्षीरेण गोधूमकल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद् ब्रध्नशूलहरं परम् ॥ २५ ॥

अवीक्षीरेणेत्यादि—वाग्भटस्य। अवीक्षीरेण गोधूमकुन्दुरुणी पिष्ट्वा लेप कार्य्यं, एक एवाय योग। वाशब्द पूर्व्वयोगापेक्षया। अतएव वाग्भटे वाशब्द-स्थाने चकार पठ्यते। अपरे तु योगद्वयमाहु.। कुन्दुरु स्वनामख्यातम् ॥ २५ ॥

मृतमात्रे तु वै काके विशस्ते सम्प्रवेशयेत्।
ब्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥ २६ ॥

मृतमात्र इत्यपि वाग्भटस्य। मृतमात्र इति सद्योमारिते। विशस्त इति पाटिते। काकस्य क्रोड पाटयित्वा तत्र कोष्णे ब्रध्न प्रवेशनीय ततो बन्धः कार्य्य. ॥२६॥

अजाजी हवुषा कुष्ठं गोधूमं वदराणि च।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद् ब्रध्नप्रलेपनम् ॥ २७ ॥

अजाजीत्यादि—स्पष्टम् ॥ २७ ॥

## बृहत्सैन्धवाद्यं तैलम्

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम्।
ह्रीवेरं मधुकं भार्गीं देवदारु सनागरम् ॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम्।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम् ॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च।
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत् ॥
ब्रध्नोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्।
आनाहमश्मरीञ्चैव हन्यात् तदनुवासनात् ॥२८॥

सैन्धवाद्यतैल—निचुलो वेतस', श्यामा त्रिवृतेति वैद्यप्रसारकसवादात्। नीलिनी नीलवृक्षा। चतुर्गुणजलेन पाक'। तैल वेति तिलतैल वा ॥ २८ ॥

## शतपुष्पाद्यं घृतम्

शतपुष्पामृतादारु चन्दनं रजनीद्वयम्।
जीरके द्वे वचानाग त्रिफलागुग्गुलुत्वचः ॥

मांसी कुष्ठं पत्रकैलारास्नाशृङ्गीः सचित्रका ।
क्रिमिघ्नमश्वगन्धश्च शैलेय कटुरोहिणीम् ॥
सैन्धवं तगरं पिष्ट्वा कुटजातिविषे समे ।
एतैश्च कार्षिकै कल्कैर्घृतप्रस्थं विपाचयेत् ॥
वृषमुण्डितिकैरण्ड निम्बपत्रभव रसम् ।
कण्टकार्य्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत् ॥
सिद्धमेतद् घृतं पीतमन्त्रवृद्धिमपोहति ।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिञ्च दारुणाम् ।
मूत्रवृद्धिं श्लीपदं वा यकृत्प्लीहानमेव च ।
शतपुष्पाघृतं रोगान् हन्यादेव न संशयः ॥ २९ ॥

शतपुष्पाघृत स्पष्टम् ॥ २९ ॥

घृतं सौरेश्वरं योज्यं ब्रध्नवृद्धिनिवृत्तये ॥ ३० ॥

इति वृद्धिब्रध्न-चिकित्सा

---

सौरेश्वरघृत वक्ष्यमाणम् ॥ ३० ॥

इति वृद्धिब्रध्नचिकित्साविवृतिः ।

---

# अथ गलगण्डगण्डमालापची-ग्रन्थ्यर्बुदचिकित्सा ।

---

यवमुद्गपटोलानि कटु रूक्षञ्च भोजनम् ।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥ १ ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपित ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥ २ ॥
सर्षपान् शिग्रुवीजानि शणवीजातसीयवान् ।
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत् ॥

गण्डानि ग्रन्थयश्चापि गलगण्डाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥३॥
जीर्णकर्कारुकरसो विडसैन्धवसंयुत ।
नस्येन हन्ति तरुणं गलगण्डं न संशय ॥ ४ ॥
जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम् ।
पिवेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥ ५ ॥
सूर्य्यावर्त्तरसोनाभ्यां गलगण्डोपनाहने ।
स्फोटास्रावै शमं याति गलगण्डो न संशय ॥ ६ ॥
तिक्तालावुफले पक्वं सप्ताहमुषित जलम् ।
मद्यं वा गलगण्डघ्नं पानात् पथ्यानुसेविन ॥ ७ ॥
कटुफलचूर्णान्तर्गलघर्षो गलगण्डमपहरति ।
घृतमिश्रं पीतामिव श्वेतागिरिकर्णिकामूलम् ॥ ८ ॥

उक्तसङ्गत्यैव गलगण्डादयोऽभिधीयन्ते । तण्डुलोदकेत्यादि । हस्तिकर्णं, पलाशस्य मूलेनेत्यन्वय सर्वेऽपि गलगण्डाः वातकफमेदोभिरारभ्यन्ते, न तु पित्तेन व्याधिस्वभावात् । अतो गलगण्डोक्तलेपा कोष्णा एव देया इत्याहु । जीर्णकर्कारु परिणततिक्तालावुः, अन्ये तु कूष्माण्डभेद इत्याहु, व्यवहारस्तु पूर्वेणैव । तरुणमित्यचिरजातम् । जलकुम्भी पाङ्घा, तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिवेत् । उपनाहनमुष्णवहुलेपः । स्फोटास्रावैरुष्णोपनाहकृतै । श्वेतेति—श्वेतगिरिकर्णिका श्वेतापराजिता ॥ १—८ ॥

महिषीमूत्रविमिश्रं लौहमलं संस्थितं घटे मासम् ।
अन्तर्धूममविदग्धं लिह्यान्मधुनाथ गलगण्डे ॥ ९ ॥
जिह्वाया पार्श्वतोऽधस्तच्छिरा द्वादश कीर्त्तिताः ।
तासां स्थूलशिरे कृष्णे छिन्द्याद् द्वे च शनैः शनै ॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान् ।
स्रुते रक्ते व्रणे तस्मिन् दद्यात् सगुडमार्द्रकम् ।
भोजनञ्चानभिष्यन्दि यूष कौलत्थ इष्यते ॥ १० ॥

कर्णयुग्मवहिःसन्धिमध्याभ्यासे स्थितञ्च यत् ।
उपर्य्युपरि तच्छिन्द्यात् गलगण्डे शिरात्रयम् ॥ ११ ॥

महिषीत्यादौ—पुराणलौहमल महिषीमूत्रे मास स्थापयित्वा अन्तर्धूम दग्ध्वा मधुना लिह्यादित्यर्थः । जिह्वाया इत्यादौ—कृष्णे स्थूलशिरे वडिशेन शनैः शनैः सगृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यन्वय । तस्मिन् व्रणे स्रुतरक्ते सति गुड-मार्द्रकमधाद्भक्षयेत् । अन्ये तु दद्यादिति पठन्ति, तन्मते भक्षणार्थमिति शेष । कर्णयुग्मवहि सन्धिमध्याभ्यास इति—कर्णयो पृष्ठसमीपे उपर्य्युपरिस्थितमित्य-न्वयः ॥ ९—११ ॥

## तुम्बीतैलम्

विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योपदारुभिः ।
कटुतुम्बीफलरसे कटुतैलं विपाचितम् ॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥ १२ ॥

तुम्बीतैले—उग्रा वचा । कटुतुम्बीफलरस इति परिणततिक्ततुम्बीफलस्य चतुर्गुणे स्वरसे इत्यर्थः । उक्त हि वाग्भटे—रूढायास्तिक्ततुम्ब्याश्च रसे तैलाच्चतुर्गुणे" इति ॥ १२ ॥

## अमृताद्यं तैलम्

तैलं पिवेच्चामृतवल्लिनिम्ब-
हंसाह्वयावृक्षकपिप्पलीभिः ।
सिद्धं वलाभ्याञ्च सदेवदारु
हिताय नित्यं गलगण्डरोगी ॥ १३ ॥

तैलमित्यादि—सुश्रुतस्य । अमृतवल्ली गुडूची, वृक्षक कुटज , हंसाह्वया हंसपादी, यदाह वाग्भटः "गुडूचीनिम्बकुटजहंसपादीवलाद्वयं । साधित पाययेत्तैल सकृष्णादेवदारुभिः" इति । अन्ये तु हिंसाह्वयेति पठित्वा कालाकड व्याख्या-नयन्ति । अमृतवल्ल्यादिभिः क्वाथकल्करूपैरिति चन्द्रिका । अन्ये तु एभि सर्वै कल्क जल चतुर्गुणमित्याहु ॥ १३ ॥

माक्षिकाढ्यः सकृत् पीत क्वाथो वरुणमूलज ।
गण्डमाला हरत्याशु चिरकालानुवन्धिनीम् ॥
पिष्ट्वा ज्येष्ठाम्बुना पेयाः काञ्चनारत्वच. शुभाः ।

विश्वभेषजसंयुक्ता गण्डमालाहराः पराः॥
आरग्वधशिफां क्षिप्रं पिष्ट्वा तण्डुलवारिणा।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत्॥
गण्डमालामयार्त्तानां नस्यकर्मणि योजयेत्।
निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम्॥ १४॥
कोषातकीनां स्वरसेन नस्यं
तुम्ब्यास्तु वा पिप्पलिसंयुतेन।
तैलेन वारिष्टभवेन कुर्य्याद्
वचोपकुल्ये सह माक्षिकेण॥ १५॥
ऐन्द्र्या वा गिरिकर्ण्या वा मूलं गोमूत्रयोगत।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि॥ १६॥
अलम्बुषादलोद्धृतात् स्वरसाद् द्वे पले पिबेत्।
अपच्या गण्डमालायाः कामलायाश्च नाशनः॥ १७॥
गलगण्डं गण्डमालां कुरण्डांश्च विनाशयेत्।
पिष्टं ज्येष्ठाम्बुना मूलं लेपाद् ब्राह्मणयष्टिजम्॥ १८॥

अत पर गण्डमालाचिकित्सामाह—माक्षिकाढ्य इत्यादि। मकृदित्येकवार पीतः स्तुतिवादोऽयम्। ज्येष्ठाम्बु तण्डुलोदकम्। काञ्चनारः काञ्चनः। आरग्वधस्य शिफा मूलम्। कोषातकीत्यादि चत्वारो योगाः। पिप्पलीसयुतेनेति पद कोपातकीना स्वरसेनेत्यनेनापि सम्बध्यते। कोषातकी घोषक, तस्या॰ फलस्य स्वरसः, एव तिक्ततुम्ब्या अपि। अरिष्टभवेन निम्बफलजेन तैलेन तृतीयो योग। अरिष्टभवस्येति पाठान्तरे अरिष्टफलस्येत्यर्थः। वचोपकुल्य इति—वचोपकुल्ये पिष्ट्वा मधुना नस्य विधेयमित्यर्थः। ऐन्द्री गोरक्षकर्कटी, गिरिकर्णी श्वेतापराजिता, अलम्बुषा मुण्डितिका अलम्बुषो वा॥ १४–१८॥

## छुच्छुन्दरी तैलम्

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम्।
छुच्छुन्दर्य्या विपक्कन्तु क्षणात् तैलवरं ध्रुवम्॥ १९॥

अभ्यङ्गादित्यादौ—छुच्छुन्दरी छुछुया इति ख्याता मूषिकाकृति., तस्याः कल्को जल चतुर्गुणम्॥ १९॥

## शाखोटकबिम्ब्याद्ये तैले

गण्डमालापहं तैलं सिद्धं शाखोटकत्वचा।
बिम्ब्यश्वमारनिर्गुण्डी-साधितञ्चापि नावनम् ॥ २० ॥

गण्डमालापहमित्यादि—शाखोटकत्वचा स्वरसकल्करूपया, सुश्रुतेऽप्युक्त "शाखोटकल्कस्वरसेन सिद्ध तैल हित नस्यविरेचनेषु" इति। बिम्बीत्यादि योगान्तरम्। बिम्बी डिम्बिरिति ख्याता, तेलाकुचा इत्यन्ये। अश्वमार करवीर। बिम्ब्यादीना मूलस्य कल्को जल चतुर्गुणमिति गयदास ॥ २० ॥

## निर्गुण्डीतैलम्

निर्गुण्डीस्वरसेनाथ लाङ्गलीमूलकल्कितम्।
तैलं नस्यान्निहन्त्याशु गण्डमालां सुदारुणाम् ॥ २१ ॥

निर्गुण्डीत्यादौ—निर्गुण्डीस्वरसश्चतुर्गुण ॥ २१ ॥

वनकार्पासिकामूलं तण्डुलैः सह योजितम्।
पक्त्वा तु पूपिकां खादेदपचीनाशनाय च ॥
शोभाञ्जनं देवदारु काञ्जिकेन तु पेषितम्।
कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ॥
सर्षपारिष्टपत्राणि दग्ध्वा भल्लातकैः सह।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम् ॥ २२ ॥

अपचीचिकित्सामाह वनेत्यादि—त्रयो भागास्तण्डुलाना भेषजस्यैकः ॥२२॥

अश्वत्थकाष्ठं निचुलं गवां दन्तञ्च दाहयेत्।
वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥ २३ ॥

अश्वत्थेत्यादौ—वराहमज्जयोगाल्लेप. ॥ २३ ॥

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मित्वेन्द्रवस्तिं परिवर्ज्य सम्यक्।
विदार्य्य मत्स्याण्डनिभानि वैद्यो
निष्कृष्य जालान्यनलं विदध्यात् ॥ २४ ॥

पार्ष्णिं प्रतीत्यादि—सुश्रुतस्य। पार्ष्णिर्गुल्फस्याधोदेश, पार्ष्णिमारभ्य ऊर्द्ध्वं द्वादशाङ्गुलानि मित्वा परिमाय इन्द्रवस्तिं द्व्यङ्गुल परित्यज्य विदार्य्य

जालानि मेदोजालानि मत्स्याण्डेन सदृशान्याकृष्याग्निमवचारयेदित्यर्थः। एवमपच्या मूलोच्छेदात् प्रशम ; यदाह भोज'—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम्। जङ्घयोः कण्डरा प्राप्य मत्स्याण्डसदृशान् बहून्। कुर्वन्तीत्यादि ॥ २४ ॥

मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक्
अङ्गुल्यन्तरितं सम्यगपचीनां प्रशान्तये ॥ २५ ॥

कक्षाकूर्परसन्धिगतापचीषु बाहुगतमेव कर्माह, मणिबन्धेत्यादि—सुश्रुतस्य। मणिबन्धो हस्तबाहुसन्धि, अत्र मणिबन्धादङ्गुलमेकं द्वयं वा परित्यज्य दाहः कार्य्यः ॥ २५ ॥

दण्डोत्पलाभवं मूलं बद्धं पुष्येऽपचीं जयेत्
अपामार्गस्य वा छिन्द्याज्जिह्वातलगते शिरे ॥ २६ ॥

दण्डोत्पलेत्यादि—दण्डोत्पला स्वनामख्याता। अपामार्गस्य वा मूलमिति योज्यम्। अपचीप्रदेश एव भेषजबन्धनम्। अत्रैव शस्त्रकर्मान्तरमाह छिन्द्यादित्यादि ॥ २६ ॥

## व्योषाद्यं तैलम्

व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च।
तैलमेभिः शृतं नस्यात् कृच्छ्रामप्यपचीं जयेत् ॥२७॥

व्योषमित्यादौ—जल चतुर्गुणम् ॥ २७ ॥

## चन्दनाद्यं तैलम्

चन्दनं साभया लाक्षा वचा च कटुरोहिणी।
एभिस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ २८ ॥

चन्दनमित्यादौ—अभया हरीतकी, न तु अभयमुशीर, 'वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः। तैल प्रसाधिते पीत समूलामपचीं जयेत्' इति वाग्भटसंवादात् ॥ २८ ॥

## गुञ्जाद्यं तैलम्

गुञ्जाहयारिश्यामार्क-सर्षपैर्मूत्रसाधितम्।
तैलन्तु दशधा पश्चात् कणालवणपञ्चक-

मरिचैश्चूर्णितैर्युक्तं सर्वावस्थागतां जयेत् ।
अभ्यङ्गादपचीं नाडीं वल्मीकार्शोऽर्बुदव्रणान् ॥ २६ ॥

गुञ्जेत्यादौ—हयारिः करवीरः तस्य मूलम् । श्यामा वृद्धदारकः । अर्कस्य क्षीरम् । गोमूत्रं चतुर्गुणं दत्त्वा दशधा पाकः । ततः कणापञ्चलवणचूर्णं मरिचचूर्णं प्रक्षिप्य प्रयोज्यम् । कणालवणपञ्चकमरिचैरित्येकपदम्, 'घृततैलवसामज्जवेशवारपयो दधि । माषयावनतोयाभम्' इतिवत् ॥ २६ ॥

ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम् ।
पक्वानापाट्य संशोध्य रोपयेद् व्रणभेषजैः ॥ ३० ॥

ग्रन्थिचिकित्सामाह ग्रन्थिष्वित्यादि—शोथप्रतिक्रियामिति—व्रणशोथाचिकित्सितम्, तच्च सौश्रुतद्विव्रणीयोक्तमपतर्पणादिविरेचनान्तमेकादशविधम् ॥ ३० ॥

हिंस्रा सरोहिण्यमृता च भार्गी
श्योनाकबिल्वागुरुकृष्णगन्धाः ।
गोपित्तपिष्टाः सह तालपर्ण्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ३१ ॥

हिंस्रेत्यादि—सुश्रुतस्य । हिंस्रा कालाकडा । कृष्णगन्धा शोभाञ्जनः । गोपित्तपिष्टा इत्यत्र गोजीश्च पिष्ट्वेति पाठान्तरे गोजी शाखोटकः, किन्तु गोजीपाठो युक्तः आयुर्वेदसारप्रामाण्यात् तथा सुश्रुतटीकाकृद्भिर्व्याख्यातत्वाच्च । तालपर्णी तालमूली । ३१ ॥

जलायुकाः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि
पिबेत् कषायाणि सशर्कराणि ॥ ३२ ॥

जलायुका इत्यादि—विद्वानित्यन्तं सुश्रुतस्य । काकोलिवर्गस्येति काकोल्यादिगणस्य ॥ ३२ ॥

द्राक्षारसेनेक्षुरसेन वापि
चूर्णं पिबेद्वापि हरीतकीनाम् ।
मधूकजम्ब्वर्जुनवेतसानां
त्वग्भिः प्रदेहानवतारयेच्च ॥ ३३ ॥

द्राक्षारसेनेत्यादि—स्पष्टम् ॥ ३३ ॥

हृतेषु दोषेषु यथानुपूर्व्या
　ग्रन्थौ भिषक् श्लेष्मसमुत्थिते च ।
स्विन्ने च विम्लापनमेव कुर्य्या-
　दंगुष्ठवेणुदृशदीसुतैश्च ॥ ३४ ॥

हृतेषु दोषेष्वित्यादि—वमनादिभिः तथा रक्तमोक्षणेन दोषेषु कफादि-रक्तान्तेषु हृतेषु सत्सु । यथानुपूर्व्येति—स्नेहस्वेदादिक्रम कृत्वेत्यर्थ. । दृशदीसुत शिलापुत्रक. । अत्र छन्दोभङ्गभय नाशङ्कनीयम्, अनन्तत्वाच्छन्दोमार्गाणाम् । क्वचित्तु सुश्रुतपुस्तके अगुष्ठलोहोपलवेणुदण्डैरिति पठ्यते, क्वचित्तु वेणुदृशदीसुतै-रिति ॥ ३४ ॥

विकङ्कतारग्वधकाकणन्ती-
　काकादनीतापसवृक्षमूलै· ।
आलेपयेदेनमलावुभार्गी-
　करञ्जकालामदनैश्च विद्वान् ॥ ३५ ॥

विकङ्कतेत्यादिमदनान्त—एको लेप इति चन्द्रिका । विकङ्कतो वयङ्कलिरिति ख्यात. । काकणन्ती गुञ्जा अस्या मूलम्, काकादनी काकतिन्दुकः, तापसवृक्ष पुत्रजीवकः, अलावु कटुतुम्वी, काला कालाकडा माञ्जिष्ठा वा ॥ ३५ ॥

दन्तीचित्रकमूलत्वक्स्नुह्यर्कपयसी गुडः ।
भल्लातकास्थि काशीशं लेपो भिन्द्याच्छिलामपि ॥३६॥

स्नुह्यर्कपयसीति स्नुह्यर्कयो· क्षीरम् । भल्लातकास्थि भल्लातकवीजम् । काशीश धातुकाशीशम् ॥ ३६ ॥

ग्रन्थ्यर्वुदादिजिल्लेपो मातृवाहककीटज· ॥ ३७ ॥

ग्रन्थीत्यादि—मातृवाहककीट सुखाशादिभवपदकीट इति ख्यातः ॥ ३७ ॥

स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वित ।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्वुदादिकान् ॥३८॥

स्वर्जिकेत्यादि—स्पष्टम ॥ ३८ ॥

ग्रन्थीनमर्मप्रभवानपक्का-
　नुद्धृत्य चाग्निं विदधीत वैद्य ।

क्षीरेण वैतान् प्रतिसारयेत्तु
संलिख्य संलिख्य यथोपदेशम् ॥ ३६ ॥

ग्रन्थीनित्यादि—सुश्रुतस्य । क्षारेण वेति विकल्पो दोषापेक्षया, तेन वाते वातकफेऽग्निः, पित्ते च क्षार इति । प्रतिसारयेदिति प्रलेपयेत् । यथोपदेशमिति यथाशास्त्रम । एतच्च अग्निं विदधीतेत्यनेनापि सम्बध्यते, तेनाग्निकर्मविधिना प्रतिसारणीयक्षारविधिना चेत्यर्थः ॥ ३६ ॥

ग्रन्थ्यर्बुदानाञ्च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः ।
ततश्चिकित्सेद्भिषगर्बुदानि
विधानविद् ग्रन्थिचिकित्सितेन ॥ ४० ॥

अर्बुदे ग्रन्थिचिकित्सितं सोपपत्तिकमतिदिशति ग्रन्थ्यर्बुदानामित्यादि—अविशेष इवाविशेष इह ज्ञेयः, तेन सुश्रुतोक्तभेदोऽपि भवत्युक्तः । सुश्रुते हि पृथक् ग्रन्थिकलक्षणमुक्त्वा अर्बुदलक्षणञ्च मात्रप्रदेश इत्यादिना पृथगेवोक्तम्, तस्मात् स्तोकविशेषे सत्यपि प्रायेणाविशेषादिह ग्रन्थिचिकित्सैवातिदिश्यतेऽर्बुदे । विधानविदिति दाहादिविधिज्ञः ॥ ४० ॥

वातार्बुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथ वेशवारैः ।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च ॥ ४१ ॥

वातार्बुद इत्यादौ—नाड्येति नाडीस्वेदविधिना ॥ ४१ ॥

स्वेदोपनाहा मृदवस्तु पथ्याः
पित्तार्बुदे कायविरेचनञ्च ॥ ४२ ॥

स्वेदोपनाहा मृदव इति—मृदुस्वेदो द्रवस्वेद, मृदुरुपनाहस्तु काकोल्यादिद्रव्यकृतः । कायविरेचनमित्यत्र कायग्रहणं शिरोविरेचनव्युदासार्थम् ॥ ४२ ॥

विघृष्य चोडुम्बरशाकगोजी-
पत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ।
श्लक्ष्णीकृतैः सर्जरसप्रियंगु-
पत्तङ्गलोध्रार्जुनयष्टिकाह्वैः ॥ ४३ ॥

विटप्येत्यादौ—उडुम्बर फल्गु. कर्कशपत्रत्वात्। शाको मरुजस्तरु. कर्कशपत्र। गोजी दार्विशाक शाखोटको वा। क्षौद्रयुतैरिति सर्जरसादिभि सम्बध्यत। पत्तङ्ग रक्तचन्दनम्। अर्जुनस्थानेऽञ्जन इति पाठे अञ्जन स्रोतोऽञ्जनम्। यष्टिकाह यष्टिमधु॥ ४३॥

लेपनं शङ्खचूर्णेन सह मूलकभस्मना।
कफार्बुदापहं कुर्य्याद् ग्रन्थ्यादिषु विशेषतः॥

लेपनमित्यादि—स्पष्टम्॥ ४४॥

निष्पावपिण्याककुलत्थकल्कै-
र्मांसै प्रगाढैर्दधिमर्दितैश्च।
लेपं विदध्यात् क्रिमयो यथात्र
मुञ्चन्त्यपत्यान्यथ मक्षिका वा॥
अल्पावशिष्टं क्रिमिभिः प्रजग्धं
लिखेत् ततोऽग्निं विदधीत पश्चात्।
यदल्पमूलं त्रपुताम्रसीसैः
संवेष्ट्य पत्रैरथवायसैर्वा॥ ४५॥

निष्पावेत्यादि—सुश्रुतस्य। निष्पाव श्वेतशिम्बि। पिण्याकस्तिलकल्क क्रिमयो यथात्रेत्यतः परम् उत्पद्यन्त इति शेष। मुञ्चन्तीत्यत्र मूर्च्छन्तीति पाठे अपत्यान्यथ मक्षिका वेत्यत पर मुञ्चन्तीति शेष.। एतत्कर्मण फलमाह, अल्पावशिष्टमित्यादि सुश्रुतस्य। क्रिमिभिर्भक्षणादल्पावशिष्टत्वम्। लिखेदिति अल्पावशिष्ट पूतिमास शस्त्रेण छिन्द्यात्, अल्पावशिष्टस्य च छेदनेन आतुरस्य महान् क्लेश इति तात्पर्य्यम्। ततोऽग्निं विदधीतेति—शस्त्रच्छेदनानन्तरञ्चावशिष्टार्बुदमूलस्य सम्यगुच्छेदाय अग्निं विदधीत तप्तशलाकया दहेत्। अग्निकर्मणि कृतेऽपि यद्यर्बुदस्य मूल तिष्ठेत् तदा किं कर्त्तव्यमित्याह यदल्पमूलमित्यादि। अर्बुदस्य यदल्पमूल तत् त्रप्वादिलोहान्तानामन्यतमेन रचितै पत्रै संवेष्ट्य स्थापयेदिति व्याख्येयम्, न तु क्षाराथवचरणापेक्षया त्रप्वादिपत्रसंवेष्टनस्य पूर्वभावित्वमित्याहु। त्रप्वादिपत्रवेष्टनेन च तनुमूलस्यार्बुदस्य सङ्घर्षणात् स्वयमेवोपशमो भविष्यतीति भावः। त्रपु रङ्ग॥ ४५॥

क्षाराग्निशस्त्राण्यवतारयेच्च
मुहुर्मुहु प्राणमवेक्षमाण।

यदृच्छया चोपगतानि पाकं
पाकक्रमेणोपचरेद् यथोक्तम् ॥ ४६ ॥

विध्यन्तरमाह क्षाराग्नीत्यादि—यद्यपि सुश्रुते "सकृदेवोपहरेच्छस्त्रम्" इत्युक्तं तथापि अर्बुदस्य महामूलत्वात् न तत्र क्षारादयः सकृदवचारणीया इत्याह मुहुर्मुहुरिति । प्राणमेवच्यमाण इति यथा न बलहानिः स्यात् तथा कालविप्रकर्षं कृत्वा मुहुर्मुहु क्षारादीनवचारयेदित्यर्थः । अपक्वस्यार्बुदस्य चिकित्सामभिधाय पक्वस्य चिकित्सामाह, यदृच्छयेति कारणाप्रतिनियमेन अनियतमभिघातादिपाककारणं प्राप्येत्यर्थं, यत्तु निदाने 'न पाकमायान्ति' इत्युक्तं तत् प्रायिकमिति ज्ञेयम् । पाकक्रमेणेति पाकोक्तपाटनशोधनादिक्रमेण । यथोक्तमित्युपचारक्रियाविशेषणम् । सुश्रुते तु यथोक्तमित्यत्र विधिज्ञ इति पाठः ॥ ४६ ॥

सशेषदोषाणि हि योऽर्बुदानि
करोति तस्याशु पुनर्भवन्ति ।
तस्मादशेषाणि समुद्धरेत्तु
हन्युः सशेषाणि यथा विषाग्नी ॥ ४७ ॥

सशेषेत्यादि—स्पष्टम् ॥४७॥

उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नृणां पिडकार्बुदजातयः ॥ ४८ ॥

उपोदिकेत्यादौ—पिडकार्बुदजातय इति पिडकार्बुदप्रकारा इत्यर्थः ॥ ४८ ॥

उपोदिका काञ्जिकतक्रपिष्टा
तयोपनाहो लवणेन मिश्रः ।
दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्
दिने दिने रात्रिषु मर्मजानाम् ॥ ४९ ॥

उपोदिकेत्यादि—स्पष्टम् ॥ ४९ ॥

लेपोऽर्बुदजिद्रम्भामोचकभस्मतुषशङ्खचूर्णकृतः ।
शरटरुधिरार्द्रगन्धकयवजविडङ्गनागरैर्वाथ ॥ ५० ॥

लेप इत्यादौ—रम्भामोचकः कदलीकाण्डक, तस्य भस्म क्षार इत्यर्थः । शरट. कृकलास । यवजो यवक्षार ॥ ५० ॥

स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।
सीसकेनाथ लवणै पिण्डारकफलेन वा ॥ ५१ ॥

स्नुहीत्यादि चत्वार स्वेदा । स्नुहीगण्डीरिका स्नुहीकाण्ड । तप्तसीजुदण्डेन तथा तप्तसीसकेन तथा तप्तलवणेन तथा पिण्डारकफलमुत्स्विद्य पोट्टलिका बद्ध्वा स्वेद कार्य्य इत्यर्थ ॥ ५१ ॥

हरिद्रालोध्रपत्तङ्गगृहधूममनःशिलाः ।
मधुप्रगाढो लेपोऽयं मेदोऽर्बुदहर परः ॥ ५२ ॥
एतामेव क्रियां कुर्य्यादशेषां शर्करार्बुदे ॥ ५३ ॥
इति गलगण्ड-गण्डमालापचीग्रन्थ्यर्बुदचिकित्सा ।

---

हरिद्रेत्यादौ—पत्तङ्ग रक्तचन्दनम् ॥ ५२—५३ ॥
इति गलगण्डगण्डमालापचीग्रन्थ्यर्बुदचिकित्सा-विवृति ।

---

# अथ श्लीपदचिकित्सा ।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णै श्लीपदं समुपाचरेत् ॥ १ ॥

पूर्वोक्तसङ्गत्यैव श्लीपदचिकित्सितमुच्यते । लङ्घनेत्यादि—स्पष्टम् ।

धुस्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपै ।
प्रलेप श्लीपदं हन्ति चिरोत्थमतिदारुणम् ॥ २ ॥

धुस्तूरेत्यादि—स्पष्टम् ॥ २ ॥

निष्पिष्टमारनालेन रूपिकामूलवल्कलम् ।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि दृढम् ॥ ३ ॥

निष्पिष्टमित्यादौ—रूपिका अर्कमूलम् ॥ ३ ॥

पिण्डारकतरुसम्भववन्दाकाशिफा
जयति सर्पिषा पीता ।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम् ॥ ४ ॥

पिण्टाग्कनक स्वनामख्यात । बद्धा सूत्रेणेति अत्रापि बन्दाकशिफेति । (अथ-मथ बन्दाकशिफा मा ८ घृत तो २ पेयम् । अथवा श्लीपदाश्रयजघाया रक्तसूत्रेण बन्धनीया ॥ ४ ॥

छित्तश्चालेपने नित्यं चित्रको देवदारु वा ।
सिद्धार्थशिग्रुकल्को वा सुखोष्णमूत्रपेपित ॥ ५ ॥

छित्तश्चेत्यादि—गोमूत्रपिष्टास्त्रयो लेपा बोध्या । सिद्धार्थः श्वेतसर्षप ॥५॥

स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक् ।
कृत्वा गुल्फोपरि शिरां विध्येत्तु चतुरंगुले ॥ ६ ॥

स्नेहेत्यादि—सुश्रुतस्य । स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ, न तु स्वतन्त्रतया स्नेहो देयः सर्वश्लीपदाना कफप्रधानतया विरूक्षणीयत्वात् । अयञ्च गुल्फोपरि शिराव्यधो रक्तदुष्टौ सत्यामेव कार्य्य पश्चाद्भागे ॥ ६ ॥

गुल्फस्याध शिरां विध्येत् श्लीपदे पित्तसम्भवे ।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत् ॥ ७ ॥

पैत्तिकश्लीपदचिकित्सामाह, गुल्फस्याध इत्यादि—सुश्रुतस्य । पित्तघ्नञ्चेति चकाराद् कफघ्नीञ्च क्रिया कुर्य्यादिति ज्ञेयम्, श्लीपदाना कफप्रधानत्वात् ॥ ७ ॥

मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम् ।
पिष्ट्वारनालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥ ८ ॥
शिरा सुविदितां विध्येदंगुष्ठे श्लेष्मश्लीपदे ।
मधुयुक्तानि चाभीक्ष्णं कषयाणि पिवेन्नर ॥ ९ ॥
पिवेत् सर्पपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वापि यथावलम् ॥ १० ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ।
काञ्जिकेन पिवेच्चूर्णं मूत्रैर्वा वृद्धदारजम् ॥ ११ ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिवेन्नर ।
वर्षोत्थं श्लीपद हन्ति दद्रुकुष्ठं विशेषतः ॥ १२ ॥
गन्धर्वतैलभृष्टां हरीतकीं गोजलेन य पिवति ।
श्लीपदवन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ १३ ॥

धान्याम्लं तैलसंयुक्तं कफवातविनाशनम्।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥ १४ ॥
गोधावतीमूलयुक्तां खादेन्माषेण्डरीं नरः।
नयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः ॥ १५ ॥

मञ्जिष्ठामित्यादौ—हिंस्रा कालाकडाभेद। शिरामित्यादि—सुश्रुतस्य। सुविदितामिति व्यक्ताम्। अङ्गुष्ठ इति पादाङ्गुष्ठसन्निधौ। क्षिप्रमर्मण उपरि द्व्यङ्गुले शिराव्यधः कार्य्यः, क्षिप्रमर्मव्यधाद्धि मरणं स्यात्। तदुक्तं सुश्रुते "पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्र नाम मर्म, तत्र विद्धस्याक्षेपकेन मरणम्" इति। कषायणीति कफहरारग्वधादिगणमुष्ककादिगणक्वाथानि। पूतीकरञ्जच्छन्दजमिति कण्टकीकरञ्जपत्रस्वरस पलमानं कटुतैलाच्च प्रक्षिप्य पिबेत्। अनेनैव विधानेनेति कटुतैलप्रक्षेपेणेत्यर्थः। गन्धर्वः एरण्डः। गोजलं गोमूत्रम्। तैलसंयुक्तमित्यत्र कटुतैलम्। गोधावती गोहालियालता एतन्मूलस्यैको भागः, माषकलायस्य तु भागत्रयम् ॥ ८—१५ ॥

श्लीपदघ्नो रसोऽभ्यासाद् गुडूच्यास्तैलसंयुतः ॥ १६ ॥

श्लीपदघ्न इत्यादौ—गुडूच्या रस इति स्वरस क्वाथो वा। तैलमत्र कटुतैलम् ॥ १६ ॥

## वृद्धदारकचूर्णम्

त्रिकटु त्रिफला चव्यं दार्वीवरुणगोक्षुरम्।
अलम्बुषां गुडूचीञ्च समभागानि चूर्णयेत् ॥
सर्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम्।
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः ॥
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम्।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम्।
कुष्ठगुल्मानिलहरं वातश्लेष्मज्वरापहम् ॥ १७ ॥

त्रिकट्वित्यादौ—अलम्बुषा मुण्डिरी। वृद्धदारस्य तत्सममिति—त्रिकट्वादिसर्वचूर्णसमं वृद्धदारस्य चूर्णमित्यर्थः। सार्वकामिकमिति यथेच्छमित्यर्थः ॥ १७ ॥

पिप्पलीत्रिफलादारु नागरं सपुनर्नवम्।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥

काञ्जिकेन पिवेच्चूर्णं कर्षमात्रं प्रमाणतः ।
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च ।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥ १८ ॥

पिप्पलीत्यादौ—अग्निञ्च कुरुत इति विरेकेण पित्तहरणात् । अन्ये तु यस्मादग्निं घोरं कुरुते अतो भस्मकं नियच्छति प्रयच्छतीत्याहु ॥ १८ ॥

## कृष्णाद्यमोदकः

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम् ।
विंशतिश्च हरीतक्यो गुडस्य तु पलद्वयम् ।
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ १९ ॥

कृष्णेत्यादौ—कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम् । विंशतिश्च हरीतक्य इत्याकृतिमानात् । मध्वत्र मोदककरणोचितं देयम् ॥ १९ ॥

## सौरेश्वरघृतम्

सुरसो देवकाष्ठञ्च त्रिकटुस्त्रिफले तथा ।
लवणान्यथ सर्वाणि विडङ्गान्यथ चित्रकम् ॥
चविका पिप्पलीमूलं गुग्गुलुर्हवुषा वचा ।
यवाग्रजञ्च पाठा च शट्येला वृद्धदारकम् ॥
कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत् ।
दशमूलीकषायेण धान्ययूषद्रवेण च ॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् ।
पक्वं स्यादुद्धृतं कल्कात् पिवेत् कर्षद्वयं हविः ॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत् ।
मेदःश्रितञ्च पित्तोत्थं हन्यादेव न संशयः ॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथार्बुदम् ।
नाशयेद् ग्रहणीदोषं श्वयथुं गुदजानि च ॥
परमग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम् ।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम् ॥

जीवकेन कृतं ह्येतद्रोगानीकविनाशनम् ॥ २० ॥

सौरेश्वरघृते—सुरस पर्णासः वृन्दलिखिततन्त्रान्तरसवादात् निर्गुण्डी वा। [दशमूलीकषायस्य मिलित्वा प्रस्थम्, जल चतुर्गुणम्, शेष प्रस्थमेकम्।] धान्ययूषद्रव काञ्जिकं न तु धन्याककाथः, धान्याम्लेति तन्त्रान्तरपाठात् व्यवहाराभावाच्च ननु कयोर्द्रवयोः कियन्मान ग्राह्यमित्याह प्रस्थमित्यादि। सौरेश्वरमिति—इन्द्राणी निर्गुण्डीपर्य्यायः, तेन सुरेश्वरा निर्गुण्डी, तत्कृतत्वात् सौरेश्वरमिति सज्ञा। जीवकेनेति जीवो बृहस्पतिः, स्वार्थे कः। अन्यत्राप्युक्तम्—"द्राक्षा दुरालभा कृष्णा तुगा कर्कटकी जया। एषा श्लक्ष्णानि चूर्णानि योजयेन्मधुसर्पिषा। कासश्वासज्वरहर विशेषात् तमक जयेत्। निर्मित जीवकेनेद कुमाराणा सुखावहम्" इति ॥२०॥

## विडङ्गाद्यतैलम्

विडङ्गमरिचार्केषु नागरे चित्रके तथा।
भद्रदार्वेलकाख्येषु सर्वेषु लवणेषु च।
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥ २१ ॥
इति श्लीपद-चिकित्सा ॥

विडङ्गाद्यतैले—भद्रदारु देवदारु, एलकाख्यो होगलः एलवालुक इत्यन्ये, पेटिकेत्यपरे। विडङ्गादाना कल्को द्रवन्तु जल चतुर्गुणम् ॥ २१ ॥

इति श्लीपदचिकित्सा विवृतिः।

# अथ विद्रधि-चिकित्सा।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोद्भवं विना ॥ १ ॥

प्रागुक्तसम्बन्धादेव विद्रधिरुच्यते। मृदुर्विरेक इति—अयञ्च मृदुर्विरेको बहुधा कार्य्यः। गम्भीरधातुगतदोषकृतत्वात् विद्रधिरिति वदन्ति ॥ १ ॥

वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः।
सुखोष्णो बहलो लेपः प्रयोज्यो वातविद्रधौ ॥ २ ॥

वातघ्नेत्यादि—सुश्रुतस्य। वातघ्नमूल दशमूलम्। वातघ्नस्थाने सुरङ्गीति पाठे सुरङ्गी शोभाञ्जनक ॥ २ ॥

स्वेदोपनाहा कर्त्तव्याः शिग्रुमूलसमन्विता।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत्।
विलीयते क्षणेनैवमपक्वश्चैव विद्रधि ॥ ३ ॥

स्वेदेत्यादौ—स्वेदो वेशवारादिभिः। यदाह सुश्रुत—"वेशवारै सकृशरैः पयोभि पायसैस्तथा। स्वेदयेच्चापि सततम्" इति। उपनाहोऽपि तत्रैवोक्तः, यथा "आनूपौदकमासन्तु काकोल्यादि सतर्पणः। स्नेहाम्लसिद्धो लवण प्रयोज्यश्चोपनाहने" इति। सिद्धपिष्टैरिति उत्स्विन्नपिष्टै ॥ ३ ॥

पुनर्नवादारुविश्व-दशमूलाभयाम्भसा।
गुग्गुलुं रुबुतैलं वा पिबेन्मारुतविद्रधौ ॥ ४ ॥

पुनर्नवेत्यादौ—अम्भसा क्वाथेन॥ ४ ॥

पैत्तिकं शर्करालाजा-मधुकैः शारिवायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ५ ॥

पैत्तिकमित्यादि—सुश्रुतस्य। योगद्वयेऽपि क्षीर पेषणार्थम्। शारिवा अनन्तमूलम्। पयस्या क्षीरकाकोली ॥ ५ ॥

पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम्।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥ ६ ॥

पिबेद्वेति—स्पष्टम् ॥ ६ ॥

यष्ट्याह्वशारिवादूर्वानलमूलै सचन्दनैः।
क्षीरपिष्टै प्रलेपस्तु पित्तविद्रधिशान्तये ॥ ७ ॥

यष्ट्याह्वेति—स्पष्टम् ॥ ७ ॥

इष्टकासिकतालोह गोशकृत्तुषपांशुभि।
मूत्रपिष्टैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ८ ॥

इष्टकेत्यादि—सुश्रुतस्य। अत्र मूत्रपिष्टैरिति प्रमादपाठ। किन्तु मूत्रैरुष्णैरित्येव पाठ सुश्रुते पठ्यते। उष्णैश्च मूत्रैर्द्रवस्वेद इति टीकाकृता व्याख्या। अन्ये तु लोह लोहचूर्णम्, गोशकृत् गोमयम्, एभिरिष्टकाचूर्णादिभिर्मूत्रपिष्टैरेरण्डपत्रबद्धै स्वेद इति व्याख्याय मूत्रपिष्टैरिति पाठमेव स्वीकुर्वन्ति ॥ ८ ॥

दशमूलीकषायेण सस्नेहेन रसेन वा ।
शोथं व्रणं वा कोष्णेन सशूलं परिषेचयेत् ॥ ६ ॥

दशमूलीत्यादौ—सस्नेहेनेति पूर्वेण परेण च सम्बध्यते । रसेनेति मासरसेन ॥ ६ ॥

त्रिफलाशिग्रुवरुण-दशमूलाम्भसा पिबेत् ।
गुग्गुलुं मूत्रयुक्तं वा विद्रधौ कफसम्भवे ॥ १० ॥

त्रिफलेत्यादि—स्पष्टम् ॥ १० ॥

पित्तविद्रधिवत् सर्वां क्रियां निरवशेषतः ।
विद्रध्योः कुशल कुर्य्याद्रक्तागन्तुनिमित्तयोः ॥ ११ ॥

पित्तेत्यादि—सुश्रुतस्य । विपुलवचनस्यापि सर्वशब्दस्य दृष्टत्वात् पुनर्निरवशेषत इत्युक्तं कृत्स्नलेपादिविध्यतिदेशार्थम् ॥ ११ ॥

शोभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुत ।
अचिराद्विद्रधीन् हन्ति प्रातः प्रातर्निषेवितः ॥ १२ ॥

शोभाञ्जनकेत्यादि—स्पष्टम् ॥ १२ ॥

शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत् ।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ १३ ॥

शिग्रुमूलमित्यादौ—दरपिष्टमीषत्पिष्टम् ॥ १ ॥

श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥ १४ ॥

श्वेतेत्यादि—स्पष्टम् ॥ १४ ॥

वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते ।
ऊषकादिप्रतीवापं पिबेत् संशमनाय वै ॥ १५ ॥

वरुणेत्यादि—सुश्रुतस्य । वरुणाद्यूषकादिगणौ सौश्रुतौ ॥ १५ ॥

शमयति पाठामूलं क्षौद्रयुतं तण्डुलाम्बुना पीतम् ।
अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ १६ ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ १७ ॥

शमयतीत्यादि—स्पष्टम् ॥ १६–१७ ॥

स्रुतेऽप्यूर्द्ध्वमधश्चैव मैरेयाम्लसुरासवैः ।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथ वा ॥ १८ ॥

स्रुतेऽपीत्यादि—सुश्रुतस्य । ऊर्द्ध्वस्रवतामपि कादाचित्की माध्यता चिकित्साभिधानादनुमन्तव्या । मधुशिग्रुद्रुम इति रक्तशोभाञ्जनवृक्षस्य मूलम् । मैरेय मद्यविशेषम् । अम्ल काञ्जिकम् ॥ १८ ॥

प्रियङ्गुधातकीलोध्रं कट्फलं तिनिशत्वचम् ।
एतैस्तैलं विपक्तव्यं विद्रधौ रोपणं परम् ॥ १६ ॥
इति विद्रधि-चिकित्सा ॥

---

प्रियङ्ग्वित्यादि—सुश्रुतस्य । तिनिशोऽतिमुक्तक । त्वचमिति निर्देशात्त्वचशब्दोऽकारान्तो नपुसकलिङ्गोऽप्यस्तीति गम्यते । चन्द्राटे तु तिनिश धवमिति पाठो दृश्यते । तिनिमैन्धवमिति पाठान्तरे तिनिस्तिनिश एव । प्रियङ्ग्वादिभि कल्क, द्रव जल चतुर्गुणम् । एतच्च तैल मज्जभवविद्रधौ सुश्रुते पठ्यते ॥ १६ ॥

इति विद्रधिचिकित्सा-विवृति ।

---

# अथ व्रणशोथ-चिकित्सा

आदौ विम्लापनं कुर्य्याद् द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ता सप्तमो वैकृतापह ॥ १ ॥

विद्रध्युक्तसवादात् प्रायेण तुल्योपक्रमत्वाच्चानन्तर व्रणशोथ उच्यते । आदौ विम्लापनमित्यादि—सुश्रुतस्य । अनेन च वाक्येन चिकित्सितस्थानवक्ष्यमाणषष्ट्युपक्रमाणामन्तर्भावेण सप्तत्व सुखावबोधार्थं सूत्रस्थाने सुश्रुतेनोच्यते, तेन विम्लापनमिह न केवलमङ्गुष्ठादिमर्दनमात्रे परिभाषित ग्राह्यम्, किन्तु विम्लाप्यतेऽनेनेति व्युत्पत्त्या बहि परिमार्जनरूपे शमने शोथविलयनकरे प्रलेपपरिषेकाभ्यङ्गादावपि वर्त्तते । अवसेचनमपि शोधनरूपऽन्त परिमार्जने वमनविरेकरक्तमोक्षणादौ

वर्त्तते । उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते । एवमपरेऽप्युपक्रमा शेषेषु यथायोगमन्तर्भाव्याः, किंवा षष्ट्युपक्रमेषु प्राधान्यात् सप्त विम्लापनादय कथ्यन्ते । विम्लापनादयो भाविव्रणविघातप्रयोजकतया व्रणस्येत्युक्तम् ॥ १ ॥

**मातुलुङ्गाग्निमन्थौ च भद्रदारु महौषधम् ।**
**अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥ २ ॥**

मातुलुङ्गेत्यादि—सुश्रुतस्य—मातुलुङ्गस्य मूलम् । अहिंस्रा कुडकरालिः कालाकडाभेद ॥ २ ॥

**कल्क काञ्जिकसम्पिष्टः स्निग्ध शाखोटकत्वच· ।**
**सुपर्ण इव नागानां वातशोथविनाशन ॥ ३ ॥**

कल्क इत्यादौ—स्निग्ध इति घृतेन ॥ ३ ॥

**दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा ।**
**शीतलाश्च गणा सर्वे प्रलेपः पित्तशोथहा ॥ ४ ॥**

दूर्वेत्यादौ—शीतलाश्च गणा इति काकोल्याद्युत्पलादिन्यग्रोधाद्याः सौश्रुताः ॥४

**न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलै ।**
**ससर्पिष्कः प्रलेप स्याच्छोथनिर्वापण पर ।**
**आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः ॥ ५ ॥**

न्यग्रोधेत्यादि—शोथनिर्वापण इति शोथशमन । एष एवेति पैत्तिकव्रणशोथ-विहित ॥ ५ ॥

**अजगन्धाश्वगन्धा च काला सरलया सह ।**
**एकेशिकाजशृङ्गी च प्रलेपः श्लेष्मशोथहा ॥ ६ ॥**

अजगन्धेत्यादौ—अजगन्धा छागलगन्धेति भानुमती, अन्ये यमानिकामाहु । काला अहिंस्रा कालाकडाभेद । सरला सरल एव, एकेशिका त्रिवृदिति भानुमती, अन्ये तु सरला त्रिवृत् एकेशिका पाठेत्याहु । अजशृङ्गी कर्कटशृङ्गीति भानुमती चन्द्रिका च ॥ ६ ॥

**पुनर्नवादारुशिग्रु-दशमूलमहौषधैः ।**
**कफवातकृते शोथे लेपः कोष्णो विधीयते ॥ ७ ॥**

पुनर्नवेत्यादि—स्पष्टम् ॥ ७ ॥

**न रात्रौ लेपनं दद्याद्दत्तश्च पतित तथा ।**
**न च पर्य्युषितं शुष्यमाण नैवावधारयेत् ॥ ८ ॥**

न रात्रावित्यादि—न रात्रौ लेपन दद्यादित्यादिना निषेधमुखेन विध्युपदर्शन रात्रौ लेपनस्य सर्वथा निषेधार्थं, प्रलेपनिषेधेन प्रदेहादिविधान रात्रावपि सूच्यते, तेन य प्रदेहो वातकफविषय स रात्रावपि देयोऽविरुद्धत्वात्, पाचनलेपस्तु पाचकत्वादेव दातव्य । तथा पित्तजे वातपित्तजे च शतधौतघृताभ्यङ्गस्तथा क्षीरशीतजलादिसेकश्च निर्वापणतया दीयत एव । तथा व्रणकल्कोऽप्यहोरात्रस्थायिबन्ध विहित एव। उक्तञ्च वैतरणे—'सर्वशस्तु निशा प्राप्य लेपनन्तु निवर्त्तयेत्। क्षीरसर्पि - प्रलेपन्तु हित्वा प्रच्छादनन्तथा' इति । रात्रौ लेपदाने पुन सुश्रुतेन दोष उक्त., यथा 'न चालेप रात्रौ प्रयुञ्जीत माभूच्छैत्यपिहितोष्मणस्तदनिर्गमाद्विकारप्रवृद्धिः, इति । रात्रिस्वाभाविकशैत्यात् संवृतरोमकूपत्वाच्च पुनरालेपनेनापि व्रणोष्मा वहिरनिर्गच्छन्नवरुद्धो विवृद्ध सन्नितरा व्रणे व्रणशोथे वा दाहपाकौ कुर्य्यादिति भावः । प्रलेपप्रदेहयोस्तु भेद सुश्रुतेन प्रदर्शितो यथा 'प्रलेप शीतस्तनुरविशोषी विशोषी च ।' विशोषीति पीडयितव्ये विशोषीत्यर्थं । 'प्रदेहस्तूष्ण शीतो वा वहलो बहुरविशोषी च ।' वहल इति आर्द्रमहिषचर्मप्रमाणोत्सेध प्रलेपः। प्रदेहस्तु प्रलेपापेक्षया वहलः। शोथे लेपश्च लोमाभिमुख देय । यदाह सुश्रुतः—"तत्र प्रतिलोममालिम्पेत् न चानुलोम, प्रतिलोमे हि सम्यगौषधमवतिष्ठते अनुप्रविशति च लोमकूपे स्वेदवाहिभिः शिरामुखैर्वीर्य्यं प्राप्नोति" इति । प्रतिलोममिति लोमाभिमुखम् । न च नैवेति—प्रतिषेधद्वयेन अवधारयेदेवेत्यर्थ । अवधारणञ्च दूरीकरणम् । तन्त्रान्तरेऽप्युक्त,—" लेपश्चोद्धृत्य दातव्यो न यावच्छुष्कता व्रजेत् । गुणवान्न भवेच्छुष्को भूयो दोष करोति सः" इति ॥ ८ ॥

**शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति ।**
**न चापि मुखमालिम्पेत् तेन दोषः प्रसिच्यते ॥ ६ ॥**

अस्यैवापवादमाह—शुष्यमाणमित्यादि—उपेक्षेतेति यावच्छुष्कता प्रयाति तावत् न दूरीकुर्य्यादित्यर्थ । पीडन प्रतीति व्रणपीडनमुद्दिश्य यो लेप इत्यर्थ । व्रणपीडनेलपस्तु स एव यः शुष्क. सन् व्रणमुख पीडयित्वा पूय स्रावयति । तनेति मुखेन । दोष इति पूय ॥ ६ ॥

**स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहै ।**
**अभ्यज्य स्वेदयित्वा च वेणुनाड्या तत. शनै. ।**

विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ॥ १० ॥

कठिनशोथे पारिभाषिकाविम्लापनमाह स्थिरानित्यादि—सुश्रुतस्य। वेणु-नाड्या वेणुदण्डेन, तलेन करतलेन ॥ १० ॥

रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
शोथे महति संरब्धे वेदनावति च व्रणे ॥
निवारणाय पाकस्य वेदनोपशमाय च।
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम् ॥११॥

रक्तावसेचनमित्यादि—आदावेवेति उत्पन्नमात्रे। सुश्रुतेऽप्युक्त—अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्" इति। शोथ इति व्रणपूर्वरूपशोथे। नरब्ध इति शोथे, एतच्च व्रण इत्यनेन योज्यम्। शोथे इत्युक्त्वापि पुन. सरब्ध इति वचनम् एताद्दशसशोथे व्रणे विशेषेण रक्तस्रावविधानार्थं, सुश्रुतेऽप्युक्त—"सशोथे कठिने चामे सरक्ते वेदनावति। सविषे च विशेषेण व्रणे विस्रावण हितम्। अन्ये तु पच्यमानावस्थव्रणविषयक मरब्ध इत्यादिवचन ज्ञेयमित्याहु ॥११॥

यो न याति शमं लेपस्वेदसकापतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथ शोणितमोक्षणात् ॥१२॥

उपक्रमान्तरापेक्षया रक्तमोक्षणस्य प्रकर्षमाह यो न यातीत्यादि ॥ १२ ॥

एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चास्ति रुक् ॥१३॥

रक्तमित्यादौ—व्यम्लता विदग्धताम् ॥ १३ ॥

स चेदेवमुक्रान्त· शोथा न प्रशमं व्रजेत्
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते ॥ १४ ॥

सचेदित्यादि—उपनाहैरिति सोष्णबहलबन्धलेपै. । पक्वस्य पाटनमिति दारणोषधे. शस्त्रैर्वा ॥ १४ ॥

तैलेन सर्पिषा वापि ताभ्यां वा शक्तुपिण्डिका।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते ॥ १५ ॥

तानेवोपनाहानाह तैलेनेत्यादि—तैलेन वाते, कफे च सर्पिषा, पित्ते रक्ते च ताभ्या वेति तैलसर्पिर्भ्यां मिलिताभ्याम्। चतुर्ष्वेवेति दोषभेदेन विकल्पो ज्ञेय इत्याहु ॥ १५ ॥

सतिला सातसीवीजा दध्यम्ला शक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ १६ ॥

सतिलेत्यादौ—किण्व सुरावीजम् ॥ १६ ॥

गवां दन्तं जले घृष्टं विन्दुमात्रं प्रलेपनात् ।
अत्यर्थकठिने वापि शोथे पाचनभेदनम् ॥ १८ ॥
बालवृद्धासहक्षीण-भीरूणां योषितामपि ।
मर्मोपरि च जाते तु पक्के शोथे च दारुणे ॥ १७ ॥

बालेत्यादि—स्पष्टम् ॥ १७–१८ ॥

कटुतैलान्वितैर्लेपात् सर्पनिर्मोकभस्मभि ।
चय शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥१६॥

कटुतैलेत्यादि—चय इत्युपचय । गण्डस्य व्रणस्य । प्रकोप इति प्रकोप-हेतुपूयरूपदोष ॥१६॥

चिरविल्वाग्निकौ दन्ती चित्रको हयमारकः ।
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ २० ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारण· पर ॥ २१ ॥

चिरविल्वेत्यादि—सुश्रुतस्य । चिरविल्वो वृहत्करञ्ज, अग्निको लाङ्गलकी हयमारक करवीर, एषा मूल वृद्धवाग्भटसवादात् । एते च चिरविल्वादयो व्यस्ता समस्ता वा योज्या । एतत्सर्वं दारण सुकुमारविषयत्वेनोक्तम् । असुकुमारविषयन्तु शस्त्रमेवेति, यथा—" सुपक्के पिण्डिते शोथे पीडनैरुपपीडिते । दारण दारणार्हस्य सुकुमारस्य चेष्यते ॥"गुग्गुल्वतसिगोदन्त स्वर्णक्षीरीकपोतविट् । क्षारौषधानि क्षाराश्च हेमक्षारी मुकूलक । इत्युक्तो भेषजगणः पक्वशोथप्रभेदन । सुकुमारस्य कृच्छ्रस्य शस्त्रन्तु परमुच्यते॥, अत्र सुकुमारस्येति पूर्वेण सम्बध्यते। कृच्छ्रस्येत्यत्रासुकुमारस्य शस्त्र पर भेदनमिति सम्बन्ध इति दीपिका च । तस्मात् क्षारद्रव्य क्षारश्च सुकुमार-विषयेऽपि ज्ञेय ॥ २०–२१॥

द्रव्याणा पिच्छिलानान्तु त्वङ्मूलानि निपीडनम् ।
यवगोधूममाषाणां चूर्णानि च समासत ॥ २२ ॥

पीडनद्रव्याण्याह द्रव्याणामित्यादि—पिच्छिलानामिति शेलुशाल्मलीप्रभृतीनाम् । इदञ्च पीडन मर्मादिममोपस्थसूक्ष्ममुखव्रणविषय ज्ञेयम् । उक्त हि वाग्भटे—

"पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि। नि स्नेहै. पीडनद्रव्यैः समन्ताव् परिपीटयेत्" इति ॥ २२ ॥

तत प्रक्षालनं क्वाथ पटोलीनिम्बपत्रजः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भव ॥ २३ ॥

तत इत्यादि—पटोलीपत्र पटोलपत्रमेव अविशुद्ध इति च्छेद ॥ २३ ॥

पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके ॥ २४ ॥
आरग्वधादिको योज्य कफज सर्वकर्मसु ॥ २५ ॥

पञ्चमूलेत्यादि—न्यग्रोधादिगण सौश्रुत । सर्वकर्मसु प्रक्षालनलेपनादिषु ॥ २४–२५ ॥

## तिलाष्टकः

तिलकल्क सलवणो द्वे हरिद्रे त्रिवृद् घृतम्।
मधूकं निम्बपत्राणि लेप स्याद् व्रणशोधन• ॥ २६ ॥
निम्बपत्रं तिला दन्ती त्रिवृत्सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेप शोधनकेशरी ॥ २७ ॥
एकं वा सारिवामूलं सर्वव्रणविशोधनम् ॥ २८ ॥
पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ॥
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ २९ ॥

तिलकल्क इत्यादि वचन स्पष्टम्। शारिवामूलमनन्तमूलम्। पटोली पटोल-पत्रम्। पटु अत्र सैन्धवलवणम् ॥ २६–२९ ॥

त्रिफला खदिरो दार्वी न्यग्रोधादिबलाकुशा।
निम्बकोलकपत्राणि कषाय शोधने हित• ॥ ३० ॥

त्रिफलेत्यादौ—न्यग्रोधादीति न्यग्रोधोडुम्बराश्वत्थ-कदम्बसप्ल-वेतसा। कर-वीरार्ककुटजाः कषाया. व्रणरोपणा." इत्यनेन शोथहरोपक्रमे चरकोक्त ग्राह्यम्। अस्य योगस्य चरकोक्तत्वात्, किंवा पञ्चवल्कलमेव ग्राह्यम्। निम्बकोलकपत्राणि कोमल-निम्बपत्राणीत्यर्थ इति दीपिका। अन्ये तु कोलको बदर इत्याहु, युक्तमिद वाग्भट-प्रमाणात्। अन्ये तु कुलकपत्राणीति पठित्वा पटोलपत्राणीति व्याचक्षते ॥ ३० ॥

अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कः संरोपणः कार्यस्तिलानां मधुकान्वितः॥ ३१॥

अपेतेत्यादि—वाग्भटस्य। मधुकान्वितो यष्टिमधुयुक्तः। अत्र तिलजो मधुसंयुत इति पाठः सुश्रुते बहुपुस्तके च दृश्यते, वाग्भटे तु सर्वत्रैव मधुकान्वित इति, उभयमपि प्रमाणं स्मृतिद्वैधवत्॥ ३१॥

निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः॥ ३२॥
पूर्वाभ्यां सर्पिषा वापि युक्तश्चाप्युपरोपणः॥ ३३॥

निम्बपत्रेत्यादि—पूर्वोक्तयष्टिमधुयुक्तस्तिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तो रोपणः, अपिशब्दात् शोधनोऽपि भवतीत्यर्थः॥ ३२—३३॥

निम्बपत्रतिलैः कल्को मधुना क्षतशोधनः।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः॥ ३४॥

निम्बपत्रेत्यादि—उक्ततिलकल्कविधिं यवकल्केऽप्यतिदिशति यवकल्केऽप्ययं विधिरिति॥ ३४॥

निम्बपत्रघृतक्षौद्र-दार्व्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद् व्रणान्॥ ३५॥

निम्बपत्रघृतेत्यादि—एभिर्द्रव्यैर्वस्त्रमालिप्य वर्त्तिः कार्या। वर्त्तिदानविषयो व्रणः सुश्रुते यथा—"अन्तःपूयानणुमुखान् गम्भीरान् मांससंश्रितान्। शोधनद्रव्ययुक्ताभिर्वर्त्तिभिः समुपाचरेत्" इति। तिलानां कल्को वेति लेपविधया॥ ३५॥

सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन॥ ३६॥
मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता॥ ३७॥

सप्तदल इत्यादि—सप्तदलः सप्तपर्णस्तस्य क्षीरम्॥ ३६—३७॥

मानुषशिरःकपालं तदस्थि वा लेपनं मूत्रेण।
रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम्॥ ३८॥

मानुषशिरःकपालमिति पुराणं ग्राह्यमित्यर्थः। मूत्रेणेति गोमूत्रेण॥ ३८॥

व्रणान् विशोधयेद् वर्त्या सूक्ष्मास्यान् सन्धिमर्मगान्।
अभया त्रिवृता दन्ती-लाङ्गलीमधुसैन्धवैः॥ ३९॥

व्रणानित्यादि—वाग्भटस्य। अभयेत्यस्य स्थाने कृतयेत्येव पाठो वाग्भटबहुपुस्तकेषु दृश्यते॥ ३९॥

सुपवीपत्रपत्तूर कर्णमोटकुठारिकाः।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणा ॥ ४० ॥

सुपवीत्यादि—सुपवी कारवेल्ल', पत्तूरः शालिञ्च, कर्णमोट स्वनामख्यात । कुठारिका कुठारिया, कुठेरक इति पाठे कुठेरक पर्णास ॥ ४० ॥

पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ।
धातकीचूर्णलोध्रैर्वा तथा रोहन्ति ते व्रणा ॥ ४१ ॥

पञ्चवल्कलेत्यादि—चरकस्य । शुक्तिर्वदरी तस्यास्त्वक् । शुक्तिचूर्णसमायुतैरिति पञ्चवल्कलचूर्णैरित्यस्य विशेषणम् ॥ ४१ ॥

सदाहा वेदनावन्तो ये व्रणा मारुतोत्तरा ।
तेषां तिलानुमाश्चैव भृष्टान् पयसि निर्वृतान् ॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक् ॥ ४२ ॥

सदाह इत्यादि—उमा अतसी । पयसि निर्वृतानिति दुग्धे निर्वापितान् ॥४२॥

वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ४३ ॥

वाताभिभूतानित्यादि—वाग्भटस्य । सास्रावान् अल्पस्रावान् । भूर्जो भूर्ज्जग्रन्थि ।'मदन. सिक्थक इति वृन्दटिप्पणी । श्रीवेष्टको नवनीतखोटी, सुराह्वय देवदारु ॥ ४३ ॥

श्रीवासगुग्गुल्वगुरु-शालनिर्यासधूपिता ।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्राववेदना ॥ ४४ ॥

श्रीवासेत्यादौ—श्रीवासो नवनीतखोटी । न च पूर्वोक्तेन पौनरुक्त्यम्, अस्य वचनस्य तन्त्रान्तरीयत्वात् । वृन्दटिप्पणिकायान्तु पौनरुक्त्यमाशङ्क्य पूर्वोक्तश्रीवेष्टकशब्देन कुन्दुरुरिति व्याख्यातम् । शालनिर्यासो धूनकः ॥ ४४ ॥

तिलाः पय. सिता क्षौद्रं तैलं मधुकचन्दनम् ।
लेपेन शोथरुग्दाह-रक्तं निर्वापयेद् व्रणात् ॥ ४५ ॥

तिला इत्यादौ—पय पेषणार्थम् । सिता शर्करा । क्षौद्रतैलाभ्या सन्धाय लेपो देयः ॥ ४५ ॥

पित्तविद्रधिवीसर्पशमनं लेपनादिकम् ।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सक ॥ ४६ ॥

इदानीं शारीरव्रणचिकित्सामभिधाय व्रणसामान्यादस्मिन्नेव व्रणाधिकारे आगन्तुव्रणचिकित्साभिधानार्थं प्रकरणमारभ्यते । अत्र प्रथममग्निदग्धव्रणचिकित्सामाह पित्तेत्यादि ॥ ४६ ॥

महाराष्ट्रीजटालेपो दग्धपिष्टावचूर्णनम् ।
जीर्णगोहतृणाच्चूर्णं दग्धव्रणहरं परम् ॥ ४७ ॥

महाराष्ट्रीजटा महाराष्ट्रीमूलम् । अयमेको योग. । पिष्ट पिष्टकमेव । दग्धपिष्टकचूर्णेनावचूर्णनमिति द्वितीय ॥ ४७ ॥

## जीरकाद्यं घृतम्

जीरकपक्वं पश्चात् सिक्थकसर्जरसमिश्रितं हरति ।
घृतमभ्यङ्गात् पावकदग्धरुजं खं क्षणार्द्धेन ॥ ४८ ॥

जीरकेत्यादि—जीरकस्य कल्क , जल चतुर्गुणम्, पश्चात् सिद्धे च सिक्थसर्जरसयो. प्रक्षेप ॥ ४८ ॥

अन्तर्दग्धकुठारको दहनजं लेपान्निहन्ति व्रणम् ।
अश्वत्थस्य विशुद्धवल्कलकृतं चूर्णं तथा गुण्डनात् ॥४९॥

अन्तरित्यादौ—कुठारक' कुडालिया, स च स्थालीमध्ये अन्तर्धूम दग्धव्य । गुण्डनादित्यवचूर्णनात् ॥ ४९ ॥

अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदै साधितम् ।
पिष्ट्वा शाल्मलितूलकैर्जलगता लेपात् तथा वालुका ॥५०॥

गण्डूपदै. किञ्चुलुकै कल्क , जल चतुर्गुणमनुक्तत्वादिति निश्चल । जल विना चटचटावधि पाक इत्यन्ये । शाल्मलीतूलकैरिति सहार्थे तृतीया ॥ ५० ॥

सद्य क्षतव्रणं वैद्य सशूलं परिषेचयेत् ।
यष्टीमधुककल्केन नातिशीतेन सर्पिषा ॥ ५१ ॥

इदानीं सद्य इत्यादिना सद्योव्रणचिकित्सामाह सद्य इति सप्ताहाभ्यन्तरे । यष्टिमधुकयुक्तेनेति—यष्टिमधुकं कल्कीकृत्य चतुर्गुणजलेन यथाविधि घृत साधनीयम् । यदि पुनस्त्वरया यथाविधि घृतमिद पक्तु न शक्यते, तदा घृताद् पलद्वय, जलात्

चतु पल यष्टिमधुकस्य कर्पद्वय किञ्चित् पक्त्वावतार्य व्रण सेचयेदित्याहु । नाति-शीतेनेति कदुष्णेनेत्यर्थः, किञ्चिदनुष्णेनेति पाठान्तरम् ॥ ५१ ॥

**बुद्ध्वागन्तुव्रणं वैद्यो घृतक्षौद्रसमायुतम् ।**
**शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ॥ ५२ ॥**

बुद्ध्वेत्यादि—चन्द्राटस्य । बुद्ध्वेत्यत्र बद्ध्वेति पाठ साधु । बन्धो हि सद्योव्रणेषु छिन्नभिन्नादिषु सन्धानजनकतया प्रधानम्, उक्त हि—"बन्ध प्रधान तेन शुद्धिर्व्रणरोपणमास्थिसन्धिस्थैर्यञ्च" इति । चन्द्राटादावयमेव पाठो दृश्येत । बुद्ध्वेत्यादिपाठे घृतक्षौद्रसमायुतमित्यनन्तर कृत्वेति शेष, किं वा प्रयुञ्जीतेति क्रिया विशेषणम् ॥ ५२ ॥

**कान्तकामकमेकं सुश्लक्ष्णं गव्यसर्पिषा पीतम् ।**
**शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देह ॥ ५३ ॥**

कान्तेत्यादौ कान्तकामक भद्रमुस्तकम् । घृतमत्र शतधौतमित्युपदिशन्ति, एव वक्ष्यमाणेऽपि ॥ ५३ ॥

**अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।**
**सद्योव्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ५४ ॥**

अपामार्गस्येत्यादि—स्पष्टम् ॥ ५४ ॥

**कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति ।**
**सद्यःशस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ५५ ॥**

कर्पूरेत्यादि—सघृत यथा स्यात्तथा कर्पूरपूरितम्, तेन कर्पूरचूर्णेन शत-धौतघृतमिश्रेण खड्गादिक्षत प्रपूर्य बध्नीयादित्यर्थ ॥ ५५ ॥

**शरपुङ्खा काकजङ्घा प्रथमं महिषीसुत—**
**मलं लज्जा च सद्यस्क-व्रणघ्नं पृथगेव तु ॥ ५६ ॥**

शरपुङ्खेत्यादि—महिषीसुतस्य मलम् । घृततैलवसामज्जवेसवारपयोदधिमास भावनतोयाममितिवत् अय प्रयोग समर्थनीय । अभिनवजातमहिषीवत्सस्य प्रथम मलमित्यर्थ । लज्जा लाजालु अन्ये तु वराहक्राता इत्याहु. ॥ ५६ ॥

**शुनो जिह्वाकृतश्चूर्णः सद्यःक्षतविरोहण ॥ ५७ ॥**
**चक्रतैलं क्षते विद्धे रोपणं परमं मतम् ॥ ५८ ॥**

शुन इति कुक्कुरस्य तन्त्रान्तरमन्वाश्रान् मर्वाङ्गकृष्णकुक्कुरीनिर्हितयन्ये । चक्रतैल तत्कालचक्रोद्धृतमनुष्टमपपतैलम्। अन्ये तु चक्रकाष्ठेक्षिव तैलमाहु ॥५७ ५८॥

यवक्षारं भक्षयित्वा पिण्डं दद्याद् व्रणोपरि ।
शृगालकोलिमूलेन नष्टशल्यं विनिःसरेत् ॥ ५९ ॥
लाङ्गलीमूललेपाद्वा गवाक्षीमूलतस्तथा ॥ ६० ॥

अन्त शल्यचिकित्सामाह यवक्षारमित्यादिना तथेत्यन्तेन । यवक्षार कर्ष १, उष्णजल पल १, आलोड्य पीत्वा नष्टशल्यव्रणोपरि शृगालकोलिमूल पिष्ट्वा पिण्डो देय । शृगालकोली शेयाकुल इति ख्यात बदरीभेद । एव लाङ्गलीयामूलगो-रक्षकर्कटीमूलाभ्यामपि ॥ ५९–६० ॥

क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ।
कषायशीतमधुर-स्निग्धा लेपादयो हिता ॥ ६१ ॥

क्षतेत्यादि—वाग्भटस्य । कषाय इति रस ॥ ६१ ॥

आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम् ॥ ६२ ॥

आमाशयस्थ इति सुश्रुतस्य—आमाशयस्थमपक्वाशयस्थम् । अत्र पक्वाशयस्थ रक्त विरेचनेन सुखेन निर्हर्तुं शक्यत इत्यभिप्रायेण विरेचनविधान न तु पित्तप्रत्य-नीकतया पक्वाशयस्य वातस्थानत्वात्। अन्ये तु पक्वशब्देन पाक उच्यते न पक्वाशय., तेन पक्वाशयस्थ इत्यत्रपच्यमानाशयस्थ इत्यर्थ , तत्र हि पित्तस्थानत्वेन विरेचन-मुपयोगिकमित्याहु ॥ ६२ ॥

क्वाथो वंशत्वगेरण्ड-श्वदंष्ट्राश्मभिदा कृत ।
सहिङ्गुसैन्धव पीत कोष्ठस्थं स्रावयेदसृक् ॥ ६३ ॥

क्वाथ इत्यादौ—वंशत्वक् वंशनली, अश्मभित् पाषाणभेदी । हिङ्गुसैन्धवन्तु प्रक्षेप्यम् । अय योग प्रभावात् रक्त स्रावयति ॥ ६३ ॥

यवकोलकुलत्थानां निःस्नेहेन रसेन च ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ६४ ॥

यवेत्यादि—स्पष्ट ॥ ६४ ॥

अत्यर्थमस्रं स्रवति प्रायशो यत्र विक्षते
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥
स्नेहपानं परीषेकं स्नेहलेपोपनाहनम् ।
स्नेहवस्तिञ्च कुर्वीत वातघ्नौषधसाधितम् ॥ ६५ ॥

अत्यर्थमित्यादि—वाग्भटस्य । विक्षत इति विविधक्षते छिन्नभिन्नादौ । स्नेहलेपोपनाहनमिति स्नेहयुक्तो लेप स्नेहयुक्तमुपनाहश्च; किन्तु वाग्भटे स्वेदलेपोपनाहनमिति पाठ । तन्मते स्वेदो धान्यस्वेद ,उक्तञ्च सुश्रुते—"धान्यस्वेदाश्च कुर्वीत स्निग्धान्यालेपनानि च" इति । वातघ्नौषध भद्रदार्वादि ॥ ६५ ॥

इति साप्ताहिक प्रोक्त· सद्योव्रणहितो विधि· ।
सप्ताहात्परत कुर्याच्छारीरव्रणवत् क्रियाम् ॥ ६६ ॥

सद्योव्रणचिकित्सामुपसंहरति इति साप्ताहिक इत्यादि—वाग्भटस्य ॥ ६६ ॥

करञ्जारिष्टनिर्गुण्डीरसो हन्याद् व्रणक्रिमीन् ॥ ६७ ॥

करञ्जेत्यादौ—करञ्जादिपत्रस्वरस ॥ ६७ ॥

कलायविदलीपत्रकोशाम्रास्थि च पूरणात् ।
सुरसादिरसैः सेको लेपनं स्वरसेन वा ॥ ६८ ॥

कलायविदली स्वनामख्याता लता, कोशाम्र कुसुम्भ इति ख्यात , तस्य फलास्थि आभ्या माम्पिष्टाभ्या प्रत्येक व्रणावकाशपूरणम् । सुरसादिगण सौश्रुत. । सुरसेनेति पर्णासेन ॥ ६८ ॥

निम्बसरूपाकजात्यर्कसप्तपर्णाश्वमारका ।
क्रिमिघ्ना मूत्रसंयुक्ता. सेकालेपनधावने ॥ ६९ ॥

निम्बेत्यादौ—जात्या पत्रम्, निम्बादीनान्तु त्वक् । एते च निम्बादयो यथालाभ मूत्रपिष्टा सेकादौ प्रयोज्या. ॥ ६९ ॥

प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेद् व्रणात् ।
लशुनेनाथवा दद्यात्लेपनं क्रिमिनाशनम् ॥ ७० ॥

प्रच्छाद्येत्यादौ—मासखण्ड., अत्रामिषगन्धात् क्रिमय उपर्य्युपरि सञ्चरन्ति इति भाव. ॥ ७० ॥

## त्रिफलागुग्गुलुः

ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणा महान्त सरुजा सशोथा ।
प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिं त्रिफलारसेन ॥ ७१ ॥

वहि परिमार्ज्जनमुक्त्वा अन्त परिमार्ज्जनमाह य इत्यादि—क्वोष्ठानुरूपोऽत्र गुग्गुलुः प्रक्षेप्य ॥ ७१ ॥

## वटिकागुग्गुलुः

त्रिफला चूर्णसंयुक्तो गुग्गुलुर्वटकीकृत ।
निर्यन्त्रणो विवन्धघ्नो व्रणशोधनरोपण ॥
अमृतागुग्गुलु शस्तो हितं तैलञ्च वज्रकम् ॥ ७२ ॥

त्रिफलाचूर्णसयुक्त इति त्रिफलाचूर्णेन समेन युक्तो गुग्गुलु, घृतमनुरूप दत्त्वा विमृश्य चूर्णञ्च प्रक्षिप्य वटिका कर्त्तव्या । एव सर्वत्र वटकविधाने । यन्त्रणा आहाराचारनियमश्च । अमृतागुग्गुलुर्वातरक्तोक्त । वज्रकतैलञ्च कुष्ठ वक्ष्यमाणम् ॥ ७२ ॥

## विडङ्गादिवटिकागुग्गुलुः

विडङ्गत्रिफलाव्योपचूर्णं गुग्गुलुना समम् ।
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजन ।
दुष्टव्रणापचीमेह-कुष्ठनाडीव्रणापह ॥ ७३ ॥

वटिकागुग्गुलौ गुग्गुलुना सममिति विडङ्गादिचूर्णसमेन ॥ ७३ ॥

## अमृतावटिकागुग्गुलुः

अमृतापटोलमूल-त्रिफलात्रिकटुक्रिमिघ्नानाम् ।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भाग ॥
प्रतिवासरमेकैकां गुडिकां खादेदत्तपरिमाणाञ्च ।
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च ॥ ७४ ॥

अमृतावटिकागुग्गुलु स्पष्ट ॥ ७४ ॥

## जातिकाद्यं घृतम्

जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्ववीजै. समै ।
सर्पि सिद्धमनेन सूक्ष्मवदना मर्माश्रिता स्राविणो
गम्भीरा. सरुजो व्रणा सगतिका शुष्यन्ति रोहन्ति च ७५

जातीत्यादि—वाग्भटस्य । जात्यादीना त्रयाणा पत्रम् । दार्वी दारुहरिद्रा; निशा हरिद्रा, अभयमुशीरम्, नक्ताह्ववीज करञ्जवीजम् । गतिर्नाडी ॥ ७५ ॥

## गौराद्यं घृतम्

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च ।
प्रपौण्डरीकं ह्रीबेरं भद्रमुस्तं सचन्दनम् ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणी ।
मधूच्छिष्टं मधूकञ्च महामेदा तथैव च ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ।
एप गौरो महावीर्य सर्वव्रणविशोधन ॥
आगन्तुः सहजश्चैव सुचिरोत्थाश्च ये व्रणाः ।
विपमामपि नाडीञ्च शोधयेच्छीघ्रमेव च ॥ ७६ ॥

गौराद्ये घृते—गौरा हरिद्रा प्रियङ्गुर्वा । व्यवहारस्तु हरिद्रैव हरिद्रा दारुहरिद्रा। जातीनिम्बपटोलाना पत्रम्, करञ्जस्य फलम्, मधूक मधूकपुष्पम् । मधूकञ्चेत्यस्य स्थाने समधुकमिति पाठे यष्टिमधुकस्य भागद्वय हि पाठात् । पञ्चवल्कलस्य तोयेन क्वाथेन । एप गौर इति भीमो भीमसेन इतिवत्, गौराद्योऽय महावीर्य इत्यपि पाठ ॥ ७६ ॥

गौराद्यं जातिकाद्यञ्च तैलमेवं प्रसाध्यते ।
तैलं सूक्ष्मानने दुष्टे व्रणे गम्भीर एव च ॥ ७७ ॥

उक्तघृतद्वयविधिना तैलद्वयमपि साध्यमित्याह गौराद्यमित्यादि—तैलविषय-माह तैलमित्यादि ॥ ७७ ॥

## करञ्जाद्यं घृतम्

नक्तमालस्य पत्राणि तरुणानि फलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ।
मञ्जिष्ठा चन्दनोशीरमुत्पलं सारिवे त्रिवृत् ।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
दुष्टव्रणप्रशमनं तथा नाडीविशोधनम् ।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम् ॥ ७८ ॥

नक्तमालस्येत्यादौ—तरुणानि पत्राणीत्यन्वय । सुमना जातिः॰ उत्पलं नीलोत्पलम्, शारिवे अनन्तमूलश्यामलते ॥ ७८ ॥

## प्रपौण्डरीकाद्यं घृतम्

प्रपौण्डरीकमञ्जिष्ठामधुकोशीरपद्मकैः ।
सहरिद्रैः कृतं॰ सर्पिः सक्षीरं व्रणरोपणम् ॥ ७८ ॥

प्रपौण्डरीकमित्यादौ—क्षीरमेव चतुर्गुणम् ॥ ७९ ॥

## तिक्ताद्यं घृतम्

तिक्तासिक्थनिशायष्टी-नक्ताह्वफलपल्लवैः ।
पटोलमालतीनिम्ब-पत्रैर्व्रण्यं घृतं स्मृतम् ॥ ८० ॥

तिक्तेत्यादौ—पत्रशब्द त्रिभि सम्बध्यते जलञ्च चतुर्गुणम् ॥ ८० ॥

सिन्दूरहिङ्गुविषकुष्ठरसोनचित्र-
वाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम् ।
प्रासादमन्त्रयुतफूत्कृतनुन्नफेनो
दुष्टव्रणप्रशमनो विपरीतमल्लः ॥
खड्गाभिघातगुरुगण्डमहोपदंश-
नाडीव्रणव्रणविचर्चिककुष्ठपामा ।
एतान् निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य ॥ ८१ ॥

तैलान्याह सिन्दूरेत्यादि—चित्रको रक्तचित्रक, वाणाह्वि शरपुङ्खामूलम्, न तु झिण्टीमूलम्; जल चतुर्गुणम्, तैलञ्च सार्षपं तन्त्रान्तरमवादात्। उक्तञ्च "सिन्दूरहिङ्गुविषकुष्ठरसोनवाणपुङ्खारुणानलहलाह्वयमूलकल्कै। एतच्चतुर्गुणजले विधिवत्सुमिद्ध सिद्धार्थतैलमिति सिद्धफल प्रदिष्टम्" इति। प्रासादमन्त्रो महेश्वर-मन्त्र, तुन्नोऽपसारित ॐ ह्रा ह्रीं ह्रु ह्रैं ह्रौं ह्रः शिवाय स्वाहेति पठित्वा फूत्का-रेण फेनमालोड्यम्॥ ८१॥

## अङ्गारकं तैलम्

कुठारकात् पलशतं क्वाथयेन्नल्वणेऽम्भसि।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत्॥
कल्कैः कुठारापामार्ग-प्रोष्ठिकामक्षिकायुतैः।
एतदङ्गारकं तैलं व्रणशोधनरोपणम्।
नाडीषु परमभ्यङ्गो निजास्वागन्तुकीषु च॥ ८२॥

कुठारकादित्यादि—कुठारकः कुडालिया। नल्वणो द्रोणः। प्रोष्ठिका शफरीमत्स्य· पोठियानाम्ना ख्याता, विटपीत्यन्ये। मक्षिका कीटविशेष प्रसिद्ध एव, पक्षाखियामत्स्य इत्यन्ये॥ ८२॥

## प्रपौण्डरीकाद्यं तैलम्

प्रपौण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने।
सिद्धमेतः समैस्तैलं तत्परं व्रणरोपणम्॥ ८३॥

प्रपौण्डरीकमित्यादि—स्पष्टम्॥ ८३॥

## दूर्वाद्यं तैलं घृतञ्च

दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन च।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम्॥
येनैव विधिना तैलं घृतं तेनैव साधयेत्।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत्॥ ८४॥

दूर्वेत्यादि—योगद्वयम्। अत्र दूर्वैव कल्को बोध्यः, चकारद्वयात् कम्पिल्ल-कदार्वीत्वचोर्मिलित्वा कल्क., पाकश्च जलेन चारपाणिसंवादात्। अन्ये तु दूर्वास्वर-सेन अकल्कमेव तैल साध्यम् कम्पिल्लकेन वा दार्वीकल्केन वा जलेन द्रवेणापर

तैलद्वयमित्याहुः। तैलसाधनविधिं घृतेऽप्यतिदिशति येनेत्यादि—अयञ्च सर्वतैलविध्यतिदेश, अन्ये तु दूर्वादितैलविध्यतिदेश इत्याहु ॥ ८४ ॥

## मञ्जिष्ठाद्यं घृतम्

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥ ८५ ॥

मञ्जिष्ठामित्यादौ—जल चतुर्गुणम् ॥ ८५ ॥

## पाटलीतैलम्

सिद्धं कल्ककषायाभ्यां पाटल्या कटुतैलकम्।
दग्धव्रणरुजास्रावदाहविस्फोटनाशनम् ॥ ८६ ॥

पाटलीतैलम्—स्पष्टम् ॥ ८६ ॥

## चन्दनाद्यं यमकम्

चन्दनं वटशुङ्गञ्च मञ्जिष्ठा मधुकं तथा।
प्रपौण्डरीकं दूर्वा च पत्तङ्गं धातकी तथा ॥
एभिस्तैल विपक्वव्यं सर्पि क्षीरसमायुतम्।
अग्निदाहव्रणे श्रेष्ठं व्रणाद्रोपणं परम् ॥ ८७ ॥

चन्दनाद्यमके—तैलघृताभ्या समाभ्यां मिलित्वा प्रस्थः। पत्तङ्ग रक्तचन्दनम्। क्षीरमेवात्र चतुर्गुणम्। तैलमिति तिलभवमेव सर्वत्र विशेषोक्तिं विना ॥ ८७ ॥

मन शिलाले मञ्जिष्ठा सलाक्षा रजनीद्वयम्।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः पर ॥ ८८ ॥
अयोरज सकाशीशं त्रिफलाकुसुमानि च।
प्रलेप कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ ८९ ॥

मनःशिलेत्यादिना—सावर्ण्याख्यमुपक्रममाह। अयोरज इत्यादौ—काशीश धातुकाशीशम्। त्रिफलाकुसुमानि हरीतक्यादितरुकुसुमानि। कुसुमाभावे फलेन व्यवहार ॥ ८८–८९ ॥

कालीयकलताम्रास्थिहेमकालारसोत्तमै।
लेप सगोमयरसः सवर्णकरण पर ॥ ९० ॥

कालीयकेत्यादौ—कालीयक कालीयाकाष्ठम्, लता प्रियङ्गुः दूर्वेत्यन्ये, हेम नागकेशरचूर्णम्, काला मञ्जिष्ठा; रसोत्तमं पारद घृतमित्यन्ये । गोमयरस पेषणार्थम् ॥ ६० ॥

चतुष्पदां हि त्वग्रोमखुरशृङ्गास्थिभस्मना ।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुन ॥ ६१ ॥
व्रणग्रन्थि ग्रन्थिवच्च जयेत् क्षारेण वा भिषक् ॥ ६२ ॥

इति व्रणशोथचिकित्सा ।

चतुष्पदामित्यादि—सुगमम् । व्रणग्रन्थिमिति—दुरूढतया सञ्जात मासग्रन्थिमित्यर्थः ॥ ६१-६२ ॥

इति व्रणशोथसद्योव्रणचिकित्साविवृति ।

---

# अथ नाडीव्रण-चिकित्सा ।

नाडीनां गतिमन्विष्य शस्त्रेणापाट्य कर्मवित् ।
सर्वव्रणक्रमं कुर्य्याच्छोधनं रोपणादिकम् ॥
नाडीं वातकृतां साधुपाटितां लेपयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ १ ॥

व्रणत्वसाजात्यान्नाडीव्रणचिकित्सामाह नाडीनामित्यादि—गतिमिति । पूयगतिम् । आदिशब्देनोत्सादनावसादनसवर्णकरणादयो गृह्यन्ते । साधुपाटनमुपनाहपूर्वकम् । तदुक्त वाग्भटे "उपनाह्यानिलान्नाडीं पाटिता साधु लेपयेत् । प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवै " इति । अतएव वचनात् सैन्धवयोगादप्यय लेपो बोध्य. । प्रत्यक्पुष्पी अपामार्गः तस्य बीजम् । लेखयेदिति क्षारेण प्रतिसारयेदित्यर्थ । एतच्च लेखनयोग्यव्रण प्रति बोध्यम् । उक्त हि "उद्वृत्तान् स्थूलपर्य्यन्तानुत्सन्नान् कठिनान् व्रणान् । किलासानि सकुष्ठानि लिखेल्लेख्यानि बुद्धिमान् " इति ॥ १ ॥

पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाद्वयै. ॥ २ ॥

पैत्तिकीमित्यादि—नागदन्ती स्थूलमूला दन्त्येव । "पित्तजा निशिमाञ्जिष्ठा-

नागदन्त्योस्तिलं मम" इत्यायुर्वेदमागर्दशनान्निशाद्यैरित्यत्र निशायुतैरिति केचित् पठन्ति, तन्न, विशेष्यस्याश्रवणात् निशाशब्देन हरिद्राया अनभिधानाच्च, किन्तु निशीत्येष तत्र पाठ इति योगान्तरमेतत्। तथा वाग्भटेऽपि निशाद्यैरित्येव पठ्यते। वृन्देऽपि तथा। सुश्रुते हरिद्राद्वयव्यतिरेकेणाप्ययं योगः ॥ २ ॥

**श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥ ३ ॥**

श्लैष्मिकीमित्यादौ—निकुम्भो दन्ती, अरिष्टो निम्बः, अत्र यष्ट्याह्वस्थाने सौराष्ट्रीयोगादप्ययं योगः। उक्तं हि वाग्भटे—"श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैः" इति ॥ ३ ॥

**शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥ ४ ॥**

शल्यजामित्यादि—वाग्भटस्य। छिन्नशोधितामिति आदौ छिन्नामिति पाटितां पश्चात् शल्यं निर्हृत्य शोधितामित्यर्थः। सुश्रुतेऽप्युक्तं—"नाडीन्तु शल्यप्रभवां विदार्य्य निर्हृत्य शल्यं प्रविशोध्य मार्गम्। बध्नेद् व्रणं क्षौद्रघृतप्रगाढं दत्त्वा तिलान् शोध्यवरोपयेच्च" इति ॥ ४ ॥

**आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता।**
**सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥**

आरग्वधेत्यादौ—आरग्वधस्य पत्रं, काला कालाकडामूलं न तु मञ्जिष्ठा अस्यैकस्यैव दुष्टव्रणहन्तृत्वात्। सूत्रवर्त्तिरिति गोमूत्रकृता वर्त्तिः। शोनालुपात, हलुदि, कालाकडामूल एषां प्रत्येकं चूर्णं मा ८, घृत कर्ष १, मधु कर्ष १, गोमूत्र पल १, एतत् सर्वं पक्त्वा मधुसैन्धवयोर्वर्त्तिवद् वर्त्तिं कार्य्येत्याहुः, पाकमन्तरेण वर्त्तिकरणस्याशक्यत्वात्। सूत्रवर्त्तिरिति पाठे एभिर्लिप्ता सूत्रवर्त्तिरित्यर्थः वृद्धास्तु पूर्व्वमेव व्यवहरन्ति ॥ ५ ॥

**घोण्टाफलत्वक् लवणं सलाक्षं**
**पूगात् फलञ्चालवणञ्च पत्रम्।**
**स्नुह्यर्कदुग्धान्वित एष कल्को**
**वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥ ६ ॥**

घोण्टेत्यादि—सुश्रुतस्य। घोण्टा अरण्यबदर, अस्या फलं त्वक् च। लवणं सैन्धवम्। लाक्षा प्रसिद्धैव। पूगात् फलमिति शुष्कपूगफलम्। आलवणञ्च पत्रमिति अलवणा ज्योतिष्मती, अस्याः पत्रमालवणम्। वाग्भटेऽप्युक्तं—"घोण्टा-

फलत्वक्लवण सलाक्ष पूगात् फलञ्चालवणञ्च पलम्। स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाडीम्'' इति। अन्ये तु लाक्षा ज्योतिष्मतीपत्रञ्च न पठन्ति, मदनफलञ्च पठन्ति, यथा,—"घोण्टाफलत्वक्ञ्चाऽग्नात् फलानि पूगस्य च त्वग्ल-वणञ्च मुख्यम्। स्नुह्यर्कदुग्धेन सहैष कल्को वर्त्तीकृतो हन्त्यचिरेण नाडीम्" इति। एतत् सर्वं समभाग कृत्वा किञ्चित् सैन्धव दत्त्वा स्नुहीक्षीरार्कक्षीरजलैराप्लाव्य पक्त्वा वर्त्ति कार्य्या ॥ ६ ॥

**वर्त्तीकृतं माक्षिकसम्प्रयुक्तं**
**नाडीघ्नमुक्तं लवणोत्तमं वा।**
**दुष्टव्रणे यद्विहितञ्च तैलं**
**तत् सेव्यमानं गतिमाशु हन्ति ॥ ७ ॥**

वर्त्तीकृतमित्यादि—सुश्रुतस्य। लवणोत्तममिति सैन्धव, वर्त्तिकरणञ्च मधु-सैन्धवयोरग्नौ पाकात्, अन्यथा बन्धो न स्यात्। दुष्टव्रणे यद्विहितञ्च तैलमिति सुश्रुतोक्तारग्वधादितैलादि ॥ ७ ॥

**जात्यर्कसम्पाककरञ्जदन्ती-**
**सिन्धूत्थसौवर्च्चलयावशूकैः।**
**वर्त्तिः कृता हन्त्यचिरेण नाडीं**
**स्नुक्क्षीरपिष्टा सह चित्रकेण ॥ ८ ॥**

जातीत्यादि—जातीपल्लवाः, अर्कस्य मूल, सम्पाक आरग्वध तस्यापि पत्र; करञ्जस्य बीजं, दन्ती दन्तीमूल, अत्र स्नुहीक्षीरेणैव सह किञ्चिज्जल दत्त्वा पक्त्वा च वर्त्तिः कार्य्येत्याहुः ॥ ८ ॥

**माहिषदधिकोद्रवान्नमिश्रं हरति चिरविरूढाञ्च।**
**भुक्तं कगुङ्गनिकामूलचूर्णमतिदारुणां नाडीम् ॥ ९ ॥**

माहिषेत्यादि—कोद्रवस्तृणधान्यविशेष., तस्य भक्तम्। कङ्गुनिका कायानि; एतन्मूलचूर्णं माहिषदधिकोद्रवभक्ताभ्या मिश्रित कृत्वा भुक्त सदित्यर्थः ॥९॥

**कृशदुर्बलभीरूणां गतिर्मर्माश्रिता च या।**
**क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥ १० ॥**
**एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम्।**
**सूचीं निदध्याद् गत्यन्ते चोन्नाम्य चाशु निर्हरेत् ॥**

सूत्रस्यान्तं समानीय गाढं बन्धनमाचरेत् ।
ततः क्षारबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता ॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः ।
मूले सूत्रेण वध्नीयाच्छिन्ने चोपचरेद् व्रणम् ॥ ११ ॥

कृशेत्यादि—सुश्रुतस्य। कृशः क्षीणमांसः, दुर्बलो हीनबलः । क्षारसूत्रेण छेदनविधिमाह, एषण्येत्यादि । क्षारसूत्रेण सह अनुसर्त्तुं शीलं यस्याः एतादृशीं सूचीमुन्नाम्य उत्क्षिप्य सूच्यग्रेण गतिप्रान्तं विद्ध्वा सूचीं निर्हरेदिति भावः । अत्र यदि अतिदीर्घा भवति तदा द्व्यङ्गुले त्र्यङ्गुले चतुरङ्गुले वा बद्ध्वा क्रमेण छेदयेत् । न पुनरेकदैव गतिप्रमाणेन बध्वा छेदः कार्य्यः सूत्रच्छेदभयात् पीडातिशयजनकत्वाच्च इत्याहुः । क्षाराक्तमिति सूत्रविशेषणम् । अर्बुदादिषु बन्धविशेषमाह, अर्बुदादिष्वित्यादि—अर्बुदादिकं यदि तनुमूलं भवति तदा उत्क्षिप्यैव मूले सूत्रेण बध्नीयात् । स्थूलमूलेषु तु सूत्रस्थैर्य्यार्थं मूलं समन्ततः सूचीभिराचितं यथा स्यात्तथा बध्नीयात् । यववक्त्राभिरिति यववन्मध्यस्थूलवक्त्राभिः, यववक्त्रत्वञ्च सूचीनां दार्ढ्यार्थम् । छिन्ने चोपचरेद्व्रणमिति द्विव्रणीयोक्तविधिनेति शेषः ॥१०॥११॥

## सप्ताङ्गगुग्गुलुः

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः ।
नाडीदुष्टव्रणशूलभगन्दरविनाशनः ॥ १२ ॥

गुग्गुलुरित्यादौ—त्रिफलाव्योषैरिति विशेषणे तृतीया । त्रिफलादीनान्तु मिलित्वा गुग्गुलुसमत्वम्, आज्ययोजित इति घृतपिष्टितः, घृतञ्च तावद्देयं यावता वटकीभवति ॥ १२ ॥

## सर्जिकाद्यं तैलम्

सर्जिकासिन्धुदन्त्यग्निरूपिकानलनीलिका ।
खरमञ्जरिबीजेषु तैलं गोमूत्रपाचितम् ।
दुष्टव्रणप्रशमनं कफनाडीव्रणापहम् ॥ १३ ॥

सर्जिकेत्यादौ—अग्निश्चित्रकः, रूपिका श्वेतार्क, नलश्च स्वनामख्यातः, नीलिका नीलीति प्रसिद्धा नीलवुह्येत्यन्ये, खरमञ्जरी अपामार्गः, गोमूत्र पाकार्थं चतुर्गुणम्, सुश्रुतेऽप्युक्त 'सुवर्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु। फलेष्वपामार्गभवेषु चैव कुर्य्यात समूत्रेषु हिताय तैलम्' इति॥ १३॥

## कुम्भीकाद्यं तैलम्

कुम्भीकखर्जूरकपित्थविल्व-
वनस्पतीनान्तु शलाटुवर्गैः।
कृत्वा कषायं विपचेत्तु तैल-
मावाप्य मुस्तासरलप्रियङ्गु॥
सौगन्धिकामोचरसाहिपुष्प-
लोध्राणि दत्त्वा खलु धातकीश्च।
एतेन शल्यप्रभवा हि नाडी
रोहेद् व्रणो वै सुखमाशु चैव॥ १४॥

कुम्भीकेत्यादि—सुश्रुतस्य। कुम्भीक, कुम्भाडुलता दाडिमसमानफला स्थूलदन्तीत्यन्ये; वनस्पतयो वटादय एषा शलाटु कोमलफलम्, सौगन्धिका अनन्तमूलम्, मोचरसः शाल्मलीनिर्य्यास, अहिपुष्प नागकेशरम्॥ १४॥

## भल्लातकाद्यं तैलम्

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च॥ १५॥

भल्लातकेत्यादि—सुश्रुतस्य। मार्कवो भृङ्गराजस्तस्य स्वरसश्चतुर्गुण॥ १५॥

## निर्गुण्डीतैलम्

समूलपत्रां निर्गुण्डीं पीडयित्वा रसेन तु।
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम्॥

हितं पामापचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्वव्रणेषु च ॥ १६ ॥

निर्गुण्डीतैले—सममिति सहार्थे, तेन निर्गुण्डीस्वरसश्चतुर्गुण एव ग्राह्य । चक्रस्तु समशब्द तुल्यार्थमित्याह । अकल्कमिद तैलम् ॥ १६ ॥

## हंसपादीतैलम्

हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसै ।
तत्कल्कैश्च पचेत् तैलं नाडीव्रणविशोधनम् ॥ १७ ॥
इति नाडीव्रणचिकित्सा ॥

हसपादीतैले—हसपादी स्वनामख्याता, अरिष्टपत्र निम्बपत्रम्, तत इति तेषामित्यर्थ पष्ठ्यन्तात्तसिरिति, त्रयाणा रसो मिलित्वा तैलाच्चतुर्गुण ॥ १७ ॥

इति नाडीव्रणचिकित्सा-विवृति ।

# अथ भगन्दर-चिकित्सा ।

गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत्ततः ।
रक्तावसेचनं कुर्य्याद् यथा पाकं न गच्छति ॥ १ ॥

नाडीव्रणत्वसामान्यात् सल्यासामान्याच्च भगन्दरमाह, गुदस्येत्यादि—विशोष्येत्युपवासादिना । शोधयेदिति विरेचयेत् न शोणितमोक्षणादिभिः ॥ १ ॥

वटपत्रेष्टकाशुण्ठीगुडूच्यः सपुनर्नवाः ।
सुपिष्टा पिडकारम्भे लेपः शस्तो भगन्दरे ॥
पिडकानामपक्कानामपतर्पणपूर्वकम् ।
कर्म कुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया ॥ २ ॥

वटपत्रेत्यादौ—वटस्य कोमलपत्रम्, इष्टका च पानीये चिरमुषिता ग्राह्येति वृद्धव्यवहार । अपतर्पणपूर्वक कर्म कुर्य्याद्विरेकान्तमिति अपतर्पणादयो विरेकान्ता एकादशोपक्रमा द्विव्रणीयोक्ता कर्त्तव्या इत्यर्थः ॥ २ ॥

एषणीपाटनक्षार-वह्निदाहादिकं क्रमम् ।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम् ॥ ३ ॥

ऽपर्णीत्यादौ—कार्य्यमित्यत्र चिकित्सितमिति शेषः ॥ ३ ॥

त्रिवृत्तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम् ॥ ४ ॥

त्रिवृदित्यादि—सुश्रुतस्य। नागदन्ती स्थूलमूला दन्ती, उत्सादनमिति शोधनम्, न तु निम्नव्रणोत्थापनरूपमुत्सादनमिह व्याख्येयम्, त्रिवृदादीना तीक्ष्ण-द्रव्यत्वात्, उत्सादनस्य तु मृदुमधुरद्रव्यसम्पाद्यत्वात्; उक्त हि चरके "स्तन्यानि जीवनीयानि बृंहणीयानि यानि च। उत्सादनार्थं निम्नाना व्रणाना तत्र कल्पयेत्" इति। अन्ये तु सयोगमहिम्ना त्रिवृदादीनामप्युत्सादनत्वमिह बोध्यमित्याहु ॥४॥

रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः।
त्रिवृत्तेजोवतीदन्तीकल्को नाडीव्रणापह ॥ ५ ॥

रसाञ्जनमित्यादि—सुश्रुतस्य। तेजोवती ज्योतिष्मती अन्ये तु चवीत्याहुः। शोधनरोपणोऽय कल्कः ॥ ५ ॥

कुष्ठं त्रिवृत्तिलादन्तीमागध्यः सैन्धवं मधु।
रजनी त्रिफला तुत्थं हितं व्रणविशोधनम् ॥ ६ ॥

कुष्ठमित्यादि—स्पष्टम् ॥ ६ ॥

स्नुह्यर्कदुग्धदार्वीभिर्वर्त्तिं कृत्वा विचक्षण।
भगन्दरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नत।
एषा सर्वशरीरस्थां नाडीं हन्यादसंशयम् ॥ ७ ॥

स्नुहीत्यादि—स्नुह्यर्कयोः क्षीरेण दारुहरिद्राचूर्णं पक्त्वा वर्त्तिः कार्य्येत्यर्थः ॥ ७ ॥

तिलाभयालोध्रमरिष्टपत्रं
निशे वचा कुष्ठमगारधूम।
भगन्दरे नाड्युपदंशयोश्च
दुष्टव्रणे शोधनरोपणोऽयम् ॥ ८ ॥

तिलेत्यादौ—कुष्ठस्थाने लोध्रपाठे लोध्रद्वय शावरपट्टिकाख्यभेदाद् ग्राह्यम्। निशे हरिद्रे द्वे ॥ ८ ॥

खराश्वपक्वभूनागचूर्णलेपो भगन्दरम्।
हन्ति दन्त्यग्न्यतिविषालेपस्तद्वच्छुनोऽस्थि वा ॥

त्रिफलारससंयुक्तं विडालास्थिप्रलेपनम् ।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम् ॥ ९ ॥

खरेत्यादौ—गर्दभरक्तपक्वगण्डूपदचूर्णलेप इत्यर्थ । दन्तीत्यादिद्वितीययोगे अग्निश्चित्रक । शुनोऽस्थि वा कुक्कुरस्यास्थीत्यत्र तृतीययोगे त्रिफलारसोऽपि पेषणार्थं ज्ञेय, उक्त हि "शुनोऽस्थि वा विडालास्थि त्रिफलारसभावितम्" इति. ॥ ९ ॥

## नवकार्षिकगुग्गुलुः

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता ।
गुडिका शोथगुल्मार्शोभगन्दरवतां हिता ॥ १० ॥

नवकार्षिके—त्रिपञ्चैकांशयोजिता इति अंश इह कर्षरूपो भागः, तेन त्रिफलाया प्रत्येक कर्ष, गुग्गुलोः पञ्च कर्षा, कृष्णाया एकः इति नवकार्षिकत्वम् ॥ १० ॥

## सप्तविंशतिगुग्गुलुः

त्रिकटुत्रिफलामुस्तविडङ्गामृतचित्रकम् ।
शट्येलापिप्पलीमूलं हवुषा सुरदारु च ॥
तुम्बुरु पुष्करं चव्यं विशाला रजनीद्वयम् ।
विडं सौवर्च्चलं क्षारौ सैन्धवं गजपिप्पली ॥
यावन्त्येतानि चूर्णानि तावद् द्विगुणगुग्गुलु ।
कोलप्रमाणां गुडिकां भक्षयेन्मधुना सह ॥
कासं श्वासं तथा शोथमर्शांसि च भगन्दरम् ।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥
अश्मरीं मूत्रकृच्छ्रञ्च अन्त्रवृद्धिं तथा क्रिमीन् ।
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥
आनाहञ्च तथोन्मादं कुष्ठानि चोदराणि च ।
नाडीदुष्टव्रणान् सर्वान् प्रमेहं श्लीपदं तथा ।
सप्तविंशतिको ह्येष सर्वरोगनिसूदन ॥
जम्बूकमांसं भक्षयेच्च प्रकारैर्व्यञ्जनादिभि ।
अजीर्णवर्जी मासेन मुच्यते ना भगन्दरात् ॥ ११ ॥

तिकद्‌विलादी-क्षारौ यवक्षारस्वर्जिकाक्षारौ । एतेन गुग्गुलु विना सप्तविंशति-द्रव्याणीति निश्चल· । ये तु सौवर्चलक्षाराविति पठन्ति, तन्मते गुग्गुलुना सहैव सप्तविंशतिरिति ॥ ११ ॥

पञ्चतिक्तं घृतं शस्तं पञ्चतिक्तञ्च गुग्गुलु ।
न्यग्रोधादिगणो यस्तु हितः शोधनरोपणे ।
तैलं घृतं वा तत्पक्वं भगन्दरविनाशनम् ॥ १२ ॥

न्यग्रोधादीत्यादि —सुश्रुतस्य । कल्कोऽयम् । तत्पक्वमिति न्यग्रोधादे क्वाथ-कल्काभ्या पक्वम् ॥ १२ ॥

## विष्यन्दनतैलम्

चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ ।
सुधां वचां लाङ्गलिकीं हरितालं सुवर्चिकाम् ॥
ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत् ।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे ।
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥ १३ ॥

चित्रकेत्यादि—सुश्रुतस्य । चित्रकादीना कल्को जल चतुर्गुणम् । मलपू-काष्ठोडुम्बर , तस्य मूलं रक्तपित्तादौ तु फलम् । विष्यन्दयति पूय स्रावयति इति विष्यन्दन शोधनम् ॥ १३ ॥

## करवीराद्यं तैलम्

करवीरनिशादन्तीलाङ्गलीलवणाग्निभि ।
मातुलुङ्गार्कवत्साह्वै पचेत्तैलं भगन्दरे ॥ १४ ॥

करवीराद्ये—मातुलुङ्गस्य मूलम् , वत्साह्व कुटजस्तस्य त्वक् , अन्ये तु तत्फ-लमाहु· ॥ १४ ॥

## निशाद्यं तैलम्

निशार्कक्षीरसिन्ध्वग्निपुराश्वहनवत्सकै· ॥
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम् ॥ १५ ॥

निशेत्यादौ—पुरो गुग्गुलु ; अश्वहन. करवीरस्तस्य मूलम् ॥ १५ ॥

व्यायामो मैथुनं युद्ध पृष्ठयानं गुरूणि च ।
संवत्सरं परिहरेदुपरूढव्रणो नर ॥ १६ ॥
इति भगन्दराचिकित्सा ।

---

भगन्दरेऽपथ्यान्याह—व्यायाम इत्यादि ॥ १६ ॥

इति भगन्दराचिकित्सा-विवृति ।

---

# अथोपदंशचिकित्सा ।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यध ।
जलौकापातनं वा स्यादूर्ध्वाध शोधनं तथा ।
सद्यो निर्हृतदोषस्य रुक्शोथावुपशाम्यत ।
पाको रक्ष्य प्रयत्नेन शिश्नक्षयकरो हि स ॥ १ ॥

स्थानप्रत्यासत्त्या उपदंशाचिकित्सितमुच्यते—ध्वजमध्ये मेढ्रमध्ये । शिराव्यधश्च रक्तदुष्टौ महत्याम्, अल्पायान्तु जलौकया रक्तपातनम् ॥ १ ॥

पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिराशनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्वोपदंशापहर प्रयोग ॥ २ ॥

पटोलेत्यादि—पटोलादिक्वाथे गुग्गुलु त्रिफलाचूर्णं वा प्रक्षिप्य पिबेत्, एव खादिराशनक्वाथमपि, अशन पीतशाल । अन्ये तु क्वाथद्वये यथासख्य गुग्गुलुत्रिफलाचूर्णयो प्रक्षेप इत्याहु । अपरे तु केवलक्वाथेन योगद्वयम्, तदेव गुग्गुलोस्त्रिफलाचूर्णस्य वा प्रक्षेपेणापि योगद्वयमिति वदन्ति । व्यवहारस्तु पूर्वेणैव ॥ २ ॥

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा ।
सरलागुरुभद्राह्वैर्वातिके लेपसेचने ॥ ३ ॥

प्रपौण्डरीकमित्यादि—सुश्रुतस्य । भद्राख्य देवदारु ॥ ३ ॥

गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः ।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत् ॥ ४ ॥

गैरिकेत्यादि च तस्यैव—स्निग्धैरिति शतधौतघृतै ॥ ४ ॥

निम्बार्जुनाश्वत्थकदम्बशाल-
जम्बूवटोडुम्बरवेतसेषु ।
प्रक्षालनालेपघृतानि कुर्य्या-
च्चूर्णानि पित्तासभवेऽपदंशे ॥ ५ ॥

निम्बेत्यादौ—घृतसाधनपक्षे निम्बादिक्काथकल्काभ्यामेति वदन्ति ॥ ५ ॥

त्रिफलाया कषायेण भृङ्गराजरसेन वा ।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥ ६ ॥

त्रिफलाया इत्यादि—स्पष्टम् ॥ ६ ॥

दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ७ ॥

दहेदित्यादि—स्पष्टम् ॥ ७ ॥

रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम् ।
सक्षौद्रं वा प्रलेपेन सर्वलिङ्गगदापहम् ॥ ८ ॥
वव्बूलदलचूर्णेन दाडिमत्वग्भवेन वा ।
गुण्डनं त्वस्थिचूर्णेन उपदंशहरं परम् ॥ ९ ॥

रसाञ्जनमित्यादि योगत्रयम् । अत्र पथ्या गुडूची । वब्बूलेति—वब्बूलस्य दल पत्र, गुण्डनमवचूर्णन, त्वस्थीति मानुषकपालास्थि, चन्द्राटेऽपि नृकपालास्थीत्युक्तत्वात् ॥ ८—९ ॥

लेपः पूगफलेनाश्वमारमूलेन वा तथा ।
सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च ॥ १० ॥

लेप इत्यादौ—अश्वमार करवीरस्तस्य मूलेन ॥ १० ॥

जयाजात्यश्वमारार्क-सम्पाकानां दलैः पृथक् ।
कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥ ११ ॥

जयेत्यादौ—दलैः पत्रै ॥ ११ ॥

## भूनिम्बाद्यं घृतम्

भूनिम्बनिम्बत्रिफलापटोल-
करञ्जजातीखदिराशनानाम् ।
सतोयकल्कैर्घृतमाशु पक्व
सर्वोपदंशापहरं प्रदिष्टम् ॥ १२ ॥

भूनिम्बेत्यादि—स्पष्टम् ॥ १२ ॥

करञ्जनिम्बार्जुनशालजम्बू
वटादिभि कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं
सदाहपाकं स्रुतिरागयुक्तम् ॥ १३ ॥

करञ्जाद्यघृते—करञ्जस्य मूलम् । वटादिभिरिति वटोडुम्बराश्वत्थप्लक्षकपीतनै पञ्चभि. । कपीतनो गन्धमुण्ड । घृतस्यास्य पानम्, अभ्यञ्जनेन कार्य्यम् ॥१३॥

## आगारधूमाद्यं तैलम्

आगारधूमरजनीसुराकिण्वञ्च तैस्त्रिभि ।
भागोत्तरै पचेत्तैलं कण्डूशोथरुजापहम् ।
शोधनं रोपणञ्चैव सवर्णकरणं परम् ॥ १४ ॥

आगारधूमेति—आगारधूमोऽलन्धूम. । किण्व सुरावीजम् । भागोत्तरैरिति तैलप्रस्थे आगरधूम पल १ कर्ष १ मापा ५ रति ३ । हरिद्रा पल २ कर्ष २ मापा १० रति ६ । सुराबीज पल ३ कर्ष ३ माषा १५ रति ९ । एव स्नेह-पादिकत्वं कल्कस्य, पाकस्तु जलेनैव ॥ १४ ॥

अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत् ॥ १५ ॥

इत्युपदंश-चिकित्सा ॥

---

चिकित्सासामान्यादत्रैव लिङ्गार्शसा चिकित्सामाह, अर्शसामिति लिङ्गार्शसा-मित्यर्थ ॥ १५ ॥

इत्युपदंशचिकित्सा: ।

# अथ शूकदोष-चिकित्सा।

हितञ्च सर्पिषः पानं पथ्यञ्चापि विरेचनम्।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम्॥ १॥

प्रागुक्तमङ्क्त्यैव शूकदोषचिकित्सितमुच्यते। शूको जलशूकः सविषजन्तुः तद्‌कृतो दोषः शूकदोषः। हितमित्यादि—सुश्रुतस्य। सर्पिष इति यथादोषं संस्कृतस्य। विरेचनमपि पथ्यं हितमित्यर्थः॥ १॥

सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत्।
तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम्॥ २॥
क्रियेयमधिमन्थेऽपि रक्तं स्राव्यं तथोभयोः॥ ३॥

सर्षपीमित्यादि—वाग्भटस्य। कषायैरिति रसभेदीये कषायवर्गोक्तैः पथ्याविभीतकशिरीषादिभिः शोधनादिगणसंग्रहोक्तन्यग्रोधादिभिः। सूक्ष्मैरिति सूक्ष्मचूर्णीकृतैः। सुश्रुते तु सूक्ष्मैरित्यत्र सम्यगिति पाठः। तैरेवेति पूर्वोक्तकषायैः क्वाथकल्कैः। उभयोरिति सर्षप्यधिमन्थयोः॥ २—३॥

अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत्॥ ४॥
कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम्॥ ५॥
अलज्यां हृतरक्तायामयमेव क्रियाक्रमः॥ ६॥

अष्ठीलायामित्यादि—वाग्भटस्य। वातजायामप्यष्ठीलायां शूकदूषितरक्तस्यावरकस्य निर्हरणं जलौकादिभिरुचितमेव। कुम्भीकायां हरेद्रक्तमित्यामावस्थायाम्। तैलञ्च रोपणमिति उक्ततिन्दुकादिकल्कसिद्धम्। सुश्रुते तु—कुम्भीका पाकमापन्ना भिन्ना सशोध्य रोपयेत्। तैलेन लोध्रत्रिफलातिन्दुकाम्रकृतेन वा" इत्युक्तम्। तिन्दुकाम्रयोः फलास्थीति च तट्टीकाकृत। अलज्यामित्यादि—वाग्भटस्य। अयमेवेति कुम्भीकोक्तः॥ ४—६॥

स्वेदयेद् ग्रथितं स्निग्धं नाडीस्वेदेन बुद्धिमान्।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत्॥ ७॥

स्वेदयेदिति—सुश्रुतस्य। ग्रथितमिति ग्रथिताख्यं शूकदोषम्। स्निग्धमिति

तैलयोगात्। स्वेदेनेति स्वेदनद्रव्याणि चरकोक्तानि यथा 'वारुणामृतकैरण्डशिग्रु-मूलकसर्षपैः। वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च। शोभाञ्जनकशैरीयमालतीसुरसार्जकैः। पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत्' इति। सुखोष्णैरुपनाहैरिति कफहरद्रव्यकृतैः, ग्रथितस्य कफकृतत्वात्। सुस्निग्धैरिति तैलयोगात्॥ ७॥

**उत्तमाख्यान्तु पिडकां सञ्छिद्य वडिशोद्धृताम्।**
**कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत्॥ ८॥**

उत्तमाख्यामित्यादि—वाग्भटस्य। कषायाणामिति कषायवर्गपठितानां पथ्यादीनां न्यग्रोधादीनां वा। उपचरेदिति प्रलेपेन॥ ८॥

**क्रमं पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः।**
**त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः।**
**बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत्॥ ९॥**

क्रम इत्यादि—वाग्भटस्य। पुष्करीमूढयोरिति पुष्करिकामूढापिडकयोः। त्वक्पाके स्पर्शहान्याञ्चेति पूर्वेण सम्बध्यते। तेनैतयोरपि पित्तविसर्पोक्तः क्रमः कार्य्यः। मृदितं पुनर्बलातैलेन सेचयेदिति योज्यम्। मधुरैरिति काकोल्यादिभिः, किंवा जीवनीयगणैः, वाग्भटे जीवनीयगणस्योक्तत्वात्। बलातैलञ्च वाग्भटे वातव्याधावुक्तम्॥ ९॥

**रसक्रिया विधातव्या लिखिते शतपोनके॥**
**पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम्।**
**रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे।**
**कषायतैलसर्पींषि कल्के चूर्णे रसक्रियाम्।**
**शोधने रोपणे चैव वीक्ष्य वीक्ष्यावतारयेत्॥ १०॥**

रसक्रियेत्यादि—सुश्रुतस्य। रसक्रिया तु अवस्था वीक्ष्य शोधनीया रोपणीया वा देया। तत्र शोधनीया यथा,—'शालसारादिसारेषु पटोलत्रिफलासु च। रसक्रिया विधातव्या शोधनी शोधनेषु च' इति। रोपणीया यथा,—'त्वक्षु न्यग्रोधवृक्षस्य त्रिफलायास्तथैव च। रसक्रिया रोपणार्थे विदधीत यथाविधि' इति।

पृथक्पर्ण्यादीत्यादि—पृथक्पर्ण्यादि मिश्रकोक्तघृतसाधनद्रव्यम्, तद्यथा,—'पृथक्पर्ण्यात्मगुप्ता च हरिद्रे मालती सिता। काकोल्यादिश्च योज्यः स्याद्रोपणे घृते' इति। अत्र सिता शर्करेति चक्रः, श्वेतदूर्वेति तु बकुलदेवः। एतच्च घृत

तैल वा पृथक्पर्य्योदिना क्वाथकल्करूपेण साध्यमिति वदन्ति । शर्करा तु कल्करूपेणैव देया क्वाथानर्हत्वात्। अनन्तरामिति रसक्रियादानस्यानन्तरमित्यर्थः। रक्तविद्रधिवदित्यादौ—वीक्ष्य वीक्ष्येति द्विव्रणीयोक्तामवस्था निरूप्य यदि शोधन कर्त्तव्य भवति तदा शोधनानि कषायादीन्यवचारयेत्; यदा तु रोपण कर्त्तव्य भवति तदा रोपणानीत्यर्थ ॥ १० ॥

अर्वुदं मांसपाकञ्च विद्रधिं तिलकालकम् ।
प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम् ॥११॥

इति शूकदोषचिकित्सा ।

---

अर्बुदमित्यादि—असाध्यत्वेनोक्तेष्वप्यर्बुदादिषु कदाचिदसम्पूर्णलिङ्गत्वादिना साध्यता याप्यता वा सम्भवतीति प्रत्याख्याय तत्र क्रिया कार्य्येति ज्ञेयम् ॥११॥

इति शूकदोषचिकित्सा-विवृतिः ।

---

# अथ भग्न-चिकित्सा ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ।
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत् ॥१॥

आगन्तुजत्वसामान्याद् भग्नचिकित्सामाह—आदौ भग्नमित्यादि । कुशान्वितमित्यत्र कुशेति भग्नास्थिबन्धसाधनकदम्बादित्वच सञ्ज्ञा, उक्त हि वाग्भटे—
"कदम्बोडुम्बराश्वत्थसर्जार्जुनपलाशजैः । वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः । सुश्लक्ष्णैः सुप्रतिष्टम्भैर्वल्कलैः शकलैरपि । कुशाह्वैः सम बन्ध पट्टस्योपरि योजयेत्" इति ॥ १ ॥

अवनामितमुन्नह्येदुन्नतञ्चावनामयेत् ।
आञ्छेदतिक्षिप्तमधोगतञ्चोपरि वर्त्तयेत् ॥
आलेपनार्थं मञ्जिष्ठामधुकञ्चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥२॥

अवनामितमित्यादि—सुश्रुतस्य । अवनामित अवनत कर्कटक वकञ्च उन्नमेत् उन्नामयेत्, उन्नतमश्वकर्णादि अवपीडयेत् । अतिक्षिप्त अध ऊर्द्ध्व वा अतिनिर्गतम् । आञ्छेदिति प्रसारयेत्, आछि आयामे इत्यस्य रूपम् । अधोगतमध क्षिप्तादि उपरि वर्त्तयेत् आकर्षयेत् । आलेपनार्थमित्यादि—सुश्रुतस्य । अम्लपेषितमिति काञ्जिकपिष्टम् । शतधौतघृतोन्मिश्रमिति पूर्वेण परेण च योज्यमिति चक्रः ॥ २ ॥

**सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।**
**कर्त्तव्यं स्यात् त्रिरात्राच्च तथाग्नेयेषु जानता ।**
**काले च समशीतोष्णे पञ्चरात्राद्विमोक्षयेत् ॥ ३ ॥**
**न्यग्रोधादिकषायश्च सुशीत परिषेचने ।**
**पञ्चमूलीविपकन्तु क्षीर दद्यात् सवेदने ।**
**सुखोष्णमवतार्य्य वा चक्रतैलं विजानता ॥ ४ ॥**

सप्तरात्रादित्यादि—“ सुश्रुतस्य । सौम्येष्वृतुष्विति शीते । आग्नेये ग्रीष्मे, वाग्भटेऽप्युक्तम्,—“ त्र्यहात् त्र्यहादृतौ धर्मे सप्ताहान्मोक्षयेद्धिमे । साधारणे तु पञ्चाहाद् भग्नदोषवशेन वा ” इति । जानता वैद्येनेति शेष । समशीतोष्णे काले चेति शरद्वसन्तकाले । न्यग्रोधेत्यादि—सुश्रुतस्य । पञ्चमूलीत्यादि—पञ्चमूली चात्र स्वल्पेति वदन्ति । एतत् पक्वञ्च क्षीर वातपित्तोत्तरे भग्ने, अत्रापि परिषेचने इति योज्यम् । चक्रतैलमिति सद्य पीडित तैल किंवा सुश्रुतवातव्याधिचिकित्सितोक्त तैलविधानगृहीत तैलम् । शीतोपचारोचितेऽपि भग्ने सुखोष्णस्य विधानमनिले बलीयसीति ज्ञेयम्, अतएव विजानतेत्युक्तम् ॥ ३—४ ॥

**मांस मांसरस. सर्पि क्षीरं यूषः सतीनजः ।**
**बृंहणञ्चान्नपानञ्च देयं भग्ने विजानता ॥ ५ ॥**

भग्नहितमन्नपानमाह, मांसमित्यादि—सुश्रुतस्य । क्षीरमिहाव्रणे भग्ने सन्धानीयतया हितम् । यत् पुनर्नवधान्यादिवर्गे क्षीर निषिद्ध तद् व्रणविषय एवेति न विरोध । अन्ये तु क्षीरसर्पिरिति पठित्वा क्षीरादुत्थित सर्पिरिति व्याचक्षते । सतीनो वर्त्तुलकलाय, स च यद्यपि वातजनकस्तथापि सन्धानीयत्वादिहोक्त इति ॥ ५ ॥

**गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।**
**शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नर ॥ ६ ॥**

सघृतेनास्थिसंहारं लाक्षां गोधूममर्जुनम्।
सन्धियुक्तेऽस्थिभग्ने च पिवेत् क्षीरेण मानव ॥ ७ ॥
रसोनमधुलाक्षाज्यसिताकल्कं समश्नताम्।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ८ ॥
पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम्।
अपक्वक्षीरपीतं स्यादास्थभग्नप्ररोहणम् ॥ ६ ॥

गृष्टिक्षीरमित्यादि—सुश्रुतस्य। गृष्टिरेकवारप्रसूता धेनु, तस्या क्षीरम्, मधुरौषध काकोल्यादिगण, तेन क्षीरपरिमाणमाधितम्। सर्पिर्लाक्षे प्रक्षेप्ये। सघृतेनेत्यादि सघृतेन क्षीरेणास्थिसहारादिक व्यस्त समस्तञ्च पिबेदित्याहु ॥६-६॥

क्षीरं सलाक्षामधुकं ससर्पि
स्याज्जीवनीयञ्च सुखावहञ्च।
भग्न पिवेत् त्वक्पयसार्जुनस्य
गोधूमचूर्णं सघृतेन वाथ ॥ १० ॥

क्षीरमित्यादौ—जीवनीयमिति आरोग्यहेतुत्वात् प्राणधारणम्। त्वक्पयमार्जुनस्येति। अर्जुनस्य त्वचा साधित पयस्त्वक्पय, अर्जुनत्वक्पयसा सघृतेन गोधूमचूर्णं पिबेदिति योज्यम्। अन्ये तु त्वक्शब्दो नपुमकलिङ्गोऽप्यस्तीति अर्जुनस्य त्वच पिबेदित्याहु ॥ १० ॥

## लाक्षागुग्गुलुः

लाक्षास्थिसंहृत्ककुभाश्वगन्धा-
श्चूर्णीकृता नागबला पुरश्च।
सम्भग्नयुक्तास्थिरुजं निहन्या-
दङ्गानि कुर्य्यात् कुलिशोपमानि।
तत्रान्यतोऽपि दृष्टत्वात् तुल्यश्चूर्णेन गुग्गुलु ॥ ११ ॥

लाक्षेत्यादौ—अस्थिसहृत् अस्थिसहारः। ककुभोऽर्जुन। नागबला गोरक्षतण्डुला। पुरो गुग्गुलु, स च मिलितलाक्षादिचूर्णसम। वक्ष्यमाणाभादिगुग्गुलौ दृष्टत्वादिति चक्र ॥११॥

## आभागुग्गुलुः

आभाफलत्रिकैर्व्योपैः सर्वैरेभिः समीकृतैः ।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसादकः ॥ १२ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य्य कपायैश्च शेषं भग्नवदाचरेत् ॥ १३ ॥
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ।
वातव्याधिविनिर्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥ १४ ॥

एतदेवाह आभेत्यादि—आभा आढ़ेति ख्याता । सव्रणभग्नचिकित्सामाह, सव्रणस्येत्यादि—सुश्रुतस्य । प्रतिसार्य्य कपायैरिति न्यग्रोधादिकपायद्रव्यकृतकल्कैः प्रतिसार्य्य प्रलिप्य, कार्त्तिकस्तु कपायैरिति मधुरौपधक्वाथैः प्रतिसार्य्य प्रसिच्येति व्याचष्टे धातूनामनेकार्थत्वात् । शेषमित्याहारादिकम् ॥ १२–१४ ॥

## गन्धतैलम्

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत् ॥
तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना ।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं श्वदंष्ट्राञ्च मञ्जिष्ठां शारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः ।
चतुर्गुणेन पयसा तत्तैलं विपचेत् पुनः ।
एलामंशुमतीं पत्रं जीरकं तगरं तथा ॥
लोध्रं प्रपौण्डरीकं च तथा कालानुशारिवाम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥
पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौपधानि च ।
एभिस्तद्विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥

एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु।
आक्षेपके पक्षघाते चाङ्गशोषे तथार्दिते॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे।
वाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः॥
पथ्यं पाने तथाभ्यङ्गे नस्ये बस्तिषु योजयेत्।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते॥
मुखञ्च पद्मप्रतिमं स्यात् सुगन्धसमीरणम्।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत्।
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः।
तिलचूर्णात् चतुर्थांशं मिलितं चूर्णमिष्यते॥ १५॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम्।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च॥ १६॥

इति भग्न-चिकित्सा

रात्राविल्यादि—सुश्रुतस्य। अस्थिरे जल इति स्रोतोजले चतुःशरावतैलोचित-कृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीं बद्ध्वा स्रोतोजले प्रक्षिप्य रात्रौ स्थाप्यम्। ततो दिवसे आतपे शोषयेत्, एव सप्तदिनानि यावत्, तदनु तिलतुल्यपरिमाणगव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा प्रसार्य्यातपे शोषयेत्, एव सप्तदिनानि यावत्; तदनु "भाव्यद्रव्यसम क्काथ्यम्" इत्यादिवचनवलात् तिलतुल्यपरिमाण यष्टिमधु गृहीत्वा अष्टगुण जल दत्त्वा पक्त्वा अष्टमभागवशिष्टजले तिलान् रात्रौ प्रक्षिप्य दिवातपे शोषयेत्, एव सप्तदिनानि यावत्, एव गव्यक्षीरेऽपि सप्ताहम् (पुनरपि तिलतुल्यपरिमाणे गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा सूर्य्यातपे शोषयेत् एव सप्त दिनानि यावदित्यर्थ.)। तदनु तिलान् निस्तुषीकृत्य चूर्णयेत्। ततश्च तेषा तिलचूर्णानां चत्वारो भागा., भागश्चैक काकोल्यादिशतपुष्पान्तमिलितचूर्णस्य, वक्ष्यति च 'तिलचूर्णाच्चतुर्थम्' इत्यादि। एतस्यैव चूर्णस्य पीडनार्थमुत्स्वेदने कर्त्तव्ये आर्द्रीकरणार्थं सर्वगन्धशृत क्षीर तावन्मान ग्राह्य यावता क्षीरेण चूर्णमार्द्रं भवति। सर्वगन्धैरित्येलादिगणेन, क्षीरपरिभाषयैव दुग्ध साध्यम्। एलादिगणश्च सौश्रुत.। एवमुक्तप्रकारेण गृहीततैलस्य चत्वार. शरावा., एतत्पाकार्थञ्च गव्यदुग्धस्य षोडश-

शरावा माषा इत्यर्थ । अशुमती शालपर्णी, कालानुशारिवा तगरम्, क्षीरशुक्ला क्षीरविदारी, अनन्ता अनन्तमूल, मधूलिका मर्कटहस्ततृण अन्ये तु गोधूमभेद इत्याहु । प्रागुक्तानीति काकोल्यादिशतपुष्पान्तानि । एभिरिति कल्कैरित्यर्थ. । अदष्ट्राह्वमित्यत्र सयष्ट्याह्वमित्येव पाठ सुश्रुतटीकासु व्याख्यातः । अस्मिंस्तु पाठे यष्टीमधुनो भागद्वयम्, काकोल्यादिगणमध्येऽपि यष्टीमधुपाठात् ॥ १५ ॥ १६ ॥

इति भग्नचिकित्सा विवृति ।

---

# अथ कुष्ठ-चिकित्सा

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रम् ॥
प्रच्छनमल्पे कुष्ठे महति च शस्तं शिराव्यधनम् ॥
बहुदोष संशोध्य कुष्ठी बहुशोऽनुरक्षता प्राणान् ॥१॥

रक्तदुष्टत्वगतत्वसाधर्म्यात् कुष्ठचिकित्सितमुच्यते । वातोत्तरेष्वित्यादि—सर्पिरित्युपलक्षण तेन तैलाभ्यङ्गोऽपि बोध्य, उक्त हि वाग्भटे 'तत्र वातोत्तरे तैल घृत वा साधित हितम्' इति। अग्रमिति सर्पिरादिषु योज्यम्, तेन वातोत्तरादिषु सर्पिरादि प्रथम कार्य्यम्, तदनु वक्ष्यमाणा चिकित्सा कार्य्येत्यर्थ । अग्र्यमिति पाठे प्रधानमित्यर्थ । बहुश इति बलरक्षार्थं स्तोक स्तोक दोषनिर्हरणे पुन पुन शोध्य, एकदा हि भूरिदोषहरणेन बलक्षयो महात्ययश्च स्यादिति। अतएव एतदनन्तरमुक्त चरकेण 'दोष ह्यतिमात्रहृते वायुर्हन्यादबलमाशु' इति ॥ १ ॥

### पञ्चकषायः

वचावासापटोलानां निम्बस्य फलिनीत्वचः।
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥ २ ॥

वचेत्यादौ—वचादीना त्रयाणा मूलम् । फलिनी प्रियगु । वमनार्थञ्च क्वाथविधौ परिभाषा यथा,—'क्वाथ्यद्रव्यस्य कुडव श्रपयित्वा जलाढके । चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत्' इति ॥ २ ॥

विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकै ॥ ३ ॥

विरेचनमिति—त्रिफलाक्वाथे त्रिवृद्दन्तीमूले प्रक्षिप्य अथवा दन्तीमूलत्रिवृतालताचूर्णं प्रति मा २ त्रिफलाक्वाथेन पेयम् ॥ ३ ॥

**ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम् ।**
**संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ४ ॥**

ये लेपा इत्यादि—निर्गतोऽस्रगतो दोषो येषा ते तथा निर्गतास्रदोषा ॥४॥

**मनःशिलाले मरिचानि तैल-**
**मार्कं पयः कुष्ठहरः प्रलेपः ॥ ५ ॥**
**करञ्जबीजैडगजः सकुष्ठो**
**गोमूत्रपिष्टश्च वरः प्रदेहः ॥ ६ ॥**

मनःशिलेत्यादौ—आल हरितालम् । तैलञ्च सार्षप कुष्ठहरत्वात् । आर्क पयोऽर्कक्षीरम् ॥ ५ ॥ ६ ॥

**पर्णानि पिष्ट्वा चतुरंगुलस्य**
**तक्रेण पर्णान्यथ काकमाच्याः ।**
**तैलाक्तगात्रस्य नरस्य कुष्ठा-**
**न्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ७ ॥**

पर्णानीत्यादौ—चतुरंगुल श्योनाकु, अश्वहनच्छद करवीरपत्रम्, एतदन्त एक एव योग । योगत्रित्वे चरकोक्तद्वात्रिंशत्प्रदेहसंख्यावृद्धि स्यादिति ॥ ७ ॥

**आरग्वधः सैडगजः करञ्जो**
**वासागुडूचीमदनं हरिद्रे ।**
**श्याह्वः सुराह्वः खदिरो धवश्च**
**निम्बो विडङ्गं करवीरकत्वक् ॥**
**ग्रन्थिश्च भौर्जो लशुनः शिरीषः**
**सलोमशो गुग्गुलुकृष्णगन्धे ।**
**फणिज्झको वत्सकसप्तपर्णौ**
**पीलूनि कुष्ठं सुमनःप्रवालाः ।**
**वचा हरेणुस्त्रिवृता निकुम्भो**
**भल्लातकं गैरिकमञ्जनञ्च ।**

मनःशिलाले गृहधूम एला-
काशीशलोध्रार्जुनमुस्तसर्जाः ॥
इत्यर्द्धरूपैर्विहिता षडेते
गोपित्तपीता पुनरेव पिष्टाः।
सिद्धाः परं सर्षपतैलयुक्ता-
श्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥
कुष्ठानि कृच्छ्राणि नवं किलासं
सुरेन्द्रलुप्तं किटिमं सदद्रु।
भगन्दरार्शांस्यपचीं सपामां
हन्युः प्रयुक्ता अचिरान्नराणाम् ॥ ८ ॥

आरग्वध इत्यादिना षड्भिः श्लोकार्द्धैः षड्योगाः। आरग्वधस्य पत्रम्, श्र्याह्व नवनीतखोटि, करवीरस्य त्वक्, ग्रन्थिश्च भौर्ज इति भूर्जपत्रग्रन्थि, लोमशो धातुकाशीशं तमालपत्रं वा, कृष्णगन्धा शोभाञ्जनकः, फणिज्झकः पर्णासभेदः, पीलु श्रांचरापथिकं फलम्, सुमनःप्रवाला जातीपल्लवाः, निकुम्भो दन्ती, अञ्जनं रसाञ्जनम्, अर्द्धरूपैरिति अर्द्धश्लोकैः, गोपित्तपीता इति गोपित्तभावनया पीता पीतवर्णा, भावना च सप्ताहम् ॥ ८ ॥

मनःशिला त्वक् कुटजात् सकुष्ठात्
सलोमशः सैडगजः करञ्जः।
ग्रन्थिश्च भौर्जः करवीरमूलं
चूर्णानि साध्यानि तुषोदकेन ॥
पलाशनिर्दाहरसेन वापि
कर्षोद्धृतान्याढकसम्मितेन।
दर्वीप्रलेपं प्रवदन्ति लेप-
मेतत् परं कुष्ठविनाशनाय ॥ ९ ॥

मनःशिलेत्यादौ—त्वक् कुटजादिति कुटजस्य त्वक्। लोमशो धातुकाशीशम्। तुषोदकं सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम्। पलाशनिर्दाहरसेनेति पलाशवृक्षस्य प्रधानमूलं छित्वा तदधः कुम्भं स्थापयित्वा उपरि वृक्षदाहाद् यो गलति स्वरसः स पलाशनिर्दाहरसः, अन्ये तु पलाशक्षारोदकमाहुः ॥ ९ ॥

## कुष्ठाद्यम्

कुष्ठं हरिद्रे सुरसं पटोलं
निम्बाश्वगन्धे सुरदारुशिग्रु ।
ससर्षपं तुम्बुरुधान्यवन्यम्
चण्डाञ्च दूर्वाञ्च समानि कुर्य्यात् ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत ।
तथास्य कण्डूः पिडकाः सकोठाः
कुष्ठानि शोफाश्च शमं प्रयान्ति ॥ १० ॥

कुष्ठमित्यादौ—सुरस पर्णास., तुम्बुरु स्वनामख्यातम्, वन्यं कैवर्त्तमुस्तकम्, चण्डा चोरपुष्पी, प्रथम तैलाक्तमिति योज्यम् । तैलञ्च इह सार्षपम् ॥ १० ॥

धात्र्यक्षपथ्याक्रिमिशत्रुवह्निभल्लातकावल्गुजलौहभृङ्गैः ।
भागाभिवृद्धैस्तिलतैलमिश्रै सर्वाणि कुष्ठानि निहन्ति लेपः ॥११॥

धात्रीत्यादौ—अक्ष विभीतकम्, क्रिमिशत्रुर्विडङ्ग, वह्निश्चित्रक, लौह इति वज्राद्ययश्चूर्ण न त्वगुरु । भृङ्ग इति भृङ्गराजस्य चूर्ण न तु गुडत्वक्, उक्त हि विन्ध्यवासिना—"त्रिफलाथ विटङ्गानि चित्रकोऽरुष्करस्तथा । इन्दुरेखा अयश्चूर्ण भृङ्गराजरजोऽपि च । क्रमाभिवृद्धया सयुक्त तैलेन सुपरिप्लुतम् । नवायममिद नाम रसायनमनुत्तमम् "-इति । तथा लेप इति प्रमादपाठ, किन्तु लेह इति, उक्त हि तन्त्रान्तरे-" धात्री विभीतक पथ्या विडङ्गाग्निमरुष्करम् । वागुजीलोहभृङ्गञ्च सचूर्ण्य क्रमवर्द्धितम् । तिलतैलान्वित लिह्यात् श्रेष्ठमेतद्रसायनम् " इति । तेनाय योगः शशाङ्कलेखेत्याद्यनन्तर बोध्य., लेखकदोषात्तु लेपप्रकरणे पठित इति ॥ ११ ॥

विडङ्गसैन्धवशिवाशशिरेखासर्षपकरञ्जरजनीभि ।
गोजलपिष्टो लेप. कुष्ठहरो दिवसनाथसमः ॥ १२ ॥
विडङ्गैडगजाकुष्ठनिशासिन्धूत्थसर्षपैः ।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः ॥ १३ ॥

दूर्वाभयासैन्धवचक्रमर्दकुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि वर्द्धमूलं दद्रुञ्च कण्डूञ्च रुजाञ्च हन्यात् ॥१४॥

विडङ्गेत्यादौ—शशिरेखा सोमराजीबीजम्, गोजल गोमूत्रम्, दिवसनाथ· सूर्य्य. । दूर्वेत्यादौ—चक्रमर्द एडगजः; कुठेरक पर्णास । काञ्जिकतक्रपिष्टा इति काञ्जिकतक्रयोरन्यतरेण पिष्टा इति वदन्ति । त्रिभिः प्रलेपैरित्यनेन शीघ्रप्रशमकारितां दर्शयति, न तु नियमोऽयम् ॥ १२–१४ ॥

तुल्यो रस शालतरोस्तुषेणसचक्रमर्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदम्बु पिष्टोलेपः कृतो दद्रुगजेन्द्रसिंहः ॥१५॥

तुल्य इत्यादि—शालतरो रसो धूनक, तुषेणेति धान्यत्वचा, धूनकादीनां पानीयभक्तान्ताना समो भाग । तदम्बुपिष्ट इति पानीयभक्तजलेन पिष्ट ॥१५॥

प्रपुन्नाडस्य बीजानि धात्रीसर्जरसस्नुहा ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ १६ ॥
चक्रमर्दकबीजानि जीरकञ्च समांशिकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥ १७ ॥
लेपनाद्भक्षणाच्चैव तृणकं दद्रुनाशनम् ॥ १८ ॥
यूथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ।
कासमर्दकमूलञ्च सौवीरेण च पेषितम् ।
दद्रुकिटिमकुष्ठानि जयेदेतत् प्रलेपनात् ॥ १९ ॥
शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपत सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ २० ॥
गन्धपाषाणचूर्णेन.यवक्षारेण पेषितम् ।
सिध्म नाशं व्रजत्याशु कटुतैलयुतेन वा ॥ २१ ॥
कासमर्दकबीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ २२ ॥
धात्रीरस सर्जरसः सपाक्य
सौवीरपिष्टश्च तथा युतश्च ।
भवन्ति सिध्मानि यथा न भूय-
स्तथैवमुद्वर्त्तनकं करोति ॥ २३ ॥

प्रपुन्नाडस्येति—प्रपुन्नाडः एडगजः। स्नुह्याया क्षीरमन्ये तु मूलमाहु॰। सौवीरं काञ्जिकम्। स्तोक सुदर्शनामूलमिति मिलितचक्रमर्दजीरकापेक्षया पादिकमित्याहुः। तृणक चिनाघास इति नाम्ना ख्यातम्। यूथीपुन्नागमूलम् स्वनामख्यातम्। कासमर्दक. कालकासुन्दा एतन्मूल काञ्जिकेन पिष्ट्वा रात्रौ स्थाप्य प्रातश्चाकारुदिते लेपो विधेय इत्युपदिशन्ति। शिखरिरसेन अपामार्गस्वरसेन क्षारेण वा कदल्या इति कदलीक्षारोदकेन पिष्टमित्यर्थ, पेषण प्रति विकल्पेनास्य प्रणयात्। गन्धपाषाणो गन्धकम्, मूलकानान्तथैव चेति मूलकाना वीजानीत्यर्थ.। धात्रीरसः आमलकीस्वरसः, पाक्यो यवक्षार विड्लवणमित्यन्ये। तथा युत इति सौवीरेणैव दिनत्रय भावित., 'पूतीकृत दिवसत्रयम्' इति योगान्तरदर्शनात्। धात्रीरसस्थाने धात्रीफलमिति चन्द्राट पठति॥ १६—२३॥

कुष्ठं मूलकवीजं प्रियङ्गव सर्षपास्तथा रजनी।
एतत् केशरषष्ठं निहन्ति वहुवार्षिकं सिध्म॥ २४॥
नीलकुरुण्टकपत्रं स्वरसेनालिप्य गात्रमतिवहुशः।
लिम्पेन्मूलकवीजै· पिष्टैस्तक्रेण सिध्मनाशाय॥ २५॥
चक्राह्वयं स्नुहीक्षीरभावितं मूत्रसंयुतम्।
रवितप्तं हि किञ्चित्तु लेपनात् किटिमापहम्॥ २६॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत्।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च॥ २७॥

कुष्ठमित्यादौ—केशर नागकेशरम्। नीलकुरुण्टको नीलझिण्टी। चक्राह्वयमेडगजावीजम्। 'रवितप्त सकिण्वञ्च' इत्यपि पाठान्तरम्॥२४—२७॥

वीजानि वा मूलकसर्षपाणां
लाक्षारजन्यौ प्रपुनाडवीजम्।
श्रीवेष्टकव्योषविडङ्गकुष्ठं
पिष्ट्वा च मूत्रेण तु लेपनं स्यात्॥
दद्रूणि सिध्मं किटिमानि पामां
कपालकुष्ठं विषमञ्च हन्यात्॥ २८॥

बीजानीत्यादौ—लाक्षारजन्याविति द्वन्द्वः न तु हरिद्राद्वकमित्याहुः। श्रीवेष्टको नवनीतखोटिः॥ २८॥

विडङ्गेत्यादौ—शशिरेखा सोमराजीबीजम्, गोजल गोमूत्रम्, दिवसनाथ सूर्य्य । दूर्वेत्यादौ—चक्रमर्द एडगज., कुठेरक पर्णास । काञ्जिकतक्रपिष्टा इति काञ्जिकतक्रयोरन्यतरेण पिष्टा इति वदन्ति । त्रिभिः प्रलेपैरित्यनेन शीघ्रप्रशम-कारिता दर्शयति, न तु नियमोऽयम् ॥ १२–१४ ॥

तुल्यो रस शालतरोस्तुषेणसचक्रमर्दोऽप्यभयाविमिश्र ।
पानीययभक्तेन तदम्बु पिष्टोलेपः कृतो दद्रुगजेन्द्रसिंहः ॥१५॥

तुल्य इत्यादि—शालतरो रसो धूनक, तुषेणेति धान्यत्वचा, धूनकादीना पानीयभक्तान्ताना समो भाग । तदम्बुपिष्ट इति पानीयभक्तजलेन पिष्ट ॥१५॥

प्रपुन्नाडस्य बीजानि धात्रीसर्जरसस्नुहा ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ १६ ॥
चक्रमर्दकबीजानि जीरकञ्च समांशिकम् ।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम् ॥ १७ ॥
लेपनाद्भक्षणाच्चैव तुवरकं दद्रुनाशनम् ॥ १८ ॥
यूथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम् ।
कासमर्दकमूलञ्च सौवीरेण च पेषितम् ।
दद्रुकिटिमकुष्ठानि जयेदेतत् प्रलेपनात् ॥ १९ ॥
शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपत सिध्म ।
क्षारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ २० ॥
गन्धपाषाणचूर्णेन.यवक्षारेण पेषितम् ।
सिध्म नाशं व्रजत्याशु कटुतैलयुतेन वा ॥ २१ ॥
कासमर्दकबीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ २२ ॥
धात्रीरस. सर्जरसः सपाक्य
सौवीरपिष्टश्च तथा युतश्च ।
भवन्ति सिध्मानि यथा न भूय-
स्तथैवमुद्वर्त्तनकं करोति ॥ २३ ॥

प्रपुन्नाडस्येति—प्रपुन्नाड एडगजः । स्नुह्याया क्षीरमन्ये तु मूलमाहु । सौवीरं काञ्जिकम् । स्तोक सुदर्शनामूलमिति मिलितचक्रमर्द्दक्षीरकापेक्षया पादिकमित्याहुः । तृणक चिनाघास इति नाम्ना ख्यातम् । यूथीपुन्नागमूलम् स्वनामख्यातम् । कासमर्दक कालकासुन्दा एतन्मूल काञ्जिकेन पिष्ट्वा रात्रौ स्थाप्य प्रातश्चाकारुदिते लेपो विधेय इत्युपदिशन्ति । शिखरिरसेन अपामार्गस्वरसेन क्षारेण वा कदल्या इति कदलीक्षारोदकेन पिष्टमित्यर्थ, पेषण प्रति विकल्पेनास्य प्रणयात् । गन्धपाषाणो गन्धकम्, मूलकानान्तथैव चेति मूलकाना बीजानीत्यर्थ. । धात्रीरस आमलकीस्वरसः, पाक्यो यवक्षार विड्लवणमित्यन्ये । तथा युत इति सौवीरेणैव दिनत्रय भावित, 'पूतीकृत दिवसत्रयम्' इति योगान्तरदर्शनात् । धात्रीरसस्थाने धात्रीफलमिति चन्द्राट पठति ॥ १६—२३ ॥

कुष्ठं मूलकबीजं प्रियङ्गव. सर्षपास्तथा रजनी ।
एतत् केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥ २४ ॥
नीलकुरुण्टकपत्रं स्वरसेनालिप्य गात्रमतिबहुशः ।
लिम्पेन्मूलकबीजै पिष्टैस्तक्रेण सिध्मनाशाय ॥ २५ ॥
चक्राह्वयं स्नुहीक्षीरभावितं मूत्रसंयुतम् ।
रवितप्तं हि किञ्चित्तु लेपनात् किटिमापहम् ॥ २६ ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ॥ २७ ॥

कुष्ठमित्यादौ—केशर नागकेशरम् । नीलकुरुण्टको नीलझिण्टी । चक्राह्वयमेडगजाबीजम् । 'रवितप्त सकिण्वञ्च' इत्यपि पाठान्तरम् ॥२४—२७॥

बीजानि वा मूलकसर्षपाणां
लाक्षारजन्यौ प्रपुनाडबीजम् ।
श्रीवेष्टकव्योषविडङ्गकुष्ठं
पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥
दद्रूणि सिध्मं किटिमानि पामां
कपालकुष्ठं विषमञ्च हन्यात् ॥ २८ ॥

बीजानीत्यादौ—लाक्षारजन्याविति द्वन्द्व. न तु हरिद्राद्वकमित्याहुः । श्रीवेष्टको नवनीतखोटिः ॥ २८ ॥

एडगजकुष्ठसौवीर-सैन्धवसर्षपैः क्रिमिघ्नैश्च।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥ २९॥

एडगजत्यादौ—सौवीरक सौवीराञ्जनम्; अत्र विशिष्टद्रव्यस्यानुक्तत्वात् गोमूत्रमेव कुष्ठहरतया पेषणार्थं ग्राह्यमिति वदन्ति। अपरे तु सौवीरशब्दस्य काञ्जिकार्थतां परिकल्प्य तनैव पेषणमित्याहुः ॥ २९॥

स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ३०॥

स्नुक्काण्ड इत्यादि—वाग्भटस्य। कुकूलानलः करीषाग्निः। स्नुक्काण्डमध्ये गर्त्तं कृत्वा पिष्टश्वेतसर्षपेण तद् प्रपूर्य स्नुहीकाण्डान्तरेणाच्छाद्य कुशादिभिर्बद्ध्वा मृत्तिकया प्रलिप्य गोमयाग्निना देहत्। तत आकृष्य तेन कल्केन लेपः ॥ ॥ ३०॥

स्नुक्काण्डे शुषिरे दग्ध्वा गृहधूमं ससैन्धवम्।
अन्तर्धूम तैलयुक्तं लेपाद्धन्ति विचर्च्चिकाम् ॥ ३१॥
एडगजातिलसर्षपकुष्ठ-मागधिकालवणत्रयमस्तु।
पूतिकृतं दिवसत्रयमेतद्धन्ति विचर्चिकदद्रु सकुष्ठम् ॥
उन्मत्तकस्य वीजेन माणकक्षारवारिणा।
कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम् ॥ ३२॥

स्नुक्काण्डे शुषिर इत्यादौ—सीजुपर्वं कोरयित्वा तद्विवरं गृहधूमसैन्धवचूर्णाभ्यां पूरयित्वा, स्थालीमध्ये तन्निक्षिप्य उपरि शरावं दत्त्वा, मृत्तिकया शरावसन्धिं पिधायान्तर्धूमं दहेत्, तदनु कटुतैलेन संमिश्र्य लेपः। एडगजेत्यादौ—लवणत्रयं सौवर्चलसैन्धवविड्लवणम्, उन्मत्तकस्य धुस्तूरकस्य वीजं कल्कः, माणकक्षारपरिस्रुतजलं चतुर्गुणं पाकार्थम्, विपादिका पादस्फोटनम् ॥ ३१॥ ३२॥

नारिकेलोदके न्यस्तस्तण्डुलः पूतिकां गतः।
लेपाद्विपादिकां हन्ति चिरकालानुवन्धिनीम् ॥
सर्जरससिन्धुसम्भव-गुडमधुमहिषाक्षगैरिकं सघृतम्।
सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥ ३३॥

नारिकेलोदक इत्यादि नारिकेलस्य सजलशस्य ग्राह्यम्। सर्जरसेत्यादौ—सिन्धु

ग्नन्मव सैन्धवम् । महिषाच इति गुग्गुलु । एतत् सर्वं समभागमेकीकृत्य मनाक् पक्तव्य यथा सिक्थकाकृति भूत्वा लेपयोग्य भवेदिति ॥ ३३ ॥

अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥ ३४ ॥
कोमलसिंहास्यदलं सनिशं सुरभीजलेन सम्पिष्टम् ।
दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः ॥ ३५ ॥

अवल्गुजमित्यादौ—अवल्गुज सोमराजीबीजम्, माणिमन्थ सैन्धवम्, मस्तुकाञ्जिकपेषितमिति मस्तुकाञ्जिकयोरन्यतरेण । कोमलेत्यादौ—सिंहास्यो वासकः तस्य पत्रम्, सुरभीजल गोमूत्रम् ॥ ३४ ॥ ३५ ॥

हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम् ।
पिबेन्नरः कामचारी कच्छूपामाविनाशनम् ॥ ३६ ॥
शोथपाण्ड्वामयहरी गुल्ममेहकफापहा ।
कच्छूपामाहरी चैव पथ्या गोमूत्रसाधिता ॥ ३७ ॥

हरिद्रेत्यादौ—शास्त्रयुक्त्या हरिद्राकल्ककर्षस्य प्रक्षेप., कर्षश्चूर्णस्य कल्कस्येति वचनात्, व्यवहारस्तु हरिद्राकल्कस्याष्टौ माषका, गोमूत्रस्य पलमेकमिति । गोमूत्रसाधितेति गोमूत्रोत्स्विन्ना ॥ ३६ ॥ ३७ ॥

पिबति सकटुतैलं गन्धपाषाणचूर्णं
रविकिरणसुतप्तं पामलो यः पलार्द्धम् ।
त्रिदिनतदनुसिक्तः क्षीरभोजी च शीघ्रं
भवति कनकदीप्त्या कामयुक्तो मनुष्यः ॥ ३८ ॥

पिबतीत्यादौ—पलार्द्धमिति उत्तमबलानल प्रति प्रात्यहिकी मात्रा किंवा पलार्द्धं त्रिदिन यः पिबतीति योज्य, त्रिदिनेत्यत्रानुस्वारलोपश्छान्दसत्वात् । तेन पलार्द्धं दिनत्रय विभज्य योज्य, तेन किञ्चिदधिकदशमाषका प्रत्यह भवन्ति । व्यवहारस्तु शोधितगन्धकचूर्णस्य माषकचतुष्टय कटुतैलस्य तु कर्ष एक इति । तदनुसिक्त इति तेन सतैलगन्धकचूर्णेनाभ्यक्तगात्र, क्षीरभोजीति क्षीरसिक्तभक्तमण्डेन व्यवहार । दिनत्रय-सप्ताह वा प्रयोगश्चायं वातातपवर्जनञ्चेति । कनक

दीप्त्येति उपलक्षणे तृतीया। कनकगौर इति च पाठः। कामशुक्र इति उपचित-शुक्रधातु', कामतुल्य इत्यपि पाठ' ॥ ३८ ॥

निशासुधारग्वधकाकमाचीपत्रैः सदार्वीप्रपुनाडवीजैः।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिषूद्वर्त्तनमेतदिष्टम् ॥ ३९ ॥

निशेत्यादौ—निशादिचतुष्टयस्य पत्राणि, अन्ये तु निशा हरिद्रैव सुधा-दीनामेव पत्राणीत्याहु ॥ ३९ ॥

सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं बहुशः।
लेपान्निहन्ति पामां तैलं करवीरसिद्धं वा ॥ ४० ॥

मांसीचन्दनसम्पाक करञ्जारिष्टसर्षपम्।
यष्टीकुटजदार्व्येव्दं हन्ति कण्डूमयं गणः ॥४१॥

सिन्दूरेत्यादौ—करवीरक्वाथकल्काभ्यां सिद्ध कटुतैलमित्यर्थः। मांसीत्यादौ सम्पा-कस्य पत्र, करञ्जस्य फल, अरिष्टो निम्ब, तस्य पत्र, यष्टीति यष्टीमधु। कण्डूमित्यत्र कुष्ठमिति क्वचित् पाठ। किन्तु चरकेऽप्यस्मिन् गणे दशेमानि कण्डूघ्नानीत्यु-क्तम् ॥ ४० ॥ ४१ ॥

भल्लातकं द्वीपिसुधार्कमूलं
गुञ्जाफलं त्र्यूषणशङ्खचूर्णम्।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकाञ्च पक्त्वा।
स्नुह्यर्कदुग्धे घनमायसस्थं
शलाकया तं विदधीत लेपम्।
कुष्ठे किलासे तिलकालके तु
अशेषदुर्नामसु चर्मकीले ॥ ४२ ॥

भल्लातकेत्यादि—वाग्भटस्य। द्वीपि चित्रकः, अत्र भल्लातकाद्यर्कान्तानां मूलमिति केचित्, अन्ये तु भल्लातकस्य बीज तस्यैव सर्वत्रोपयोगादित्याहुः। चित्र-कादित्रयस्य मूलम्, एषा भल्लातकादिलाङ्गलिकान्तानां चूर्णं स्नुह्यर्कक्षीराभ्या मिलि-त्वा चूर्णमपेक्ष्य चतुर्गुणाभ्या लोहपात्रे लेपयोग्यता यावत् पाक इत्याहुः ॥४२॥

विषवरुणहरिद्राचित्रकागारधूम-
मनलमरिचदूर्वाः क्षीरमर्कस्नुहीभ्याम्।

दहति पतितमात्रात् कुष्ठजातीरशेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥४३॥

विषेत्यादौ—विष स्थावरविषम्, अनल भल्लातकम्। अत्रापि पूर्वचूर्णादिमानम् अर्कस्नुहीक्षीराभ्या पाकविधिश्चेति वदन्ति ॥४३॥

शशाङ्कलेखा सविडङ्गसारा
सपिप्पलीका सहुताशमूला।
सायोमला सामलका सतैला
सर्वाणि कुष्ठानि निहन्ति लीढा ॥ ४४ ॥

शशाङ्कलेखेत्यादि—वाग्भटस्य। शशाङ्कलेखा सोमराजी, हुताशश्चित्रक, अयोमल शोधितमण्डूरचूर्णम्। अस्मान्मिलितचूर्णान्माषकत्रय चतुष्टय वा गृहीत्वा तिलतैलेन लेह्यम् ॥ ४४ ॥

तीव्रेण कुष्ठेन परीतदेहो
य सोमराजीं नियमेन खादेत्।
संवत्सरं कृष्णतिलद्वितीयां
स सोमराजीं वपुषातिशेते ॥ ४५ ॥

तीव्रेणेत्यादौ—नियमेनेत्यनेन प्रात्याहिकत्व पथ्याशित्वन्च गमयति। सोमराजी कृष्णतिलयोस्तु प्रत्येक माषकत्रय माषकचतुष्टय वा व्यवहरन्ति। सोमराजीमिति चन्द्रश्रेणीम् ॥४५॥

घर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत्।
क्षीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥ ४६ ॥
एकस्तिलस्य भागौ द्वौ सोमराज्यास्तथैव च।
भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥ ४७ ॥
अवल्गुजाद्बीजकर्षं पीत्वा कोष्णेन वारिणा।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम् ॥४८॥

घर्मेत्यादि—घर्मसेवी आतपसेवी वागुजी सोमराजीबीजम्, अस्य च माषकचतुष्टयमुष्णोदकेनालोड्य पिबेत्। एक इत्यादावपि उष्णोदकमनुपेयम् ॥४६-४८॥

## नवकषायः

त्रिफलापटोलरजनी-मञ्जिष्ठारोहिणीवचानिम्बैः ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥ ४९ ॥

त्रिफलेत्यादि—स्पष्टम् ॥ ४९ ॥

छिन्नाया स्वरसो वापि सेव्यमानो यथाबलम् ।
जीर्णे घृतेन भुञ्जीत स्वल्पं यूषोदकेन वा ।
अतिपूतिशरीरोऽपि दिव्यरूपी भवेन्नर ॥ ५० ॥
पटोलखदिरारिष्ट-त्रिफलाकृष्णवेत्रजम् ।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति ॥ ५१ ॥

छिन्नाया इत्यादौ—छिन्ना गुडूची । पटोलेत्यादौ—कृष्णवेत्रं कालियालतेति ख्यातम् । तिक्ताशन इति तिक्तभूयिष्ठाहारः ॥ ५० ॥ ५१ ॥

## सप्तसमो योगः

तिलाज्यत्रिफलाक्षौद्र-व्योषभल्लातशर्कराः ।
वृष्य सप्तसमो मेध्यः कुष्ठहा कामचारिणा ॥ ५२ ॥
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रिमीन् मेहान् नाडीव्रणभगन्दरान् ॥५३॥

तिलेत्यादौ सप्तसम इति सञ्ज्ञाबलात् मिलितत्रिफलैव तिलाधिकभागसमा एव व्योषमपि ॥ ५२ ॥ ५३ ॥

इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम् ।
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत् क्षीरघृताशनः ।
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम् ॥ ५४ ॥
य खादेदभयारिष्टमरिष्टामलकानि वा ।
स जयेत् सर्वकुष्ठानि मासादूर्द्ध्वं न संशय ॥ ५५ ॥
दह्यमानाच्च्युत कुम्भे मूलगे खदिराद् रस ।
साज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम् ॥ ५६ ॥

इन्द्राशनमित्यादौ—चूर्णमिति मार्षकद्वय त्वय मात्रा देयम् । य खादेदित्यादौ

अरिष्टो निम्ब । दह्यमानादित्यादौ खदिररसधात्रीरसौ तुल्यौ । घृतक्षौद्रे तु प्रक्षेप्ये इत्याहु. ॥ ५४–५६ ॥

वायस्येडगजाकुष्ठ-कृष्णाभिर्गुडिका कृता ।
वस्तमूत्रेण सम्पिष्टा लेपात्श्वित्रविनाशिनी ॥ ५७ ॥
पूतिकार्कस्नुङ्नरेन्द्रद्रुमाणां
मूत्रे पिष्टा· पल्लवाः सौमनाश्च ।
लेपात् श्वित्रं घ्नन्ति दद्रुव्रणांश्च
कुष्ठान्यर्शांस्युग्रनाडीव्रणांश्च ॥ ५८ ॥
गजचित्रव्याघ्रचर्ममसीतैलविलेपनात् ।
श्वित्रं नाशं व्रजेत् किंवा पूतिकीटविलेपनात् ॥५९॥
कुडवोऽवल्गुजबीजाद्धरितालश्चतुर्थभागसंमिश्रः ।
मूत्रेण गवां पिष्ट· सवर्णकरणः पर श्वित्रे ॥ ६० ॥
धात्रीखदिरयोः क्राथं पीत्वावल्गुजसंयुतम् ।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशयः ॥ ६१ ॥

वायसीत्यादौ—वायसी काकमाची । पूतीकेत्यादि—सुश्रुतस्य । पूतिको लाटाकरञ्जः, नरेन्द्रद्रुम आरग्वध , एषा पल्लवा इत्यन्वय· । तथा सौमनाश्च पल्लवा जातीपल्लवा इत्यर्थ । गजेत्यादौ—चित्रव्याघ्र । केवलगजचर्ममसीलेपश्च श्वित्रहरत्वेनोक्तो यथा—"श्वेतजयन्त्यङ्घ्रिमूल क्षीर श्वित्रविनाशनम् । गजचर्ममसीलेपो लेपो वा पूतिकीटज " इति । पूतिकीटः पादुकाकीट (·पादकुरा ) इति लोके ख्यातः ॥ ५७–६१ ॥

क्षारे सुदग्धे गजलिण्डजे च
गजस्य मूत्रेण बहुस्रुते च ।
द्रोणप्रमाणं दशभागयुक्तं
दत्वा पचेद्बीजमवल्गुजस्य ॥
एतद् यदा चिक्कणतामुपैति
तदा सुसिद्धां गुडिकां प्रयुञ्ज्यात् ।

श्वित्रं विलिम्पेदथ तेन घृष्टं
तदा व्रजत्याशु सवर्णभावम् ॥ ६२ ॥

क्षार इत्यादि—सुश्रुतस्य । गजलिण्ड गजपुरीष, जलगण्डजेति पाठे जल-गण्ड, शमठ । गजस्य मूत्रेण इत्यनन्तर पक्व इति शेष । बहुस्रुत इति एकविंशति-वार मप्तवार वा परिस्रुते । दशभागयुक्तमिति द्राक्षस्य दशमांशेन युक्तमवल्गुजमि-त्यर्थ । एतस्य क्रियापरिपाटी लिख्यते । प्रथमतो गजलिण्डक्षारस्य द्रोणमेक २५६ पल ग्राह्यम् । ततस्तत्पाकार्थं गजमूत्र क्षारपरिमाणया षड्गुण दीयमान द्रवद्वैगुण्येन द्वादश द्रोणो भवति, अद्विगुणगणनया तु षड्द्रोणानि स्यु, तेन मूत्र शराव १६० "प्रायस्त्रिभागावशेषेऽस्मिन्" इति वचनेन तृतीयभागावशेषात् द्वैगुण्येन द्रोणमेक ग्राह्य तच्च शराव ६४ । ततस्तृतीयभागावशिष्टक्षारोदकद्रोणापेक्षया दशमा-शेनावल्गुजवीज पिष्ट्वा तत्र प्रक्षिप्य पचेत् । तेनावल्गुजबीजस्य किञ्चिन्न्यूनत्रयो-दशमापकाधिकैकपञ्चाशत्पलानि भवन्ति, पल ५१, तोला १, मापा ५; अन्ये तु षट्पञ्चाशदधिकपलशतद्वयरूपक्षारद्रोणापेक्षया दशमांशेनावल्गुजवीज गृह्णन्ति, तेन तन्मते अवल्गुजवीजस्य पल २५, कर्ष २, मापा ६, रती ४ एतन्मान भवति, किन्तु व्यवहार पूर्ववदेव । ततोऽवतार्य्य शिलाया पिष्ट्वा चिक्कणतामुपगते सति गुडिका कार्य्या । घृष्टमिति फल्गुपत्रकरीषादिना ॥ ६२ ॥

श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥ ६३ ॥

श्वेतजयन्तीत्यादौ—गोपयसैव पिष्ट पीतञ्चेत्यर्थः ॥ ६३ ॥

### पञ्चनिम्बः

पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
सञ्चूर्ण्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ॥
द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ॥
त्रिफलात्र्यूषणब्राह्मीश्वदंष्ट्रारुष्कराग्निकाः ।
विडङ्गसारवाराहीलौहचूर्णामृता समा ॥
हरिद्राद्वयवागुजीव्याधिघाता सशर्करा ।
कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम् ॥

खदिराशननिम्बानां घनक्वाथेन भावयेत् ।
सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु ।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने ॥
मधुना तिक्तहविषा खदिराशनवारिणा ।
लेह्यमुष्णाम्बुना वापि कोलवृद्ध्या पलं पिवेत् ।
जीर्णे च भोजनं कार्य्यं स्निग्धं लघु हितञ्च यत् ॥
विचर्च्चिकौडुम्बरपुण्डरीककपालदद्रूकिटिमालसादि ।
शतारुविस्फोटविसर्पपामां कफप्रकोपं त्रिविधं किलासम् ॥
भगन्दरश्लीपदवातरक्तं जातान्ध्यनाडीव्रणशीर्षरोगान् ।
सर्वान् प्रमेहान् प्रदरांश्च सर्वान् दंष्ट्राविषं मूलविषं निहन्ति ।
स्थूलोदर सिंहकृशोदरश्च सुश्लिष्टसन्धिर्मधुनापयोगात् ॥
समोपयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ।
जीवेच्चिरं व्याधिजराविमुक्तः शुभेरतश्चन्द्रसमानकान्तिः ॥६४॥

पुष्पकाल इत्यादौ—पञ्चनिम्बाना प्रत्येक भागद्वय त्रिफलादीनान्तु प्रत्येकमेको भाग । त्रिफलात्र्यूषणयारपि प्रत्येक भाग । अग्निश्चित्रक· । वाराही वाराहीकन्द । व्याधिघात. स्वर्णालुः । खदिराशननिम्बाना घनक्वाथेनेति खदिरादीना प्रत्येकमष्ट-भागावशिष्टेन क्वाथेन भावना । अशन पीतशाल. । तिक्तहविषेति वक्ष्यमाणतिक्त-षट्पलकादिना । खदिराशनवारिणेति खदिराशनक्वाथेन । कोलवृद्धयेति कोल कर्षार्द्धम् । समोपयोगादिति वर्षोपयोगात् ॥६४॥

## एकविंशतिको गुग्गुलुः

चित्रकत्रिफलाव्योषमजाजीं कारवीं वचाम् ।
सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम् ॥
विडङ्गान्यजमोदांश्च मुस्तान्यमरदारु च ।
यावन्त्येतानि सर्वाणि तावन्मात्रन्तु गुग्गुलम् ॥
सङ्कुद्य सर्पिषा सार्द्धं गुडिकां कारयेद्भिषक् ।
प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ॥
हन्त्यष्टादशकुष्ठानि क्रिमीन् दुष्टव्रणानपि ।

ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥
गृध्रसीमथ भग्नञ्च गुल्मञ्चापि नियच्छति ।
व्याधीन् कोष्ठगतांश्चान्यान् जयेद्विष्णुरिवासुरान् ॥६५॥
पञ्च भल्लातकांश्छित्वा साधयेद्विधिवज्जले ।
कषायं तं पिबेच्छीतं घृतेनाक्तौष्ठतालुकः ॥
पञ्चवृद्ध्या पिबेद् यावत् सप्ततिं ह्रासयेत्ततः ।
जीर्णेऽद्यादोदनं शीत घृतक्षीरोपसंहितम् ॥
एतद्रसायनं मेध्यं वलीपलितनाशनम् ।
कुष्ठार्शः क्रिमिदोषघ्नं दुष्टशुक्रविशोधनम् ॥६६॥

चित्रकेत्यादि—स्पष्टम् । पञ्चेत्यादौ—विधिवदिति क्वाथविधिना पिप्पलीवर्द्ध-मानवदत्र वृद्धिह्रासौ ॥६५—६६॥

तैलं भल्लातकानाञ्च पिबेन्मासं यथाबलम् ।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढः ॥६७॥
प्रलेपोद्वर्त्तनस्नानपानभोजनकर्म्मणि ।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥६८॥

तैलमित्यादौ—भल्लातकतैल भूयन्त्रेण ग्राह्यम् ॥६७—६८॥

## तिक्तषट्पलकं घृतम्

निम्बपटोलकदार्वीदुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्य्यादर्द्धपलांशान् पर्पटकं त्रायमाणाञ्च ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते ।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥
मुस्तकवत्सकबीजं कल्कीकृतमर्द्धकार्षिकान् भागान् ।
नव सर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम् ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथून् हन्ति ॥
पामाविसर्पपिडकाकण्डूमदगण्डनुत् सिद्धम् ॥ ६९ ॥

निम्बेत्यादौ—यद्यपि "सर्पिश्चाप्यनव हितम्" इति वचनात् पुराणसर्पिष एव

मवेत्रौपयोगिकत्व, तथाप्यत्र योगमहिम्ना नवसर्पिषः एवं प्रयोजनवत्त्वमिति वचनादेवोन्नीयते । सर्पिष इति पद षट्पलमानग्रहणार्थम् । द्वितीयन्तु घृतमिति पद पेयत्वोपदर्शनार्थम् । तथा प्रथम सिद्धमिति पक्व, द्वितीयन्तु प्रसिद्धिख्यापकम् । अनेन च षट्पलाभिधानेन कुष्ठे ज्येष्ठा षट्पली स्नेहमात्रा एकाहोपयोज्या दर्शितेत्याहु. ॥ ६६ ॥

## पञ्चतिक्तघृतम्

निम्बं पटोलं व्याघ्रीञ्च गुडूचीं वासकं तथा ।
कुर्य्याद्दशपलान् भागानेकैकस्य सुकुट्टितान् ॥
जलद्रोणे विपक्तव्यं यावत् पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥
पञ्चतिक्तमिदं ख्यातं सर्पि· कुष्ठविनाशनम् ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति ॥ ७० ॥

पञ्चतिक्ते—चत्वारिंशच्च पैत्तिकानिति चत्वारिंशद्रोगास्तानपकर्षति कास्तानित्याकाङ्क्षायामुक्त पैत्तिकानिति । एव भेदयित्वा योजना कार्य्या, अन्यथा चत्वारिंशतमिति द्वितीया स्यात् ॥ ७० ॥

## तिक्तकघृतम्

त्रिफलाद्विनिशावासायासपर्पटकूलकान् ।
त्रायन्तीकटुकानिम्बान् प्रत्येकं द्विपलोन्मितान् ॥
क्वाथयित्वा जलद्रोणे पादशेषेण तेन तु ।
घृतप्रस्थं पचेत् श्लक्ष्णै· पिप्पलीघनचन्दनैः ॥
त्रायन्तीशक्रभूनिम्बैस्तत् पीतं तिक्तकं घृतम् ।
हन्ति कुष्ठज्वरार्शांसि श्वयथुं ग्रहणीगदम् ।
पाण्डुरोगं विसर्पञ्च क्लीबानामपि शस्यते ॥ ७१ ॥

त्रिफलेत्यादौ—कुलक पटोलपत्रम्, शक्र कुटजस्तस्य फलम् ॥ ७१ ॥

## महातिक्तकं घृतम्

सप्तच्छदं प्रतिविषां सम्पाकं तिक्तरोहिणीं पाठाम् ।

मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥
धन्वयवासं चन्दनमुपकुल्ये पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीशारिवे चोभे ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्तञ्च ।
कल्कान् कुर्य्यान्मतिमान् यष्ट्याह्वं त्रायमाणाञ्च ॥
कल्कस्य चतुर्भागो जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणो घृतात् प्रदेयस्तत् सर्पिः पाययेत्सिद्धम् ॥
कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि ।
वीसर्पमम्लपित्तं वातासृक् पाण्डुरोगञ्च ॥
विस्फोटकान् सपामानुन्मादान् कामलां ज्वरं कण्डूम् ।
हृद्रोगगुल्मपिडकामसृग्दरं गण्डमालाञ्च ॥
हन्यादेतत् सद्य पीतं काले यथाबलं सर्पिः ।
योगशतैरप्यजितान् महाविकारान् महातिक्तम् ॥७२॥

महातिक्तके—उपकुल्येत्येकवचनपाठो न युक्त । आयुर्वेदसारवाग्भटादौ पिप्पली-द्वयपाठात् । कल्कस्य चतुर्भाग इति घृताच्चतुर्थो भाग. । एतच्च सामान्यपरिभाषासिद्ध-मपि स्पष्टार्थमुच्यते षड्ग्रन्था वचा, श्रीकण्ठस्तु पिप्पलीमूलमित्याह, तन्न, वाग्भटे वचापठात् । अमृतफलानामित्यामलकफलानाम् । अत्राप्येक सर्पि पद कल्कादिविभा गार्थम्, द्वितीय पेयत्वोपदर्शनार्थम्, तृतीय महातिक्तकसंज्ञार्थम् ॥ ७२ ॥

## महाखादिरकं घृतम्

खदिरस्य तुला· पञ्च शिंशपासनयोस्तुले ।
तुलार्द्धाः सर्व एवैते करञ्जारिष्टवेतसाः ॥
पर्पट कुटजश्चैव वृषः क्रिमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥
सप्तपर्णस्तु संक्षुण्णो दशद्रोणे च वारिणः ।
अष्टभागावशेषन्तु कषायमवतारयेत् ॥
धात्रीरसञ्च तुल्यांशं सर्पिषश्चाढकं पचेत् ।

महातिक्तककल्कैश्च यथोक्तैः पलसम्मितैः ॥
निहन्ति सर्वकुष्ठानि पानाभ्यङ्गनिषेवणात्।
महाखदिरमित्येतत् परं कुष्ठविनाशनम् ॥

महाखदिरघृते—शिंशपा इति ख्यातस्तरुः, अशन स्वनामख्यात, न तु पीतशाल इत्याहु, एतयोस्तुलाद्वय मिलित्वा। तुलार्द्धाः सर्व एवैत इति करञ्जादि-सप्तपर्णान्ता. प्रत्येक तुलार्द्धा दशद्रोणे च वारिण इत्यनन्तर पचेदिति शेष। तुल्याशमित्याढकमानमित्यर्थः। चक्रस्तु "धात्रीरसञ्च तुल्याश सर्पिषश्चाढक पचेत्" इति ग्रन्थ न पठति। तथा "यथोक्तै पलसम्मितैः" इत्यत्र यथोक्तैस्तैस्तु साधयेदिति पठति व्याचष्ट च। साधयेदित्यत्र सर्पिरिति शेष। अत्र यद्यपि घृतमान नोक्त तथापि क्वाथशेषस्याढकाधिकद्रोणस्य नियतत्वात् तत्क्वाथचतुर्थांश प्रस्थाधिकाढकमान घृतस्यार्थापत्तितन्त्रयुक्त्या सिद्ध भवतीति। कल्कस्य स्नेहपादिकत्व सामान्यपरिभाषा-सिद्धमेवेति। केचिन्महाखदिरघृतमिदमनार्षमित्याहुः ॥७३॥

## पञ्चतिक्त-घृतगुग्गुलुः

निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग्दशपलान् विपचेद् घटेऽपाम्।
अष्टांशशेषितजलेन सुनिःसृतेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिषिचव्यकुष्ठैः।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥
मञ्जिष्ठयातिविषया वरया यमान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः।
तत् सेवितं विषमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥
नाडीव्रणार्बुदभगन्दरगण्डमालां
जत्रूर्द्ध्वसर्वगदगुल्मगुदोत्थमेहान्।

यत्मारुचिश्वसनपीनसकासशोष-
हृत्पाण्डुरोगगलविद्रधिवातरक्तम् ॥७४॥

निम्बामृतेत्यादि—वाग्भटस्य। घट इति द्रोणे। पिचु कर्षरूपो भागो येषां कल्कानां ते। मिषिः शतपुष्पा, न तु मधुरिका वृद्धव्यवहारात्। तेजोवती ज्योतिष्मती। दीप्यकं जीरकम्। वत्सकं कुटजफलम्। अग्निश्चित्रकः। कणमूलं पिप्पलीमूलम्। वरया त्रिफलया ॥७४॥

## वज्रकं घृतम्

वासागुडूचीत्रिफलापटोलैः करञ्जनिम्बाशनकृष्णवेत्रम्।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रवत् कुष्ठहरं प्रदिष्टम् ॥
विशीर्णकर्णाङ्गुलिहस्तपादः क्रिम्यर्दितो भिन्नगलोऽपि मर्त्यः।
पौराणिकीं कान्तिमवाप्य जीवेदव्याहतो वर्षशतञ्च कुष्ठी ॥७५॥

वासेत्यादौ—कृष्णवेत्रं कालियालता। वज्रकमिति वज्रवदव्यर्थशक्तिकत्वात् ॥७५॥

## आरग्वधाद्यं तैलम्

आरग्वधं धवं कुष्ठं हरितालं मनःशिलाम्।
रजनीद्वयसंयुक्तं पचेत्तैलं विधानवित्।
एतेनाभ्यञ्जयेत् श्वित्री क्षिप्रं श्वित्रं विनश्यति ॥७६॥

आरग्वधमित्यादौ—तैलमिति सार्षपाद्यन्यतमं कुष्ठहितत्वात्, उक्तं हि चरके "तैलानि सर्षपाणां करञ्जकोषातकीङ्गुदादीनाम्। कुष्ठेषु हितान्याहुस्तैलं यच्चापि खदिरस्य" इति। अन्ये तु सामान्यश्रुतौ प्रधानकल्पत्वेन तिलतैलमेव ग्राह्यम्। यत्र तु सार्षपादिविशेषोक्तिस्तत्रैव सार्षपादिग्रहणमित्याहुः। एवमन्यत्रापि एवजातीये ज्ञेयम् ॥७६॥

## तृणकं तैलम्

मञ्जिष्ठारुङ्निशाचक्रमर्दारग्वधपल्लवैः।
तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु ॥ ७७ ॥

मञ्जिष्ठेत्यादौ—रुक् कुष्ठम्, तृणकं गन्धतृणम् ॥ ७७ ॥

## महातृणकं तैलम्

हरिद्रात्रिफलादारु-हयमारकचित्रकम्।
सप्तच्छदश्च निम्बत्वक्-करञ्जौ वालकं नखी॥
कुष्ठमेडगजावीजं लाङ्गली गणिकारिका।
जातीपत्रञ्च दार्वी च हरितालं मनःशिला॥
कलिङ्गतिलपत्रञ्च अर्कक्षीरञ्च गुग्गुलुः।
गुडत्वङ्मरिचञ्चैव कुंकुमं ग्रन्थिपर्णकम्॥
सर्जपर्णासखदिरं विडङ्गं पिप्पली वचा।
घनरेणवमृतायाग्निकेशरं ध्यामकं विषम्॥
विश्वकद्रफलंमञ्जिष्ठा वोलस्तुम्वीफलं तथा।
स्नुहीसम्पाकयो पत्रं वागुजीवीजमांसिके॥
एला ज्योतिष्मतीमूलं शिरीषो गोमयाद्रसाः।
चन्दने कुष्ठनिर्गुण्डीविशालामल्लिकाद्वयम्॥
वासाश्वकर्णौ ब्रह्मी च श्याह्वचम्पककुड्मलम्।
एतैः कल्कैः पचेत्तैलं तृणकस्वरसद्रवम्।
सर्वत्वग्दोषहरणं महातृणकसंज्ञितम्॥ ७८॥

हरिद्रेत्यादौ-लाङ्गली विषलाङ्गलीति ख्याता, कलिङ्ग इन्द्रयव, चोरा चोरपुष्पी, ग्रन्थिपर्ण गेठेला, ध्यामक गन्धतृणम्, वोलो गन्धरसः, तुम्वीफल पक्वतिक्तालावु; मल्लिकाद्वय मल्लिका हाफरमल्लिका च, श्याह्वो नवनीतखोटि, चम्पककुड्मल चम्पक-कलिका। तृणकस्वरसो द्रव पाकसाधन जल यस्य तत्तथा। अत्रान्तरे सोमराजी-तैल केचित् पठन्ति तत्तु न टीकासम्मतमिति॥ ७८॥

## वज्रकतैलम्

सप्तपर्णकरञ्जार्कमालतीकरवीरजम्।
मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि॥
करञ्जवीजं त्रिफलां त्रिकटुं रजनीद्वयम्।
सिद्धार्थकं विडङ्गञ्च प्रपुन्नाडञ्च संहरेत्॥

मूत्रपिष्टै पचेत्तैलमेभिः कुष्ठविनाशनम् ।
अभ्यङ्गाद्वज्रकं नाम नाडीदुष्टव्रणापहम् ॥ ७६ ॥

सप्तपर्णेत्यादि—सुश्रुतस्य । मूत्रपिष्टैः पचेत्तैलमिति पाकोऽपि गोमूत्रेणैव । आस्फोता श्वेतार्कमूलमिति केचित् । अत्र तिलतैलमेव देयम्; "तैल तैल साधित ते समूत्रे" इति वाग्भटस्ववादात् । तैलमत्र सार्षपमिति केचित् ॥ ७६ ॥

## मरिचाद्यं तैलम्

मरिचालशिलाब्दार्कपयोऽश्वारिजटात्रिवृत् ।
शकृद्रसविशालारुङ्निशायुग्दारुचन्दनैः ॥
कटुतैलात् पचेत् प्रस्थं द्यक्षैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गाद्दद्रुश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत् प्रशस्यते ॥ ८० ॥

स्वल्पमरिचाद्यतैले—आल हरितालम्, शिला मन शिला, अर्कपयोऽर्कक्षीरम्, अश्वारि करवीर, जटा जटामासी, चन्द्राटादिपठितमरिचाद्ये मासीदर्शनात् व्यवहाराच्च, शकृद्रसो गोमयरस, अयमपि कल्क, विशाला गोरक्षकर्कटी, रुक् कुष्ठम्, निशायुक् हरिद्राद्वयम् । प्रस्थमिति प्रस्थपरिमित तेन सामानाधिकरण्य न विरुध्यते । गोमूत्रमत्र चतुर्गुण बोध्यम् ॥ ८० ॥

## बृहन्मरिचाद्यं तैलम्

मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रस ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरञ्च हरितालं मन शिला ।
चित्रको लाङ्गलाख्या च विडङ्गं चक्रमर्दकम् ॥
शिरीषं कुटजो निम्बः सप्तपर्णः स्नुहामृताः ।
सम्पाको नक्तमालोऽब्दः खदिरं पिप्पली वचा ॥
ज्योतिष्मती च पलिका विषस्य द्विपलं भवेत् ।
आढकं कटुतैलस्य गोमूत्रन्तु चतुर्गुणम् ॥
मृत्पात्रे लौहपात्रे वा शनैर्मृद्वग्निना पचेत् ।
पक्त्वा तैलवरं ह्येतन्म्रक्षयेत् कौष्ठिकान् व्रणान् ॥

पामाविचर्च्चिकादद्रुकण्डूविस्फोटकानि च।
वलयः पलितं छायानीलिव्यङ्गं तथैव च॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यञ्च जायते।
प्रथमे वयसि स्त्रीणां यासां नस्यन्तु दीयते॥
परामपि जरां प्राप्य न स्तना यान्ति नम्रताम्।
वलीवर्दस्तुरङ्गो वा गजो वा वायुपीडितः।
एभिरभ्यञ्जनैर्गाढं भवेन्मारुतविक्रमः॥ ८१॥

बृहन्मरिचाद्ये—शकृद्रस पूर्ववत्, कुटजस्य च फलमाहु'। स्नुहायास्तु चीरम्। प्रथमे वयसीति वयःसन्धौ॥ ८१॥

## विषतैलम्

नक्तमालं हरिद्रे द्वे अर्कं तगरमेव च।
करवीरं वचा कुष्ठमास्फोता रक्तचन्दनम्॥
मालती सप्तपर्णञ्च मञ्जिष्ठा सिन्धुवारिका।
एषामर्द्धपलान् भागान् विषस्यापि पलं भवेत्॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत्।
श्वित्रविस्फोटकिटिमकीटलूताविचर्च्चिकाः॥
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः।
विषतैलमिदं नाम्ना सर्वव्रणविशोधनम्॥ ८२॥

विषतैले—नक्तमाल करञ्जवीजम्; अर्कस्य चीरम्, तगर तगरपादुका, मालती जाती तस्या पत्रम्, सिन्धुवारिका निर्गुण्डी॥ ८२॥

## करवीराद्यं तैलम्

श्वेतकरवीररसो गोमूत्रं चित्रकं विडङ्गञ्च।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम्॥ ८३॥

श्वेतकरवीरेत्यादौ—करवीररसगोमूत्रयोर्मिलित्वा चातुर्गुण्यम्। शेषस्य तु कल्कत्वम्॥ ८३॥

## श्वेतकरवीराद्यं तैलम्

श्वेतकरवीरमूल विषांशसाधित गवां मूत्रे ।
चर्मदलसिध्मपामाविस्फोटक्रिमिकिटिमजित्तैलम् ॥ ८४ ॥

श्वेतकरवीरमूलमित्यादौ—श्वेतकरवीरस्य मूल यत्र, श्वेत करवीरस्य मूल यत्रेति वा विगृह्य तैलविशेषणता ज्ञेया । विषांशसाधितमिति विषस्यांशश्चतुर्थो भाग स च करवीरमूलापेक्षया इति केचित् । अन्ये तु गतविषतैले विषस्य पलमुक्त तद-पेक्षया कर्षमाहु', तन्न तन्त्रान्तरीयवाक्यत्वात् । अन्ये पुनरंशो भाग , तेन विषकर-वीरमूलयो समभागयोरेव कल्कत्व, व्यवहारोऽप्यनेनैव ॥ ८४ ॥

## सिन्दूराद्यं तैलम्

सिन्दूरार्द्धपलात् पिष्ट्वा जीरकस्य पलं तथा ।
कटुतैल पचेन्मानीं सद्य पामाहरं परम् ॥ ८५ ॥

स्वल्पसिन्दूराद्ये—मानीमित्यष्टौ पलानि । वृन्दे तु "कटुतैल पचेदाभ्या सद्य पामाहर परम्" इति पठ्यते । तन्मतेऽपि वृद्धवैद्यव्यवहारादेव पलाष्टक ग्राह्यम् ॥ ८५ ॥

## महासिन्दूराद्यं तैलम्

सिन्दूरं चन्दनं मांसीविडङ्गं रजनीद्वयम् ।
प्रियङ्गुपद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥
जात्यर्कत्रिवृतानिम्बकरञ्जं विषमेव च ।
कृष्णवेत्रकलोध्रञ्च प्रपुन्नाडञ्च संहरेत् ॥
श्लक्ष्णपिष्टानि सर्वाणि योजयेत्तैलमात्रया ।
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम् ॥
पामाविचर्च्चिकाकण्डूविसर्पादिविनाशनम् ।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् वहून् ॥ ८६ ॥

महासिन्दूराद्ये—जात्याः पत्र, अर्कस्य क्षीर, करञ्जस्य फलम् । तैलमात्रया प्रस्थरूपया ॥ ८६ ॥

## आदित्यपाकं तैलम्

मञ्जिष्ठात्रिफलालाक्षानिशाशिलालगन्धकै ।

**चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥ ८७ ॥**

आदित्यपाकतैले—जलं तैलसमं दत्त्वा जलशोषपर्य्यन्तमातपे स्थाप्यं जलं विना पाकानुपपत्तेः । अतएव इन्द्रलुप्तोक्तादित्यपाकेऽपि गुडूचीरसमेव तैलसमं व्यवहरन्ति वृद्धाः । अन्ये तु द्रवानुक्तावद्रवमेवादित्यपाकमाहुः ॥ ८७ ॥

## दूर्वाद्यं तैलम्

**स्वरसेन च दूर्वायाः पचेत्तैलं चतुर्गुणम् ।**
**कच्छूविचर्च्चिकापामा अभ्यङ्गादेव नाशयेत् ॥ ८८ ॥**

दूर्वातैले—चतुर्गुणं यथा स्यात्तथा दूर्वास्वरसेन पचेत् । दूर्वास्वरसेन चतुर्गुणेन तैलं पचेदित्यर्थः । वृन्देऽपि "स्वरसेऽपि च दूर्वायाः पचेत्तैलं चतुर्गुणे" इति पाठः ॥ ८८ ॥

## अर्कमनःशिलातैले

**अर्कपत्ररसे पक्वं कटुतैलं निशायुतम् ।**
**मनःशिलायुतं वापि पामाकण्ड्वादिनाशनम् ॥ ८९ ॥**

अर्कतैले—कल्कभेदात् योगद्वयं, स्वरसश्चतुर्गुणः, कल्कश्चाष्टांश एव स्वरससाध्यत्वात् ॥ ८९ ॥

## गण्डीरिकाद्यं तैलम्

**गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वग्लवणैः समूत्रैः ।**
**तैलं पचेन्मण्डलकुष्ठदद्रुदुष्टव्रणारुः किटिमापहारि ॥९०॥**

गण्डीरिकेत्यादौ—गण्डीरिका स्नुही, तस्याः क्षीरं; एवमर्कस्यापि, द्रुमः स्वर्णालुस्तस्य त्वक्; लवणं सैन्धवं, यदुक्तमायुर्वेदसारे "पक्वं कर्ण्यर्कसिन्धूत्थकुष्ठस्नुग्वह्निमार्कवैः । समूत्रैस्तैलमाहन्ति दद्रूणि किटिमानि च" इति । अत्र कर्णी स्वर्णालुः । तथा च द्रव्यावली "आरेवतस्तथा कर्णी कर्णिकारोऽथ रैवतः इति । अन्ये तु गण्डीरिका मञ्जिष्ठा, द्रुमः कुटजस्तस्य त्वगित्याहुः ॥ ९० ॥

## पृथ्वीसारतैलम्

**चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः ।**
**नाडीचबीजाद्विषतः काञ्जिपिष्टं पलं पलम् ॥**

करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः ।
मिश्रितं सूर्य्यसम्पक्वं तैलं कुष्ठव्रणास्रजित् ॥ ६१ ॥

चित्रकेति—अत्यन्तोत्कृष्टगुणत्वात् पृथ्वीसार इति मञ्ञा ॥ ६१ ॥

## सोमराजीतैलम्

सोमराजी हरिद्रे द्वे सर्पपारग्वधं गदम् ।
करञ्जैडगजाबीजं पत्रमारग्वधस्य च ॥
चतुर्गुणं जलं दत्त्वा गोमूत्रप्रस्थसंयुतम् ।
विपचेत् सार्षप तैलं नाडीदुष्टव्रणापहम् ।
अनेनाशु प्रणश्यन्ति कुष्ठान्यष्टादशैव तु ॥
नीलिका पिप्लवो व्यङ्गा गम्भीरं वातशोणितम् ।
कण्डून्यच्छप्रशमनं कच्छूपामाविनाशनम् ॥ ६२ ॥

सोमराजीत्यादौ—गद कुष्ठम् ॥ ६२ ॥

पक्षात् पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासात् स्रंसनञ्चाप्यधस्तात् ।
त्र्यहात् त्र्यहान्नस्ततश्चावपीडान्
मासेष्वसृङ्मोक्षयेत् षट्सु षट्सु ॥ ६३ ॥

पक्षादित्यादि—सुश्रुतस्य । स्रंसन विरेचनम् । नस्तत इति नासपुटयोरव-पीडानस्याविशेषान् दद्यात् । अवपीडशब्देन बहुमात्रसर्पिःप्रयोगोऽप्युच्यते तन्निरा-सार्थं नस्तत इत्युक्तम् ॥ ६३ ॥

योषिन्मांससुरात्याग शालिमुद्गयवादय ।
पुराणास्तिक्तशाकञ्च जाङ्गलं कुष्ठिनां हितम् ॥ ६४ ॥

इति कुष्ठचिकित्सा ॥

---

योषिदित्यादौ—मासमानूपज निषिद्ध जाङ्गलस्य विधानात् ॥ ६४ ॥

इति कुष्ठचिकित्साविवृति ।

---

# अथोदर्द-कोठ-शीतपित्त-चिकित्सा ।

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः ।
उदर्दे वमनं कार्य्यं पटोलारिष्टवारिणा ॥१॥

प्रायस्तुल्यचिकित्सितत्वात् उदर्दादिचिकित्सितमुच्यते। अभ्यङ्ग इत्यादौ—सेक इत्यत्र स्वेद इत्यपि पाठ । अत एवोक्तमन्यत्र "अभ्यङ्गः कटुतैलेन स्वेदन कोष्णवारिणा" इति पटोलारिष्टवारिणेत्यत्रानुक्तमपि मदनफलकल्क प्रक्षेप्यम् । त्रिफलापुरकृष्णाभिरिति त्रिफलाया· कषाय गुग्गुलुपिप्पल्यौ प्रक्षेप्ये, प्रक्षेपश्च व्यवहाराद् गुग्गुलोर्दशमाषका पिप्पल्यास्तु षण्माषका इति ॥१॥

त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ।
त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकम् ।
विसर्पोक्तममृतादिं भिषगत्रापि योजयेत् ॥२॥

त्रिफला क्षौद्रसहितामिति—त्रिफलाया क्वाथ , क्षौद्रन्तु प्रक्षेप्यम । नवकार्षिक वातरक्तोक्तम्। विसर्पोक्तममृतादिमिति अमृतवृषपटोल मुस्तकमित्यादिनोक्तम् । तस्यैव शीतपित्तहन्तृत्वेनोक्तत्वात्, न पुनरमृतवृषपटोल निम्बकल्कैरुपेतामित्यादिकम् । सिता मधुकसयुक्तामित्यत्र सिता कटुकया युक्तामिति केचित् पठन्ति ॥२॥

सितां मधुकसंयुक्तां गुडमामलकैः सह ॥३॥
सगुडं दीप्यकं यस्तु खादेत् पथ्यान्नभुङ् नर ।
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहज ॥४॥
सिद्धार्थरजनीकल्कै प्रपुन्नाडतिलैः सह ।
कटुतैलेन सम्मिश्रमेतदुद्वर्त्तनं परम् ॥५॥
दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥६॥
अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्दकोठान् सप्ताहादेव नाशयेत् ॥७॥

सगुडमित्यादौ—दीप्यक यमानिकाम् ॥३—७॥

कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ।

उदर्दोक्तां क्रियाञ्चापि कोठरोगे समासतः ।
सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम् ॥८॥

कुष्ठोक्तमित्यादि—उदर्दचिकित्सा कोठरोगेऽप्यतिदिशति । उदर्देत्यादि—महातिक्त सर्पि कुष्ठोक्तम् ॥८॥

निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात् ।
विस्फोटकोठक्षतशीतपित्तं कण्डूवस्रपित्तं रकसा च हन्यात् ॥९

निम्बस्येत्यादि—योगद्वयम्, अन्ये तु एकमेव योग वदन्ति । रकसा क्षुद्रकुष्ठभेद इति श्रीकण्ठ ॥९॥

क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ।
गाम्भारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ।
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ॥१०॥

क्षारेत्यादौ—क्षारो यवक्षार , तैलञ्च कटुतैल वदन्ति । गाम्भारिकेत्यादि—सुपक्वशुष्कगाम्भारीफल गव्य दुग्ध दत्त्वा उत्स्विद्य खाद्यम् ॥१०॥

तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ।
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ॥
भोजनं सर्वदा कार्य्यं लावतित्तिरिजेन वा ।
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ।
उष्णानि वा यथाकालं शीतपित्ते प्रयोजयेत् ॥११॥

इत्युदर्द-कोठ-शीतपित्त-चिकित्सा ।

---

तैलेत्यादि—सुश्रुतोक्त एलादिको गणस्तैलयोगेन उद्वर्त्तनयोगेन च योज्य इत्यर्थ ॥११॥

इत्युदर्दादिचिकित्सा-विवृति. ।

# अथाम्लपित्तचिकित्सा ।

प्रागम्लपित्तरोगार्त्तं कुलकारिष्टवारिभिः ।
सराठक्षौद्रसिन्धूत्थैर्वमनं कारयेद् भिषक् ॥१॥
वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत् ।
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम् ।
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥२॥

उक्तमङ्गत्वेव अम्लपित्तचिकित्सितमुच्यते । वान्तिं कृत्वेति—वमनञ्च अरिष्टादिभि अत्र तन्त्रान्तर यथा—"प्रागम्लपित्तरोगार्त्तं कुलकारिष्टवारिभि । सराठक्षौद्रसिन्धूत्थैर्वमन कारयेद्भिषक्" इति । राठ मदनफलम् ॥१—२॥

क्रियाशुद्धस्य शमनी ह्यनुबन्धव्यपेक्षया ।
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना ॥
ऊर्द्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥ ३ ॥

क्रियेत्यादि—दोषससर्गजे अनुबन्धव्यपेक्षया अनुबन्धभूतदोषाविरोधेन शमनी प्रशमनरूपा भेषजाहारकल्पना क्रिया कार्य्येत्यर्थ । उक्तवमनविरेकयोर्विषयमाह ऊर्द्ध्वगमित्यादि—ऊर्द्ध्वगे बहुकफे वमन, अधोगे तु अम्लपित्ते सविबन्धे विरेचनम् ॥ ३ ॥

तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत् ।
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जितान् ।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिबेत् ॥ ४ ॥

यवगोधूमेति—यवगोधूमौ हि मरत्वमधुरत्वादिना अम्लपित्तहितौ, तयो पेयादिरूपान् विकारान् । तीक्ष्णसस्कारवर्जितान् इति कट्वम्ललवणादिसस्कारसयोगरहितान् । यथास्वमिति पिबेदित्यनेन योज्यम्, तेन दोषससर्गाद्यपेक्षया तत्तद्दोषप्रत्यनीकेन द्रवेण पिबेदित्यर्थ ॥ ४ ॥

निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धिमधुयुतः पीतः ।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५ ॥

निस्तुषेत्यादौ—'त्रिसुगन्धिमधुयुत इति त्रिसुगन्धि त्वगेलापत्रम्, तच्च सौगन्ध्यमात्रकारकम्, मधु तु प्रक्षेपन्यायेन योज्यम् ॥ ५ ॥

कफपित्तवमीकण्डू-ज्वरविस्फोटदाहहा ।
पाचनो दीपन क्वाथः शृंगवेरपटोलयो ॥ ६ ॥
पटोलं नागरं धान्यं क्वाथयित्वा जलं पिवेत् ।
कण्डूपामार्चिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ ७ ॥
पटोलविश्वामृतरोहिणीकृतं जलं पिबेत् पित्तकफोच्छ्रये तु ।
शूलभ्रमारोचकवह्निमान्द्यदाहज्वरच्छर्दिनिवारणं तत् ॥ ८ ॥
यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत् ।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिं तथा ॥ ९ ॥

कफेत्यादौ—शृङ्गवेर शुण्ठी ॥ ६—९ ॥

## दशाङ्गः

वासामृतापर्पटकनिम्बभूनिम्बमार्कवै ।
त्रिफलाकुलकैः क्वाथः सक्षौद्रश्चाम्लपित्तहा ॥ १० ॥

दशाङ्गे—मार्कवो भृङ्गराज ॥ १० ॥

फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः ।
पीत क्लीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तजित् ॥ ११ ॥

फलत्रिकमित्यादौ—तिक्तेत्यत· परमेषामिति शेप , तेन फलत्रिकादीनि यान्येतानि एषां क्वाथ इत्यर्थः फलति । क्लीतक यष्टीमधु, सिताक्लीतकमधूनीह प्रक्षेप्याणि ॥ ११ ॥

पथ्याभृङ्गरजश्चूर्णं युक्तं जीर्णगुडेन तु ।
जयेदम्लपित्तजन्यां छर्दिमन्नविदाहजाम् ॥ १२ ॥

पथ्येत्यादौ—भृङ्गरजश्चूर्णं भृङ्गराजस्य चूर्णम् ॥ १२ ॥

## वासागुग्गुलुः

वासानिम्बपटोलत्रिफलाशनयासयोजितो जयति ।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ १३ ॥

वासेत्यादौ—अशन पीतशाल, यासो दुरालभा, वासादीना चूर्ण गुग्गुलुसम गुग्गुलो प्रधानत्वात् । क्रमश इत्यभ्यासेन ॥ १३ ॥

छिन्नाखदिरयष्ट्याह्वदार्वम्भो वा मधुद्रवम् ।
सद्राक्षामभयां खादेत् सक्षौद्रां सगुडाञ्च ताम् ॥ १४ ॥

छिन्नेत्यादौ—मधुद्रवमिति बहुव्रीहि, तेनाम्भ इत्यस्य विशेषण, मध्वत्र प्रक्षेपेण । साद्राक्षामित्यादि—योगत्रयमेतत् ॥ १४ ॥

कटुका सिता च लेह्या पटोलविश्वञ्च मधुयुक्तम् ॥ १५ ॥
रक्तस्रुतौ च युक्त्या खण्डं कूष्माण्डकं श्रेष्ठम् ॥ १६ ॥
पटोलधन्याकमहौषधाब्दै· कृत· कषायो विनिहन्ति शीघ्रम् ।
मन्दानलं पित्तवलासदाहच्छर्दिज्वरामानिलशूलरोगान् ॥१७॥

कटुका सिता चेति—कटुका कटुरोहिणी सितया लेह्येत्यर्थ· । पटोलविश्वञ्च मधुयुक्तमिति पटोलविश्वयो· क्काथ मधु प्रक्षिप्य पिबेदित्याह । कूष्माण्डखण्डक रक्तपित्तोक्तम् ॥ १५—१६ ॥

छिन्नोद्भवानिम्बपटोलपत्रं फलत्रिकं सुक्वथितं सुशीतम् ।
क्षौद्रान्वितं पीतमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम् ॥ १८॥

तन्त्रान्तरे पटोलधन्याकेत्यादियोगस्तथा छिन्नोद्भवानिम्बेत्यादियोगश्च क्वचित् पुस्तके दृश्यते, तौ च निश्चलेन वृन्देन च धृतौ ॥ १७ ॥ १८ ॥

पटोलत्रिफलानिम्बशृतं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये ॥ १९ ॥
सिंहास्यामृतभण्टाकीक्काथं पीत्वा समाक्षिकम् ।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥ २० ॥

पटोलत्रिफलेत्यादौ—अरिष्टो निम्ब. । सिंहास्येत्यादौ सिंहास्यो वासक, भण्टाकी कण्टकारी ॥ १९—२० ॥

वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ।
अम्लपित्ते प्रयोक्तव्यं गुडकूष्माण्डकं तथा ।
पक्तिशूलापहा योगास्तथा खण्डामलक्यपि ॥ २१ ॥

वासाघृतं रक्तपित्तोक्तम् । तिक्तघृत कुष्ठोक्तमहातिक्तक नत्रैव अम्लपित्तहरत्व-श्रुते । पिप्पलघृतन्तु परिणामशूलोक्तम्, एतच्च यद्यपि "पक्तिशूलापहा योगाः" इत्यनेनैव लभ्यते तथापि विशेषार्थमुक्त, यथा खण्डामलकी । पिप्पलीमधुसंयुक्तेति अवलेहविधया ॥ २१ ॥

पिप्पली मधुसंयुक्ता चाम्लपित्तविनाशिनी ।
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम् ॥
गुडपिप्पलिपथ्याभिस्तुल्याभिर्मोदकीकृत ।
पित्तश्लेष्मापह प्रोक्तो मन्दमग्निञ्च दीपयेत् ॥ २२ ॥

जम्बीरेत्यादौ—पक्वजम्बीरफलस्वरस, अयञ्च योगो वातोल्बणेऽम्लपित्त इत्याह ॥ २२ ॥

हिङ्गु च कतकफलानि चिञ्चात्वचो घृतञ्च पुटदग्धम् ।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम् ॥२३॥

हिङ्ग्वित्यादौ—कतकफल जलप्रसादनफल प्रायो मगधे भवति । यथोत्तर द्विगुणमिति हिङ्ग्वपेक्षया कतकफल द्विगुणं, कतकफलापेक्षया तिन्तिडीतरुत्वग्-द्विगुणा, तिन्तिडीतरुत्वगपेक्षया च घृत द्विगुणमिति । एतत् सर्वं स्थालीमध्ये निक्षिप्य शरावेण पिधायान्तर्धूम दग्ध्वा माषकचतुष्टयमुपयोज्य तप्तजलञ्चानुपेयं, तन्त्रान्तर-सवादात् ॥ २३ ॥

कान्तपात्रे वराकल्को व्युषितोऽभ्यासयोगत ।
सिताक्षौद्रसमायुक्त कफपित्तहरः स्मृतः ॥ २४ ॥

कान्तपात्र इति—कान्ताख्यलौहविशेषपात्रे प्रक्षिप्य स्थापितत्रिफलाकल्क इत्यर्थ । शर्करामधुनी प्रक्षेप्ये ॥ २४ ॥

एकोंऽश पञ्चनिम्बानां द्विगुणो वृद्धदारक ।
शक्तुर्दशगुणो देय शर्करामधुरीकृत ॥
शीतेन वारिणा पीत शूलं पित्तकफोत्थितम् ।
निहन्ति चूर्णं सक्षौद्रम्लपित्तं सुदारुणम् ॥ २५ ॥

एकोंऽश इत्यादौ—पञ्चनिम्बानामिति निम्बस्य त्वक्पत्रपुष्पफलमूलानां

पञ्चाना मिलितानामेको भाग । शक्तुर्दशगुण इति निम्बभागापेक्षया, मात्रास्य पलमर्द्धपल वा आहारद्रव्यशक्तुबाहुल्यात् ॥ २५ ॥

## अभ्रशुद्धिः

आशुभक्तोदके पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहारखण्डकर्णरसैरथ ॥
तण्डुलीयकशालिञ्चकालमारिषजेन च ।
वृश्चीरबृहतीभृङ्गलक्ष्मणाकेशराजकैः ॥
पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः ॥ २६ ॥

सम्प्रति सुधावती वाच्या । तत्र प्रथमाशुभक्तेत्यादिना अभ्रकशुद्धिमाह । आशुर्धान्यभेद । अत्राभ्रक कृष्णाभ्रक ग्राह्य श्रेष्ठत्वात् । तच्चैकपत्रीकृत्य उदूखलादिषु सञ्चूर्ण्य आशुभक्तकाञ्जिके अहोरात्र स्थापयित्वा तेनैव काञ्जिकेन पेषणीयम् । तत कन्दादीना व्यस्तसमस्तानां स्वरसेन पुन. पेषण भावन पुटनञ्च बहुधा कुर्वीत यावन्निश्चान्द्रिकत्वमभ्रस्य स्यादित्यर्थ. । तत्र कन्दो वन्य ओल , खण्डकर्ण खाण्ड-कानः ( खारकोन ) इति ख्यात । तण्डुलीयकालमारिषयोः स्वल्पपत्रबृहत्पत्र-भेदेन भेद । वृश्चीरः पुनर्नवा, भृङ्गो भृङ्गराज', लक्ष्मणा स्वनामख्याता । विहायस इत्यभ्रकस्य ॥ २६ ॥

## लौहशुद्धिः

स्वर्णमाक्षिकशालिञ्चध्मातं निर्वापितं जले ।
त्रैफलेऽथ विचूर्ण्यैवं लोहं कान्तादिकं पुनः ॥
बृहत्पत्रकरीकर्णत्रिफलावृद्धदारकैः ।
माणकन्दास्थिसंहारशृङ्गवेरभवै रसैः ॥
दशमूलीमुण्डितिकातालमूलीसमुद्भवः ।
पुटितं साधु यत्नेन शुद्धिमेवमयो व्रजेत् ॥ २७ ॥

लौहशुद्धिमाह स्वर्णमाक्षिकेत्यादि—पिष्टाभ्या स्वर्णमाक्षिकशालिञ्चाभ्या कान्तादिलौह, लिप्त्वा ततो भस्त्रया वह्नौ ध्मात ततोऽमृतसारवक्ष्यमाणविधिकथित-

त्रिफलाक्वाथे निर्वापितमित्यर्थं । त्रैफले जल इति त्रिफलाक्वाथ इत्यर्थं । तदेव निरुत्थमारितलौहचूर्णं प्रक्षालयन् भानुपाकादिशोधित बृहत्पत्रकरिकर्णपलाशादि-स्वरसै पुटितं कुर्य्यादित्याह बृहत्पत्रेत्यादि—बृहत्पत्रो वडवड इति ख्यात, अत्र बृहत्पत्रकरिकर्णाधिकादशपुटनद्रव्येषु मध्ये येषा स्वरसप्राप्तिस्तेषा स्वरसो ग्राह्य, येषान्तु स्वरसो न लभ्यते तेषा पुटनीयलौहसमानामष्टगुण जल दत्त्वा अष्टमभागाव-शेषक्वाथेन पुटन कर्त्तव्यमिति ॥ २७ ॥

## मण्डूरशुद्धिः

वशिरं श्वेतवाट्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च वर्षाभूं दग्वाथश्चोद्र्ध्वमेव च ॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्।
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता ॥२८॥

वशिरमित्यादिना—लौहमलशुद्धिमाह। वशिर श्वेतसूर्य्यावर्त्त । मधुपर्णी गुडूची। मयूरकोऽपामार्ग । तण्डुलीय क्षुद्रमारिष । वर्षाभू पुनर्नवा। सुजीर्ण-मण्डूर पुराणमण्डूरम् । वशिरादीना मूलत्वक्फलपल्लवान् स्थालीमध्ये पातयित्वा तदुपरि जीर्णमण्डूर दत्त्वा तैरेव पल्लवादिभिराच्छाद्य गोमूत्र दत्त्वा दिवसत्रय व्याप्य अदग्ध यथा स्यात्तथा पाको विधेय । तदनु शरावेण पिधायान्तर्वाष्प यथा स्यात्तथा दिवसत्रय स्थाप्यम् । तदनु प्रक्षाल्यातपे शोषयित्वा चूर्णयेदिति मण्डूरशुद्धि ॥२८॥

## रसशुद्धिः

जयन्त्या वर्द्धमानस्य आर्द्रकस्वरसेन च।
वायस्याश्चानुपूर्व्यैवं मर्दनं रसशोधनम् ॥ २९ ॥

अथ रसशुद्धिमाह जयन्त्या इत्यादि—वर्द्धमान एरण्ड । वायसी काकमाची ॥ २९ ॥

## गन्धकशुद्धिः

गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम् ॥

ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम्।
यत्नाद् भृङ्गरसे क्षिप्तं पुन शुष्कं विशुध्यति ॥ ३० ॥

गन्धकशुद्धिमाह, गन्धकमित्यादि—क्षुद्रितमिति तण्डुलकणपरिमाणं कृत्वा लौह-भाजने स्थापयित्वा भृङ्गराजस्वरसेनाप्लाव्य चण्डातपे शोषयेत्, एवमपरवारद्वयमपि। तदनु प्रक्षाल्यातपे सशोष्य लौहपात्रमध्ये स्थापयित्वा ज्वलद्बदराङ्गारोपरि दत्त्वा दर्व्विकया सञ्चाल्य यदा तैलवद् द्रवीभवति तदा भृङ्गराजस्वरसपरिपूरितपात्रे घृताक्तसूक्ष्म-वस्त्रेण पिहितमुखे गन्धक त्वरया ढालयित्वा पात्रान्तरेण पिदध्यात्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति गन्धकशुद्धि ॥ ३० ॥

## क्षुधावती गुडिका

गगनाद् द्विपलं चूर्णं लौहस्य पलमात्रकम्।
लौहकिट्टं पलार्द्धञ्च सर्वमेकत्र संस्थितम् ॥
मण्डूकपर्णीविशिर-तालमूलीरसैः पुन।
वरीभृङ्गकेशराज-कालमारिषजैरथ ॥
त्रिफलाभद्रमुस्ताभि स्थालीपाकाद्विचूर्णितम्।
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः ॥
तन्मनाक् च शिलाखल्ले यत्नत. कज्जलीकृतम्।
वचा चव्यं यमानी च जीरके शतपुष्पिका ॥
व्योषं मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्त सितस्तथा ॥
भृङ्गमाणककन्दौ च खण्डकर्णक एव च।
दण्डोत्पला केशराज-कालावकडकोऽपि च ॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च ॥
एतत् सर्वं समालोड्य लौहपात्रे तु भावयेत्।
आतपे दण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा ॥
तद्रसेन शिलापिष्टां गुडिकां कारयेद्भिषक्।
वदरास्थिनिभां शुष्कां सुनिगुप्तां निधापयेत् ॥

तत् प्रातर्भोजनादौ च सेवितं गुडिकात्रयम्।
अम्लोदकानुपानञ्च हितं मधुरवर्जितम्॥
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषत।
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम्॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम्।
पाण्डुरोगञ्च सर्वञ्च शोथोदरगुदामयान्॥
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम्।
प्लीहानं श्वासमानाहमामवातं सुदारुणम्।
गुडी क्षुधावती सेयं विख्याता रोगनाशिनी॥ ३१॥

अथ शोधिताभ्रकलौहलोहमलचूर्णाना मिलित्वा स्थालीपाकमाह, गगनादित्यादि-गगनादित्यभ्रकात्। मण्डूकपर्ण्यादितालमूल्यन्तस्य रसेनाभ्रकलौहतन्मलमिलितचूर्ण-स्यैनैक स्थालीपाक। वरीति शतावरी। तत शतावर्य्यादिकालमारिषान्तरसेन च द्वितीय स्थालापाक। तदनु त्रिफलाभद्रमुस्ताभिरप्यनन्तरोक्तकाथविधिकृतकाथेन तथैव तृतीय स्थालीपाक इति। निश्चलस्तु मण्डूकपर्ण्यादितालमूल्यन्तरसेन पुटदानमाह। तत्तु न सम्यक्, पुटदानाश्रुते, पूर्वपुटदानस्य तु रसशोधनादिग्रन्थेन व्यवधानाच्चेति। स्थालीपाकाद्विचूर्णितमिति—स्थालीपाकानन्तर पुनर्लौहशिलायां चूर्णीकर्त्तव्यमित्यर्थ। एतदनन्तर यद्विधेय तदाह, रसगन्धकयोः कर्षावित्यादि—रसगन्धकयो कर्षौ प्रत्येक-मिति च्छेदः। सन्मिलितरसगन्धककर्षचतुष्टयमेकत इत्येकीकृत्य कज्जलीकृत ग्राह्यमिति योज्यम्। वचा चव्यमित्यादिना प्रक्षेप्यचूर्णद्रव्याण्याह। खरमञ्जरी अपामार्ग। सूर्य्यावर्त्तो जामातृसर्य्यावर्त्त, स च श्वेत। माणकन्दो माणकन्द। एषाञ्च वचादीना चूर्णं प्रत्येकमर्द्धपलम्, त्रिफलाया मिलित्वा मार्द्धपलमेकम्। तेन त्रिफलाया प्रत्येकमर्द्धपलमिति फलति। बदरास्थिमिता इति अत्रोपदेशात् कलायपरिमाणा इत्याहु। अत्र क्षीरादिवर्जन वारिभक्ताम्लकाञ्जिकादिविधानञ्च प्रयोगसात्म्यत्वात्। अचिन्त्या हि योगशक्तिरिति॥ ३१॥

## जीरकाद्यं घृतम्

पिष्ट्वाजाजीं सधन्याकं घृतप्रस्थं विपाचयेत्।
कफपित्तारुचिहरं मन्दानलवमिं जयेत्॥ ३२॥

पिष्ट्वेत्यादौ—जल चतुर्गुणम् ॥ ३२ ॥

## पटोलशुण्ठीघृते

पटोलशुण्ठ्योः कल्काभ्यां केवलं कुलकेन वा ।
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम् ॥ ३३ ॥

पटोलेत्यादि—स्पष्टम् ॥ ३३ ॥

## पिप्पलीघृतम्

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ।
पिबेच्च प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥ ३४ ॥

पिप्पलीघृते—मधुप्लुतमिति सिद्धे घृते घृतपादिकमधुयुक्तम् ॥ ३४ ॥

## द्राक्षाद्यं घृतम्

द्राक्षामृताशक्रपटोलपत्रैः
सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिकापद्मकिरातधान्यैः
कल्कैः पचेत् सर्पिरुपेतमेभिः ॥
युञ्जीत मात्रां सह भोजनेन
सर्वत्र पानेऽपि भिषग्विदध्यात् ।
बलासपित्तं ग्रहणीं प्रवृद्धां
कासाग्निसादज्वरमम्लपित्तम् ।
सर्वं निहन्याद् घृतमेतदाशु
सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥ ३५ ॥

द्राक्षेत्यादौ—शक्रः कुटजः, तस्य फलमिति वदन्ति । पद्म पद्मकाष्ठम् ॥ ३५ ॥

## शतावरीघृतम्

शतावरीमूलकल्कं घृतप्रस्थं पय समम् ।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम् ॥

नाशयेदम्लपित्तञ्च वातपित्तोत्तरान् गदान् ।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥ ३६ ॥

इत्यम्लपित्त-चिकित्सा ।

शतावरीघृते पय सममिति पय शब्देनेह पय साधर्म्यात् शतावर्य्या रसो ग्राह्य, न तु क्षीर, तस्य पृथगुपात्तत्वात् सममिति घृतेन सह तुल्यम् ॥ ३६ ॥

इत्यम्लपित्त-चिकित्सा-विवृति ।

---

# अथ विसर्प-विस्फोट-चिकित्सा ।

विरेकवमनालेप-सेचनासृग्विमोक्षणैः ।
उपाचरेद् यथादोषं विसर्पानविदाहिभिः ॥ १ ॥

अम्लपित्तवद्विसर्पेऽपि पित्तसम्बन्धस्यावश्यम्भावात् प्रायस्तुल्यचिकित्स्यत्वाच्चाम्लपित्तानन्तर विसर्पचिकित्सितमुच्यते । अविदाहिभिरित्यत्रान्नपानैरिति शेष ॥१॥

पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च ।
विसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥ २ ॥

पटोलेत्यादि—पटोलपिचुमर्दाभ्यामित्येको योग । पिप्पल्या मदनेन चेति द्वितीय । इन्द्रयवस्तु योगद्वयेऽपि सम्बध्यते इति केचित् । अन्ये तु पटोलनिम्बयो. क्वाथ पिप्पल्यादित्रय प्रक्षेप्यमित्येक योगमाहु । व्यवहार. पुनरनेनैव ॥ २ ॥

त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह
प्रयोक्तव्यं विरेकार्थे विसर्पज्वरशान्तये ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ॥ ३ ॥

त्रिफलेत्यादि—त्रिफलाक्वाथ सर्पिस्त्रिवृते प्रक्षिप्य पेय । रसमित्यादावपि विरेकार्थमिति सम्बध्यते ॥ ३ ॥

तृणवर्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ।
प्रदेहसेकसर्पिर्भिर्विसर्पे वातसम्भवे ॥ ४ ॥

तृणवर्जमिति तृणपञ्चमूल वर्जयित्वा पञ्चमूलचतुष्टयम् । तत्र स्वल्पमहत्पञ्चमूलद्वय प्रसिद्धमेव । कण्टकिपञ्चमूल वल्लीपञ्चमूलञ्च यथा,—"मेषशृङ्गी हरिद्रा च

विदारी शारिवाऽमृता । वल्ल्याख्य कण्टक्याख्यन्तु श्वदंष्ट्राऽभीरुशैर्य्यकैः । अहिंस्रा-करमर्दश्च सर्वदोषहराश्च ते ।" अत्र अभीरु. शतमूली, शैर्य्यको झिण्टी, अहिंस्रा कालाकडः, करमर्दः स्वल्पमधुरफल· चीरीति लोके इति सुश्रुतटीका । तृणपञ्च-मूलस्य वर्जनमिह पित्तहरत्वेन वातेऽयौगिकत्वात् ॥ ४ ॥

**कुष्ठं शताह्वासुरदारुमुस्ता वाराहिकुस्तुम्बुरुकृष्णगन्धा· ।**
**वातेऽर्कवंशार्त्तगलाश्च योज्या सेकेषु लेपेषु तथा घृतेषु ॥ ५ ॥**

कुष्ठमित्यादि—सुश्रुतस्य । वाराही वाराहीकन्द , एतदभावे चर्मकारालुक । कुस्तुम्बरु धनीयकम् , कृष्णगन्धा शोभाञ्जनमूल, अन्ये तु वीज, अर्कोऽर्कमूल, वंशो वंशनाली, आर्त्तगल आगडामूल अर्जुनवल्कल वा ॥ ५ ॥

**प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः ।**
**सयष्टीन्दीवरै· पित्ते क्षीरपिष्टैः प्रलेपनम् ॥ ६ ॥**

प्रपौण्डरीकेत्यादौ—इन्दीवर नीलोत्पलम् ॥ ६ ॥

**कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।**
**वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥७**

कशेर्वित्यादि-सुश्रुतस्य । पद्म पद्मकाष्ठ, गुन्द्रा गुलुञ्च , उत्पल नीलोत्पल, कर्दम· पद्मिनीस्थानगतकर्दम , वस्त्रान्तरा वस्त्रेणान्तरिता , एव सति पित्तविसर्पेऽति-मृदौ त्वगाद्युपघातो न स्यात्, लेप स्फोटनञ्च सुकर भवतीति। लेपा इति बहुवचननिर्देशादेकैकशोऽप्येते लेपा योज्या इति वदन्ति ॥ ७ ॥

**प्रदेहा· परिषेकाश्च शस्यन्ते पञ्चवल्कलैः ।**
**पद्मकोशीरमधुकचन्दनैर्वा प्रशस्यते ॥ ८ ॥**

प्रदेहा इत्यादि—पञ्चवल्कलैरिति कपीतनवटाश्वत्थप्लक्षोडुम्बरवल्कलै । प्रशस्यत इत्यत्र वचनपरिणामेन प्रदेह इति योज्यम् ॥ ८ ॥

**पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम् ।**
**गुन्द्रामूलन्तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥ ९ ॥**

पित्ते त्वित्यादौ—श्लोकपादैश्चत्वारो योगा , शङ्खञ्च शैवलञ्चेति समाहारः । गुन्द्रा गुलुञ्चः, शुक्तिर्मुक्तोत्पत्तिभाण्ड, शीतवीर्य्यत्वात् मौक्तिकमपीति केचित् । घृतान्वितमिति योगचतुष्टयेऽपि योज्यम् ॥ ९ ॥

न्यग्रोधपादाः गुन्द्रा च कदलीगर्भ एव च ।
विसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥ १० ॥
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः ।
पृथक् पृथक् प्रदेहाः स्यु सर्वैर्वा सर्पिषा सह ॥ ११ ॥

न्यग्रोधेत्यादि—वाग्भटस्य । न्यग्रोधस्य पादा प्ररोहा अन्ये तु मूलानी-त्याहु । तरुणा इत्यभिनवा । तरुणा इत्यत्र गुन्द्रेति न पाठ वाग्भटे चरके च तरुणा इति पाठात् । कदलीगर्भो गर्भस्था कदलीमञ्जरी, विसग्रन्थिमृणालग्रन्थि, हरेणवो वर्त्तुलकलाया ॥१०—११॥

द्राक्षारग्वधकाश्मर्य्यत्रिफलामण्डपीलुभिः ।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥१२॥

द्राक्षेत्यादौ—आरग्वधस्य फलम्, अमण्ड एरण्डस्तस्य बीज विरेचकत्वात्, पीलु औत्तरापथिक फलम् । क्वाथेन कल्केन वा योगद्वयमिदम् । तत्र पील्वन्त एक, हरीतक्यन्तश्च द्वितीय इति ॥१२॥

गायत्रीसप्तपर्णाब्दवासारग्वधदारुभि. ।
कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥१३॥

गायत्रीत्यादौ—अत्र आरग्वधस्य पत्र, कुटन्नट कैवर्त्तमुस्तकम् । अय योगो वासास्थाने धवस्य कुटन्नटस्थाने कुरुण्टकस्य प्रक्षेपादपि बोध्य । यदाह चरक — “खदिर सप्तपर्णञ्च मुस्तमारग्वध धवम् । कुरुण्टक देवदारु दद्यादालेपन भिषक्” इति ॥१३॥

अजाश्वगन्धासरणाथ काला सैकेशिका वाप्यथवाजशृङ्गी ।
गोमूत्रपिष्टो विहिम प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥१४॥

अजेत्यादि—सुश्रुतस्य । अजगन्धा फोकान्धी, अश्वगन्धा, ख्यातैव । सरणा त्रिवृत्, काला कालाकड, एकेशिका पाठा, अजशृङ्गी मेषशृङ्गी कर्कटशृङ्गी वा । अजगन्धादिरजशृङ्ग्यन्त एको योग । उक्त हि वाग्भटे—कालाजशृङ्गी सरणा वस्तगन्धा हयाह्वया । एकेशिका च लेप, स्यात् श्वयथावेकगात्रजे” । विहिम इति हिमविपरीत, कोष्ण इत्यर्थ ॥१४॥

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पं कामाची हिता लेपावचूर्णनैः॥
मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्॥
धात्रीपटोलमुद्गानामथवा घृतसंप्लुतः॥१८॥

त्रिफलेत्यादि—वाग्भटस्य। समङ्गा वराहक्रान्ता, करवीरकमित्यत्र करवीरजमेति पाठे मूलम्। अनन्ता अनन्तमूलम्। अय लेपस्तथा वक्ष्यमाणोऽप्यारग्वधादिः स्वल्पघृतयोगेन स्निग्ध. कार्य्यं। एतदनन्तर प्रदेहाः सर्वत्रैव एते देया। स्वल्पघृताप्लुत इति चरकेणोक्तत्वात्। श्लेष्मातको वहुवार। कामाची काकमाची। सर्वविसर्पनुदिति प्रत्येकदोपजसर्वविसर्पनुत् सन्निपातविसर्पस्यासाध्यत्वात्॥१५॥

## नवकषायगुग्गुलुः

अमृतवृषपटोलं निम्बकल्कैरुपेतं
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
कथितमिदमशेषं गुग्गुलोर्भागयुक्तं
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम्॥१६॥

अमृतेत्यादौ—त्रिफल त्रिफला, व्याधिघात स्वर्णालुफलम्। गुग्गुलोर्भाग युक्तमिति प्रत्यहोपयोगे प्रक्षेपपरिभाषयैव देयम्। विरेके कर्त्तव्ये प्रक्षेपमानापेक्षया द्वैगुण्येनेत्याहु॥१६॥

## अमृतादिः

अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च॥१७॥

अमृतेत्यादौ—असितवेत्र कालियालतामूलम्, अत्रापि विरेके कर्त्तव्ये गुग्गुलु प्रक्षिपन्ति वृद्धाः॥१७॥

पटोलामृतभूनिम्बवासकारिष्टपर्पटैः ।
खदिराब्दयुतैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥१८॥

पटोलेत्यादिना विस्फोटचिकित्सामाह ॥१८॥

पटोलत्रिफलारिष्टगुडूचीमुस्तचन्दनैः ।
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम् ।
कण्डूत्वग्दोषविस्फोटविषवीसर्पनाशनम् ॥१९॥
भूनिम्बवासाकटुकापटोलफलत्रिकाचन्दननिम्बसिद्धः ।
विसर्पदाहज्वरवक्त्रशोषविस्फोटतृष्णावमिनुत् कषायः ॥२०॥
सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः ॥२१॥
दुरालभां पर्पटकं पटोलं कटुकां तथा ।
सोष्णं गुग्गुलुसंयुक्तं पिबेद्वा खदिराष्टकम् ॥२२॥

पटोलत्रिफलेत्यादौ—समूर्वा रोहिणी पाठा रजनी सदुरालभेत्यत्र परं एभि-रिति शेषः, तेन एभिः कृतं कषायं पाययेदित्यर्थसङ्गतिः कार्य्या । त्रिफलां योजयेत् पुरैरिति त्रिफलाक्वाथे गुग्गुलुं प्रक्षेप्य इत्यर्थः । दुरालभामित्यादावपि दुरालभा-दीनां क्वाथो गुग्गुलुप्रक्षेपसहितः । सोष्णमिति सहशब्दः ईषदर्थे । खदिराष्टक-मग्रे वक्ष्यमाणम्, इदमपि गुग्गुलुयुक्तमेव पिबेत् ॥१९—२२॥

कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बु वा ।
विस्फोटान् नाशयत्याशु वायुर्जलधरानिव ॥२३॥

कुण्डलीत्यादि—योगद्वयम् । कुण्डली गुडूची, अम्बु क्वाथः ॥२३॥

चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे ।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥२४॥

चन्दनमित्यादौ—शारिवा अनन्तमूलं, जात्यास्तु पत्रम् ॥२४॥

शुकतरुनते च मांसी रजनी पद्मा च तुल्यानि ।
पिष्टानि शीततोयेन लेपः स्यात् सर्वविस्फोटे ॥२५॥

शुकतर्वित्यादि—वाग्भटस्य । शुकतरुः शिरीषः, नतं तगरपादिका । पद्मा ब्राह्मणयष्टिका । वाग्भटे तु "शकतरुनते च मांसी" इत्यत्र "शुकतरुनतमाचीका"

इति पाठ, माचीकश्च देवदार्विति तट्टीका, तेन सग्रहे मासीति पाठो लेखक-दोपात् ॥२५॥

शिरीषमूलमञ्जिष्ठाचव्यामलकयष्टिकाः ।
सजातीपल्लवक्षौद्रा विस्फोटे कवडग्रहाः ॥२६॥
शिरीषोडुम्बरौ जम्बुः सेकालेपनयोर्हिताः ।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥२७॥

शिरीषेत्यादौ —शिरीषमूलेत्यत्र शिरीषपूगेति पाठे पूगस्य फलम् । अत्र बहु-वचननिर्देशात् प्रत्येकमप्येते कवडे योज्या इति वदन्ति । जातीपत्रक्षौद्रयोगश्च सर्वत्र विज्ञेय । आश्च्योतन सर्वत्र चक्षुषि द्रवौषधिदानम् ॥२६—२७॥

## दशाङ्गः

शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठवालैः ।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी ॥२८॥

शिरीषेत्यादौ—यष्टी यष्टीमधु, वाल ह्रीवेरम् ॥ २८ ॥

## चतुःसमम्

शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद् द्रुतम् ।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ २९ ॥

शिरीषेत्यादौ—नागाह्व नागकेशरचूर्णम्, हिंस्रा कालाकडः ॥ २९ ॥

## वृषाद्यं घृतम्

वृषखादिरपटोलपत्रनिम्बत्वगमृतामलकीकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदान् सकुष्ठगुल्मान् ॥३०

वृषाद्यघृते—निम्बत्वगमृतामलकीकषायकल्कैरित्यस्य स्थाने छन्द पूरणार्थ निम्बत्वगमृताधात्रीकषायकल्कयुक्तमिति केचित् पठन्ति । अन्ये तु त्वगमृतकामल-कीति पठन्ति, क्वचित्तु तामलकीति पाठ, तन्न, व्यवहाराभावात् ॥ ३० ॥

## पञ्चतिक्तकघृतम्

पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम् ।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥३१

पञ्चतिक्तघृते त्रिफलाया कल्क, शेषाणाञ्च कषाय इति व्यवहरन्ति वृद्ध-वैद्याः ॥ ३१ ॥

## महापद्मकघृतम्

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम् ।
द्वे हरिद्रे विडङ्गानि सूक्ष्मैला तगरं तथा ॥
कुष्ठं लाक्षा पत्रकञ्च सिक्थकं तुत्थमेव च ।
चक्कुवार· शिरीषश्च कपित्थफलमेव च ॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत् ।
यांश्च रोगान् निहन्त्याशु तान्निबोध महामुने ! ॥
सर्पकीटाखुदष्टेषु लूतामूत्रकृतेषु च ।
विविधेषु स्फोटकेषु तथा दुष्टविसर्पिषु ॥
नाडीषु गण्डमालासु प्रभिन्नासु विशेषतः ।
अगस्त्यविहितं धन्यं पद्मकन्तु महाघृतम् ॥ ३२ ॥

पद्मकघृते—नागपुष्पस्य केशरमिति नागकेशरचूर्णमित्यर्थ ॥ ३२ ॥

## स्नायुकचिकित्सा ।

रोगस्तु स्नायुकाख्यो यः क्रिया तत्र विसर्पवत् ।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पिवन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ।
शोभाञ्जनमूलदलै·काञ्जिकपिष्टैः सलवणैर्लेपः ।
हन्ति स्नायुकरोगं यद्वा मोचत्वचो लेपः ॥ ३३ ॥

इति विसर्प-विस्फोटचिकित्सा ।

स्नायुकरोगचिकित्सामाह, रोगास्त्वित्यादि। स्नायुकरोगो नारुया नाम्ना पश्चिमदेशे ख्यात अयन्च रोगो रुग्विनिश्चये नोक्त । वृन्देन पुनरुक्तः, यथा,—"शाखासु कुपितो वायु शोथ कृत्वा विसर्पवत् । भित्त्वैव त क्षते तत्र सोष्मा मास विशोध्य च । कुर्य्यात्तन्तुनिभ सूत्र तत् पिण्डैस्तक्रशक्तुजै । लिप्त शनै. क्षतादेति छेदात्तत् कोपमावहेत्। तत्पाताच्छोथशान्ति स्यात् पुन स्थानान्तरे भवेत्। रोग.

स स्नायुको नाम्ना तन्तुकश्च प्रकीर्त्तित'," इति। शाखास्विति जङ्घादिषु, तदिति सूत्रम्, तक्रशक्तुजै पिण्डैर्लिप्त सत् क्षतादेति नि सरति। कदाचिदभिघातादिना सूत्रच्छेदात्। तत्पातादिति तस्य सूत्रस्य स्वयमेव पतनात्। पिबन्नित्यत्र पीत इति पाठे कर्त्तरि क्त.। मोचत्वचो लेप इति मोच कदलीफल कोण्टक वा तस्य त्वक् ॥ ३२ ॥

इति विसर्पविस्फोटाधिकारविवृति॰।

---

# अथ मसूरिकाचिकित्सा।

सर्वासां वमनं पथ्यं पटोलारिष्टवासकैः।
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥ १ ॥
सक्षौद्रं पाययेद् ब्राह्म्या रसं वा हैलमोचिकम्।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे ॥ २ ॥
सुषवीपत्रनिर्यासं हरिद्राचूर्णसंयुतम्।
रोमान्तीज्वरविस्फोटमसूरीशान्तये पिबेत् ॥ ३ ॥
उभाभ्यां हृतदोषस्य विशुध्यन्ति मसूरिकाः।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४ ॥

विस्फोटभेदत्वात् प्रायस्तुल्यचिकित्सितत्वाच्च मसूरीचिकित्सामाह, सर्वासामित्यादि। वासकैरित्यत्र कृतैरिति शेष। तेन कषायैरित्यनेन सामानाधिकरण्य न विरुध्यते। वत्स इन्द्रयव। फल मदनफलम्। सक्षौद्रमित्यादि—रसमिति स्वरसम्, एतच्च वामक विरेचकञ्च। सुषवी कारवेल्लकः, एतद्रसोऽप्युभयभागदोषहर। उभाभ्यामिति वमनविरेचनाभ्याम् ॥ १। ४ ॥

कण्टाकुम्भाण्डमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तं
पीतं बीजं जयाया सघृतमुषितवाः पीतमद्भिः शिकट्याः।
मध्या मूलं शिफा वा मदनकुसुमजा सोषणा वाथ पूतिः
योगा वास्यम्बुनैते प्रथममघगदे दृश्यमाने प्रयोज्याः ॥५॥

मुष्टियोगमाह। कण्टाकुम्भाण्डमूलमित्यादि कण्टाकुम्भाण्डलता स्वनामख्याता।

हिंगुमाषैकयुक्त पीतमिति पूर्वेणैव सम्बध्यते। बीज जयाया सघृतमुषितवा. पीतमिति द्वितीयो योग। जया जयन्ती, अस्याश्च बीजमुपदेशादेकाधिकषड्गण्डक सघृत पर्य्युषितजलेन पीतमित्याहु। ये तु उषितवा पीतमिति पद जयाबीजमित्यनेन सह न योजयन्ति, तन्मते पीतमिति नपुसकलिङ्गनिर्देशो नोपपद्यते इति, सामान्यविशेषभावेन योजनापि कष्टकल्पनैवेति। अङ्घ्रि शिकट्या इति तृतीयो योग। अत्राप्युषितवा पीतमिति लिङ्गविपरिणामेन सम्बध्यते। अङ्घ्रिरिति मूलम्। शिकटी स्वनामख्यातैव। मध्या अपि तथैव च। [ मधी गुवाकस्तस्य मूलम्। ] सोषणा समरिचा। एतच्च पूतिरित्यनेनैव सम्बध्यते। पूति खट्टाशिकाण्डम्। अन्ये तु मदनकुसुमजा शिफा सोषणा, पूतिर्नाटाकरञ्जोऽपि सोषण इति वदन्ति। अत्रापि मारिचमेकाधिकषड्गण्डकमित्युपदिशन्ति। अघगद पापरोगो मसूरी पर्य्याय एव ॥ ५ ॥

उद्धृत्य मुष्टिनाच्छाद्य भेषजं यत् प्रयुज्यते।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः॥
उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा।
विधिगृहीतं ज्येष्ठाम्बुपीतं हन्ति मसूरिकाम्।
तद्वच्छृगालकण्टकमूलञ्च व्युषिताम्भसा ॥ ६ ॥

मुष्टियोगस्वरूपमाह उद्धृत्यादि—उष्ट्रकण्टक स्वनामख्यातम्। ( ऊखुर इति केचित् ) अनन्तामूलमनन्तमूलम्, ज्येष्ठाम्बु तण्डुलोदकम्। शृगालकण्टकमपि स्वनामख्यातम् ॥ ६ ॥

मसूरीं मूर्च्छितो हन्ति गन्धकार्द्धस्तु पारदः।
निशाचिञ्चाच्छदे शीतवारिपीते तथैव तु ॥ ७ ॥

मूर्च्छित इति कज्जलीकृत। शोधितगन्धक कर्ष १, शोधितरस मा ८, कज्जली कर्त्तव्या, अतो माषकचतुष्टय षट्क वा पर्णे कृत्वा खाद्यमिति व्यवहार। 'रुद्राक्ष मरिचैर्युक्तम्' इत्यादियोग सग्रहे नास्ति ॥ निशेत्यादौ—छद पत्र छदशब्दस्य नपुसकलिंगता छान्दसत्वात्, किंवा निशाचिञ्चाच्छदाविति पाठ, द्विवचन दर्शनात् पत्रद्वय ग्राह्यमित्यन्ये ॥ ७ ॥

यावत्संख्या मसूर्य्यङ्गे तावद्भिः शेलुजैर्दलैः।
छिन्नैरातुरनाम्ना तु गुणी क्षेति न वर्द्धते ॥

व्युषितं वारि सक्षौद्रं पीतं दाहगुणीहरम्।
शेलुत्वक्कृतशीताम्भःसेकं वा कायशोषणे ॥ ८ ॥

यावदित्यादौ—शेलुर्बहुवार, मसूरिका गणयित्वा तावत्सङ्ख्यया आतुरनाम्ना पत्राणि छिन्द्यादित्यर्थ। गुणी मसूरिकेत्यर्थ ॥ शेलुत्वगित्यादि—शीताम्भ शीतकषाय, कायशोषण इति उच्छूनगात्रप्रदेशशोषणनिमित्तमित्याहु । कायशोधनमिति पाठ शरीरमलक्लेदनिरासार्थमित्यर्थ, किंवा कायशब्देनोपचारान्मसूरिकै वोच्यते ॥ ८ ॥

उग्राज्यवंशनीलि-यववृषकार्पासकीकसब्रह्मी।
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहर ॥ ९ ॥
तर्पणं वातजायां प्राग् लाजचूर्णैः सशर्करैः ॥
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ॥ १० ॥

उग्रेत्यादौ—उग्रा वचा, आज्य घृत वृषस्य वासकस्य मूल, कार्पासकीकम कार्पासास्थि, सुरस पर्णास, मयूरकोऽपामार्ग। तर्पणमिति द्रवेणालोडिता शक्तव । तिक्तयूषरिति तिक्तद्रव्यकृतयूषे । प्रतुदा पारावतादय ॥९ । १०॥

द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा।
सामृतं धान्यकं मुस्तं जयेद्वातसमुत्थिताम् ॥
गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्ठकम्।
चन्दनं काश्मर्य्यफलं वलामूलं विकङ्कतम् ॥
पाककाले मसूर्य्यान्तु वातजायां प्रयोजयेत् ॥ ११ ॥

द्विपञ्चमूलमित्यादियोग क्वाथेन, एव गुडूचीत्यादिकमपि ॥ ११ ॥

द्राक्षाकाश्मर्य्यखर्जूरपटोलारिष्टवासकै।
लाजामलकदु:स्पर्शैः सितायुक्तैश्च पैत्तिके ॥ १२ ॥
शिरीषोडुम्बराश्वत्थ-शेलुन्यग्रोधवल्कलैः।
प्रलेप सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥ १३ ॥
दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम्।
श्लैष्मिक्यां पित्तजायां वा पानं निःक्वाथ्य दापयेत् ॥१४॥

द्राक्षेत्यादौ—सितायुक्तमित्यनन्तर कषायमिति शेष ॥१२—१४॥

## निम्बादिः

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥
एष निम्बादिकः ख्यातः पीत शर्करया युत ।
हन्ति त्रिदोषमसूरीं ज्वरवीसर्पसम्भवाम् ॥
उत्थिता प्रविशेद् या तु पुनस्तां बाह्यतो नयेत् ॥ १५ ॥
पटोलकुण्डलीमुस्तवृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥
मसूरीं शमयेदामां पकाञ्चैव विशोषयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ १६ ॥

निम्बादि क्वाथविधया देय । पटोलेत्यादौ—कुण्डली गुडूची ॥१५ । १६॥

पटोलमूलारुणतण्डुलीयकं पिवेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिविस्फोटविदाहशान्तये तदेव रोमान्तिवमिज्वरापहम् ॥
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखादिरेण संयुतम् ।
पिवेज्जलं सुकथितं सुशीतं मसूरिकारोगविनाशनं परम् ॥१७॥

पटोलमूलेत्यादि—क्वाथे हरिद्रामलकचूर्णं प्रक्षिप्य अनुलोमनार्थं पिवेत् । अरुण लोहित तण्डुलीयकम् । धात्रीखदिरेण संयुतमिति धात्रीखदिरावपि पटोलमूलारुणतण्डुलीयकाभ्या सह क्वथनीयौ ॥ १७ ॥

## खदिराष्टकः

खदिरत्रिफलारिष्टपटोलामृतवासकै ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ।
कुष्ठवीसर्पविस्फोट-कण्ड्वादीनपि पानत ॥ १८ ॥

खदिरेत्यादौ—अष्टकाख्य इति खदिराष्टकसंज्ञ । अत्र शोधने कर्त्तव्ये गुग्गुलुमपि प्रक्षिपन्ति ॥ १८ ॥

अमृतादिकषायस्तु जयेत् पित्तकफात्मिकाम् ।
सौवीरेण तु सम्पिष्टं मातुलुङ्गस्य केशरम् ।
प्रलेपात् पातयात्यशु दाहश्चाशु नियच्छति ॥ १६ ॥
पाददाहं प्रकुरुते पिडका पादसम्भवा ।
तत्र सेकं प्रशंसन्ति वहुशस्तण्डुलाम्बुना ॥ २० ॥

अमृतादिकषायो विमर्पोक्तो दशद्रव्यस्तस्यैव मसूरीहरत्वश्रुते, न तु ज्वराधिकारोक्तोऽमृतादिरिति । सौवीरेणेति काञ्जिकेन ॥ १६ ॥ २० ॥

पाककाले तु सर्वास्ता विशोषयति मारुतः ।
तस्मात् संवृंहणं कार्य्यं न तु पथ्यं विशोषणम् ॥ २१ ॥

पाककाले वायुप्रशमनार्थं वृंहणाहारमाह पाकेत्यादि—विशोषणेन पाकोन्मुखस्य दोषस्यान्त प्रवेशाद्रुजाधिक्य स्यादिति भाव ॥ २१ ॥

गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह ।
पाककाले तु दातव्यं भेषजं गुडसंयुतम् ।
तेन पाकं व्रजत्याशु न च वायु प्रकुप्यति ॥ २२ ॥
लिहेद्वा वादरं चूर्णं पाचनार्थं गुडेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिका ॥ २३ ॥

गुडूचीत्यादौ—मोरटमिक्षुमूलम् । एषा क्राथ । गुडस्तु प्रक्षेप्य ॥ २२।२३॥

शूलाध्मानपरीतस्य कम्पमानस्य वायुना ।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः ॥ २४ ॥

धन्वमासरसा इति जाङ्गलपक्षिमासरसा ॥ २४ ॥

दाडिमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः ।
पिवेदम्भस्तप्तशीतं भावितं खदिरासनै ॥ २५ ॥

पिवेदम्भस्तप्तशीतमित्यर्द्धश्रृत शीतञ्च, एव वक्ष्यमाणयोगेऽपि । भावित खदिरासनैरिति खदिरासनै साधितं क्राथमित्यर्थ । असन पीतशाल, अशन एव इत्यन्ये ॥ २५ ॥

शौचे वारि प्रयुञ्जीत गायत्रीवहुवारजम् ।
जातीपत्रं समञ्जिष्ठं दार्वीपूगफलं शमीम् ॥

धात्रीफलं समधुकं क्वथितं मधुसंयुतम्।
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते॥
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना॥ २६॥

शौच इत्यादौ—गायत्री खदिर। गवेधुमधुकाम्बुनेति—गवेधुको गुलुञ्च। अनयो कल्क कर्पटे बद्ध्वा प्रपीड्याक्षिसेक कार्य्यः॥ २६॥

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम्।
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिता।
नश्यन्त्येनन दृग्जाता मसूर्य्यो न भवन्ति च॥ २७॥

मधुकमित्यादौ—हिता इति बहुवचननिर्देशात् व्यस्तै समस्तैर्मधुकादिभि प्रलेप। अर्द्धशृतैश्च तैराश्च्योतनमित्याहु। आश्च्योतन परिषेक॥ २७॥

पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत्।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना॥
क्रिमिपातभयाद्येऽपि धूपयेत् सरलादिना।
वेदनादाहशान्त्यर्थं स्रुतानाञ्च विशुद्धये॥ २८॥

पञ्चवल्कलेत्यादौ—क्लेदिनीं क्लेदयुक्ता मसूरीम्। भस्मनेति शुष्कगोमयभस्मना। गोमयरेणुनेति गोमयचूर्णेन वस्त्रच्छानितेन। सरलादिभिरिति सरलागुरुगुग्गुलुप्रभृतिभि॥ २८॥

सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम्।
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये॥ २९॥

सगुग्गुलुमित्यादि—सगुग्गुलुमित्युभयत्रापि सम्बध्यते॥ २९॥

अथाष्टाङ्गावलेहो वा कवडश्चार्द्रकादिभि।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः॥ ३०॥
कुर्य्याद् व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम्।
विषघ्नै सिद्धमन्त्रैश्च प्रमृज्यात्तु पुन पुन।
तथा शोणितसंसृष्टा काश्चिच्छोणितमोक्षणै॥ ३१॥

अष्टाङ्गावलेहार्द्रकादिकवडौ ज्वराधिकारोक्तौ। पञ्चतिक्तकघृत कुष्ठोक्तम्॥ ३०॥ ३१॥

निशाद्वयोशीरशिरीषमुस्तकै सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्पकुष्ठदौर्गन्ध्यरोमान्तिहर प्रदेह ॥
विम्ब्यतिमुक्तकाशोक-प्लक्षवेतसपल्लवै· ।
निशि पर्य्युषित क्वाथो मसूरीभयनाशन ॥ ३२ ॥
मसूरीस्फोटयोरन्ते कूर्परे मणिवन्धके ।
मुखांसफलके शोथो जायते च सुदारुणः ॥ ३३ ॥
व्रणशोथहरैर्योगैर्वा तन्नैश्च जलौकसा ।
हर्त्तव्यस्तैलभृष्टस्य वृश्चिकस्य विलेपनैः ॥ ३४ ॥
इति मसूरी-चिकित्सा ॥

निशाद्वयेत्यादौ—भद्रश्रिय श्वेतचन्दनम् । विम्बीत्यादि—विम्बी कुमरीति श्रीकण्ठः । अतिमुक्तको माधवीलता । योगोऽयमनागतमसूरीनिवारणार्थ चैत्र मासि पेय ॥ ३२—३४ ॥

चैत्रासितभूतदिने रक्तपताकान्विता स्नुही भवने ।
धवलितकलसन्यस्ता पापरुजो दूरते धत्ते ॥ ३५ ॥

चैत्रासितभूतदिन इति चैत्रकृष्णचतुर्दश्याम् ॥ ३५ ॥

इति मसूरीचिकित्साविवृति ।

---

# अथ क्षुद्ररोगचिकित्सा ।

तत्राजगल्लिकामामां जलौकोभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षार-कल्कैश्चालेपयेन्मुहु· ॥ १ ॥
नवीना कण्टकार्य्यास्तु कण्टकैर्वेधमात्रतः ।
किमाश्चर्य्यं विपच्याशु प्रशाम्यत्यजगल्लिका ॥ २ ॥

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सिताना रोगाणा पारिशेष्यात् क्षुद्ररोगचिकित्सितमुक्तम् । ननु यदि क्षुद्रत्वमेषा हेतुलक्षणचिकित्सितालपत्वेन तर्हि अग्निरोहिणीवल्मीकादीना त्रिदोषजत्वेन हेत्वादिबाहुल्यात् तत् कथ क्षुद्रत्वम् ? नैव, बाहुल्येन तच्छब्दात् छत्रिणो गच्छन्तीतिवत् ।

किंवा अवान्तरभेदविरहत्व क्षुद्रत्व, येनात्र वक्तव्यानामजगल्लिकादीना न दोषदूष्यादिकृतभूरिसख्याभेदेन व्रणजादिवन्निर्देश, किन्तु प्रत्येक स्तोकसख्ययाभिधान तेषाम्। अजगल्लिका आचलीति लोके। आमामित्यपक्का, वाग्भटेऽपि अपक्कामित्युक्तम्। शुक्तीत्यादि—शुक्तिर्मुक्तोत्पत्तिभाण्ड, सौराष्ट्रिका सौराष्ट्रभव, सुश्रुते तु सौराष्ट्रीस्थाने अग्निका पठ्यते, अग्निका सर्जिक्षार। क्षारो यवक्षार इति ॥ १ ॥ २ ॥

कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम्।
श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम्।
इरिवेल्लिं गन्धमालां जयेत् पित्तविसर्पवत् ॥
मधुरौषधसिद्धेन सर्पिषा शमयेद् व्रणान्।
रक्तावसेकैर्बहुभि स्वेदनैरपतर्पणै ॥
जयेद्विदारिकां लेपै शिग्रुदेवद्रुमोद्भवै।
पनसिकां कच्छपिकामनेन विधिना भिषक् ॥
अन्त्रालजीं कच्छपिकां तथा पाषाणगर्दभम्।
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥
सुरदारुशिलाकुष्ठै स्वेदयित्वा प्रलेपयेत्।
कफमारुतशोथघ्नो लेप पाषाणगर्दभे ॥ ३ ॥

क्षारयोगैरिति घण्टापारुल्यादियोगै। मधुरौषध काकोल्यादिगण। व्रणानिति विवृतादीनेव गन्धमालान्तान् पाकेन मधुरौषधसिद्धेन सर्पिषा शमयेदित्यर्थ। सुश्रुतेऽप्युक्त—विवृतामिन्द्रवृद्धा गर्दभिका जालगर्दभमिरिवेल्लिकां गन्धमाला विस्फोटकञ्च पित्तविसर्पविधानेनोपाचरेत्। पक्वाश्च मधुरौषधसिद्धेन सर्पिषा" इति। रक्तावसेकैरित्यादिना विदारिकाचिकित्सा। अनेन विधानेनेति विदारिकोक्तेन। अन्यान् शोथानिति पाषाणगर्दभादीन्। दोषसम्भवानिति योग्यतया कफवातजान् साधयेत्। पाषाणगर्दभो "गाणठाकुया" इति ख्यात ॥ ३ ॥

शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्।
मन शिलालभल्लातसूक्ष्मैलागुरुचन्दनै ॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत्।

वल्मीकं नाशयेत् तद्धि बहुच्छिद्रं बहुस्रवम् ॥
पाददारीषु च शिरां व्यधयेत्तलशोधनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहु ॥
मधूच्छिष्टवसामज्ज-घृतक्षारैर्विमिश्रितैः ।
सर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम् ॥
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥४॥

मन शिलेत्यादौ—आल हरितालम् । निम्बतैलमिति निम्बवीजभवतैलम् । बहुस्रवमिति बहुस्रावन् । सुश्रुते आलस्थाने पिप्पलीयोगादप्यय योग पठित. । तलशोधनीमिति पादतलगामिनीम् । स्नेहस्वेदोपपन्नावित्यनन्तर कृत्वेति शेष । अन्ये तु शिराव्यधाङ्गीभूतस्नेहस्वेदौ कृत्वा शिरा व्यधयेदिति बोध्यम् । एवमन्तरेण शिराव्यधस्यापवृत्तौ स्नेहस्वेदोपपन्नावित्यादिना तु पश्चात् कर्मोपदेश दोषक्षयार्थं रक्ता-कृष्टिजनितवातक्षयार्थं वेति । आलेपयेन्मधूच्छिष्टादिभिरित्यन्वय । अत्र क्षीरविमि-श्रितैरित्यपपाठ , सुश्रुते यवक्षारैरिति पाठात् । सर्जेत्यादौ—सर्जो धूनक । कटु-तैलाक्तमिति कटुतैलयुक्त यथा स्यात् तथा पादप्रमार्जनार्थं किंवा चूर्णविशेषणम्॥४॥

## उपोदिकाक्षारतैलम्

उपोदिकासर्षपनिम्बमोचकर्कारुकैर्वारुकभस्मतोये ।
तैलं विपक्वं लवणांशयुक्तं तत्पाददारीं विनिहन्ति लेपात् ॥५॥

उपोदिकेत्यादि—उपोदिकानाल ग्राह्यम् । मोचक कदलीकण्ट• । कर्कारु कूष्माण्डभेद , एर्वारु कर्कटी, अनयोर्नाडी । एषा क्षारोदके चतुर्गुणे सैन्धवकल्केन तैलं पक्तव्यम् । लेपादित्यतिघनत्वात् ॥५॥

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्टकाशीश-त्रिफलाभिर्मुहुर्मुहु• ॥६॥
करञ्जवीजं रजनी काशीशं मधुकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हित ॥७॥

अलस• 'पाकोआना' इति ख्यात• । अम्लैरिति काञ्जिकै• । अरिष्टो निम्ब ॥६—७॥

लाक्षाभयारसालेपः कार्य्यं वा रक्तमोक्षणम् ।
जातीपत्रञ्च सम्मर्द्य दद्यादलसके भिषक् ॥८॥

लाक्षेत्यादौ—रसो गन्धरसः ॥८॥

बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान् ।
शिलारोचनकाशीशचूर्णैर्वा प्रतिसारयेत् ॥९॥

बृहतीत्यादि—बृहती कण्टकारी तस्याः स्वरसः, तैलञ्च सार्षपं,सुश्रुतमतावादात् । प्रतिसारयेदिति घर्षयेत् ॥९॥

दहेत् कदरमुद्धृत्य तैलेन दहनेन वा ॥१०॥

दहेदित्यादि—कदरं शस्त्रेणोद्धृत्य तप्ततैलेन दहनेन वा दहेदित्यर्थः । दहनेनेत्यत्र मदनेनेति पाठे मदनः सिक्थकं तेनापि तप्तेन ॥१०॥

चिप्पमुष्णाम्बुना स्विन्नमुद्धृत्याभ्यज्य तं व्रणम् ।
दत्त्वा सर्जरसं चूर्णं बद्ध्वा व्रणवदाचरेत् ॥
स्वरसेन हरिद्राया पात्रे कृष्णायसेऽभयाम् ।
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्पं पुनः पुनः ॥११॥

चिप्पमिति—चिप्पमिह कुनखमभिप्रेतं न त्वङ्गुलीवेष्टनम्, उक्तरूपचिकित्सायास्तत्रानर्हत्वादिति केचित् । उष्णाम्बुना स्वेदनमिह मार्दवजननार्थं, मृदुत्वे सत्येव कुनखोत्कर्षणं कर्तुं शक्यमिति । बद्ध्वेति व्रणोक्तबन्धनविधिना, व्रणवदाचरेदिति व्रणहितैराचारादिभिरित्यर्थः । कृष्णायसे कान्तलौहपात्रे ॥११॥

चिप्पे सटङ्कणास्फोतामूललेपो नखप्रदः ।
निम्बोदकेन वमनं पद्मिनीकण्टके हितम् ॥१२॥
निम्बोदकृतं सर्पिः सक्षौद्रं पानमिष्यते ।
पद्मनालकृतः क्षारः पद्मिनीं हन्ति लेपतः ॥१३॥

चिप्प इत्यादौ—आस्फोता हाफरमाली । योगोऽयं व्यस्तसमस्ततया व्यवह्रियते वृद्धैः । निम्बोदकेन निम्बक्वाथेन मदनफलादियुक्तेनेत्याहुः ॥१२—१३॥

निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम् ।
नीलीपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम् ॥
जालगर्दभरोगे तु सद्यो हन्ति च वेदनाम् ॥१४॥

निम्बेत्यादि—निम्बारग्वधकषायश्चोत्सादन इति यत् सुश्रुतेनोक्तम् अत्रापि कषायशब्दस्य कल्क एवार्थ । नीली नीलबुह्वा ॥१४॥

अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ।
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा ॥१५॥

स्तन्य विशोधयेदिति । पित्तश्लेष्महरैः स्तन्यशोधनद्रव्यैरित्यर्थ । उक्त हि—"तत्र धात्र्या. पय शोध्य पित्तश्लेष्महरौषधै" इति ॥१५॥

करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥१६॥

करञ्जेत्यादौ—तिक्तश्चरकोक्तस्तिक्तकगणः । अन्ये तु पटोलपत्रमाहु ॥१६॥

गुदभ्रंशे गुदं स्नेहैरभ्यज्याशु प्रवेशयेत् ।
प्रविष्टं स्वेदयेच्चापि वद्धं गोष्फणया दृढम् ॥१७॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥१८॥

गुदभ्रंश इत्यादौ—स्नेहैरिति वहुवचनात् चतुर्भिरेव स्नेहैरित्यर्थ , किंवा गव्य-वसया म्रक्षयेदिति वक्ष्यमाणयोगदर्शनादत्रापि स्नेहशब्देन गव्यवसैव ग्राह्या । गोष्फणा वन्धविशेष , स हि सुश्रुते व्रणालेपवन्धविधौ व्यक्त । उक्त हि "वर्चोगमनार्थं सच्छिद्रेण चर्मणास्य कौपीनवन्ध कार्य्यः" इति ॥१७—१८॥

वृक्षाम्लानलचाङ्गेरीविल्वपाठायवाग्रजम् ।
तक्रेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम् ॥१९॥
गुदञ्च गव्यवसया म्रक्षयेदविशङ्कित. ।
दुष्प्रवेशो विशत्याशु गुदभ्रंशो न संशयः ॥२०॥

वृक्षाम्ल महार्द्रकम् । अनलश्चित्रक । एषा कल्क तक्रेण पिवेत् ॥१९—२०॥

मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
स्विन्नमूषिकमांसेन चाथवा स्वेदयेद् गुदम् ॥२१॥

स्विन्नमूषिकमांसेनेत्यत्र काञ्जिकेन स्विन्न घृतेन भृष्टमित्याहु ॥२१॥

## चाङ्गेरीघृतम्

चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् ।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥२२॥

चाङ्गेरीघृते चाङ्गेर्यां स्वरस , कोलस्य शुष्कबदरस्य क्वाथ , अम्ल दधि दध्य-म्लम् । एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम् । किंवा चाङ्गेरीस्वरस' स्नेहसम , स्वरसे क्षीरवद्द्विधीरिति वचनात्, दधिकोलरसौ तु मिलित्वा त्रिगुणौ । पूर्वप व्यवहार । नागरक्षारौ कल्कौ ॥ २२ ॥

## मूषिकाद्यं तैलम्

क्षीरे महत् पञ्चमूलं मूषिकामन्त्रवर्जिताम् ।
पक्त्वा तस्मिन् पचेत्तैल वातघ्नौषधसाधितम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥२३॥

क्षीर इत्यादौ—मूषिकागुडकमेक ग्राह्यम्, पञ्चमूलस्य मिलित्वा प्रस्थ एक क्षीर-स्यापि एक , तोयस्य प्रस्थद्वयम् । एव नि क्वाथ्य शेष क्षीरप्रस्थ स्थाप्य , अनेन तैल-कुडव साध्य इति काश्चित् । अन्ये तु "द्रव्यादष्टगुण क्षीर साधयित्वा चतुर्गुणन् ।" क्षीरमित्यादिपरिभाषया क्षीर साधयित्वा चतुर्गुणेन तैलकुडव साध्य इत्याहु । चक्रस्त्वाह अन्त्रवर्जितामिति ग्रहणयोग्यतोपदर्शनार्थम् , तेन मूषिकमांसस्य पलान्यष्टौ, पञ्चमूलस्यापि क्षीरस्य प्रस्थ , तोयस्य प्रस्थत्रयम् , शेष क्षीरप्रस्थ , तेन कुडव साध्य , एवमन्यत्रापि, पक्वेन क्षीरेण स्नेहसाधने एवव व्यवस्थेति । व्यवहार प्राय प्रथमव्याख्ययैव । वातघ्नौषध भद्रदार्वादिगण स च कल्क ॥ २३ ॥

स्वेदोपनाहौ परिकर्त्तिकायां कृत्वा समभ्यज्य घृतेन पश्चात् ।
प्रवेशयेच्चर्म शनै प्रविष्टेर्मांसै सुखोष्णैरुपनाहयेच्च ॥
स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम् ।
निरुद्धप्रकशे नाडीं द्विमुखीं कनकादिजाम् ॥
दिग्ध्वाभ्यक्त्वा चुलक्याद्स्नेहेन परिषेचयेत् ।
तैलेन वा वचादारुकल्कै सिद्धेन च त्र्यहात् ॥

पुन स्थूलतरा नाडी देया स्रोतोविशुद्धये।
शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत्।
स्निग्धञ्च भोजनं वद्धगुदेऽप्येष क्रियाक्रम ॥२४॥

स्वेदेत्यादौ—परिकर्त्तिकाया सर्पिषा अभ्यज्य अनन्तर वातघ्नमांपादिभि स्वेद कृत्वा शाल्वणादिना च उपनाहन कृत्वा परिकर्त्तित चर्म यथोक्तस्वेदादिना मृदूभूत प्रवेशयेत् सम्यगानयेदित्यर्थ । प्रविष्टे च सुखोष्णमांसैरुपनाहयेत्। सुश्रुतेऽप्येवमेवोक्तम्। तथैवेनामित्यनेनावपाटिकायामप्युपनाह चर्मानयनञ्चातिदिशति निरुद्धेत्यादौ—कनकादीत्यादिना शल्लपूतप्रभृतीना ग्रहणम्। चुलकी शुशू इति ख्यातो जलजन्तु. । आदिशब्दात् वराहादय । त्र्यहादित्यत्र वीप्सा वोध्या, तेन त्र्यहात् त्र्यहात् प्रागुक्तनाड्यपेक्षया पुन पुन स्थूलतरा नाडी देया। स्रोतोविशुद्धय इत्यत्र स्रोतोविवृद्धय इति पाठ । यदाह सुश्रुत एवमस्य स्रोतोद्वार वर्द्धयेदिति। व्रणवदिति सद्योव्रणवत्। स्निग्धञ्च भोजनमाचरेदित्यनेन सम्वध्यते। सुश्रुतेऽपि "निरुद्धप्रकशे स्निग्धञ्चाहारमुपसेवेत" इत्युक्तम्। एष क्रम इति निरुद्धप्रकशोक्तविधि ॥२४॥

चर्मकीलं जतुमणिं मशकांस्तिलकालकान्।
उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥२५॥

जतुमणिर्जरुड । क्षाराग्निभ्यामिति अनवगाढक्षारेण, अवगाढे त्वग्निना ॥२५॥

रुवुनालस्य चूर्णेन घर्षो मशकनाशनः।
निर्मोकभस्मघर्षाद्वा मश शान्तिं व्रजेत् सदा ॥२६॥

रुवुरेरण्डस्तस्य नालेन गृहीत यच्चूर्णमिति शङ्खचूर्णम्,तेन घर्षो घर्षणमित्यर्थ। निर्मोक इति कृष्णसर्पनिर्मोक ॥२६॥

युवानपिडकान्यच्छनीलिकाव्यङ्गशर्कराः।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥
लोध्रधान्यवचालेपस्तारुण्यपिडकापहः।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥२७॥
सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम्।
वमनञ्च निहन्त्याशु पिडकां यौवनोद्भवाम् ॥२८॥

पिडका यूनामाननपिडका युवानपिटका वर्णागम इत्यादिनिरुक्तविधिना वर्ण लोप । धान्य धनीयकम् ॥२७—२८॥

व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
लेपः सनवनीतो वा श्वेताश्वखुरजा मसी ॥२९॥

व्यङ्गेष्वित्यादि—वाग्भटस्य । समाक्षिकेति अर्जुनत्वक् चापि सम्बध्यते । अर्जुनत्वक् वृक्षसम्बन्धादेव स्वय शुष्का ग्राह्या । श्वेता श्वेतापराजिता, अश्वखुर अश्वस्य घोटकस्य खुर तयोर्मसी भस्म, अन्ये तु धवलघोटकखुरमसीत्याहु ॥२९॥

रक्तचन्दनमञ्जिष्ठा कुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदा ॥
व्यङ्गिनां लेपनं शस्तं रुधिरेण शशस्य च ।
केवलान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥३०॥

रक्तचन्दनेत्यादौ—बहुवचनात् व्यस्तमसमस्तमिति वदन्ति । वटाङ्कुरा अभिनवपत्रमुकुला । तीक्ष्णानित्यभिन्नान् ॥३०॥

मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः ।
सप्तरात्राद्भवेद्वक्त्रं पुण्डरीकदलोपमम् ॥३१॥

मसूरैरित्यादौ—सर्पिषेति विशेषणे तृतीया । पिष्टैरित्यर्थात् पयसैव पिष्टैरित्यर्थ । पिष्टैरित्यत्र भृष्टैरित्यपि केचित् पठन्ति । वाग्भटेऽप्युक्त "क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषा मसूरा" इति ॥३१॥

मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः ।
मुखकान्तिकरो लेपः पिडकातिलकालजित् ॥
नवनीतगुडक्षौद्रकोलमज्जप्रलेपनम् ।
व्यङ्गजिद्वरुणत्वग्वा छागीक्षीरप्रपेषिता ॥
जातीफलकल्कलेपो नीलीव्यङ्गादिनाशनः ।
सायञ्च कटुतैलेनाभ्यङ्गो वक्त्रप्रसादनः ॥३२॥

मातुलुङ्गस्य जटा मूलम्, शिला मन शिला, कोलमज्जा वदरमज्जा । वरुणत्वग्वेति द्वितीयो योग ॥३२॥

कालीयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः ।
लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण ॥३३॥

कालीयकेत्यादौ—उत्पल नीलोत्पलम्, आमय कुष्ठम्, वदरास्थिमध्य मज्जा, फलिनी प्रियगु. ॥३३॥

तुपरहितमसृणयवचूर्णसयष्टीमधुकलोध्रलेपेन ।
भवति मुखं परिनिर्जितचामीकरचारुसौभाग्यम् ॥
रक्षोघ्नशर्वरीद्वयं मञ्जिष्ठागैरिकाज्यबस्तपयः ।
सिद्धेन लिप्तमाननमुद्यद्विधुविम्ववद्भाति ॥ ३४ ॥

रक्षोघ्न श्वेतसर्षप , आज्य घृतम् । स्तपयव सिद्धेनेति समासपदम् , रक्षोघ्नादिभिर्सिद्धेन लेपेनेत्यर्थः ॥ ३४ ॥

परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः ।
मुखकमलकान्तिकारी भ्रुकुटीतिलकालकान् जयति ॥३५

परिणतेत्यादि—परिणतदधिप्रभृतिभिर्लेप । भ्रुकुटी ललाटे वलीरूपा ॥ ३५ ॥

## हरिद्राद्यं तैलम्

हरिद्राद्वययष्ट्याह्व-कालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठा-पद्मपद्मककुङ्कुमैः ॥
कपित्थतिन्दुकप्लक्ष-वटपत्रैः पयोऽन्वितैः ।
लेपयेत् कल्कितैरेभिस्तैलं वाभ्यञ्जनं चरेत् ॥
पिप्लवं नीलिकाव्यङ्गांस्तिलकान् मुखदूषिकान् ।
नित्यसेवी जयेत् क्षिप्रं मुखं कुर्य्यान्मनोरमम् ॥ ३६ ॥

हरिद्रादौ—कुचन्दन चन्दनभेद , पद्म पद्मपुष्पम् । पत्रशब्द• कपित्थादिभि प्रत्येक सम्बध्यते । लेपपक्षे पयसैव पेषणम् । तैलपाकपक्षे हरिद्रादीना कल्क , क्षीरन्तु चतुर्गुणम् । पिप्लवमिति जडुलम् ॥ ३६ ॥

## कनक-तैलम्

मधुकस्य कषायेण तैलस्य कुडवं पचेत् ।
कल्कैः प्रियङ्गुमञ्जिष्ठा-चन्दनोत्पलकेशरैः ॥

कनकं नाम तत्तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्गशोधनं परमार्चितम् ॥ ३७ ॥

मधुकस्येत्यादौ—केशर नागकेशरम्। अभीरु जतुलम् ॥ ३७ ॥

## मञ्जिष्ठाद्यं तैलम्

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम्।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥
आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत्।
नीलिकापिडकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥
मुखं प्रसन्नोपचितं वलीपलितवर्जितम्।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम् ॥ ३८ ॥

मञ्जिष्ठेत्यादौ—मातुलुङ्गस्य मूलम्। मधुकं सयष्टिकमिति पदद्वयोपादानात् जलस्थलभेदेन यष्टिमधुद्वयमिह ग्राह्यमिति ज्ञेयम् ॥ ३८ ॥

## कुङ्कुमाद्यं तैलम्

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम् ॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केशरम्।
द्विपञ्चमूलसहितैः कषायैः पलिकैः पृथक् ॥
जलाढकं विपक्तव्यं पादशेषमथोद्धरेत्।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिका ॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्।
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम्।
नीलिकापिडकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा ॥ ३९ ॥

कुङ्कुमामित्यादौ—न्यग्रोधस्य वटस्य पादाः शुङ्गा, मन्चः पाकुडी। कषायैरिति कषायमाधनै कुङ्कुमरक्तचन्दनादिभि, पञ्चवल्कलैरित्यन्ये। पत्तङ्ग रक्तचन्दनम्। द्विपञ्चमूलसहितैरित्यत्र पद्मकिञ्जल्कसहितैरिति केचित् पठन्ति, वाग्भटेऽपि दशमूल विना योगोऽय दृश्यते, एवं चन्द्राटेऽपि, तेनापि योगान्तरत्वम्॥ ३६॥

## कुङ्कुमाद्यं तैलम्

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्॥
सम्यक् पक्वं परं ह्येतन्मुखकान्तिप्रसादनम्।
नीलिकापिडकाव्यङ्गानभ्यङ्गादेव नाशयेत्॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्॥४०॥

द्वितीयकुङ्कुमाद्य तैलमाह कुङ्कुमामित्यादि—स्पष्टम्॥४०॥

## कुङ्कुमाद्यं तैलम्

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम्।
कालीयकं पद्मकञ्च मातुलुङ्गं सकेशरम्॥
कुसुम्भं मधुयष्टीकं फलिनी मदयन्तिका।
निशे द्वे रोचनापद्ममुत्पलञ्च मन शिला॥
काकोल्यादिसमायुक्तैरेतैरक्षसमैर्भिषक्।
लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत्॥
कुङ्कुमाद्यमिदं तैलञ्चाभ्यङ्गात् काञ्चनोपमम्।
करोति वदनं सम्यक् पुष्टं लावण्यकान्तिदम्॥
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम्॥४१॥

तृतीयकुङ्कुमाद्यतैले किंशुकः पलाशस्तस्य पुष्पं ग्राह्यम्। मातुलुङ्ग सकेशरमिति मातुलुङ्गस्य मूल केशरञ्चेत्याहुः। मदयन्ती मल्लिकाभेदः। काकोल्यादिः सौश्रुतगण, अष्टवर्ग इत्यन्ये। लाक्षारसपयसी मिलित्वा तैलाच्चतुर्गुणे॥ ४१॥

## वर्णकं घृतम्

मधुकं चन्दनं कङ्गु सर्षपं पद्मकं तथा ।
कालेयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः ॥
विपचेद्धि घृतं वैद्यस्तत्पक्वं वस्त्रगालितम् ।
पादांशं कुङ्कुमं सिक्थं क्षिप्त्वा मन्दानले पचेत् ॥
तत् सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत्ततः ।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥
अनेनाभ्यासलिप्तं हि वलीपलितनाशनम् ।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम् ॥४२॥

मधुकमित्यादौ—कङ्गुः कायोनीनाङ्क तृणधान्यम् । वस्त्रगालितमिति किञ्चि-ज्जलमन्दने नत्येव वस्त्रेण गालनीयम्, ततो मिलित्वा घृतात् पादांश कुङ्कुम सिक्थ-कञ्च कल्क प्रक्षिप्य मृदग्निना पुनरप्यवधानेन जलक्षयपर्य्यन्त पक्तव्य यथा सिक्थक-दाहो न स्यात्, सिद्धे च तद्घृतपात्र शीतलजले निक्षिप्य शीतीभूत माकर्षयेत्, तथा सति सिक्थकस्य दाहो न स्यादिति भाव ॥ ४२ ॥

अरूंपिकायां रुधिरेऽवसिक्ते शिराव्यधेनाथ जलौकसा वा ।
निम्बाम्बुसिक्ते शिरसि प्रलेपो देयोऽश्ववर्चोरससैन्धवाभ्याम् ॥४३॥

अरूंपिकायामित्यादौ—निम्बाम्बु अर्द्धभूनो निम्बकाथ. ॥४३॥

पुराणमपि पिण्याकं पुरीषं कुक्कुटस्य वा ।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरूंपिकाम् ॥
अरूंपिघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम् ॥४४॥

पुराणमित्यादि—योगद्वयम्, अतएव वाशब्द । पिण्याकस्तिलखली, एक-योगताप्यायुर्वेदमवादात् । भृष्टकुष्ठचूर्णमिति कपाले भृष्ट्वा दग्ध्वा चूर्णं कर्त्तव्य-मित्यर्थ· ॥ ४४ ॥

## हरिद्राद्यं तैलम्

हरिद्राद्वयभूनिम्ब-त्रिफलारिष्टचन्दनैः ।

एतत् तैलमरुंषीणां सिद्धमभ्यञ्जने हितम् ॥४५॥

हरिद्रेत्यादि—स्पष्टम् ॥४५॥

दारुणे तु शिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम् ।
अवपीडान् शिरोवस्तीनभ्यङ्गांश्चावचारयेत् ॥
कोद्रवाणां तृणक्षारपानीयं परिधावने ।
कार्य्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ॥
पियालवीजमधुक-कुष्ठमिश्रैः ससैन्धवैः ।
काञ्जिकस्थाः त्रिसप्ताहं माषा दारुणकापहाः ॥४६॥

दारुण इति उक्‌थिकायाम् । अवपीडो नस्यभेद. । शिरोवस्तिश्च द्विहरिद्रा-तैलेन देय इत्याहु । पियालवीजमधुककुष्ठानि मिश्राणि चेति विग्रह कृत्वा समाधेयम्, मिश्रैरित्यत्र स्थाने माषैरित्यपि पाठान्तरम् ॥ ४६ ॥

*सह नीलोत्पलकेशरयष्टीमधुकतिलैः सदृशमामलकम् ।*
चिरजातमपि च शीर्षे दारुणरोगं शमं नयति ॥ ४७ ॥

सहेत्यादौ—नीलोत्पलस्य केशर किञ्जल्क । सदृशमिति तुल्यम् ॥ ४७ ॥

## त्रिफलाद्यं तैलम्

त्रिफलाया रजो मांसी मार्कवोत्पलशारिवै ।
ससैन्धवै पचेत्तैलमभ्यङ्गाद्‌दुक्‌थिकां जयेत् ॥ ४८ ॥

त्रिफलाया इत्यादौ—मार्कवो भृङ्गराज, उत्पलशारिवा अनन्तमूलम् छान्द-सत्वाद् ह्रस्व, अन्ये तु उत्पल नीलोत्पल शारिवा च इत्याहु ॥ ४८ ॥

## चित्रकाद्यं तैलम्

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम् ॥ ४९ ॥

चित्रकमित्यादौ—कोषातकी घोषक ॥ ४९ ॥

## गुञ्जाद्यं तैलम्

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।

कराङ्कदारणहृत् कुष्ठ-कपालव्याधिनाशनम् ॥ ५० ॥

भृङ्गराजरसेनेति चतुर्गुणेनेत्यर्थः ॥ ५० ॥

## भृङ्गराजतैलम्

भृङ्गरजत्रिफलोत्पलशारि लौहपुरीषसमन्वितकारि ।
तैलमिदं पच दारुणहारि कुञ्चितकेशघनस्थिरकारि ॥५१॥

भृङ्गरज इत्यादौ—भृङ्गरजो भृङ्गराजस्तस्य रसश्चतुर्गुण. पाकार्थत्वात् । भृङ्ग-रज शब्दोऽप्यस्ति, यथा "ये मापमेक स्वरस पिवन्ति दिने दिने भृङ्गरज समुत्थम्" इति । त्रिफलादीना कल्क । उत्पल नीलोत्पलम्, शारि शारिवा अनन्तमूलम्, समन्वितकार सहकार समन्वितशब्दस्य सहार्थत्वात्, अस्य च फलमध्य ग्राह्य केश्य-त्वात् कृष्णीकरणत्वाच्च । भृङ्गराजादिसमन्वितकारान्त द्रव्यमस्मिन्नस्तीति इत्, तैल विशेषणमेतत्। अन्ये तु भृङ्गराजादि सर्वं द्रव्य कल्क, जलेन पाक , उत्पलशारिवा अनन्तमूलम्, भृङ्गरज समन्वय कर्त्तु शीलमस्येति तैलविशेषणमिति । व्यवहारस्तु पूर्वव्याख्ययैव । कुञ्चितकेशघनास्थिरकारीति केशस्य कुञ्चितत्वघनत्वकारीत्यर्थ । कुञ्चितशब्द. पूर्वनिपातश्छान्दसत्वात् ॥ ५१ ॥

## प्रपौण्डरीकाद्यं तैलम्

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवं तैर्द्धिरामलकीरसः ।
साध्यः सप्रतिमर्षः स्यात् सर्वशीर्षगदापहः ॥ ५२ ॥

प्रपौण्डरीकेत्यादौ—तैलापेक्षया द्विगुणेनामलकरसेनैव पाक । प्रतिमर्षो नस्यभेद । सप्रतिमर्ष इति प्रतिमर्षविधिना उपयुक्त इत्यर्थ ॥ ५२ ॥

## मालत्याद्यं तैलम्

मालतीकरवीराग्नि-नक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ।
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥ ५३ ॥

मालतीत्यादि—मालती जाती, अग्निश्चित्रक । अत्र गोमूत्रेण पाक इति श्रीकण्ठ ॥ ५३ ॥

धात्र्याम्रमज्जलेपात् स्यात् स्थिरता स्निग्धकेशता।
इन्द्रलुप्ते शिरां विद्ध्वा शिलाकाशीशतुत्थकैः॥
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम्।
कुटन्नटं शिखीजातीकरञ्जकरवीरजैः॥ ५४॥

धात्रीत्यादौ—मज्जशब्देनाम्रेणैव सम्बन्ध, आम्रमज्जा तु बालाम्रास्थि। इन्द्रलुप्त इत्यादौ—शिरामिति इन्द्रलुप्तसन्निहिता शिराम् तैलञ्चाभ्यञ्जने हितमिति। कुटन्नटादिकरवीरान्तै कल्कै. सिद्ध तैलमित्यर्थ। कुटन्नटमिति कुटन्नट कैवर्त्तमुस्तकम्। शिखी चित्रक। अन्ये तु कुटन्नटमिति च्छेद, विच्छेदपाठात् कुटन्नट विनापि चित्रकादिद्रव्यचतुष्टयेन तैलसाधन सूचयन्ति, व्याख्यानयन्ति च—शिखीति दीर्घपाठश्छान्दसत्वात् समर्थनीय, अन्ये तु कुटन्नटादिभिरपि लेप एव, तैलन्तु पूर्वोक्तमालतीकरवीरादिसिद्धमेव बोध्यमित्याहु॥ ५४॥

अवगाढपदञ्चैव प्रच्छयित्वा पुनः पुनः।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समन्ततः॥ ५५॥

अवगाढेत्यादि—अवगाढपदमिति गम्भीरपद यथा स्यात् तथा सूचीनख-रञ्जन्यादिभि प्रच्छयित्वा रक्तगुञ्जाफलैः पुनः पुनर्लिम्पेत्॥ ५५॥

हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि॥ ५६॥

हस्तिदन्तेत्यादौ—मुख्यमित्यकृत्रिमम्,—तेन दार्वीक्वाथोद्भवरसाञ्जननिषेध.। अत्र जलेन पेषण बोध्य द्रव्यान्तरस्यानुक्ते.। अतएव वक्ष्यमाणेन छागीक्षीररसा-ञ्जनेत्यादिना अस्य न पौनरुक्त्यम्॥ ५६॥

भल्लातकबृहतीफलगुञ्जामूलफलेभ्य एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति॥ ५७॥

भल्लातकेत्यादौ—भल्लातकबृहतीफलयो रसः। उक्त हि वाग्भटे 'सक्षौद्रक्षुद्र-वार्त्ताकुस्वरसेन रसेन वा। धुस्तूरस्य च पत्राणा भल्लातकरसेन वा' इति॥ ५७॥

बृहतीफलरसपिष्टं गुञ्जाफलमूलञ्चेन्द्रलुप्तस्य।
कनकनिघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा॥
घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्डनम्।

चूर्णितैर्मरिचैः कार्य्यमिन्द्रलुप्तविनाशनम् ॥ ५८ ॥
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसीलिप्ताः।
जायन्ते सप्तरात्रात् खल्ल्यामपि कुञ्चिताश्चिकुराः ॥ ५९ ॥

बृहतीत्यादौ—पक्वबृहतीफलरसस्तेन पिष्टं गुञ्जाया मूलं फलं वा। कनकनिघृष्टस्येति कनकं सुवर्णं धुस्तूरस्य मूलं वा। प्रच्छितस्येति नखरञ्जन्यादिना विलिखितस्य गुण्ठनमित्यवचूर्णनम् ॥ ५८—५९ ॥

मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन।
अचिराद्भवन्ति केशा घनदृढमूलायतानृजवः ॥ ६० ॥

मधुकेत्यादौ—इन्दीवरं नीलोत्पलम्, भृङ्गो भृङ्गराजः। अनृजवः कुटिलाः ॥ ६० ॥

## स्नुह्याद्यं तैलम्

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम्।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥
सिद्धार्थं तीक्ष्णतैलञ्च गर्भे दत्त्वा विपाचितम्।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥
कूर्मपृष्ठसमानापि रूक्षा या रोमतस्करी।
दिग्धा सानेन जायेत ऋक्षशारीव लोमशी ॥ ६१ ॥

स्नुहीत्यादौ—मार्कवो भृङ्गराजः, लाङ्गलीविषं विषलाङ्गलियामूलाख्यं विषं किंवा लाङ्गली च विषञ्चेति द्रव्यद्वयम्। रक्तिका गुञ्जिका, तस्या मूलं, फलमित्यन्ये। इन्द्रवारुणी गोरक्षकर्कटी, सिद्धार्थं श्वेतसर्षपं, तीक्ष्णतैलं सार्षपतैलं ज्योतिष्मतीमूलं, फलमित्यन्ये। सिद्धार्थतीक्ष्णतैलमिति समस्तपाठपक्षे तीक्ष्णमिति तैलविशेषणम्। अभर्जितस्य सर्षपस्य तैलं ज्ञेयम्। अजामूत्रगोमूत्रे मिलित्वा चतुर्गुणे, शेषं कल्कः। दिग्धा इति अक्ता। ऋक्षस्य भल्लूकस्य शारी पोथिका इव ॥ ६१ ॥

## आदित्यपाकगुडूचीतैलम्

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम्।

गुडूचीस्वरसे तैलञ्चाभ्यङ्गात् केशरोपणम् ॥ ६२ ॥

वटावरोहेत्यादौ—केशिनी भूतकेशी मासी वा एतयोश्चूर्णं तलात् पादिक कल्कत्वात्, गडूचीरसस्तु तैलसमः आदित्यपाकत्वात् ॥ ६२ ॥

## चन्दनाद्यं तैलम्

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम्।
कान्ता वटावरोहश्च गुडूची विसमेव च ॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च।
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥
शिरस्युत्पतिता केशा जायन्ते घनकुञ्चिता।
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः ॥
नस्येनाकालपलितं निहन्यात्तैलमुत्तमम् ॥ ६३ ॥

चन्दनामित्यादौ—कान्ता प्रियगु,, विस मृणाल, केशी भूतकेशी, मार्कवरसश्चतुर्गुणः ॥ ६३ ॥

तैलं सयष्टिमधुकैः क्षीरे धात्रीफलै श्रृतम्।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ ६४ ॥

तैलमित्यादौ—क्षीरमेव चतुर्गुण द्रवान्तराभावात् ॥ ६४ ॥

त्रिफला नीलिनीपत्रं लौहभृङ्गरजः समम्।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ ६५ ॥

त्रिफलेत्यादौ—नीलिनी लतावेणीति प्रसिद्धा, तस्या पत्र; लौहभृङ्गरजसोश्चूर्णमित्यर्थ। अविमूत्रेण सयुक्तमिति भावितम्। शिरोलेपोऽय प्रहरौ द्वौ त्रीन् वा धार्य्य, एवमन्यत्रापि शिरोलेपनधारणम् ॥ ६५ ॥

त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत्।
ईषत्पक्के नारिकेले भृङ्गराजरसान्विते ॥
मासमेकन्तु निक्षिप्य सम्यग्गर्भात् समुद्धरेत्।
ततः शिरो मुण्डयित्वा लेपं दद्याद्भिषग्वरः ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत् सप्तमे दिने।

क्षालयेत् त्रिफलाक्काथैः क्षीरमांसरसाशिनः।
कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥ ६६ ॥

त्रिफलेत्यादौ—गर्भादिति नारिकेलोदरात्। गर्त्तादिति च पाठे म एवार्थ ॥ ६६ ॥

उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत्।
केशानां कृष्णकरणं स्नेहनञ्च विधीयते ॥ ६७ ॥

उत्पलमित्यादौ—उत्पल नीलोत्पल, माम भूमौ निधापयेदिति लौहपात्रे कृत्वा भूम्यध स्थापयेदित्यर्थ ॥ ६७ ॥

भृङ्गपुष्प जवापुष्पं मेषीदुग्धप्रपेषितम्।
तेनैवालोडितं लौहपात्रस्थं भूम्यध.कृतम् ॥
सप्ताहादुद्धृतं पश्चाद् भृङ्गराजरसेन तु।
आलोड्याभ्यज्य च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम्।
एवं सिन्दूरबालाम्रशङ्खभृङ्गरसैः क्रिया ॥ ६८ ॥

अभ्यज्येति भृङ्गराजरसालोडितेन भृङ्गराजपुष्पादिना म्रक्षयित्वेत्यर्थ। वेष्टयित्वा इति कदलीपत्रेणेति शेष। शिरःप्रक्षालनञ्च त्रिफलाक्काथेन वदन्ति। बालाम्र बालाम्रबीज, शङ्ख शङ्खनाभि। एवमित्यनेन सिन्दूरादित्रयेऽपि पूर्ववन्मेषदुग्धपेषणादिकमतिदिशन्ति। भृगरसैरिति भृगराजरसोऽपि आलोडनार्थम्, एव तच्च यद्यपि एवमित्यतिदेशेनैव लभ्यते तथापि स्पष्टार्थमुक्तम् ॥ ६८ ॥

नरदुग्धशङ्खचूर्णं काञ्जिकसिक्तं हि सीसकं घृष्ट्वा।
लेपात्कचानर्कदलावनद्धान् शुभ्रान् करोति नीलतरान् ॥६९॥

नरेत्यादि—अत्र किञ्चित् पारद गृहीत्वा आवर्त्तमाने सीसके प्रक्षिपेत्, ततस्तेन सह एकीभूत सीसक घृष्ट्वा शिरसि लेपो देय इत्युपदिशन्ति वृद्धा अर्कदलावनद्धमित्यर्कपत्रेण पिधाय बन्धनमित्यर्थ ॥ ६९ ॥

लोहमलामलकल्कैः सजवाकुसुमैर्नर सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥ ७० ॥

लोहमलेत्यादौ—आमलक धात्रीफल, जवाकुसुम ओड्रपुष्पम् ॥ ७० ॥

निम्बस्य बीजानि हि भावितानि भृङ्गस्य तोयेन तथाशनस्य ।
तैलन्तु तेषां विनिहन्ति नस्याद् दुग्धान्नभोक्तु' पलितं समूलम् ॥

निम्बस्येत्यादि—अशन पीतशाल । भावना च प्रत्येक सप्ताहम् ॥ ७१ ॥

निम्बस्य तैलं प्रकृतिस्थमेव नस्ते निषिक्तं विधिना यथावत् ।
मासेन गोक्षीरभुजो नरस्य जराग्रभूतं पलितं निहन्ति ॥ ७२ ॥

निम्बतैल निम्बबीजस्य तैल प्रकृतिस्थमेवेति भृङ्गराजरसादिभावनारहितम् । विधिनेति नस्योक्तविधिना । जराग्रभूतमिति जरागमनसूचकम् ॥ ७२ ॥

क्षीरात् समार्कवरसाद् द्विप्रस्थे मधुकात् पले ।
तैलस्य कुडवं पक्कं तन्नस्यं पलितापहम् ॥ ७३ ॥

क्षीरादित्यादि—क्षीरभृङ्गराजरसयोर्मिलित्वा प्रस्थद्वयम्, निर्देशस्य मानप्रधानत्वात् । मधुकात् पले इति सप्तम्येकवचनम्, न तु प्रथमाया द्विवचन, जतूकर्णमवादात् ॥ ७३ ॥

## महानीलतैलम्

आदित्यवल्ल्या मूलानि कृष्णशैरीयकस्य च ।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च ॥
मार्कवं काकमाची च मधुकं देवदारु च ।
पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम् ॥
प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थिकर्दमः कृष्णो मृणाली रक्तचन्दनम् ॥
नीली भल्लातकास्थीनि काशीशं मदयन्तिका ।
सोमराज्यशनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥
पुष्पाण्यर्जुनकाश्मर्य्योश्चाम्रजम्बूफलानि च ।
पृथक् पञ्चपलैर्भागै सुपिष्टैराढकं पचेत् ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥
लौहपात्रे तत पूतं संशुद्धमुपयोजयेत् ।

पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ ७४ ।

महानीलतैले—आदित्यवल्ली सूर्य्यावर्त्त , आदित्यपर्णीति पाठे स एवार्थ । कृष्णशैरीयको नीलझिण्टी, सुरस पर्णास , अञ्जन रसाञ्जन, कृष्णकर्दमो नलिनी-मूलस्थितकर्दम , सुश्रुतेऽपि ' पङ्केन नलिनीभवेन '' इत्युक्तम् । नीली नीलेनि ख्याता लता, असन पीतशाल , शस्त्र काललौहचूर्णं, पिण्डीतो मदन , कृष्णा-विति कृष्णपुष्पी । पुष्पाण्यर्जुनकाश्मर्य्योर्णीति अर्जुनकाश्मरीभवानि पुष्पाणि, अर्जुनकाश्मर्य्योरित्यपि पाठ । लौहपात्रेऽग्निना पचेदादित्यपाक वा कुर्य्यादिति योज्यम् । आदित्यपाकस्तु आदित्यरश्मिसम्बन्धादेव द्रवशोषविधि । अत्र भागैरिति बहुवचनादेव पृथग्भागे लब्धे पृथगिति पद न्यायसिद्धस्यापि त्रिफलाया पृथग्भागस्य द्योतनार्थं, कल्कभूयस्त्वञ्च वचनादेव गवत्र विकल्पनीयम् ॥ ७४ ॥

## भृङ्गराजघृतम्

भृङ्गराजरसे पक्वं शिखिपित्तेन कल्कितम् ।
घृतं नस्येन पलितं हन्यात् सप्ताहयोगत ॥ ७५ ॥

भृङ्गराजेत्यादौ—शिखी मयूर । घृतन्तु कुडवमानमत्र नस्ययोगत्वात् ॥७५॥

काञ्जीपिष्टशेलुफलमज्जि सच्छिद्रलौहगे ।
यदर्कतापात् पतति तैलं तन्नस्यमक्षणात् ॥
केशा नीलालिसङ्काशाः सद्यः स्निग्धा भवन्ति च ।
नयनश्रवणग्रीवादन्तरोगांश्च हन्त्यदः ॥ ७६ ॥

काञ्जीत्यादौ—शेलुर्बहुवार । सच्छिद्रलौहग इति बहुच्छिद्रलौहपात्रस्थे । नीलालिसङ्काशा इति नीलपद पिङ्गलभ्रमरनिरासार्थम् ॥ ७६ ॥

काशीशरोचनातुल्यं हरितालं रसाञ्जनै. ।
अम्लपिष्टैः प्रलेपोऽयं वृषकच्छूवह्निपूतयोः ॥ ७७ ॥

काशीशमित्यादौ—एतैरिति शेष । काशीशरोचनातुल्यहरितालरसाञ्जनै-रित्यपि पाठ ॥ ७७ । ७८ ॥

### पटोलाद्यं घृतम्

पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ।
पीतं घृतं निहन्त्याशु कृच्छ्रामप्यहिपूतनाम् ॥ ७८ ॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम् ।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम् ॥ ७९ ॥
नागकेशरचूर्णं वा शतधौतेन सर्पिषा ।
पिष्ट्वा लेपो विधातव्यो दाहे हर्षे च पादयोः ॥ ८० ॥

इति क्षुद्ररोगचिकित्सा ।

वराहदशनाह्वयमिति वराहदन्तमिति प्रसिद्धम् ॥ ७९ । ८० ॥

इति क्षुद्ररोगचिकित्साविवृतिः ।

# अथ मुखरोगचिकित्सा ।

## ओष्ठरोगचिकित्सा

ओष्ठप्रकोपे वातोत्थे शाल्वणेनोपनाहनम् ।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम् ॥ १ ॥

क्षुद्ररोगास्तु चतुश्चत्वारिंशत्, मुखरोगास्तु पञ्चषष्टिः, अतो रोगगणत्वसामान्यात् क्षुद्ररोगचिकित्सितप्रसङ्गान्मुखरोगचिकित्सितमुच्यते । ओष्ठेत्यादि—सुश्रुतस्य । मस्तिष्के चैवेति—मस्तिष्कः शिरोवस्तिः स्नेहाक्तपिचुधारणं वा । वातहरैरिति भद्रदार्वादिभिः ॥ १ ॥

स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते ।
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च ।
यष्टीमधुकचूर्णञ्च विदध्यात् प्रतिसारणम् ॥ २ ॥

रसायनमिहेष्यत इति रसायनं च्यवनप्राशादि । श्रीवेष्टकमित्यादि—सुश्रुतस्य । श्रीवेष्टकः नवनीतखोटिः । प्रतिसारणं घर्षणम् । वाग्भटे तु श्रीवेष्टकस्थाने मधूच्छिष्टं पठ्यते ॥ २ ॥

वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च ।

शीतान् प्रलेपान् परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्य्यात्॥
पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत्।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषत॥
शिरोविरेचनं धूम स्वेदः कवडधारणम्।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके॥
त्रिकटुः सर्जिकाक्षार· क्षारश्च यावशूकजः।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम्॥ ३॥

वेधमित्यादि—शिरा च ओष्ठसमीपगता बोध्या। तिक्तस्येत्यत्र सर्पिष इति शेष। शिर इत्यादि—सुश्रुतस्य। धूमोऽत्र वैरेचनिक कफयोग्यत्वात्, एवं कवलधारणमिति कफहरद्रव्यकृत, वाग्भटेऽप्युक्त "धूमस्वेदनगण्डूषा प्रयोज्याश्च कफच्छिद" इति॥ ३॥

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम्॥
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम्॥ ४॥

मेदोज इत्यादि—सुश्रुतस्य। शोधित इति मेदोहरणेन विशुद्धे। ज्वलन इति अग्निकर्म॥ ४॥

सर्जरसकनकगैरिकधन्याकतैलघृतासिन्धुसंयुक्तम्।
सिद्धं सिक्थकमधरे स्फुटितोच्चाटिते व्रणं हरति॥ ५॥

सर्जेत्यादौ—कनकगैरिकम् उत्कृष्टगैरिकमित्यर्थ। एतच्च सर्जरसादिचूर्णं सिक्थकान्त खोलके किञ्चिदग्नावुष्णीकृत्य प्रलेपयोग्य पक्त्वा अवतार्य्य अधरे धारणीयम्॥ ५॥

## दन्तरोगचिकित्सा

शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्।
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम्॥ ६॥

दन्तरोगचिकित्सामाह शीताद इत्यादि—सुश्रुतस्य। नागरादीत्रिफलान्त एको योग॥ ६॥

कुष्ठं धात्री लोध्रमब्दं समङ्गा पाठा तिक्ता तेजनी पीतिका च ।
चूर्णं शस्तं घर्षणं तद् द्विजानां रक्तस्रावं हन्ति कण्डूं रुजाञ्च ॥७॥

कुष्ठमित्यादि—तेजनी चवी । पीतिका हरिद्रा ॥ ७ ॥

चलदन्तास्थिरकरं कुर्य्याद्बकुलचर्वणम् ।
आर्त्तगलदलक्वाथगण्डूषो दन्तचालनुत् ॥
दन्तचाले हितं श्रेष्ठं तिलोग्राचर्वणं सदा ।
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम् ॥
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम् ।
दन्तानां तोदहर्षे च वातघ्नाः कवडा हिताः ॥ ८ ॥

चलेत्यादौ—बकुलस्य फल दन्तस्थिरकरत्वात् । आर्त्तगलः छागडा इति ख्यात , उग्रा वचा, दन्तपुप्पुटक इत्यादि—सुश्रुतस्य । तरुण इत्युत्पन्नमात्रे रक्तमोक्षणञ्च प्रच्छनेन । क्षारो यवक्षार । वातघ्ना कवडा इति उष्णतैलघृतसस्नेहदशमूलक्वाथादय ॥ ८ ॥

दन्तचाले तु गण्डूषो बकुलत्वक्कृतो हितः ।
माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे ।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम् ॥ ९ ॥

माक्षिकमित्यादौ—पिप्पलीघृतापेक्षया मधु तु बहुमात्र देयमिति वदन्ति; मधुन कर्षमेकम्, गव्यघृत माषकाष्टकम्, पिप्पलीचूर्ण माषकचतुष्टयम्, आलोड्य मुखे धार्य्यम् ॥ ९ ॥

विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत् ।
लोध्रपत्तङ्गमधुकलाक्षाचूर्णैर्मधूत्तरैः ।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ १० ॥

विस्रावित इत्यादि—जलौकाप्रच्छनादिना रक्ते हृते । व्रणमिति जलौकाप्रच्छनादिज क्षतम् । पत्तङ्ग रक्तचन्दनम् । क्षीरिण इति वटोडुम्बरादय, एषा क्वाथ क्षौद्रघृतशर्करा प्रक्षेपणीया ॥ १० ॥

शैशिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः ।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥ ११ ॥

शैशिर इति दन्तरोगविशेषे, एव परिदरेऽपि ॥ ११ ॥

**क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः।**
**संशोध्योभयतः कायं शिरश्चोपकुशे ततः ॥ १२ ॥**

क्रियामित्यादि—सुश्रुतस्य। कायमुभयत संशोध्येति काय शरीरम्, उभयत इति वमनविरेचनाभ्या शिरश्च विशोध्येत्यन्वय। शिर शोधनञ्च शिरोविरेचनेनैव। संशोध्य उभयत काय शिरश्चेति ग्रन्थ परिदरे उपकुशे च योजयन्ति, युक्तञ्चैतत्, यत परिदरो रक्तकफज अतएव कफप्रत्यनीक वमन पित्तप्रत्यनीकञ्च विरेचन हितमेव, शिरोविरेचने युक्त एव हि। कायमित्यत्र कार्य्यमिति पाठे शीतादोक्ता क्रियां परिदरे कुर्य्यात्। उपकुशे तु वक्ष्यमाणरक्तस्रावादि कार्य्यमिति ज्ञेयम् ॥ १२ ॥

**काकोडुम्बरिकागोजीपत्रैर्विस्रावयेद्भिषक्।**
**क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिशोधयेत् ॥ १३ ॥**

गोजी शाखोटक। लवणैरिति पञ्चभि ॥ १३ ॥

**पिप्पल्य सर्षपा श्वेता नागरं नैचुलं फलम्।**
**सुखोदकेन संगृह्य कवड तस्य योजयेत् ॥**
**शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।**
**ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥ १४ ॥**

पिप्पल्य इत्यादौ—निचुलफल हिज्जलफलम्। एते च व्यस्ता समस्ताश्च कवले योज्या। शोधयेदिति दन्तमूलानि शोधयेत्। अभिघातजेऽपि दन्तवैदर्भे शस्त्रेण दन्तमूलमासच्छेदनम् अभिघातदुष्टरक्तकृतपाकेन शीर्णमासस्यापगमनार्थम्। क्षारप्रयोगोऽपि हाशोधितशेषपूतिमांसदूरीकरणार्थं तदनन्तरञ्च शीतक्रिया क्षारकुपितपित्तरक्तनिर्वापणार्थं ताश्च नस्यगण्डूषादय। उक्त हि वाग्भटे "क्षार दद्यात्ततो नस्य गण्डूषादि च शीतलम्" इति ॥ १४ ॥

**उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।**
**क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता ॥ १५ ॥**

उद्धृत्येत्यादि—सुश्रुतस्य। अग्निदाहोऽत्र रक्तादिस्रुतिनिषेधार्थम्। क्रिमिदन्तो द्विविध अचलश्चलश्च। तत्र यश्चल स उद्धार्य्यस्तद्विधिरेवात्रातिदिश्यते। उद्धार्य्यत्वेन समानत्वात् न त्वचलस्य, तस्यानुद्धार्य्यत्वात् स एव क्रिमिदन्ते उद्धरणदाहौ

युक्तौ । अधिदन्ते पुनरचलेऽपि तद्विधानार्थमिह क्रिमिदन्तकविध्यतिदेशलब्धयो-रप्युद्धरणदाहयोरभिधानम् ॥ १५ ॥

छित्त्वाधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
पाठावचातेजवतीसर्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलनिम्बत्रिफलाकषायाश्चात्र धावने ॥
शिरोविरेकश्च हितो धूमो वैरेचनश्च य ।
नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् ॥
यं दन्तमधिजायेत नाडी तं दन्तमुद्धरेत् ।
छित्त्वाधिमांसं शस्त्रेण यदि नोपरिजो भवेत् ॥
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ।
गतिर्हिनस्ति हन्वस्थिदशने समुपेक्षिते ।
तस्मात् समूलं दशनमुद्धरेद् भग्नमस्थि च ॥ १६ ॥

छित्त्वेत्यादि—सुश्रुतस्य । तेजवती चवी । कवडग्रहोऽयम् । क्षौद्रद्वितीया पिप्पल्य इति क्षौद्रालोडिनपिप्पलीकवल । वैरेचनिकधूमसाहचर्य्यात् शिरोविरेकेऽपि तीक्ष्णोऽत्र वोध्य । यस्य दन्तस्य समीपे नाडी स्यात् त दन्त चलमचल वा शस्त्रेण दन्तावरक-मास छित्त्वा उद्धरेत् । यदि नोपरिजो भवेदित्युद्धरणस्यापवाद । अधोगतदन्तानुद्धरणे दोषानाह गतिरित्यादि—गतिर्नाडी हन्वस्थिकपोलसमीपस्थि दारयति । दशने समुपेक्षिते सत्यनुद्धृते सतीत्यर्थः । किंवा गतिर्हिनस्ति हन्वस्थिदशने समुपेक्षिते इति पाठान्तरे दन्ते गतिरुपेक्षितेत्यर्थ । भग्नमस्थि चेति असम्यगुद्धृतदन्तस्य भग्न-शेषमस्थि चेत्यर्थ । किंवा गतिविशोधितहन्वस्थि भग्नास्थीत्युच्यते ॥ १६ ॥

उद्धृते तूत्तरे दन्ते शोणितं सम्प्रसिच्यते ।
रक्ताभियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥
चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ।
कषायं जातीमदनकटुकास्वादुकण्टकैः ॥
लोध्रखदिरमञ्जिष्ठायष्ट्याह्वैश्चापि यत् कृतम् ।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥

कषायं परत कृत्वा पिष्ट्वा लोध्रादिकल्कितम्।
कण्टकी मदनो योज्यः स्वादुकण्टो विकङ्कतः ॥१७॥

उपरिजदन्तानुद्धरणे हेतुमाह उद्धृत इत्यादि—उत्तर इत्युपरिजाते सम्प्रसिच्यते अतिस्रवतीत्यर्थ । पूर्वोक्ता इति शोणितवर्णनीयोक्ता आक्षेपकादय । कषायमित्यादि—सुश्रुतस्य । जात्या पत्रम्, मदन मदनकण्टकम्, कटुका कटुरोहिणी, स्वादुकण्टक विकङ्कत । एतै कृत कषाय मुखधारणरूप क्वाथ दन्तगता गतिं हन्यात् तथा लोध्रादिमिश्र यष्ट्याह्वान्तै. कल्करूपैर्यैव् कृत तैल तदपि दन्तगतिं हन्यादित्यर्थ । अन्ये तु कषायमित्यत पर कृत्वेति शेष, तेन जात्यादिभि कषाय कृत्वा लोध्रादिकल्केन च कृत यत् तैलमिति व्याचक्षते । वृन्देनाप्यनुमतोऽयमर्थ व्यवहारोऽप्यनेनैव । धावन जातीमदनस्वादुकण्टकखदिरमित्यधिक श्लोकार्द्ध पठित्वा तदनन्तरमेव कषाय जातीमदन इत्यादिक पठति व्याचष्टे च । कषायमिति पद धावनमित्यनेन सम्बध्यते तेन जात्यादिद्रव्यचतुष्टयकषायेण धावन परेण तु जातीमदनकादिद्रव्याष्टकेन कल्केन तैल साधनीयमिति । अतएव तन्मतानुयायिवाग्भटेऽपि धावन जातीमदनखदिरस्वादुकण्टकैरित्युक्तत्वात् । अन्ये तु कषायशब्द समासे विभक्तिरहित पठन्ति तेषा मते कषायमामपूगफलम्, विस्राव्याध्यायोक्तशङ्खिन्यादिशोधनकषायद्रव्य वा, अस्मिन् पक्षे कषायद्रव्यादिभि यष्ट्याह्वान्तैस्तैलपाक कषायद्रव्यान्तर्गताया अपि जात्या पृथगभिधान भागद्वयग्रहणार्थमित्यपि वदन्ति ॥ १७ ॥

सुखोष्णाः स्नेहकवडाः सर्पिषस्त्रैवृतस्य वा।
निर्य्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्द्दना।
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥ १८ ॥

दन्तमूलगतचिकित्सितमभिधाय दन्तगतव्याधिचिकित्सामाह सुखोष्णा इत्यादि—सुश्रुतस्य। स्नेहा सर्पिस्तैलवसामज्जानस्तेषा व्यस्तानां समस्तानाञ्च,कवला गण्डूषा सर्पिषस्त्रैवृतस्य वेति त्रैवृतसर्पिरपतानकचिकित्साया सुश्रुतेनोक्तम् । अनिलघ्नानामिति भद्रदार्वादिदशमूलादीना निर्य्यूहः क्वाथ ॥ १८ ॥

अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥
दन्तहर्षक्रियाञ्चापि कुर्य्यान्निरवशेषतः।

कपालिकाः कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता ॥१६॥

अहिंसन्नित्यादि—सुश्रुतस्य । दन्तमूलहिंसया हि अभिवातजा दन्तनाडी दन्तघातश्च स्यात् । कृच्छ्रसाध्येत्यनेन कपालिकाया शीघ्रप्रतिकर्त्तव्यता सूचयति । एषा क्रियेति दन्तहर्षोक्ता कपालिकाया अपि वातजत्वात्, शर्करोक्तेत्यन्ये ॥ १६ ॥

जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम् ।
तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
हिंगु सोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत् ॥२०॥

जयेद् विस्रावणैरिति विस्रावण क्रिमिदूषितरक्तस्य । अवपीडो नस्यभेद । वातघ्नैरिति वातघ्नद्रव्यकृतैरपीति चक्र । अन्ये तु अवपीडो यद्यपि वातहरस्तथापि स्थानानुरोधात् क्रियते, विस्रावणादिकुपितरक्तशान्त्यर्थं वातहर कर्म कर्त्तव्यमिति दर्शयितु वातघ्नैरितिस्नेहगण्डूषादिविशेषण कृत वाग्भटेऽप्येवमेवोक्तम् । हिंग्वित्यादौ—सोष्णमिति ईषदुष्णम् ॥ २० ॥

सञ्चर्व्य दशनविधृतं दशनक्रिमिपातनं प्राहु ।
चलमुद्धृत्य वा स्थानं दहेत्तु शुषिरस्य वा ॥ २१ ॥

बृहतीत्यादि—भूमिकदम्बोऽलम्बुष, पञ्चांगुल एरण्ड । स्नुक् स्नुही, दुग्धी क्षीराइ । चलमित्यादि—सुश्रुतस्य । वाशब्दोऽवधारणे । स्थानमिति उद्धृतदन्तस्य समवस्थानम् । शुषिरस्येति क्रिमिकृतच्छिद्रस्य यावन्मात्र स्थान तावदेव दहेत् । स्थानशब्दोऽत्रापि योजनीय । भूरिदेशदुष्टौ समग्रस्यैव दन्तस्थानस्य दाह, एकस्थानदुष्टौ च शुषिरस्थानमात्रदाह इति ॥ २१ ॥

## विदार्य्यादितैलम्

ततो विदारीयष्ट्याह्व-शृङ्गाटककशेरुभि ।
तैलं दशगुणं क्षीरं सिद्धं नस्ये तु योजयेत् ॥ २२ ॥

तत इत्यादि—स्पष्टम् ॥ २२ ॥

हनुमोक्षे समुद्दिष्टा कार्य्या चार्द्दितवत् क्रिया ।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ २३ ॥
सप्तच्छदार्कदुग्धाभ्यां पूरणं क्रिमिदन्तनुत् ।

जीवनीयेन दुग्धेन क्रिमिरन्ध्रप्रपूरणम् ॥२४॥
पूरणं सूर्यक्षीरेण दन्तक्रिमिविनाशनम् ॥२५॥
द्रोणपुष्पद्रव फेनमधुतैलसमायुत. ।
क्रिमिदन्तविनाशाय कार्य्यं कर्णस्य पूरणम् ॥ २६ ॥
पटोलकटुकाव्योप-पाठासैन्धवभार्गिकै ।
चूर्णैर्मधुयुतो लेप कवडो मधुतैलकै ॥ २७ ॥
जिह्वारोगेपु कर्त्तव्यं विधानमिदमौपधम् ।
मुस्तामधुकनिर्गुण्डी-खदिरोशीरदारुभि. ।
समञ्जिष्ठाविडङ्गैश्च सिद्धं तैलं हरेत् क्रिमीन् ॥ २८ ॥

ममुद्दिष्टा इति पद अदितोक्तमसमस्तविध्यर्थमाहु । दन्तधावन दन्तकाष्ठम् ॥ २३–२८ ॥

## जिह्वारोग-चिकित्सा

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ।
कण्टकेष्वनिलोत्थेपु तत् कार्य्यं भिषजा खलु ॥ २९ ॥

जिह्वारोगचिकित्सामाह ओष्ठेत्यादि—सुश्रुतस्य । कण्टको जारीति ख्यातो रोग ॥ २९ ॥

पित्तजेपु निघृष्टेपु नि स्रुते दुष्टशोणिते ।
प्रतिसारणगण्डूषा नस्यञ्च मधुरं हितम् ॥
कण्टकेपु कफोत्थेपु लिखितेष्वसृज क्षये ।
पिप्पल्यादिर्मधुयुत. कार्य्यन्तु प्रतिसारणम् ॥ ३० ॥

निघृष्टेष्विति शाखोटकादिपत्रै । मधुरमिति मधुरेण काकोल्यादिगणेनैव कृत नस्यादित्रयमित्याहु । लिखितेष्विति मण्डलाग्रादिना । असृज क्षये अवस्थानविराम इत्यर्थ । पिप्पल्यादिरिति पिप्पल्यादिगण ॥ ३० ॥

गृह्णीयात् कवलान् वापि गौरसर्पपसैन्धवै ।
पटोलनिम्बवार्त्ताकु क्षारयूपैश्च भोजयेत् ॥ ३१ ॥

श्वेतसर्पपसैन्धवाभ्याञ्च कवल उष्णोदकेन कार्य्य । पटोलादिभिर्भोजयेत्, तथा क्षारयूपैश्च भोजयेदिति । क्षारप्रधानकुलत्थादियूप क्षारयूप । तदुक्त—'शुष्कमूलकुल-

त्थादियूषा क्षारोत्तरा हिता । कुलकविल्वपत्रञ्च वार्त्ताकुश्चाशने हितम्' इति ॥३१॥

**जिह्वाजाड्यं चिरजं माणकभस्मलवणतैलघर्षणं हन्ति ।**
**ईषत् स्नुक्क्षीराक्तं जम्बीराद्यम्लचर्वणं वापि ॥ ३२ ॥**

जिह्वाजाड्य जीन्तिसशकमिति लोके । ईषदस्नुक्क्षीरेण युक्त भावित यज्ज-म्बीरादिकेशरचर्वणम् । चर्वणमित्यत्र घर्षणमित्यपि पाठ ॥ ३२ ॥

**कर्कटाङ्घ्रिक्षीरपक्व-घृताभ्यङ्गेन नश्यति ।**
**दन्तशब्द. कर्कटाङ्घ्रिलेपाद्वा दन्तयोजितात् ॥ ३३ ॥**

कर्कटेत्यादौ—क्षीरसाधनपरिभाषया कर्कटपादेन साधित यत् क्षीर तत्पक्व-घृताभ्यक्तेनेत्यर्थ: । अभ्यङ्गश्च दशनप्रदेशे भ्रक्षणमित्याहुः । अन्ये तु कर्कटपादकल्क-क्षीराभ्या साधित यद्घृत तेनाभ्यङ्ग इत्याहु । दन्तशब्दो दन्तकडकडध्वनि ॥३३॥

**उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत् ।**
**शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥**
**व्योषक्षाराभयावह्निचूर्णमेतत् प्रघर्षणम् ।**
**उपजिह्वाप्रशान्त्यर्थमेतैस्तैलं विपाचयेत् ॥३४॥**

उपजिह्वामित्यादि—सुश्रुतस्य । संलिख्येति शाखोटकादिपत्रेण । क्षारे-णेति यवक्षारेण । उक्त हि वाग्भटे—उपजिह्वा परिस्राव्य यवक्षारेण घर्षयेत् । अन्ये तु प्रतिसारणीयक्षारेणेत्याहु । एभिस्तैलमिति व्योषादिभि कल्करूपैरित्यर्थ । जल चतुर्गुणम् ॥ ३४ ॥

**छिन्नां घर्षेद्गलशुण्डीं व्योषोग्राक्षौद्रसिन्धुजै ।**
**कुष्ठोषणववासिन्धु-कणापाठाप्लवैरपि ।**
**सक्षौद्रैर्भिषजा कार्य्यं गलशुण्ड्या विघर्षणम् ॥३५॥**

छिन्नामित्यादौ—उग्रा वचा । कुष्ठोषणेत्यादौ—ऊषण मरिच, प्लव. कैवर्त्त मुस्तक । सिन्धुकणेत्यत्र सिन्धुरुणेति केचित् पठन्ति । अरुणा अतिविषा । वाग्-भटेऽप्युक्त—'मारिचातिविषा पाठा वचाकुष्ठकुटन्नटम् । छिन्नाया सपटुक्षौद्रैर्घर्षणम्' इति, एव सुश्रुतेऽप्यायुर्वेदसारेऽपि ॥ ३५ ॥

**उपनासाव्यधो हन्ति गलशुण्डीमशेषत ।**
**गलशुण्डीहरं तद्वच्छेफालीमूलचर्वणम् ॥३६॥**

उपनासाव्यध इति—नासासमीपवर्ती शिराव्यध इत्यर्थ । नासाया शिरा-

श्चतुर्विंशति , तन्मध्ये नासिकाया अतिमन्निहिताश्चतस्र परिहार्य्या । उक्त हि सुश्रुते—" द्विद्वादशनामाया तामामौपनामिकाश्चतस्र परिहार्य्या." इति ॥३६॥

वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ।
नि क्वाथ्य पिचुमर्दश्च कवलञ्च प्रयोजयेत् ।
क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिता ॥३७॥

वचामित्यादि—सुश्रुतस्य । पिचुमर्दो निम्ब । क्षारसिद्धेष्विति शुष्कापामार्गादिक्षारोदकासिद्धेषु ॥ ३७ ॥

## कण्ठरोगचिकित्सा

तुण्डिकेर्य्यध्रुपे कूर्मे सङ्घाते तालुपुप्पुटे ।
एष एव विधि कार्य्यो विशेष शस्त्रकर्मणि ॥३८॥

तुण्डिकेर्य्यध्रुप इत्यादि—सुश्रुतस्य । कूर्म इति कच्छपरोगे । एष एवेति गलशुण्ड्योक्तविधिविशेष । शस्त्रकर्मणीति तुण्डीकेरीतालुपुप्पुटौ भेद्यौ, अपरे छेद्या इति शेष ॥ ३८ ॥

तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशन ॥३९॥

पित्तनाशन पित्तव्रणनाशनमित्यर्थ ॥ ३९ ॥

साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम् ।
छर्द्दनं धूमपानञ्च गण्डूषो नस्तकर्म च ॥
वातिकीन्तु हृते रक्ते लवणै प्रतिसारयेत् ।
सुखोष्णान् स्नेहकवडान् धारयेच्चाप्यभीक्ष्णश ॥
पत्तङ्गशर्कराक्षौद्रै पैत्तिकीं प्रतिसारयेत् ।
द्राक्षापरूपककाथो हितश्च कवलग्रहे ॥४०॥

साध्यानामित्यादि—सुश्रुतस्य । साध्यानामित्यादिना सन्निपातजाया असाध्याया व्यवच्छेद । लवणैरिति पञ्चभि । पत्तङ्ग रक्तचन्दनम् ॥ ४० ॥

आगारधूमकटुकै कफजां प्रतिसारयेत् ।
श्वेताविडङ्गदन्तीषु सिद्ध तैलं ससैन्धवम् ।
नस्तकर्मणि दातव्यं कवलञ्च कफोच्छ्रये ॥४१॥

आगारधूमेत्यादौ—श्वेता कटभी अपराजिता वा। श्वेतादिसैन्धवान्त कल्क, कवलश्चेति श्वेतादिसैन्धवान्तसिद्ध तैलमेव कवडमपीत्यर्थ ॥ ४१ ॥

**पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम्।**
**विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत्।**
**एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥४२॥**

पित्तवदिति पित्तरोहिणीवदित्यर्थ। विस्राव्येत्यत्र रक्तमिति शेष। एतच्च पूर्वेण सम्बध्यते। साधयेत् तुण्डिकेरिवदिति तुण्डिकेर्य्यामपि गलशुण्डिकाविध्यतिदेशात् साधयेत् गलशुण्डिवदिति वाच्ये तुण्डिकेरीविध्यतिदेशो नि शेषच्छेदनार्थं, गलशुण्डीवदत्र त्रिभागच्छेदो न कार्य्य इति बोधयति ॥ ४२ ॥

**उपजिह्विकवच्चापि साधयेदधिजिह्विकाम्।**
**उन्नाम्य जिह्वामाकृष्य बडिशेनाधिजिह्विकाम्।**
**छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्लवणादिभि ॥४३॥**

छेदयेदित्यादि—वाग्भटस्य। तीक्ष्णोष्णैर्लवणादिभिरित्यत्र उपाचरेदिति शेष। आदिशब्दात् कवडादिपरिग्रह ॥ ४३ ॥

**एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत्।**
**गिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥४४॥**

एकवृन्दमित्यादि—सुश्रुतस्य। विस्राव्येति जलौकादिभी रक्तं विस्राव्यमित्यर्थ। शोधनमिति गलगतदोषशोधन प्रतिसारणशिरोविरेककवलादिक, तथा कायशोधनञ्च वमनादिक, तस्यापि कायशोधनेन शिरोगतदोषस्यापि शोधकत्वात्। तञ्च शस्त्रेण साधयेदिति कठिनमल्पवेदनमपक्व गिलायु छेदयेत्। पक्वन्तु भेदयेत्। पूयनि सारणार्थं ततो द्विव्रणीयोक्तविधिना शोधनादिरत्रापि लभ्यते ॥४४॥

**अमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम्।**
**कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णनस्यादिकर्म च।**
**क्वाथपानन्तु दार्वीत्वङ्निम्बतार्क्ष्यकलिंगजम्।**
**हरीतकीकषायो वा पेयो माक्षिकसंयुत ॥४५॥**

अमर्मस्थमित्यादि—सुश्रुते। गलविद्रधिरय त्रिदोषविद्रधितुल्यत्वेनोक्तोऽपि चिकित्सितोपदेशात् साध्य इति ज्ञेय। अन्ये तु गलविद्रधेस्त्रिदोषविद्रधितुल्यत्वे

नोक्तत्वेऽपि चिकित्साविधान कृच्छ्रसाध्यत्वे ज्ञेयम्। अयञ्च सर्वं गल व्याप्य समुत्थितो य इत्यभिधानेन मर्मव्यापकोऽपि गलगतमर्मणि मूलास्पदविरहादमर्मज इत्युच्यते। किंवा अमर्मस्थमिति क्रियाविशेषणम्। अगम्भीरत्वेन मर्माभ्यन्तरास्पर्शाय यथा स्यात् तथा भेदयेदित्यर्थः। सामान्यकण्ठरोगचिकित्सामाह कण्ठरोगेष्वित्यादि—वाग्भटस्य। वाग्भटे 'क्काथ पाने तु दार्वीत्वङ्निम्बतार्क्ष्यकलिङ्गज' इति पाठ। दार्व्यास्त्वक्, तार्क्ष्य रसाञ्जनम्॥ ४५॥

कटुकातिविषादारुपाठामुस्तकलिंगका।
गोमूत्रकथिता पेया कण्ठरोगविनाशना॥४६॥

कटुकेत्यादि—स्पष्टम्॥४६॥

## कालकचूर्णम्

गृहधूमो यवक्षार पाठा व्योषरसाञ्जनम्।
तेजोह्वा त्रिफला लौहचित्रकश्चेति चूर्णितम्॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम्।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत्॥ ४७॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः।
सर्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गण्डरोगनुत्॥ ४८॥

कालकचूर्णे तेजोह्वा चवी, लौह काललौहचूर्णम् अगुरु वा। व्यवहारस्तु पूर्वेणैव। लौहस्थाने लोध्रमिति केचित् पठन्ति। अस्य योगस्य लौहचूर्णरसाञ्जनचूर्णयोगात् कृष्णत्वेन कालक इति सञ्ज्ञा, एव वक्ष्यमाणपीतकचूर्णेऽपि मन शिलादियोगात् पीतत्वेन पीतकसञ्ज्ञा विधेया॥ ४७—४८॥

## पीतकचूर्णम्

मन शिला यवक्षारो हरितालं ससैन्धवम्।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम्॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम्॥ ४९॥

पीतकचूर्णे दार्वीत्वगिति षष्ठीसमास। मूर्च्छितमित्यालोडितम्। एतच्चूर्णं तथा कालकचूर्णं सर्वस्मिन्नेव मुखरोगे धार्य्यम्। अतएवोक्त चरके—"योगराजत्रयः

प्रोक्ता वातपित्तकफापहा, इति। प्रत्येकमेव कालकादयास्त्रिदोषहरा इति चक्र-व्याख्या॥ ४९॥

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णाम्।
क्षौद्रेण कुर्य्याद् गुडिकां मुखेन तां धारयेत् सर्वगलामयेषु॥५०

यवाग्रजमिति—तेजवती ज्योतिष्मती, चवी इत्यन्ये। दारुनिशा दारु हरिद्रा॥ ५०॥

दशमूलं पिवेदुष्णं यूषं मूलकुलत्थयो।
क्षीरेक्षुरसगोमूत्रदधिमस्त्वम्लकाञ्जिकै॥
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि॥ ५१॥

दशमूलमित्यादौ—मूल मूलकशुण्ठकम्। क्षीरेत्यादि—सुश्रुतस्य। क्षीरा-दिभिः प्रत्येक यथादोष कवडा कार्य्या, एव तैलघृतैरपि॥ ५१॥

## क्षारगुडिका

पञ्चकोलकतालीशपत्रैलामरिचत्वचः।
पलाशमुष्ककक्षारयवक्षाराश्च चूर्णिता॥
गुडे पुराणे क्वथिते द्विगुणे गुडिका कृताः।
कर्कन्धुमात्रा सप्ताहं स्थिता मुष्ककभस्मनि॥
कण्ठरोगेषु सर्वेषु धार्य्या स्युरमृतोपमाः॥ ५२॥

पञ्चकोलकेत्यादौ—पत्र तेजपत्र, त्वक् गुडत्वक्। मुष्कको घण्टापारुली। अत्र समुदितचूर्णात् द्विगुणो गुड। क्वथित इति वह्निसयोगात् द्रवीभूते, कर्कन्धु-मात्रा अष्टमाषकमाना॥ ५२॥

मूत्रस्विन्नां शिवां तुल्यां मधुरीकुष्ठवालकैः।
अभ्यस्य मुखरोगांस्तु जयेद्विरसतामपि॥ ५३॥

मूत्रेत्यादौ—शिवा हरीतकी, मधुरी मधुरिकैव। अभ्यस्यन्निति भक्षण विधया। विरमता वैरस्यम्॥ ५३॥

वातात् सर्वसरं चूर्णैर्लावणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवडनस्ययोः॥ ५४॥

वातादित्यादि—सुश्रुतस्य। सर्वसरो मुखपाक। लावणैश्चूर्णैरिति सैन्धव-

चूर्णं अन्ये तु लवणा ज्योतिष्मती तच्च लावणमित्याहु । निश्चलस्तु पञ्चलवण-चूर्णमित्याह । वातहरे सिद्धमिति भद्रदार्वादिभिस्तु कल्ककाथरूपै ॥ ५४ ॥

**पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ।**
**सर्वपित्तहर कार्य्यो विधिर्मधुरशीतल ॥ ५५ ॥**

शुद्धकायस्येति विरेकेण वमनेनापि, कफस्थानगतत्वेन पित्तस्यापि वमनार्ह-त्वात । मधुरशीतल इति विशेषणार्थमुक्त ॥ ५५ ॥

**प्रतिसारणगण्डूषान् धूम संशोधनानि च ।**
**कफात्मके सर्वसरे क्रम कुर्य्यात् कफापहम् ॥ ५६ ॥**

प्रतिमारण इत्यादिना कफजसर्वसरचिकित्सामाह क्रम कुर्य्यात् कफापह-मिति—अनुक्तकफापहमिति अनुक्तकफहरविधिसग्रहार्थमुक्तम् ॥ ५६ ॥

**मुखपाके शिराभेद शिर कायविरेचनम् ।**
**कार्य्यन्तु वहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ ५७ ॥**

मुखपाके शिराभेद इति—शिराभेदस्तु तालुनि अधोजिह्विकाया वा कार्य्य । शिरोविरेचन कायविरेचनञ्च वहुधा कार्य्यमिति योज्यम् । नित्यमिति तु परेण मन्वध्यते ॥ ५७ ॥

**जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकै ।**
**काथः क्षौद्रयुत शीतो गण्डूषो मुखपाकनुत् ॥ ५८ ॥**

जातीपत्रेति—जाती मालती, तस्या पत्रम्, अमृता गुडूची, यासो दुरालभा, दार्वी दारुहरिद्रा । यासस्थाने पाठेति केचित् पठन्ति ॥ ५८ ॥

**कृष्णजीरककुष्ठेन्द्रयवाणां चूर्णतस्त्र्यहात् ।**
**मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥ ५९ ॥**

कृष्णजीरकेत्यादि—स्पष्टम् ॥ ५९ ॥

**रसाञ्जनं लोध्रमथामयञ्च मन शिला नागरगैरिकञ्च ।**
**पाठा हरिद्रा गजपिप्पली च स्याद्धारणं क्षौद्रयुतं मुखस्य ॥६०**

रसाञ्जनमित्यादौ—गैरिक स्वर्णगैरिकम् ॥ ६० ॥

**पटोलनिम्वजम्वाम्रमालतीनवपल्लवा ।**
**पञ्चपल्लवज श्रेष्ठ कषायो मुखधावने ॥ ६१ ॥**

पटोलेत्यादि—पटोलादीना पल्लवा ॥ ६१ ॥

पञ्चवल्ककषायो वा त्रिफलाक्काथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥
स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा ॥ ६२ ॥

पञ्चवल्केत्यादौ—सक्षौद्र इत्युभयत्रापि सम्बध्यते । स्वरस इत्यादि—अय योग आस्ये धार्य्यः । वाग्भटे तु गैरिकमप्यत्र योगे पठ्यते, यथा—" स्वरस क्वथितो दार्व्या घनीभूत सगैरिक । आस्यस्थ समधुर्वक्त्रपाकनाडीव्रणापह " इति ॥ ६२ ॥

सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य ॥६३॥

सप्तच्छदेति—सप्तच्छद शारदी, तिक्तरोहिणी कटुकी, राजद्रुम आरग्वध ॥६३॥

पटोलशुण्ठीत्रिफलाविशालात्रायन्तितिक्ताद्विनिशानतानाम् ।
पीत कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ६४

पटोलेत्यादौ—त्रायन्ती त्रायमाणा ॥ २७ ॥

क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा ॥ ६५ ॥

क्वथिता इत्यादौ—निषेव्या इति पानगण्डूषाभ्यामुपयोज्या इत्यर्थ. । भक्षणीयेति परेण सम्बध्यते; तेन लेहादिविधया त्रिफला भक्षणीया वेत्यर्थ. ॥६५॥

तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत् ।
तैलेन काञ्जिकेनाथ गण्डूषश्चूर्णदाहहा ॥ ६६ ॥

तिला इत्यादि—एतैर्गण्डूष इत्यर्थ । सक्षौद्रा इति प्रत्येकममी सक्षौद्रा योगा इति निश्चल । दग्धवक्त्रस्येति शम्बूकशङ्खचूर्णादिनेत्यर्थ ॥ ६६ ॥

घनकुष्ठैलाधान्यक-यष्टीमध्वेलवालुकाकवड ।
वदनेऽतिपूतिगन्धं हरति सुरालशुनगन्धञ्च ॥ ६७ ॥

घनकुष्ठलेत्यादि—योगमत्र केचित् पठन्ति, तदयुक्तम्, तृष्णाधिकारे अस्य योगस्य वक्ष्यमाणत्वात्। निश्चलेन तु प्रमादभयत्राय योग पठितो व्याख्यातश्च ॥६७॥

## महासहचरतैलम्

तुलां धृतां नीलसहाचरस्य द्रोणेऽम्भस संश्रपयेद् यथावत् ।
पूत्वा चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तैः ॥
कल्कैरनन्ताखदिरेरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमाश्वेव धृतं मुखेन स्थैर्य्यं द्विजानां विदधाति सद्य ॥६८॥

तुलामित्यादि—नीलसहाचरो नीलझिण्टी । चतुर्भागरस इति चतुर्थभागरसे । अनन्ता अनन्तमूलम्; इरिमेदो विट्खदिर, तदभावे खदिरमेव द्विगुण गृह्णन्ति ॥ ६८ ॥

## इरिमेदाद्यं तैलम्

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डश कृत्वा ।
तोयाढकैश्चतुर्भिर्नि क्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमांस्तैलस्यार्द्धाढकं शनैर्विपचेत् ।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला-
कर्पूरागुरुपद्मकलवङ्गकक्कोलजातीफलानाम् ॥
पत्तंगगैरिकवराङ्गजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्णदन्तविद्रधि-शैशिरशीतादहन्तहर्षेषु ।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥३२॥

इरिमेदत्वगित्यादौ—पद्मानि पद्मकाष्ठम्, जाती जातीकोष, फल जातीफलम्, पत्तङ्ग रक्तचन्दनम्, वराङ्ग गुडत्वक्, गजकुसुम नागकेशरम् । परिशीर्णदन्तो दन्तरोगभेद । विद्रधिर्गलविद्रधि । दालनो दालनवद्व्यथायोगात् । प्रहृष्टमासोऽधिमास । अवशीर्णोऽवशीर्णमाम ॥ ६९ ॥

## लाक्षाद्यं तैलम्

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत्।
चतुर्गुणेऽरिमकाथे द्रव्यैश्च पलसम्मितैः ॥
लोध्रकट्फलमञ्जिष्ठा-पद्मकेशरपद्मकैः।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम् ॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम्।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥ ७० ॥

तैलमित्यादौ—लाक्षाया रस क्काथ, इरिमकाथ, इति इरिमेदक्काथ, षड्-गुणोऽय पाक। हनुमोक्षो दन्तरोगविशेष। उक्त हि सुश्रुते—'वातेन तैस्तैर्भावैस्तु हनुसन्धौ विघट्टिते। हनुमोक्ष इति ज्ञेयो व्याधिर्वर्द्धितलक्षण' इति। अयञ्च दन्त-देशसामीप्यात् दन्तपीडाजनकत्वाच्च दन्तरोगमध्ये सुश्रुतेन पठित.। चन्द्राटे हनु-मोक्ष इत्यपपाठः॥ ७० ॥

## वकुलाद्यं तैलम्

वकुलस्य फलं लोध्रं वज्रवल्ली कुरण्टकम्।
चतुरङ्गुलबब्बोल-वाजिकर्णैरिमाशनम् ॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम्।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च ॥ ७१ ॥

वकुलाद्ये-वज्रवल्ली अस्थिमहार, कुरण्टको नीलाम्लिपटी, चतुरगुल आर-ग्वध, बब्बोल· तुलसी वावुइ इति ख्यात, वाजिकर्ण शालभेद, अशन पीतशाल, चलतामिति षष्ठीबहुवचनम् ॥ ७१ ॥

## सहकारगुडिका

एलालतालवनिकाफलशीतकोष-
कोलद्धिकानि खदिरस्य कृते कषाये।
तुल्यांशकानि दशभागमिते निधाय
प्रोञ्झिन्नकैतकपुटे पुटवह्निपाच्य ॥

घनकुष्ठेलेत्यादि–योगमत्र केचित् पठन्ति, तदयुक्तम्, वृष्याधिकारे अस्य योगस्य वक्ष्यमाणत्वात्। निश्चलेन तु भ्रमादुभयत्राय योग पठितो व्याख्यातश्च ॥६७॥

## महासहचरतैलम्

तुलां धृतां नीलसहाचरस्य द्रोणेऽम्भस संश्रपयेद् यथावत् ।
पूत्वा चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तैः ॥
कल्कैरनन्ताखदिरेरिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमाश्वेव धृतं मुखेन स्थैर्य्यं द्विजानां विदधाति सद्य ॥६८॥

तुलामित्यादि—नीलसहाचरो नीलझिण्टी । चतुर्भागरस इति चतुर्थभागरसे । अनन्ता अनन्तमूलम्; इरिमेदो विट्खदिर, तदभावे खदिरमेव द्विगुण गृह्णन्ति ॥ ६८ ॥

## इरिमेदाद्यं तैलम्

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डश कृत्वा ।
तोयाढकैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमांस्तैलस्यार्द्धाढकं शनैर्विपचेत् ।
कल्कैरक्षसमांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला-
कर्पूरागुरुपद्मकलवङ्गकक्कोलजातीफलानाम् ॥
पत्तंगगैरिकवराङ्गजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्णदन्तविद्रधि-शैशिरशीतादन्तहर्षेषु ।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥३२॥

इरिमेदत्वगित्यादौ—पद्मेति पद्मकाष्ठम्, जाती जातीकोष, फल जातीफलम्, पत्तङ्ग रक्तचन्दनम्, वराङ्ग गुडत्वक्, गजकुसुम नागकेशरम् । परिशीर्णदन्तो दन्तरोगभेद । विद्रधिर्गलविद्रधि । दालनो दालनवद्व्यथायोगात् । प्रहृष्टमासोऽधिमास । अवशीर्णोऽवशीर्णमाम ॥ ६९ ॥

## लाक्षाद्यं तैलम्

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत्।
चतुर्गुणेऽरिमक्वाथे द्रव्यैश्च पलसम्मितैः ॥
लोध्रकट्फलमञ्जिष्ठा-पद्मकेशरपद्मकैः।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम् ॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम्।
शीतादं पूतिवक्त्रञ्च अरुचिं विरसास्यताम् ॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ॥ ७० ॥

तैलमित्यादौ—लाक्षाया रस क्वाथ, इरिमक्वाथ, इति इरिमेदक्वाथ, षड्गुणोऽय पाक। हनुमोक्षो दन्तरोगविशेष। उक्त हि सुश्रुते—'वातेन तैस्तैर्भावैस्तु हनुसन्धौ विघट्टिते। हनुमोक्ष इति ज्ञेयो व्याधिर्वेर्द्धितलक्षण' इति। अयञ्च दन्तदेशसामीप्यात् दन्तपीडाजनकत्वाच्च दन्तरोगमध्ये सुश्रुतेन पठित। चन्द्राटे हनुमोक्ष इत्यपपाठः ॥ ७० ॥

## वकुलाद्यं तैलम्

वकुलस्य फलं लोध्रं वज्रवल्ली कुरण्टकम्।
चतुरङ्गुलवव्वोल-वाजिकर्णोरिमाशनम् ॥
एषां कषायकल्काभ्यां तैलं पक्कं मुखे धृतम्।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च ॥ ७१ ॥

वकुलाद्ये—वज्रवल्ली अस्थिसहार, कुरण्टको नीलाझिण्टी, चतुरङ्गुल आरग्वध, वव्वोलः तुलसी वावुइ इति ख्यात, वाजिकर्ण शालभेद., अशन पतिशाल, चलतामिति षष्ठीवहुवचनम् ॥ ७१ ॥

## सहकारगुडिका

एलालतालवनिकाफलशीतकोष-
कोलद्धिकानि खदिरस्य कृते कषाये।
तुल्यांशकानि दशभागमिते निधाय
प्रोज्झितकैतकपुटे पुटवह्निपाच्य ॥

प्रागंशतुल्यशशिनाथ तदेकसंस्थं
पिष्ट्वा नवेन सहकाररसेन हस्तौ ।
लिप्त्वा यथाभिलषितां गुडिकां विदध्यात्
स्त्रीपुंसयोर्वदनसौरभबन्धुभूताम् ॥ ७२ ॥

एलेत्यादि—लताकस्तूरी, लवनिका लवङ्ग, फल जातीफलम्, शीत कर्पूरम्, कोषे जातीकोष, कोल कक्कोलम्, द्विकमगुरु । एलादीना तुल्याश, एषा मिलिताना एकभागापेक्षया दशभागपरिमिते खदिरक्काथ इत्यर्थ । प्रोद्भिन्न॰ केतकपुट इति विकासितकेतकपत्रकृतपुटके खदिरक्काथालोडितमेलादिचूर्णं निधाय पुट-विधिना मनाक् विपाच्य तत शीतीकृत्य प्रथमगृहीतकर्पूरमानवदपरञ्च तद्गृहीत्वा तेन पक्कचूर्णपिण्डेन सह एकीकृत्य पिष्ट्वैकत्र स्थाप्यम् । ततोऽभिनवच्युतवृन्तानिर्यासेन हस्तौ लिप्त्वा यथेष्ट गुडिका कार्य्या इति ॥ ७२ ॥

## स्वल्पखदिरवाटिका

खदिरस्य तुलां सम्यग् जलद्रोणे विपाचयेत् ।
शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥
जातीकर्पूरपूगाणि कक्कोलकफलानि च ।
इत्येषा गुडिका कार्य्या मुखसौभाग्यवर्द्धिनी ।
दन्तौष्ठमुखरोगेषु जिह्वाताल्वामयेषु च ॥ ७३ ॥

खदिरस्येत्यादौ—जाती जातिकोष, पूग पूगफलम्, फलानि जातीफलानि एषा चूर्णाना प्रत्येक पलम्, वक्ष्यमाणखदिरवटिकाया पलांशिकानीतिदर्शनात् । अन्ये तु वक्ष्यमाणखादिरवटिकाया तुलात्रयनिष्पाद्यक्काथे यावच्चूर्णमुक्त तावतो मिलितचूर्णात् तृतीयभागेनैषा मिलितानां ग्राह्यम्, एतत्क्काथस्य तुलैकनिष्पाद्यत्वादित्याहु. ॥ ७३ ॥

## बृहत्खादिरवाटिका

गायत्रिसारतुलयेरिमवल्कलानां
सार्द्ध तुलायुगलमम्बुघटैश्चतुर्भि ।
नि क्वाथ्य पादमवशिष्टसुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन ॥

तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवडग्रहभागिकानाम् ।
एलामृणालसितचन्दनचन्दनाम्बु-
श्यामातमालविकषाघनलोहयष्टी ॥
लज्जाफलत्रयरसाञ्जनधातकीभ-
श्रीपुष्पगैरिककटङ्कटकट्फलानाम् ।
पद्माह्वलोध्रवटरोहयवासकानाम्
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥
फक्कोलजातिफलकोषलवङ्गकानि
चूर्णीकृतानि विदधीत पलांशिकानि ।
शीतेऽवतार्य्य घनसारचतु पलञ्च
क्षिप्त्वा कलायसदृशीर्वटिका प्रकुर्य्यात् ॥
शुष्का मुखे विनिहिता विनिवारयन्ति
रोगान् गलौष्ठरसनाद्विजतालुजातान् ।
कुर्य्युर्मुखे सुरभितामरुचिञ्च हन्यु-
स्थैर्य्यं परं दशनगं वदनापटुत्वम् ॥ ७४ ॥

इति मुखरोग-चिकित्सा ॥

गायत्रीत्यादौ—गायत्रिसार खदिरसार, तस्य तुलया सार्द्धं इरिमेदवल्कलाना विट्खादिरत्वचा तुलायुगलमित्यर्थ., घटो द्रोणः । कवडग्रहभागिकानामिति प्रत्येक कर्षमानानाम् । अमृणालमुशीरम्, चन्दन रक्तचन्दनम्, अम्बु बालकम्, श्यामा प्रियगु, तमाल तमालपत्रम्, विकषा मञ्जिष्ठा, घन मुस्तकम्, लौहमगुरु, यष्टी यष्टिमधु, लज्जा वराहक्रान्ता, इभो नागकेशरम्, श्रीपुष्प पुण्डरीकम्, कटङ्कटो दारुहरिद्रा, पद्माह्व पद्मकाष्ठम्, सुरभि शल्लकी । वेष्टक कुन्दुरिति ख्यातम्, रास्नेत्यन्ये, मूर्वेत्यपरे । वल्कमिति पाठे वल्कल गुडत्वक् । जातीफलकोष इति जातीफल जातीकोषञ्च, घनसार कर्पूरम् । अपटुत्व जाड्यराहित्यम् ॥ ७४ ॥

इति मुखरोग-चिकित्सा विवृति. ।

# अथ कर्णरोग-चिकित्सा

कपित्थमातुलुङ्गाम्ल-शृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ १ ॥

मुखरोगेषु जिह्वाश्रयरोगा उक्ता, जिह्वा चेन्द्रियाधिष्ठानमत इन्द्रियाधिष्ठान-गतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितमुच्यते। कपित्थेत्यादि—सुश्रुतस्य। कपित्थस्य फलम्, एवं मातुलुङ्गस्यापि, अम्लेति विशेषणात् सुपक्वफलं ग्राह्यम्। वाशब्दस्य कपित्थादिभिरन्वयः एते च त्रयो योगाः ॥ १ ॥

शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २ ॥

शृङ्गवेरमित्यादि—शृङ्गवेरस्वरसमाषकचतुष्टयम्, मधुनो माषकद्वयम्, सैन्धवरक्तिकामेकाम्, तैलं तिलजं माषकद्वयं गृहीत्वा सर्वमालोड्य कदुष्णं कृत्वा कर्णे पूरयेत् ॥ २ ॥

लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥ ३ ॥

लशुनेत्यादि—सुश्रुतस्य। सुरङ्गी रक्तशोभाञ्जनम्, कदली कदलीवागुडा, तस्याः स्वरसः। एते च लशुनस्वरसादयो व्यस्ता समस्ता वा बोध्याः। पूर्वोक्तस्याप्यार्द्रकरसस्यापि पुनरुपादानं समस्तपक्षे सप्रयोजनमेव। युक्त्येति प्रथमं तैलेन कर्णं अक्षयित्वा ततोऽवचूर्णनमिति युक्त्यर्थः इति केचित्। अन्ये तु शुक्तेन कर्णौ पूरयित्वा ततो समुद्रफेनेनावचूर्णनमिति युक्त्यर्थमाहुः, युक्तश्चैतत्, यदाह वाग्भटः—"शुक्तेन पूरयित्वा सिन्धुफेनेन वावचूर्णयेत्।" अतएव समुद्रफेनयुक्तेनेति पाठान्तरं सुश्रुते केचित् पठन्ति, तन्मते समुद्रफेनयुक्तेनेति पदं पूर्वोक्तशुक्तविशेषणम्, सुश्रुते हि एतस्मात् पूर्वं "कर्णौ कोष्णेन शुक्तेन पूरयेत् कर्णशूलिनः" इत्युक्तम्। अस्मिन् पक्षे युक्त्येति अस्य मात्रया इत्यर्थः ॥ ३ ॥

आर्द्रकसूर्य्यावर्त्तशोभाञ्जनमूलकस्वरसाः।
मधुतैलसैन्धवयुताः पृथगुक्ताः कर्णशूलहराः ॥ ४ ॥

आर्द्रकेत्यादौ—शोभाञ्जनं शोभाञ्जनमूलम्, मूलकन्तु मूलककन्दम्। एते

कदुष्णीकृत्योपयोज्या । अतएव पृथगुक्ता इत्यत्र पृथगुष्णा इति पाठान्तर केचित् पठन्ति ॥ ४ ॥

शोभाञ्जनकनिर्य्यासस्तिलतैलेन संयुत ।
व्यक्तोष्ण पूरणः कर्णे कर्णशूलोपशान्तये ॥
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन च ।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये ॥ ५ ॥

शोभाञ्जनेत्यादि—शोभाञ्जननिर्यासः शोभाञ्जनत्वग्म ॥ ५ ॥

अश्वत्थपत्रखल्वं वा विधाय वहुपत्रकम् ।
तैलाक्तमङ्गारपूर्णं विदध्यात् श्रवणोपरि ॥
यत् तैलं च्यवते तस्मात् खल्वादङ्गारतापितात् ।
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ ६ ॥

अश्वत्थेत्यादि—सुश्रुतस्य । अश्वत्थपत्रैर्वहुभिस्तैलाक्तैश्चुल्लिका कृत्वा सरन्ध्रा कृत्वा तदुपरि ज्वलदङ्गार विन्यस्य कर्णयोरुपरि धारयेत्, तत पतिततैलेन कर्ण-पूरणम् । पित्तानुवन्धे तु सर्पिर्देय तैलेस्थाने विदेहसवादात् ॥ ६ ॥

अर्कपत्रपुटे दग्धस्नुहीपत्रभवो रस ।
कदुष्ण पूरणादेव कर्णशूलनिवारण ॥ ७ ॥

अर्कपत्रेत्यादि—स्नुहीपत्रमर्कपत्रेण वेष्टयित्वा तदनु स्नुहीपत्र दग्ध्वा चोद-यित्वा तद्रसेन कर्णयो पूरणमित्युपदेश. ॥ ७ ॥

## दीपिकातैलम्

महत पञ्चमूलस्य काण्डान्यष्टांगुलानि च ।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्तत' ॥
यत् तैलं च्यवते तेभ्य सुखोष्णं सम्प्रयोजयेत् ।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥
एवं कुर्य्याद्भद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ८ ॥

महत इत्यादि—सुश्रुतस्य । पञ्चमूलस्येति विल्वादीनामन्यतमस्य । अष्टा-

गुलानीति अग्रभागे अष्टागुलानि व्याप्य चौमेण वेष्टन कार्य्यमित्यर्थ । तेन तत्-काष्ठमष्टागुलाधिक कार्य्यम् । वृद्धास्तु अष्टादशागुलमिति पञ्चमूलकाष्ठ गृहीत्वा तस्याग्रभागेऽष्टागुल व्याप्य तैलाक्त वस्त्र बद्ध्वा प्रज्ज्वाल्य ततो गलिततैलेन कर्ण-पूरण कुर्वन्ति । स्वल्पवाग्भटे तु अष्टागुलादिपरिमाण नोक्तम्, यथा—" महत पञ्चमूलस्य काष्ठात् चौमेण वेष्टितात् । तैलसिक्तात् प्रदीपाग्रात् स्नेह मथोरुजाहर " इति ॥ ८ ॥

अर्कस्य पत्र परिणामपीतमाज्येन लिप्तं शिखिनावतप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूल बहुवेदनञ्च ॥९॥

अर्कस्येत्यादौ—परिणामपीतमिति । कालप्रकर्षेण पाकवशात् पीतवर्ण शिखिना वह्निना अवतप्त स्विन्नमित्यर्थ । तोयमिति रस बहुवेदनमिति नानाविध-तोदभेदादिवेदनासहितम् ॥ ९ ॥

तीव्रशूलान्विते कर्णे सशब्दे क्लेदवाहिनि ।
वस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनावचूर्णितम् ॥
वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक् ।
तैलं पचेत् तेन कर्णं पूरयेत् कर्णशूलिन ॥ १० ॥

वशेत्यादि—सुश्रुतस्य । वशावलेखो वशावलेखनी, तस्या कल्कम्, मूत्रे चाजाविक इति आजे वा आविके वा मूत्रे पचेदित्यर्थ । यदाह—" वशा-वलेखकल्केन मूत्रे वाजे तथाविके । पचेत् तैल रुज शान्त्यै कर्णयो पूरण भिषक्" इति विदेहवचनात् घृतमप्यनेन विधिना पक्तव्यम् ॥ १० ॥

हिंगुतुम्बुरुशुण्ठीभि साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते ॥ ११ ॥

हिङ्ग्वित्यादौ—साध्यमिति जल चतुर्गुणेन ॥ ११ ॥

## क्षारतैलम्

बालमूलकशुण्ठीनां क्षारो हिंगु सनागरम् ।
शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्चलं यवक्षार सर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥

मातुलुङ्गरसश्चैव कदल्या रस एव च ।
तैलमेभिर्विपक्कव्यं कर्णशूलहरं परम् ॥
वाधिर्य्यं कर्णनादश्च पूयास्रावश्च दारुणः ।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः ॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात् ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥
मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम् ।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम् ॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत् ।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ १२ ॥

बालमूलकेत्यादौ—मधुशुक्तं चतुर्गुणमिति मधूपलक्षितं शुक्तं मधुशुक्तम् । एतेन प्रस्थं तण्डुलतोयत इत्युक्तस्य मधुरहितशुक्तस्य निषेधः । ग्रहणन्तु यन्मस्त्वादि शुचौ भाण्ड इत्यादिनोक्तस्य, तथा जम्बीरस्य फलमित्यादिना अनन्तरमेव वक्ष्यमाणस्य वा ज्ञेयम् । एतदेव मधुप्रधानं शुक्तमित्यादिना वक्ष्यति । अन्ये तु मध्विति च्छेदः, तेन मधुनः कल्कत्वम्, शुक्तस्य चतुर्गुणत्वञ्चेत्यर्थः । अपरे तु मधु चतुर्गुणं शुक्तञ्च चतुर्गुणमिति व्याचक्षते । एतन्मतद्वयमपि नोपपद्यते, स्थानतन्त्रे जतूकर्णे तु मधुनोऽप्यपाठत्वात् । मातुलुङ्ग-कदलीवागुरास्वरसौ तु तैलसमौ जतूकर्णसंवादात्, अतः षड्गुणः पाकः । अन्ये तु वाग्भटसंवादात् मातुलुङ्गकदलीस्वरसयोः प्रत्येकं चतुर्गुणत्वमाहुः, अतो हि मधुशुक्तं चतुर्गुणं मातुलुङ्गरसश्च तद्वत् कदलीरसश्चेत्युक्तम् । उभयमपि प्रमाणस्यातिदेशवत् । व्यवहारस्तु पूर्वेणैव । जम्बीरस्येति जम्बीरफलरसस्य द्वात्रिंशत्पलानि, पिप्पलीमूलस्य चत्वारि, मधुनोऽष्टौ पलानि इति वृद्धवैद्योपदेशात् मानकल्पः ॥ १२ ॥

कर्णक्ष्वेडे कर्णनादे कटुतैलेन पूरणम् ।
नादवाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ॥ १३ ॥

कर्णक्ष्वेड इत्यादौ—कटुतैलं सार्षपतैलम् ॥ १३ ॥

## अपामार्गक्षारतैलम्

मार्गक्षारजले तत्कृतकल्केन साधितं तिलजम् ।
अपहरति कर्णनादं वाधिर्य्यञ्चापि पूरणतः ॥ १४ ॥

मार्गेत्यादि—मार्गोऽपामार्गः । अपामार्गक्षारपलानि षोडश, द्रवद्वैगुण्यात्

जलस्य चतुर्विंशतिशरावा, एकविंशतिवारान् परिस्राव्य । अत क्षारजलात् षोडश शरावा ग्राह्या । तत्कृतकल्केनेति अपामार्गकृतक्षारकल्केन । स च तैलशेषभयाज्ज-लेनालोड्य तैले देय, यदा तु पिण्डीभूताद् कल्क तैल सम्यक् पृथग्भूत दृश्यते, तदैव तैल पात्रान्तरे कृत्वा ग्राह्यम्, न तु कल्को गालनीय, क्षारमिश्रितभयात् । अन्ये तु समासान्तर्भूतमपि मार्गपदं तच्छब्देन समाकृष्य अपामार्गमूलमेव कल्कमाहु ॥ १४ ॥

## सर्जिकाक्षारतैलम्

सर्जिका मूलकं शुष्कं हिंगु कृष्णा महौषधम् ।
शतपुष्पा च तैस्तैलं पक्कं शुक्तचतुर्गुणम् ।
प्रणादशूलबाधिर्य्यं स्रावञ्चाशु व्यपोहति ॥ १५ ॥

सर्जिकाक्षारतैलम्—स्पष्टम् ॥ १५ ॥

## दशमूलीतैलम्

दशमूलीकषायेण तैलप्रस्थं विपाचयेत् ।
एतत् कल्कं प्रदायैव बाधिर्य्यं परमौषधम् ॥ १६ ॥

दशमूलीतैलम्—स्पष्टम् ॥ १६ ॥

## बिल्वतैलम्

फलं बिल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत् ।
साजाक्षीरं तद्धि हरेद्बाधिर्य्यं कर्णपूरणे ॥ १७ ॥

फलमित्यादौ—मूत्रेणेत्यस्य पिष्ट्वेत्यनेन तथा पाचयेदित्यनेन सम्बन्ध । पाचयेदित्यनेनैव वा, तदुक्त तन्त्रान्तरे 'बिल्वगर्भं पचेत् तैल गोमूत्राजपयोऽन्वि-तम् । बाधिर्य्य पूरयेत् तेन कर्णौ सकफवातजौ' इति । अत्राजाक्षीर तैलसम गोमूत्र त्रिगुण चतुर्गुण वेत्याहु. ॥ १७ ॥

एष एव विधि कार्य्य प्रणादे नस्यपूर्वक ।
गुडनागरतोयेन नस्यं स्यादुभयोरपि ॥ १८ ॥

एष एवेति विधिर्बाधिर्य्यहर । उभयोरपि बाधिर्य्यकर्णनादयो ॥ १८ ॥

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ १९ ॥

कर्णस्रावचिकित्सामाह चूर्णमित्यादि—सुश्रुतस्य । पञ्चकषायाणा पञ्चवल्कलाना चूर्णम् । उक्त हि वाग्भटे—'पञ्चवल्कलचूर्णञ्च कपित्थस्वरसान्वितम् । मधुना योजित हन्यात् कर्णस्राव प्रपूरयेत्' इति । अन्ये तु पञ्चकषायशब्देन सौश्रुतमेव कर्णस्रावोक्त तिन्दुकादिपञ्चकमुच्यते, यथा—'तिन्दुकान्यभया लोध्र समङ्गामलक तथा । पूरणञ्चात्र पथ्य स्यात् कपित्थरसयोजितम्' इति । न च तयोरपि वचनयो सौश्रुतत्वेन पौनरुक्त्यमिति वाच्य, मधुयोगात् योगद्वैविध्यादित्याहु ॥ १९ ॥

मालतिदलरसमधुना पूरितमथवा गवां मूत्रै ।
दूरेण परित्यज्यते च श्रवणयुगलं पूतिरोगेण ।
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित् ॥ २० ॥

मालतिदलेति छन्दोऽनुरोधात् ह्रस्वत्वम् ॥ २० ॥

सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ।
मधुना संयुत साधु कर्णस्रावे प्रशस्यते ॥ २१ ॥

सर्जेत्यादि—सुश्रुतस्य । सर्ज शाल , कार्पासी वनकार्पासी, ग्रामकार्पासी वा । अत्र कार्पासीफलरसमपेक्ष्य अर्द्ध मधु, मध्वपेक्षया च सर्जत्वक्चूर्णमर्द्धमिति वृद्धोपदेश साधुरिति कर्पासीफलरसविशेषण तेन कीटाद्यजग्धकार्पासीफलरसो ग्राह्य इति ॥२१॥

## जम्ब्वाद्यं तैलम्

जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सार्द्रम् ।
क्षुत्वा रसं तन्मधुना विमिश्रं स्रावापहं सम्प्रवदन्ति तज्ज्ञाः ॥
एतै. श्रृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ २२ ॥

जम्ब्वाम्रेत्यादौ—सार्द्रमिति समन्तादार्द्रमित्यर्थ । क्षुत्वेति सक्षुद्येत्यर्थ । एतैरिति जम्ब्वाम्रपत्रादिभि. कल्करूपैरित्यर्थ , जलञ्चात्रार्थाच्चतुर्गुणम् । अन्ये तु जम्बूपत्रादिरसैरित्यर्थ इत्याहु. । एतन्मते त्वकल्क एवाय पाक इति, पाकोत्तरकालञ्च मधुप्रक्षेप इत्याहु. । निम्बबीजकरञ्जबीजभव तैल सार्षपतैलञ्च समिश्र्य पक्तव्यम् । पृथगेव तैलत्रय पक्तव्यमित्यन्ये ॥२२॥

पुटपाकविधिस्विन्नहस्तिविड्जातगोएडक ।
रस· सतैलसिन्धूत्थ कर्णस्रावहर· पर. ॥ २३ ॥

पुटपाकेत्यादौ—हस्तिविड्जातगोएडको हास्तिलिण्डोद्भूतच्छत्रक । रस इत्यत्र

तन्वीति शेषः । तेन हस्तिमूत्रेणोपलक्षितमिदं । अन्ये तु कोरदूष इति पठन्ति । अपरे तु कोरदूषस्य स्थाने नलमेव पठन्ति 'वेगवान्दधोऽपि । नानाध-वनत्रोयानम्' इति च ॥ २३ ॥

## शम्बूकाद्यं तैलम्

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ २४ ॥

शम्बूकस्येत्यादि—शम्बूकमांसस्य द्रवः, स च चतुर्गुण इति ॥ २४ ॥

## धुस्तूराद्यं तैलम्

निशागन्धपलं पक्वं कटुतैलं पलाष्टकम् ।
धुस्तूरपत्रजरसे कर्णनाडीजिदुत्तमम् ॥ २५ ॥

निशेत्यादि—निशा हरिद्रा । निशागन्धकयोर्मिलित्वा पलमेकं तथा धुस्तूर-पत्ररसस्य द्रवत्वम् । उक्तं हि 'गन्धकहरिद्राभ्यां मिलिताभ्यां पलमेकं कटुतैलमष्टपलम् । धुस्तूरपत्ररसस्तु तैलात् चतुर्गुणोऽपि द्रवत्वादि' इति । कटुतैलस्थाने केचित् सार्षपं पठन्ति ॥ २५ ॥

अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ।
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ।
नाडीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् ॥
विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ॥ २६ ॥

अथेत्यादि—कुष्ठस्य । क्रिया प्राप्तामिति दोषानुरूपाम् । नाडीस्वेद इत्यादौ स्नेहस्वेद इति पाठे कफघ्नत्वात् कर्णनाड्यां स्नेहो अनन्तरं स्वेद ॥ २६ ॥

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः ।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ॥ २७ ॥

निर्गुण्डीत्यादि—निर्गुण्डीस्वरसतैलयोः प्रत्येकं शरावकचतुष्टयं, गृह-धूमचूर्णगुडयोस्तु प्रत्येकं शरावकद्वयं, मधुनस्तु शरावकद्वयं, सैन्धवस्य तु त्रिपलक-मिति व्यवहरन्ति ॥ २७ ॥

जातीपत्ररसे तैलं विपक्कं पूतिकर्णजित्।
वरुणार्ककपित्थाम्रजम्बूपल्लवसाधितम्॥
पूतिकर्णापहं तैलं जातीपत्ररसेन वा॥
सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसं तथा।
लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम्।
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशने परम्॥
क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम्।
वार्त्ताकुधूमश्च हित· सार्पपस्नेह एव च॥ २८॥

वरुणेत्यादि—वरुणादिपल्लवाना कल्क.। सूर्य्यावर्त्तकादिषु त्रिषु योगेषु व्योषचूर्णं प्रक्षेप्यम्। वार्त्ताकुधूम इति परिपतवार्त्ताकुफलचूर्णम् अङ्गारसम्पुटे दत्त्वा नलिकया धूमो देय। वार्त्ताकुर्वाजेन धूमः कार्य्य इति मध्यवाग्भटः॥ २८॥

हलिसूर्य्यावर्त्तव्योपस्वरसेनातिपूरिते।
कर्णे पतन्ति सहसा सर्वास्तु क्रिमिजातयः॥ २९॥
नीलवुह्लारसस्तैलसिन्धुकाञ्जिकसंयुत।
कदुष्ण पूरणात् कर्णे निःशेषक्रिमिपातन।
धूपनः कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते॥ ३०॥

हलीत्यादि—हली लाङ्गलीयामूल, हलीसूर्य्यावर्त्तयोर्व्योषयुक्तरसेन कर्णपूरणमित्यर्थः॥ २९–३०॥

राजवृक्षादितोयेन सुरसादिजलेन वा।
कर्णप्रक्षालनं कुर्य्याच्चूर्णैरेतै· प्रपूरणम्॥ ३१॥

राजवृक्षेति—राजवृक्षादिगण· आरग्वधादिगण.। सुरसादि: सुरसादिगण.। चूर्णैरेतैरिति आरग्वधादिसुरसादिजै.॥ ३१॥

घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्।
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके॥३२॥

घृष्टमित्यादि—स्पष्टम्॥३२॥

## कुष्ठाद्यं तैलम्

कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम्॥३३॥

कुष्ठेत्यादि—कुष्ठादीना कल्कम् ॥३३॥

विद्रधौ चापि कुर्वीत विद्रध्युक्तं हि भेषजम् ।
शतावरीवाजिगन्धापयस्यैरेरण्डबीजकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम् ॥३४॥

विद्रध्युक्तमित्यन्तर्विद्रध्युक्तमिति श्रीकण्ठ । शतावरीत्यादि—सुश्रुतस्य । पयस्या क्षीरकाकोली, विदारीगन्धेत्यन्ये । एरण्डस्य बीजक, न तु बीजक पीतशाल , तस्य रूक्षत्वादिति । बीजकैरित्यत्र जीरकैरित्येव पाठ इति निश्चल ॥३४॥

गुञ्जाचूर्णयुते जाते माहिषे क्षीर उद्धृतम् ।
नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ॥३५॥

गुञ्जेत्यादि—गुञ्जाचूर्णं क्षीरापेक्षया अष्टमाशमित्याहु । जात इत्यत्र दध्नीति शेष । अष्टमाशगुञ्जाचूर्णयुते महिषीक्षीरे जातस्य दध्नो नवनीतमित्यर्थः ॥३५॥

विषगर्भं तिक्ततुम्बी-तैलमष्टगुणे खरात् ।
मूत्रे पक्वं तदभ्यङ्गात् कर्णपालिविवर्द्धनम् ॥३६॥

विषगर्भमित्यादि—विषस्य कल्कम् । तिक्ततुम्बीबीजभव तैल तिक्ततुम्बीतैलम् । खरस्य गर्दभस्य मूत्रे खरमूत्रे ॥३६॥

## जीवनीयाद्यं तैलम्

कल्केन जीवनीयेन तैलं पयसि साधितम् ।
आनूपमांसक्वाथेन पालीपोषणवर्द्धनम् ॥३७॥

कल्केनेत्यादि—वाग्भटस्य । जीवनीयेनेति जीवनीयदशकेन अष्टवर्गेण वेत्यन्ये । दुग्धमत्र स्नेहसमम्, आनूपमासक्वाथस्तु त्रिगुण । पोषण परिणाहेन वर्द्धनम्, अन्ये तु दैर्घ्येण ॥३७॥

माहिषनवनीतयुक्तं सप्ताहं धान्यराशिपरिवासितम् ।
नवमूषलिकन्दचूर्णं वृद्धिकरं कर्णपालीनाम् ॥३८॥

माहिषेत्यादौ—सप्ताह धान्यराशौ परिवस्तु शीलमस्येति तत् तथा । नवमूषली-कन्दचूर्णमिति तत्क्षणानीतशुष्कतालमूलीकन्दचूर्ण पल २, माहिषनवनीतपल १, समर्थ सप्ताह धान्यराशौ स्थाप्यमित्यर्थ. ॥३८॥

**कर्णस्य दुर्व्यधे भूते संरम्भो वेदना भवेत्।**
**तत्र दुर्व्यधरोहार्थं लेपो मध्वाज्यसंयुतैः।**
**मधूकयवमञ्जिष्ठारुवुमूलैः समन्ततः ॥३६॥**

दुर्विद्धकर्णचिकित्सामाह कर्णस्येत्यादि—रुवुमूलमेरण्डमूलम्। उक्तं हि तन्त्रान्तरे—"यवैरण्डजटासर्पिर्मधूकमधुसंयुतम्। विकपाधवचूर्णं वा केवलं रोपणं हितम्" इति। अतएव रुवुमूलस्थाने रुवुतैलमित्यपपाठः ॥३६॥

**अनेकधा तु छिन्नस्य सन्धिः कर्णस्य वै भिषक्।**
**यो यथा विनिविष्टः स्यात् तं तथा विनियोजयेत् ॥**
**धान्याम्लोष्णोदकाभ्यान्तु सेको वातेन दूषिते।**
**रक्तपित्तेन पयसा श्लेष्मणा तूष्णवारिणा ॥**
**तत्र सीव्य स्थिरं कुर्य्यात् सन्धिं बन्धेन वा पुनः।**
**मध्वाज्येन ततोऽभ्यज्य पिचुना सन्धिवेष्टनम्।**
**कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाथवा ॥४०॥**

**इति कर्णरोग चिकित्सा।**

छिन्नकर्णपालिसन्धानार्थं विधिमाह अनेकधेत्यादि—कर्णपालिच्छेदो हि हेतुद्वयेन भवति, उक्तं हि सुश्रुते—"एवं विवर्द्धितः कर्णश्छिद्यते तद्द्विधा नृणाम्। दोषतश्चाभिघाताद्वा" इति। दोषत इति वातादिकोपात्। छिन्नस्य कर्णस्येति छिन्नकर्णयोः कर्णलतिकयोः। अथ स्थूलह्रस्वदीर्घऋजुतिर्य्यगादिभेदेन अनेकविधत्वात् सन्धिरपि अनेकधा भवति, तत्र सन्धिर्यथा येन प्रकारेण विनिविष्टः सुसम्बद्धः स्यात् तं सन्धिं तथा तेन प्रकारेण योजयेत्, सन्धानार्थं योजयेदित्यर्थः। तत्र सुश्रुते पञ्चदश छिन्नकर्णबन्धप्रकारा आकृतिभेदेनोक्ता, ते च तत्रैव कुव्यधसन्धिविज्ञानीयाध्याये चानुसन्धेया। तत्र दोषानुरूपं प्रक्षालनमाह धान्याम्लेत्यादि—पयसेति दुग्धेन, शीतोदकेनेति वा। उक्तं हि सुश्रुते—"पित्तदुष्टे शीतोदकपयोभ्याम्" इति। ततः इत्यादि—तत इति सन्धिद्वयसंयोगानन्तरम्। सीव्येत्यत्र क्षौमसूत्रेणेति शेषः। सन्धिं कर्णपालिद्वयसन्धिं सीव्य स्थिरं कुर्य्यात्, तथा बन्धेन स्थिरं कुर्य्यात्। सन्धिस्थिरीकरणानन्तरं मधुघृताभ्यां सन्धिमभ्यज्य पिचुना तूलकापिण्डेन सन्धिवेष्टनं कुर्य्यात्। सन्धिवेष्टनानन्तरञ्च सूत्रेणातिगाढं नातिशिथिलञ्च बन्धनं बोध्यम्, वाग्भटसंवादात्। कपालो मृत्पात्रकपालः ॥ ४० ॥

इति कर्णरोगचिकित्सा-विवृतिः ॥

# अथ नासारोग-चिकित्सा ।

पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥ १ ॥

उक्तसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते । पञ्चमूलीत्यादि—पञ्चमूली स्वल्पेति निश्चल । महतीत्यन्ये । चित्रकहरीतकी अत्रवाधिकारे वाच्या । सर्पिर्गुड-षडङ्गयूषौ यक्ष्मोक्तौ । इदन्तु क्रियासत्र पीनसे बोध्यम् ॥ १ ॥

## व्योषादिचूर्णम्

व्योषचित्रकतालीशतिन्तिडी चाम्लवेतसम् ।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥
व्योषादिकं चूर्णमिदं पुराणगुडसंयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ २ ॥

व्योषादिचूर्णे—व्योषस्त्रिकटु, तिन्तिडी महार्द्रकम्, अजाजी जीरकम्, एलात्वक्पत्रपादिकमिति एलात्वक्पत्रादि प्रत्येकमेकभागापेक्षया पादिकम्, गुडन्तु सर्वचूर्णसममिति निश्चल । किन्तु "तालीशचित्रकव्योषतिन्तिडीकाम्लवेतसम् । सचव्याजाजीद्विपलमेलात्वक्पत्रपादिकम् । जीर्णगुडतुलार्द्धेन पाकेन वटकीकृतम् । पीनसश्वासकासघ्नं रुचिस्वरकरं परम्" इति वाग्भटे सार्द्धोनविंशतिपलचूर्णस्तुलार्द्धस्योक्तत्वात् गुडस्य सर्वसमत्वं नोपपद्यत इति ॥ २ ॥

## पाठादितैलम्

पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्यगपीनसे ॥ ३ ॥

पाठेत्यादि—पाठादीनां कल्को जलं चतुर्गुणमिति ॥ ३ ॥

## व्याघ्रीतैलम्

व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासागदं जयेत् ॥ ४ ॥

व्याघ्रीत्यादौ—सुरसः सिन्दुवारः, पर्णास इत्यन्ये ॥ ४ ॥

त्रिकटुविडङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ५ ॥

त्रिकट्वित्यादि—अत्रापि सुरस मिन्दुवार, पर्णास इत्यन्ये। अत्र शिग्रु-वीज दन्तीवीज च ग्राह्यम्, तथा वृहतीफलस्यापि वीजम्। उक्त हि वागभटे "शिग्रुसिंहीनिकुम्भाना वीजै. सव्योपसैन्धवै। मेरणुसुरसैस्तैल मूत्रसिद्धन्तु नावनम्" इति ॥ ५ ॥

कलिङ्गहिंगुमरिच-लाक्षासुरसकट्फलैः।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीडः प्रशस्यते ॥
तैरेव मूत्रसंयुक्तै· कटुतैलं विपाचयेत्।
अपीनसे पूतिनस्ये शमनं कीर्तितं परम् ॥ ६ ॥

कलिङ्गेत्यादौ—अत्रापि सुरस पर्णासः, उग्रा वचा, क्रिमिघ्नो विडङ्ग। अत्रापि वक्ष्यमाणमूत्रसयुक्तैरित्यस्य सम्वन्ध कृत्वा अवपीडमपि मूत्रेण पिष्ट्वा कुर्य्यात्। तैलपाके तु गोमूत्रमेव चतुर्गुणमिति ॥ ६ ॥

नासापाके पित्तहरं विधानं कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च।
हरेद्रक्तं क्षीरिवृक्षत्वचश्च योज्या सेके सघृताश्च प्रदेहा·।
पूयास्रक्तपित्तघ्ना कषाया नावनानि च ॥ ७ ॥

नासापाके पित्तहर विधानमित्यत्र पित्तहृत् मन्धारणमिति पाठो रत्नप्रभा-सम्मव। हरेद्रक्तमित्यत्र हत्वा रक्तमित्यपि तथा। वाह्यमाभ्यन्तरञ्चेति—वाह्य लेपादि, आभ्यन्तर स्नेहपानादि। क्षीरिवृक्षा वटोडुम्वराद्य· पञ्च ॥ ७ ॥

शुण्ठीकुष्ठकणाविल्व द्राक्षाकल्ककषायवत्।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ८ ॥

शुण्ठीत्यादि—वाग्भटस्य। विल्व विल्वस्य मूलम्। क्षवथुपुटनुदित्येव पाठो वाग्भटे तु दृश्यते, टीकायाञ्चैवमेवोक्तम्, अस्यार्थमवुद्ध्वैव क्षवथुरुक्प्रणुदिति पाठ-मज्ञा· कुर्वन्ति। क्षवथु क्षव, पुटोऽपि नासारोगविशेष। उक्त हि वाग्भटे—"पित्तश्लेष्मावरुद्धोऽन्तर्नासाया शोषयेन्मरुत्। कफ सशुष्कपुटता प्राप्नोति पुटक हि तत्" इति ॥ ८ ॥

दीप्ते रोगे पैत्तिके संविधानं सर्वं कुर्य्यान्मधुरं शीतलञ्च।
नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्द्धि वस्तिश्च नित्यम् ॥ ९

दीप्त इत्यादि—सुश्रुतस्य । 'दीप्ते रोगे पैत्तिकमन्यानमिति' पाठ सुश्रुते दृश्यते ॥ ६ ॥

**वातिके तु प्रतिश्याये पिबेत् सर्पिर्यथाक्रमम् ।**
**पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥**
**नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।**
**पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥**
**परिषेकान् प्रदेहांश्च कुर्य्यादपि च शीतलान् ॥ १० ॥**

वातिक इत्यादि—सुश्रुतस्य । पञ्चभिर्लवणैरिति कल्करूपं सिद्धं सर्पिः पिबेत्, यथाक्रममिति स्नेहयौगिकाध्यायोक्तविध्यनतिक्रमेण । प्रथमेन गणेनेति विदारीगन्धादिगणेन वा क्वाथकल्करूपेण सिद्धं सर्पिः पिबेदित्यर्थः । तथा नस्यादिकर्मसु कर्त्तव्येषु अर्दितोक्तविधिम् अवेक्षेत जानीयात् । वाग्भटेऽप्युक्तं—"पिबेद् वातप्रतिश्याये सर्पिर्वातप्रसाधितम् । पटुपञ्चकसिद्धं वा विदार्य्यादिगणेन वा । स्वेदनस्यादिकं कुर्य्यात् चिकित्सान्चार्दितेरिताम् " इति । अन्ये त्वाहुः प्रथमेन गणेन सिद्धं सर्पिर्नस्योपनासाशिरोवस्त्यादिषु योज्यमिति, एतत्तु वाग्भटविरोधादुपेक्षणीयमिति । पित्ते इत्यादि—सुश्रुतस्य । पित्तरक्तोत्थयोः प्रतिश्याययोरिति शेषः । मधुरकैः शृतमिति काकोल्यादिभिर्विपक्वम् । शीतलानिति न्यग्रोधाद्युत्पलादिगणाः शीतलास्तैः कृतान् ॥ १० ॥

**कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ।**
**यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥ ११ ॥**

कफज इत्यादौ—तिलमाषौ कल्करूपौ, अत्र मदनफलमपि बोध्यं, वमनयोगात् । कफघ्न क्रममिति कफहरद्रव्यकृतपेयादिक्रमम् ॥ ११ ॥

**दार्व्वीङ्गुदीनिकुम्भैश्च किणिह्या सुरसेन च ।**
**वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ १२ ॥**

दार्वीत्यादि—सुश्रुतस्य । दार्वी दारुहरिद्रा, इङ्गुदी पुत्रजीवकः । निकुम्भो दन्ती तस्या बीजं मूलं वा । किणिही कटभीबीजम्, अपामार्ग इत्यन्ये । सुरसेनेत्यत्र सरलेनेति सुश्रुते पठ्यते, तन्मते सरलः सरलकाष्ठमेव । सुरसः पर्णासः, निर्गुण्डी वा । यथाविधीति वैरेचनिकधूमवर्त्तिविधानक्रमेण ॥ १२ ॥

अथवा सघृतान् शक्तून् कृत्वा मल्लिकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १३ ॥

अथवेत्यादौ—यवशक्तून् सघृतान् शरावास्थिताङ्गारे दत्त्वा तदुपरि कृतच्छिद्रेण शरावान्तरेण पिधाय तस्मिन्नेव छिद्रे नलिकां दत्त्वा धूमं पिबेदित्यर्थः ॥१३॥

यः पिबति शयनकाले शयनारूढः सुशीतलं भूरि ।
सलिलं पीनसयुक्तः स मुच्यते तेन रोगेण ॥ १४ ॥

यः पिबतीत्यादि—योगोऽयं वातपित्तोत्तरे प्रतिश्याये बोध्यः ॥ १४ ॥

पुटपक्वं जयापत्रं सिन्धुतैलसमन्वितम् ।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ १५ ॥

पुटेत्यादौ—जया जयन्ती ॥ १५ ॥

सोषणं गुडसंयुक्तं स्निग्धदध्यम्लभोजनम् ।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥ १६ ॥

सोषणमित्यादि—ऊषणं मरिचम् । योगोऽयं वातिके इत्याहुः ॥ १६ ॥

प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः ।
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥
शिरसोऽभ्यञ्जनस्वेदनस्यकट्वम्लभोजनैः ।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥ १७ ॥

प्रतिश्याय इत्यादि—चिञ्चा तिन्तिडी तस्या छदः पत्रम् । यूषः क्वाथः । अत्र हिङ्गुमरिचचूर्णं मात्रानुरूपं प्रक्षिपन्ति वृद्धाः । शिरस इत्यादौ—यथास्वमिति पक्वे शिरोऽभ्यङ्गस्वेदनस्य घृतपानादिशेषपक्के स्वेदश्च ॥ १७ ॥

भक्षयति भुक्तमात्रे सलवणमुत्स्विन्नमाषमत्युष्णम् ।
स जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥
पिप्पल्यः शिग्रुबीजानि विडङ्गमरिचानि च ।
अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ १८ ॥

भक्षयतीत्यादि—योगोऽयं वातोत्तरे बोध्यः ॥ १८ ॥

समूत्रपिष्टास्तद्विष्टाः क्रिया क्रिमिषु योजयेत् ।
नावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान् ।
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥१९॥

समूत्रेत्यादि—सुश्रुतस्य । समूत्रं यथा स्यात् तथा पिष्टा. कर्मधारयो वा । तद्दिष्टा इति सुश्रुतेऽनन्तरोक्ता सर्वा क्रिया मूत्रपिष्टा प्रतिश्याये क्रिमिसम्बन्धे सति योजयेदित्यर्थः । अन्ये तु क्रिमिषु या क्रिया उक्तास्तास्ताश्च सर्वा मूत्रपिष्टा योजयेदित्याहुः । क्रिमिघ्नानि भेषजानीति सुरसादिगणप्रभृतीनि । शेषाणान्तु विकाराणामिति नासार्बुदनासार्शःप्रभृतीनाम् । यथास्वमिति यत् यत् स्वं यथास्वमिति वीप्सायामव्ययीभाव ॥ १९ ॥

## करवीराद्यं तैलम्

रक्तकरवीरपुष्प जात्यशनमल्लिकायाश्च ।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम् ॥ २० ॥

रक्तकरवीरेत्यादौ—जाती मालती तस्या अपि पुष्पम्, अशनमल्लिका द्वाफर-मल्लिका । जात्यशनेति सन्धिताऽनिर्देशोऽसिद्धविधेरनित्यत्वात् । एतैः सममिति एतैः कल्करूपैः । पाकार्थन्तु जलं चतुर्गुणमिति ज्ञेयम् ॥ २० ॥

## शिखरितैलम्

गृहधूमकणादारु-क्षारनक्ताह्वसैन्धवैः ।
सिद्धं शिखरिवीजैश्च तैलं नासार्शसां हितम् ॥ २१ ॥

गृहधूमेत्यादौ—क्षारो यवक्षारः नक्ताह्व करञ्जबीज, शिखरिवीजमपामार्ग-बीजतण्डुलम् । अत्रापि जलं चतुर्गुणं देयम् ॥ २१ ॥

## चित्रकतैलम्

चित्रकचविकादीप्यक-निदिग्धिकाकरञ्जलवणार्कैः ।
गोमूत्रयुतं सिद्धं तैलं नासार्शसां विहितम् ॥ २२ ॥

चित्रकेत्यादौ—दीप्यकं यमानी, लवणं सैन्धवम्, अर्कमर्कक्षीरम् ॥ २२ ॥

## चित्रकहरीतकी

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम् ।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात् ॥
शतं पचेद्घनीभूते पलं द्वादशकं क्षिपेत् ।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि ॥

प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्द्रित. ।
वृद्धयेऽग्ने क्षयं कासं पीनसं दुस्तरं क्रिमीन् ।
गुल्मोदावर्त्तदुर्नामश्वासान् हन्ति रसायनम् ॥ २३ ॥
इति नासारोग-चिकित्सा ॥

चित्रकहरीतक्या चित्रकस्य पञ्चाशत् पलानि, जलशरावाः पञ्चाशत्, स्थाप्यास्तु सार्द्धद्वादश शरावा । एव चित्रकस्य क्काथस्य पलशत भवति । आमलकीस्वरसस्यापि पलशत स्वरसाभावे त्वयमेव स्वरसविधिः । एव गुडूच्या मिलितदशमूलस्य च क्काथविधि । व्योपत्रिजातयोर्मिलित्वा पलद्वादश । पलार्द्धमिति क्षारादित्यनेनैव सम्बध्यते । अपरेऽह्नीति परेण सम्बध्यते ॥ २३ ॥

इति नासरोगचिकित्साविवृति. ।

# अथ नेत्ररोग-चिकित्सा ।

लङ्घनालेपनस्वेद-शिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभि ॥ १ ॥

उक्तसवादादेव नेत्ररोगाचिकित्सामाह—अत्राभिष्यन्दस्य निखिलनेत्ररोगमूलत्वेन प्राधान्यात् प्रथमतोऽभिष्यन्दप्रतिकारमाह लङ्घनेत्यादि—लङ्घनमत्र लघ्वन्नमुपवासो वा । उक्त । हि “ प्रागेवाद्यामये भुक्त त्रिरात्रमगुरुस्थितम् । उपवासस्त्र्यह वा स्यात् ” इति । किन्तु उपावासो वातजादन्यत्र विधेयः वाग्भटसवादात् । स्वेदोऽपि पित्तज विना नयनोपान्ते मृदुर्बोध्य । यदुक्त “ हृदय वृषणौ दृष्टिं स्वेदयेत् मृदु वा नवा ” इति । शिराव्यधो रक्तदुष्टौ सत्या शिराव्यधनम् । विरेचन शिरस कायस्य च । शिरोविरेचनन्तु नवे, कायविरेचनञ्च जीर्णे ज्ञेयम् । आदिशब्देन तर्पणपुटपाकक्काथादिपरिग्रह. ॥ १ ॥

श्रीवासातिविषालोध्रैश्चूर्णितैरल्पसैन्धवै ।
अव्यक्तेऽक्षिगदे कार्य्य प्रोतस्थैर्गुण्डनं वहिः ॥ २ ॥

श्रीवासेत्यादि—श्रीवासो देवदारु । अल्पसैन्धवैरिति एकभागापेक्षया चतु-

र्भागत्व सैन्धवस्येत्याहु । अव्यक्त इति पूर्वरूपे । प्रोतमैरिति कर्पटवन्धे गुण्डन अवचूर्णनम् । एतच्च मुकुलिते चक्षु पत्रे न तु विस्तारिते ॥ २ ॥

**अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।**
**पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लङ्घनात् ॥ ३ ॥**

अक्षिकुक्षिभवा इत्यादि—कुक्षिभवा अतीसारविलम्बिकादय । पञ्चरात्रेणेत्यु पलक्षण तेन त्र्यहमपि बोध्यम् । यदाह विदेह "उपवासस्त्र्यह वा स्यात्" इति । अयञ्च मतभेदो दोषप्रकोपतारतम्यान्न विरोधमावहति ॥ ३ ॥

**स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।**
**लङ्घनञ्चाक्षिरोगाणामामानां पाचनानि षट् ।**
**अञ्जनं पूरणं क्वाथपानमामे न शस्यते ॥ ४ ॥**

स्वेद इत्यादौ—सेको वत्सकादिक्वाथादिना । चक्षु सेचनमाश्च्योतनशब्दवाच्य न तु पूरण तस्यामे निषेधात् । आश्च्योतन पुनरामे क्रियत एव यदुक्त सर्वेषामाक्षि-रोगाणामादावाश्च्योतन हितम् " इति । दिनचतुष्टयमिति दिन्चतुष्टय स्वरूपत एव ज्वराष्टाहवदिति । आमे नेत्ररोगे अञ्जनादिक न कार्य्यमित्याह अञ्जनमित्यादि— पूरणमाश्च्योतनम् ॥ ४ ॥

**धात्रीफलनिर्य्यासो नवहक्कोपं निहन्ति पूरणतः ।**
**सक्षौद्रसैन्धवो वा शिग्रूद्भवपत्ररससेकः ॥ ५ ॥**

धात्रीत्यादौ—पूरणशब्देनाश्च्योतन वाच्यम् । सक्षौद्रसैन्धवो शोभाञ्जनपत्र-स्वरसमापकचतुष्टयम् । मधु माषकम् सैन्धव रक्तिद्वयम् ॥ ५ ॥

**दार्व्वीरसाञ्जनञ्चापि स्तन्यदुग्धं प्रपूरणम् ।**
**निहन्ति शीघ्रं दाहाश्रुवेदनाः स्यन्दसम्भवा ॥ ६ ॥**

दार्व्वीत्यादि—दार्व्वीरसाञ्जन दारुहरिद्राक्वाथकृत रसाञ्जनम् । स्यन्दसम्भवा इत्यभिष्यन्दसम्भवा ॥ ६ ॥

**करवीरतरुणकिशलयच्छेदोद्भवबहुलसलिलसम्पूर्णम् ।**
**नयनयुगं भवति दृढं सहसैव तत्क्षणात् कुपितम् ॥ ७ ॥**

करवीरेत्यादौ—तरुणमभिनव यत् किशलयम्, तस्य छेदात् यो रसो निर्ग-च्छति, तेन पूरणमित्यर्थ ॥ ७ ॥

शिखरिमूलं ताम्रभाजने स्तोकसैन्धवोन्मिश्रम्।
मस्तुनिघृष्टं भरणाद्धरति नवं लोचनोत्कोपम् ॥ ८ ॥

शिखरीत्यादौ—शिखरि अपामार्ग । स्तोक सैन्धव रक्तिद्वय त्रय वा सैन्धवमित्यर्थ ॥ ८ ॥

सैन्धवदारुहरिद्रागैरिकपथ्यारसाञ्जनैः पिष्टै ।
दत्तो वहिःप्रलेपो भवत्यशेषाक्षिरोगहरः ॥
तथा शावरकं लोध्रं घृतभृष्टं विडालक ।
कार्य्यो हरीतकी तद्वद् घृतभृष्टं विडालक ॥
शालाक्येऽक्ष्णोर्वहिर्लेपो विडालक उदाहृतः ॥ ६ ॥

सैन्धवेत्यादि—एतै स्तोकसैन्धवसहितै समभागपिष्टै श्लक्ष्णवस्त्रोपरि निमीलितचक्षुषि लेपो देय । शावरक लोध्रमिति श्वेतलोध्रम् । विडालकशब्दार्थमाह शालाक्य इत्यादि—शालाक्ये शालाक्यग्रन्थे, सुश्रुत इति यावत् ॥ ६ ॥

गिरिमृच्चन्दननागरखटिकांशयोजितो वहिर्लेप. ।
कुरुते वचया मिश्रो लोचनमगदं न सन्देहः ॥ १० ॥

गिरिमृदित्यादौ—अशो भाग. । एतै समभागपिष्टैश्चक्षु समीपे लेप कार्य्य इत्याहु ॥ १० ॥

भूम्यालकी घृष्टा ससैन्धवगृहवारियोजिता ताम्रे ।
याता घनत्वमक्ष्णोर्जयति वहिर्लेपत पीडाम् ॥ ११ ॥

भूम्यामलकीत्यादौ—गृहवारि काञ्जिकम् ॥ ११ ॥

आश्च्योतनं मारुतजे क्वाथो विल्वादिभिर्हितः ।
कोष्ण· सैरण्डवृहतीतर्कारीमधुशिग्रुभिः ॥ १२ ॥

आश्च्योतनमित्यादि—आश्च्योतनमक्षिसेक । विल्वादि महत् पञ्चमूलम् । तर्कारी जयन्ती । मधुशिग्रु रक्तशोभाञ्जनम् विल्वादिभिरित्यस्य सैरण्डेत्यादिविशेषणम्, तेन एक एवाय योग·, यदाह जतूकर्ण —महत्पञ्चमूलरुवुकाशिग्रुतर्कारीसिंहीक्वाथ ” इति । किन्तु तन्त्रान्तरे केवलविल्वादिक्वाथेनाप्यय योगो दृश्यते, यथा—“पूरण तीव्रशूलघ्न तथा विल्वादिजाम्भसा” इति । किन्तु योगद्वयपक्षे सैरण्डेति,- वृहतीविशेषणम्, न तु विल्वादिविशेषणम्, एकयोगत्वाप्रसङ्गात् ॥१२॥

एरण्डपल्लवे मूले त्वचि चाजं पयः श्रृतम् ।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥१३॥

एरण्डेत्यादि—सुश्रुतस्य । एरण्डपल्लवादिकण्टकार्य्यन्त एक एवायं योग विदेहसंवादात् । यथा—"कण्टकारीशिफैरण्डमूलत्वक्पत्रसाधितम् । क्षीरमाज हित सेके चक्षु स्यन्दाधिमन्थयो" इति । आज पयोऽत्र क्षीरपरिभाषयैव साध्यम् । अन्ये त्वाहु —एतद्योगानन्तर सुश्रुते "सैन्धवोदीच्ययष्ट्याह्व पिप्पलीभि श्रृत पय । हितमर्द्धोदक सेके इति पठ्यते, एतद्वचनन्तु आश्च्योतनक्षीरसाधनार्थं परिभाषास्थानीयम्, तेनात्रापि अर्द्धोदक क्षीर साध्यमिति । किन्त्वत्र शेषानुक्त्या क्षीरपरिभाषयैव साधनमिति युक्तमुत्पश्याम । व्यवहारोऽपि क्षीरपरिभाषयेवेति ॥१३॥

सम्पक्केऽक्षिगदे कार्य्यञ्चाञ्जनादिकमिष्यते ।
प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता ।
मन्दवेदनता कण्डूः पक्काक्षिगदलक्षणम् ॥
अञ्जनादिविधिश्चाग्रे निखिलेनाभिधास्यते ।
बृहत्येरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥१४॥

अञ्जनादिविधानस्य समयमाह सम्पक्क इत्यादि—पक्काक्षिरोगलक्षणमाह प्रशस्तेत्यादि—प्रशस्तवर्त्मता दोषाणामभिभूतवर्त्मता, सरम्भः शोथ. । एतच्च लक्षण प्रायस्त्र्यहादुपरि ज्ञेयम्, यदाह चरक — 'सम्पक्के चाञ्जन त्र्यहात्" इति अञ्जनादिविधिरित्यादि—अग्र इति आश्च्योतनाद्यधिकारे ॥१४॥

हरिद्रे मधुकं द्राक्षां देवदारु च पेषयेत् ।
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥१५॥

हरिद्रे इत्यादि—सुश्रुतस्य । अत्र द्राक्षास्थाने पथ्येति केचित् पठन्ति ॥१५॥

गैरिकं सैन्धवं कृष्णातगरञ्च यथोत्तरम् ।
पिष्टं द्विरंशतोऽद्भिर्वा गुडिकाञ्जनमिष्यते ॥१६॥

गैरिकमित्यादि—सुश्रुतस्य । तत्र तगरस्थाने नागरमिति निश्चल पठति । यथोत्तर द्विरशत इति यथोत्तरभागतो द्विगुणमित्यर्थ । तेन गैरिकमाषा १, सैन्धव-

माषा २, पिप्पलीमाषा ४, तगरमाषा ८ । अद्भिर्वेति वाशब्दाच्छागीक्षीरमपि बोध्यम् ॥१६॥

**प्रपौण्डरीकयष्ट्याह्व-निशामलकपद्मकैः ।**
**शीतैर्मधुसमायुक्तैः सेक पित्ताक्षिरोगनुत् ॥१७॥**

प्रपौण्डरीकमित्यादौ—शीतैरिति प्रपौण्डरीकादाना कषायै शीतलैरित्यर्थ समायुक्तैरित्यत्र सितायुक्तैरिति केचित् पठन्ति । सितायुक्तैरिति पाठे मधुवत् सिता प्रक्षेप्येत्यर्थ ॥१७॥

**द्राक्षामधुकमञ्जिष्ठा-जीवनीयैः शृतं पयः ।**
**प्रातराश्च्योतनं पथ्यं शोथशूलाक्षिरोगिणाम् ॥१८॥**

द्राक्षेत्यादौ—जीवनीयशब्देन जीवनीयाष्टवर्ग गृह्णन्ति ॥१८॥

**निम्बस्य पत्रैः परिलिप्य लोध्रं स्वेदाग्निना चूर्णमथापि कल्कम् ।**
**आश्च्योतनं मानुषदुग्धमिश्रं पित्तास्रवातापहमग्र्यमुक्तम् ॥१९॥**

निम्बस्येत्यादि—निम्बपत्र पिष्ट्वा तत्पिण्डमध्ये लोध्रकल्क चूर्ण वा प्रक्षिप्य पत्रेण वेष्टयित्वा अङ्गारैरुत्स्विद्य नारीक्षीरेण संमिश्र्य वस्त्रेण गालयित्वा चक्षु सेको विधेय इति ॥१९॥

**कफजे लङ्घनं स्वेदो नस्यं तिक्तान्नभोजनम् ।**
**तीक्ष्णैः प्रधमनं कुर्य्यात् तीक्ष्णैश्चैवोपनाहनम् ॥२०॥**

कफजनेत्ररोगचिकित्सामाह—कफज इत्यादि ॥२०॥

**फणिज्झकास्फोतकपीतबिल्वपत्तूरपीलूसुरसार्जभङ्गैः ।**
**स्वेदं विदध्यादथवा प्रलेपं बर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥२१॥**

फणिज्झक पर्णासभेद, निर्गुण्डीत्यन्ये । आस्फोता हाफरमल्लिका, छान्दसत्वाद्ध्रस्वत्वम् । पत्तूर शालिञ्चशाक. । पीलु औत्तरापथिकतरु, अतएव निर्देशात् पीलुशब्दो दीर्घोकारान्तोऽपि ज्ञेय । सुरसार्जावपि पर्णासभेदौ । एषा भङ्गै पल्लवैर्न्यस्तसमस्तैरङ्गारतापितैश्चक्षुषोर्मृदुस्वेद कार्य्य. । बर्हिष्ठ वालकम् । अत्रैव तन्त्रान्तरदर्शनात् अर्जस्थाने अर्क इति केचित् पठन्ति । तन्त्रान्तरे यथा—"कपित्थसुरसास्फोतपीलुपत्तूररूपिका । फणिज्झबिल्वच्छदनै स्वेद स्यन्दाधिमन्थयो" । रूपिका अर्क ॥२१॥

**शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः स्वल्पसैन्धवैः।**
**धार्य्यश्चक्षुषि सङ्क्षेपाच्छोथकण्डूव्यथापहः॥ २२॥**

शुण्ठीत्यादौ—निम्बपत्रापेक्षया शुण्ठी स्वल्पा देया, सैन्धवमपि चतु पञ्च रक्तिकामिति वदन्ति। एषा पिण्ड कदुष्ण एव चक्षुषोरुपरि सूक्ष्मवस्त्र दत्त्वा देय इत्युपदेश। सक्षेपादित्यादौ प्रक्रियात्॥ २२॥

**वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम्।**
**कफोद्भूताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा॥ २३॥**

वल्कलमित्यादि—पारिजात पारिभद्र। पारिभद्रवल्कलस्वरसस्य माषकत्रय सैन्धवस्य रक्तिद्वय त्रय वा, काञ्जिकन्तु निकुञ्चमात्रम्। निकुञ्चस्तु आमुष्टांगुलि-चतुष्टयपरिमित। एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकैकेन तावद्घर्षणीय यावद् घन भवति। चक्षुष्यञ्जन देयमिति वृद्धा व्यवहरन्ति॥ २३॥

**ससैन्धवं लोध्रमथाज्यभृष्टं**
**सौवीरपिष्टं सितवस्त्रवद्धम्।**
**आश्च्योतनं तन्नयनस्य कुर्य्यात्**
**कण्डूञ्च दाहञ्च रुजाञ्च हन्यात्॥ २४॥**

ससैन्धवमित्यादि—सैन्धवस्य रक्तिद्वय, लोध्रस्य माषकचतुष्टय काञ्जिकेन पिष्ट्वा गव्यघृतेन भृष्ट्वा निर्मलसूक्ष्मवस्त्रेण बद्ध्वा अगुलीद्वयेन सम्पीड्य चक्षुषि तद्रसो देय॥ २४॥

**स्निग्धैरुष्णैश्च वातोत्थः पित्तजो मृदुशीतलैः।**
**तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यन्ति कफात्मकाः।**
**तीक्ष्णोष्णमृदुशीतानां व्यत्यासात् सान्निपातिकः॥२५॥**

सक्षेपेण वातजादीना चिकित्सामाह स्निग्धैरित्यादि—विशदैरित्यपि-च्छिलै। तीक्ष्णोष्णमृदुशीतलाना व्यत्यासोऽत्र परस्परविपर्य्ययेणोपयोगः, तेन तीक्ष्णमुपयुज्य तद्विपरीतस्य मृदुन उपयोग, एव मृदुद्रव्यमुपयुज्य तीक्ष्णस्योपयोग, एवमुष्णशीतयोरपि व्यत्यासो ज्ञेय। किंवा परस्परविरुद्धाना भावाना समिश्रणेन उपयोगो व्यत्यासोपयोग। तीक्ष्णोष्णमृदुशीतलानामित्युपलक्षण तेन स्निग्धरूक्षा-दीनामपि ग्रहण वोध्यम्॥ २५॥

तिरीटत्रिफलायष्टीशर्कराभद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः॥ २६॥

तिरीटेत्यादि—तिरीट पट्टिकालोध्रम्। एषा प्रत्येक माषकमेक गृहीत्वा श्लक्ष्ण पिष्ट्वा शीतलजलेन पलैकेन सामिश्र्य परिषेकः कार्य्यः॥ २६॥

कशेरुमधुकानाञ्च चूर्णमम्बरसंयुतम्।
न्यस्तमप्स्वान्तरीक्षासु हितमाश्च्योतनं भवेत्॥२७॥

कशेर्वित्यादि—सुश्रुतस्य। कशेरुयष्टिमधुनो प्रत्येक माषकचतुष्टय गृहीत्वा सूक्ष्मवस्त्रेण बद्ध्वा आकाशोदके पलैके निक्षिप्य तेन जलेन सेक, आकाशोदकाभावे हंसोदकेन॥ २७॥

दार्वीपटोलमधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीकञ्चैतानि पचेत्तोये चतुर्गुणे॥
विपाच्य पादशेषन्तु तत् पुनः कुडवं पचेत्।
शीतीभूते तत्र मधु दद्यात् पादांशिकं ततः।
रसक्रियैषा दाहाश्रुरागरक्तरुजापहा॥ २८॥

दार्व्यादौ—पटोलनिम्बयो पत्र, पद्मक पद्मकाष्ठम्, उत्पल नीलोत्पलम्। एषा मिलित्वा कुडवश्चतुष्पलो ग्राह्य। पाकार्थञ्च जलस्य द्वात्रिंशत् पलानि। 'ततस्तु कुडव यावत् तोयमष्टगुण भवेत्'' इति वचनात् तत कुडवोऽष्टपलः स्थाप्य। तद्वस्त्रपूत कृत्वा पुन पक्तव्यमाघनीभावात्, तत शीते मधुपलद्वय प्रक्षेप्य, ततोऽञ्जन कार्य्यमिति॥ २८॥

तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः।
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः॥ २९॥

तिक्तस्येति—तिक्त सर्पिर्वक्ष्यमाणपटोलादिघृतम्। विरेचनञ्च वक्ष्यमाणषडङ्गादिना॥ २९॥

शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसम्पुटे।
घृतेन धूपितो हन्ति शोथघर्षाश्रुवेदनाः॥ ३०॥

शिग्रुपल्लवेत्यादौ—निर्यासः स्वरस, घृतेन सह ताम्रपत्रे घृष्ट इत्यन्वय।

धूपित इति करीषाग्निना। अन्ये तु करीषाग्नौ घृतं दत्त्वा तेन धूमेन धूपित इति व्याचक्षते। घर्ष करकरिकाख्यवेदनाविशेष ॥ ३० ॥

पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रा
अन्तर्गर्भे दधाना पटुतरगुडिका पिष्टलोध्रेन भृष्टा।
तूलैः सौवीरसार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात्
चक्षुःकोपप्रशान्तिं चिरमुपरि दृशोर्भ्राम्यमाणा करोति। ३१॥

पिष्टैरित्यादि—जातिसिन्धूत्थ सारसैन्धव, जातिर्जातीकलिकेत्यन्ये। अन्तर्गर्भं दधानेति पिष्टनिम्बपत्रपिण्डाभ्यन्तरे लोध्रकल्कापिण्ड निक्षिप्य कृता गुडिकेत्यर्थ। भृष्टा इति खर्परे मनाग्भृष्टेत्यर्थ। तदनु सौवीरेण काञ्जिकेन सार्द्रैरिति ईषदार्द्रैस्तूलकैर्वेष्टिता चक्षुषोरुपरि भ्राम्यमाणेत्यर्थ ॥ ३१ ॥

## बिल्वाञ्जनम्

बिल्वपत्ररसः पूत सैन्धवाज्येन चान्वितः।
शुल्वे वराटिकाघृष्टो धूपितो गोमयाग्निना ॥
पयसालोडितश्चाक्ष्णोः पूरणाच्छोथशूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते ॥ ३२ ॥

बिल्वपत्रेत्यादौ—शुल्व इति ताम्रपात्रे, पयसेति नारीस्तन्येन। वस्त्रपूतबिल्वपत्ररसस्य माषकचतुष्टय सैन्धवस्य रक्तिद्वय, घृतस्य बिन्दुचतुष्टयम्। एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीय यावद्घन भवति। तदनु न्युब्जीकृतताम्रपात्रे शुष्कगोमयाग्निना धूपयित्वा नारीक्षीरेण तरलीकृत्य चक्षु पूरणम् ॥ ३२ ॥

सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम् ॥ ३३ ॥

सलवणेत्यादौ—सैन्धवस्य रक्तिद्वयं, कटुतैलस्य बिन्दुचतुष्टय, काञ्जिकस्य माषकचतुष्टयम्। उपल प्रस्तरखण्डस्तेन घृष्ट, किंवा उपलशब्देन चक्षुष्यत्वात् रसाञ्जनादिशिलैव ग्राह्या वृद्धास्तु वराटिकयैव व्यवहरन्ति ॥ ३३ ॥

तरुस्थविद्धामलकरसः सर्वाक्षिरोगनुत् ॥ ३४ ॥

तरुस्थेत्यादि—तरुस्थस्यैवामलकीफलस्य सूच्यादिभिर्विद्धस्य यो रसो निर्गच्छतीत्यर्थ ॥ ३४ ॥

**पुराणं सर्वथा सर्पिः सर्वनेत्रामयापहम् ॥ ३५ ॥**

पुराण सर्पिर्दशवर्षस्थित, तदभावे सवत्सरातीतमपि पुराण ग्राह्यमित्याहुः । उक्त हि—"अल्पाभिष्यन्दि मधुर यच्च सवत्सरोषितम् । अनुत्क्लेदश्च दोषाणा पुराण तत् प्रकीर्त्तितम्" इति । सर्वथेति पाननस्याञ्जनैरित्यर्थ ॥ ३५ ॥

**अयमेव विधि सर्वो मन्थादिष्वपि शस्यते ।**
**अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ ३६ ॥**

अयमेव विधिरित्यादि—वाग्भटस्य । अयमभिष्यन्दोक्तः । आदिशब्दात् अन्यतोवातादय ॥ ३६ ॥

**जलौकःपातनं शस्तं नेत्रपाके विरेचनम् ।**
**शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत् ॥ ३७ ॥**

नेत्रपाकचिकित्सामाह जलौक इत्यादि—स्पष्टम् ॥ ३७ ॥

## षडङ्गगुग्गुलुः

**विभीतकशिवाधात्रीपटोलारिष्टवासकैः ।**
**क्वाथो गुग्गुलुना पेयः शोथपिल्लादिशूलनुत् ॥**
**विल्वञ्च सव्रणं शुक्रं रागार्द्धांश्चापि नाशयेत् ।**
**एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ ३८ ॥**

विभीतकेत्यादौ—पिल्ल पञ्जोजिका, किंवा "प्रक्षालिते तथा नष्टे आनद्धेन पुन पुन । अपरिक्लिन्नवर्त्मान त पिल्लमिति निर्दिशेत्" इत्युक्तलक्षणैः । अत्र घृतपाकपक्षे तु विभीतकादीना क्वाथे गुग्गुलु गृहीत्वा घृतेन पिष्ट्वा वटिका कुर्य्यादित्युपदिशन्ति वृद्धा. ॥ ३८ ॥

## वासकादि

**आटरूपाभयानिम्बधात्रीमुस्ताक्षकुलकैः ।**
**रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ ३९ ॥**

आटरूषेत्यादि—आटरूपक वासकम् । एतै कृतक्वाथेन चक्षु सेचन, तथा गुग्गुलु प्रक्षिप्य विरेचनमप्युपदिशन्ति वृद्धा ॥ ३९ ॥

पथ्यास्तिस्रो विभीतक्यः षड् धात्र्यो द्वादशैव तु ।
प्रस्थार्द्धे सलिले क्वाथमष्टभागावशेषितम् ॥
पीत्वाभिष्यन्दमास्रावं रागञ्च तिमिरं जयेत् ।
संरम्भरागशूलाश्रुनाशनं दृक्प्रसादनम् ॥ ४० ॥

पथ्या इत्यादौ—प्रस्थार्द्धं इति द्रवद्वैगुण्यात् शरावद्वयं । पीत्वेति साय-
मित्याहुः ॥ ४० ॥

नेत्रे त्वभिहते कुर्य्याच्छीतमाश्च्योतनादिकम् ॥
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः ।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥४१॥

आगन्तुनेत्ररोगचिकित्सामाह नेत्र इत्यादि—आदिशब्दात् सेकादीनां ग्रह-
णम् । दृष्टीत्यादि—सुगमम् । दृष्टिप्रसादजननं नयनावरकदोषनाशनम् । येन दृष्टि-
प्रसादनं कार्य्यमित्याह स्निग्धैरित्यादि । स्वेदादिकृता रुजा एव उपघातो रोगो
रोगजनकत्वादुच्यते । अभ्याहतामित्यनन्तरं दृष्टिमिति शेषः । तथैवेत्यनन्तरोक्तस्निग्ध-
हिमादिविधिना ॥४१॥

आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वक्त्रोष्मणा स्वेदितमादितस्तु ।
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥
सूर्य्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि कार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः ॥४२

आगन्त्वित्यादि—आगन्तुदोषं भूल्याद्यभिघातम् । वक्त्रोष्मा च वस्त्रपुटो ग्राह्यः ।
यच्चापि पित्तक्षतजापहं स्यादिति पित्ताभिष्यन्दे रक्ताभिष्यन्दे च यदुक्तं तदपि
हितम् । त्रिफलाप्रयोगा इति त्रिफलाक्वाथेन चक्षुःसेकादयः ॥४२॥

निशाब्दत्रिफलादार्व्वीसितामधुकसंयुतम् ।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ।
इत्कटाङ्कुरजस्तद्वत् स्वरसो नेत्रपूरणम् ॥४३॥

निशेत्यादि—एषां चूर्णं नारीक्षीरे प्रक्षिप्य पूरणम् । तद्वदिति अभिघाताक्षि-
शूलघ्न इत्यर्थः ॥४३॥

**आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च ।**
**जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्विपाचयेत् ।**
**सर्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥४४॥**

आजमित्यादि—आज घृतमिह प्रस्थमानम् । क्षीरपात्रमिति पात्रञ्चाढकम्, द्रवद्वैगुण्यात् षोडशशरावा , क्षीरञ्चेह गव्यमेव, विशेषाभावात् । अन्ये तु घृतसाहचर्य्यात् क्षीरमप्याजमाहु । सर्पिषोर्द्विरुच्चारणमिह नस्ये तर्पणे च हितत्वप्रतिपादनार्थमिति वदन्ति । जेज्जटस्तु आजघृतस्य कल्कत्वमेवाह, तेन तन्मते द्वितीयसर्पिपदस्य गव्यघृतमेवार्थ इति ॥४४॥

**सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम् ।**
**स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥४५॥**

शुष्काक्षिपाकरोगचिकित्सामाह सैन्धवमित्यादि—सुश्रुतस्य । स्तन्योदकाभ्यामिति उपलक्षणे सहार्थे वा तृतीया । सैन्धवदारुशुण्ठीना मिलित्वा पादिक कल्क कार्य्य , पादिकत्वञ्च मिलितमातुलुङ्गरसादिद्रवचतुष्टयमपेक्ष्य । सैन्धव माषकद्वयम्, देवदारुशुण्ठ्योस्तु प्रत्येक माषकचतुष्टयम्, मातुलुङ्गरसादीना चतुर्णां प्रत्येक द्वादशमाषका । सर्वमेकीकृत्य मृद्वग्निना पक्तव्य यावत् घनीभवति । ततोऽञ्जन कार्य्यम् । रसक्रियेयम् । अन्ये तु स्तन्योदकानामिति पठित्वा स्त्रीक्षीरजलयोर्मिलितयो समुदयार्द्धमानम् । सैन्धवदारुशुण्ठीमातुलुङ्गरसघृताना समभाग । सैन्धवदारुशुण्ठीना कल्कम् । मातुलुङ्गरसादिद्रवचतुष्टयेनाप्लाव्याञ्जन कार्य्यम् । रसक्रियेयमिति । अन्ये तु स्तन्योदकार्द्धमिति व्याचक्षते ॥४५॥

**वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये ।**
**पूर्वभक्तं हितं सर्पि क्षीरञ्चाप्यथ भोजने ॥४६॥**

वातादिचिकित्सामाह, वातेत्यादि—पूर्वभक्तमिति भक्तात् पूर्वमिति । अन्यतो वाते वातपर्य्यये च क्षीरपानम्, अनयो. पित्तरक्तावद्धत्वात् ॥४६॥

**वृक्षादन्यां कपित्थे च पञ्चमूले महत्यपि ।**
**सक्षीरं कर्कटरसे सिद्धञ्चापि पिवेद् घृतम् ॥४७॥**

वृक्षादन्यामित्यादि—वृक्षादनी वन्दा । वृक्षादन्यादिभि कल्क , क्षीरं स्नेहसमम्, कर्कटरसस्तु त्रिगुण , एव घृत साध्यमिति श्रीकण्ठ । गयदासस्तु वृक्षादन्यादीना पञ्चमूलान्ताना मिलित्वा द्विगुणः क्काथ , क्षीरकर्कटरसयोस्तु प्रत्येक स्नेहसमः क्काथ., एव क्षीरकर्कटरसावपि, इति पञ्चगुण पाक इत्याहु. ॥४७॥

अभिष्यन्दमधीमन्थं रक्तोत्थमथवार्ज्जुनम् ।
शिरोत्पातं शिराहर्षमन्यांश्चाक्षिभवान् गदान् ॥
स्निग्धस्याज्येन कौम्भेन शिरावेधं शमं नयेत् ।
अम्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम् ।
शिराव्यधं विना कार्य्यः पित्तस्यन्दहरो विधिः ॥
सर्पिःक्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम् ।
तद्वत् सैन्धवकाशीशं स्तन्यपिष्टञ्च पूजितम् ॥
शिराहर्षेऽञ्जनं कुर्य्यात् फाणितं मधुसंयुतम् ।
मधुना तार्क्ष्यशैलं वा काशीशं वा समाक्षिकम् ॥ ४८ ॥

अभिष्यन्दमित्यादौ—अन्यांश्चेति शुक्रादीन् । कौम्भ सर्पिर्दशवर्षस्थितम् । अम्लाध्युषितमित्यादौ—तैन्दुक सर्पिर्वातव्याधौ सुश्रुतेनोक्तम् । त्रैफल त्रिफलाक्वाथकल्काभ्या सिद्धम् । केवलमित्यसस्कृतम् । सर्पिरित्यादि—सुश्रुतस्य । अञ्जन सौवीराञ्जनम् । घृतमधुभ्यां सौवीराञ्जन पिष्ट्वा वर्त्ति कार्य्या । भेषजमित्यञ्जनरूपम् । तद्वदिति शिरोत्पातभेषजमित्यर्थ । काशीश पुष्पकाशीशम्, धातुकाशीशमित्यन्ये, व्यवहारस्तु पूर्वेण । फाणित द्रवगुड । तार्क्ष्यशैल रसाञ्जनम् ॥ ४८ ॥

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत् ।
कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च ।
कांस्ये निघृष्टं स्तन्येन क्षतशुक्रार्त्तिरागजित् ॥ ४९ ॥

कतकस्येत्यादि—कतक तोयप्रसादनफल प्रायो मगधे भवति । शङ्ख नाभिशङ्खम्, तिन्दुक तिन्दुकफलास्थि, रूप्य रूप्यचूर्णम् । एषा समभाग गृहीत्वा कांस्यपात्रे स्तन्येन घर्षणीयम् । क्षतशुक्र व्रणशुक्रम् ॥ ४९ ॥

चन्दनं गैरिकं लाक्षा मालतीकलिका समा ।
व्रणशुक्रहरा वर्त्तिः शोणितस्य प्रसादनी ॥
शिरया वा हरेद्रक्तं जलौकोभिश्च लोचनात् ।
अक्षमज्जाञ्जनं सायं स्तन्येन शुक्रनाशनम् ॥ ५० ॥

चन्दनमित्यादौ—गैरिक स्वर्णगैरिकम्, तच्चात्यन्तरक्त मृदु च यद्गैरिकमिति । पेषणन्तु जलेन, वृद्धा गगनजलेन व्यवहरन्ति, तदभावे तद्गुणेन वा, एव-

मन्यत्रापि द्रवानुक्तस्थाने बोध्यम्। तथा छायाशोषण, मधुना घृष्ट्वा चाञ्जनमित्यपि विशेषाभावस्थाने व्यवहारो वृद्धानाम्। अचेत्यादौ—स्तन्येनेत्यत्र मध्वपि बोध्यं सुश्रुतसवादात्॥ ५०॥

**एकं वा पुण्डरीकञ्च छागीक्षीरावसेचितम्।**
**रागाश्रुवेदनां हन्यात् क्षतपाकात्ययाजकाः॥ ५१॥**

एकमित्यादि—एक श्रेष्ठमिति वा तच्च उत्तरापथज पुण्डरीककाष्ठ पिष्ट्वा वस्त्रेण पोट्टलीं वद्ध्वा छागीक्षीरे स्थाप्यम्, यदा पीतवर्ण दुग्ध भवति, तदा चक्षुषि दुग्ध देयम्। प्रबलरक्तदुष्टौ योगोऽयम्॥ ५१॥

**तुत्थकं वारिणा युक्तं शुक्रं हन्त्यक्षिपूरणात्।**
**समुद्रफेनदक्षाण्डत्वक्सिन्धूत्थैः समाक्षिकैः।**
**शिग्रुबीजयुतैर्वर्त्ति शुक्रघ्नी शिग्रुवारिणा॥ ५२॥**

तुत्थकमित्यादि—अत्र मध्वपि बोध्य सुश्रुतसवादात्। समुद्रेत्यादौ—दक्षाण्डत्वक्, कुक्कुटाण्डकपालम्। समाक्षिकैरिति स्वर्णमाक्षिकसहितैरिति केचित्। अन्ये तु मधु वदन्ति। समाक्षिकैरित्यत्र सशङ्खकैरिति पाठ शङ्खक शङ्खनाभि.। शिग्रुवारिणेति, शोभाञ्जनरसेन पिष्ट्वा वर्त्ति. कार्य्या॥ ५२॥

**'धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरं तिलाश्च।**
**क्वाथो सुशीतो नयने निषिक्त सर्वप्रकारं विनिहन्ति शुक्रम्॥**
**क्षुण्णपुन्नागपत्रेण परिभावितवारिणा।**
**श्यामाक्वाथाम्बुना वाथ सेचनं कुसुमापहम्॥ ५३॥**

धात्रीत्यादौ—निम्बस्य कपित्थस्य च पत्रम्। क्वाथ इत्यत्र एषामिति शेष.। सर्वप्रकारमिति सव्रणमव्रणञ्च। क्षुण्णेत्यादि—क्षुण्ण शिलाया जर्जरीकृत पुन्नागस्य नागकेशरस्य यत् पत्रम्, तेन भावित यद्वारि, तन। श्यामा श्यामालता, तस्या क्वाथरूपमम्बु। कुसुमापहमिति शङ्खेन्दुकुन्दवर्णं शुक्रमेव कुसुम तन्नाशनम्॥ ५३॥

**दक्षाण्डत्वक्शिलाशङ्ख काचचन्दनगैरिकैः।**
**तुल्यैरञ्जनयोगोऽयं पुष्पार्मादिविलेखनः॥ ५४॥**

दक्षेत्यादि—दक्ष' कुक्कुट, गोष्ठकुक्कुट इत्यन्ये, शिला मन शिला, शङ्ख' शङ्खनाभि, एवं सर्वत्र। काचः स्वनामख्यात॥ ५४॥

शिरीषवीजमरिच पिप्पलीसैन्धवैरपि ।
शुक्रे प्रघर्षणं कार्य्यमथवा सैन्धवेन च ॥ ५५ ॥

शिरीषेत्यादि—शिरीषादिचूर्णैर्मध्वाक्तशलाकास्थितैर्घर्षणं कार्य्यम् । सैन्धवेनेति केवलसैन्धवचूर्णेन, अन्ये तु मसृणसैन्धवखण्डेनेत्याहुः ॥ ५५ ॥

वहुशः पलाशकुसुमस्वरसैः परिभाविता जयत्यचिरात् ।
नक्ताह्वबीजवर्त्तिः कुसुमचयं दृष्टु चिरजमपि ॥ ५६ ॥

वहुश इत्यादि—वहुशः सप्ताहम् । नक्ताह्वबीजेति करञ्जवीजस्य चूर्णं कृत्वा पलाशकुसुमस्वरसेन वर्त्तिः कार्य्या ॥ ५६ ॥

सैन्धवत्रिफलाकृष्णा-कटुकाशङ्खनाभयः ।
सताम्ररजसो वर्त्ति पिष्टशुक्रविनाशिनी ॥ ५७॥

सैन्धवेत्यादौ—कटुका कटुरोहिणी, ताम्ररजस्तु मारितताम्रचूर्णम् । पिष्टशुक्रविनाशिनीति–पिष्टाख्यनेत्ररोगः, "विन्दुभिः पिष्टधवलैरुत्सिन्नैः पिष्टकं वदेत्" इत्युक्तलक्षणं ॥ ५७ ॥

चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलेखनम् ॥ ५८ ॥

चन्दनमित्यादौ—पलाशतरुशोणितं किंशुकवृक्षवेष्टकम् । रक्तचन्दनस्य माषकः, सैन्धवस्य द्वौ, पथ्यायास्त्रय इति वृद्धिक्रमः । एतच्चूर्णाञ्जनं मध्वाक्तशलाकया चक्षुषि देयम्, एवं सर्वत्र चूर्णाञ्जने ॥ ५८ ॥

## दन्तवर्त्तिः

दन्तैर्हस्तिवराहोष्ट्रगवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधि-फेनैर्मरिचपादिकैः ॥
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत् ॥ ५९ ॥

दन्तैरित्यादि—वाग्भटस्य । मरिचपादिकैरिति समुदितचूर्णापेक्षया मरिचस्य चतुर्थो भागः । पेषणञ्चात्र जलेन वाग्भटसंवादात् ॥ ५९ ॥

शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।

पिच्चिटे मधुना योज्यमर्ब्बुदे मस्तुना तथा ॥६०॥

शङ्खेत्यादि—शङ्ख शङ्खनाभि । नाभिशङ्ख मा ४, मन शिला मा २, मरिच मा १, सैन्धव र ५ । चूर्णाञ्जनमिति मध्वाक्तशलाकया सगृह्य शुक्रदेश घर्षयेत् । ततः त्रिफलाक्काथेन प्रक्षालन कार्य्यमिति । शुक्रयोरिति सव्रणाव्रण-शुक्रयो ॥ ६० ॥

ताप्यं मधुकसारो वा वीजञ्चाक्षस्य सैन्धवम् ।
मधुनाञ्जनयोगा स्युश्चत्वारः शुक्रशान्तये ॥ ६१ ॥
वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः ।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥ ६२ ॥

ताप्यमित्यादि—ताप्य स्वर्णमाक्षिकम्, अक्षस्य वीज विभीतकास्थिमज्जा ॥ ॥ ६१ ॥ ६२ ॥

त्रिफलामज्जमङ्गल्यामधुकं रक्तचन्दनम् ।
पूरणं मधुसंमिश्रं क्षतशुक्राजकाश्रुजित् ॥ ६३ ॥

त्रिफलेत्यादौ—मङ्गल्या गोरोचना, मधुक यष्टिमधु । एतै सममागैर्मधुना पूरण कार्य्यम् ॥ ६३ ॥

तालस्य नारिकेलस्य तथैवारुष्करस्य च ।
करीरस्य च वंशानां कृत्वा क्षारं परिस्रुतम् ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम् ।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत् ॥
एतच्छुक्लेष्वसाध्येषु कृष्णीकरणमुत्तमम् ।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ॥ ६४ ॥

तालस्येत्यादि—तालस्य जटा, नारिकेलस्य फलास्थि, अरुष्करो भल्लात, तस्य फल, वशकरीरस्य तु पाखरी । एतत् सर्वं तिलनालाग्निना दग्ध्वा भस्म ग्राह्य, तच्च भाव्य-द्रव्यसम गृहीत्वा अष्टगुणोदके षोडशगुणोदके वा नि क्काथ्य अर्द्धावशेष पादशेष वैकविंश तिवारान् स्रावयेत् । अन्ये तु क्काथमकृत्वा चतुर्गुणेन षोडशगुणेन वा जलमात्रेण स्रावणमाहु वाग्भटसवादात् । अपर तु भाव्यद्रव्यसम भस्म चतुर्गुणेन षोडश-गुणेन वा अम्बुना नि क्काथ्य अर्द्धावशेषेण विस्रावण वदन्ति । व्यवहारस्तु पूर्वेणैव ।

परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वासरान् करभास्थिचूर्णं भाव्यम्। करभ उष्ट्र। एतच्च प्रतिभावनमेव चूर्णीकर्त्तव्य, तच्चूर्ण मध्वाक्तशलाकया सगृह्य शुक्लदेश घर्षयेत्। ततश्च त्रिफलाक्वाथेनाक्षिप्रक्षालनमिति क्रियापरिपाटी। क्षारैर्यति क्षारोदकेन। एतच्छुक्लेष्वसाध्येष्विति अनेन शुक्लस्यासाध्यस्य वैवर्ण्यनाशन पर क्रियते, न पुन शुक्लनाशनमिति दर्शयति। यानि शुक्लानि साध्यानीत्यादि पाठो युक्त, न तु शुक्लान्यसाध्यानीति। " नारिकेलास्थिभल्लाततालवशकरीरजम्। भस्माद्भि स्रावयेत् ताभिर्भावयेत् करभास्थिजम्। चूर्णं शुक्लेष्वसाध्येषु तद् वैवर्ण्य-प्रभञ्जनम्। साध्येषु साधनीयमिदमेव। निश्चलेन पुनरसाध्यानीति पठित्वा एतच्च न कदाचिदपि साध्यशुक्लगोचरतया प्रयोक्तव्यमिति यद्व्याख्यात तदपास्तम्, उक्त-वाग्भटवचनविरोधादेव ॥६४॥

## पटोलाद्यं घृतम्

पटोलं कटुकां दार्वीं निम्बं वासां फलात्रिकम्।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम्॥
प्रस्थमामलकानाञ्च क्वाथयेज्जलवर्णेऽम्भसि।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत्॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनै।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम्॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम्।
कामलाज्वरवीसर्पगण्डमालाहरं परम्॥६५॥

पटोलमित्यादि—पटोल पटोलस्य फलम्। कुटज इन्द्रयव, तन्त्रान्तरे "यष्टि-कलिङ्गभूनिम्बपिप्पलीघनचन्दनै। कल्कैमुष्ट्यंशिकैराज्य प्रस्थमात्रप्रसाधितम्" इत्युक्त-त्वात्। अतएव वचनात् भूनिम्बादीना पलमानता च बोध्या ॥६५॥

## कृष्णाद्यं तैलम्

कृष्णाविडङ्गमधुयष्टिकासिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम्॥६६॥

कृष्णेत्यादि—कृष्णा पिप्पली । अद्विशब्दस्य शूलपाकात्ययाभ्यां सम्बन्ध ॥६६

**अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।**
**व्रणं गोमयचूर्णेन पूरयेत् सर्पिषा सह ॥६७॥**

अजकामित्यादि—सुश्रुतस्य । गोमयचूर्णेनेति पाठो लेखकदोषात्; सुश्रुते वाग्भटे च तत्तदाकारपुस्तकेषु बहुषु गोमासचूर्णेनेत्येव हि पाठो दृश्यते, टीकाकारैश्च व्याख्यात इति ॥६७॥

**सैन्धवं वाजिपादश्च गोरोचनसमन्वितम् ।**
**शेलुत्वग्रससंयुक्तं पूरणञ्चाजकापहम् ॥६८॥**

सैन्धवमित्यादौ—वाजिपादोऽश्वखुरः, अश्वगन्धामूलमिति केचित्; व्यवहारस्तु पूर्वैरेव । शेलुर्बहुवार· ॥६८॥

## शशकघृतम्

**शशकस्य शिर कल्के शेषाङ्गक्वथिते जले ।**
**घृतस्य कुडवं पक्वं पूरणञ्चाजकापहम् ॥६९॥**

शशकस्येत्यादि—शशकमस्तकमात्र कल्क·, शेषाङ्गस्यान्त्रादिहीनस्य क्काथ । एतत् क्काथार्थञ्च जलस्य षोडश शरावा., स्थाप्याश्चत्वार. शरावा इति । घृतस्य कुडवोऽष्टौ पलानि ॥६९॥

## द्वितीयं शशकाद्यं घृतम्

**शशकस्य कषाये च सर्पिष कुडवं पचेत् ।**
**यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥**
**छगल्या· पूरणाच्छुक्रक्षतपाकात्ययाजका· ।**
**हन्ति भ्रूशङ्खशूलञ्च दाहरोगानशेषतः ॥७०॥**

शशकस्य कषाये चेत्यादि—आकृतिमानात् शशकगुडकमेकम् । अत्रापि पूर्ववदेव क्काथकरण, पयसा सम, तुल्यम्, अत. पञ्चगुण: पाक:, अन्ये तु चतुर्गुणमाहु । एतन्मते क्काथार्थजलस्य द्वादश शरावा·, स्थाप्यास्तु त्रय इति । इति कृष्णजेषु ॥७०॥

**त्रिफलाघृतं मधुयवा. पादाभ्यङ्गः शतावरी मुद्गाः ।**
**चक्षुष्यः संक्षेपाद्वर्ग· कथितो भिषग्भिरयम् ॥७१॥**

परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वासरान् करभास्थिचूर्णं भाव्यम्। करभ उष्ट्र। एतच्च प्रतिभावनमेव चूर्णीकर्त्तव्य, तच्चूर्णं मध्वाक्तशलाकया सगृह्य शुक्लदेश घर्षयेत्। ततश्च त्रिफलाक्वाथेनाक्षिप्रक्षालनमिति क्रियापरिपाटी। क्षारेणेति क्षारोदकेन। एतच्छुक्लेष्वसाध्येष्विति अनेन शुक्लस्यासाध्यस्य वैवर्ण्यनाशन पर क्रियते, न पुन शुक्लनाशनमिति दर्शयति। यानि शुक्लानि साध्यानीत्यादि पाठो युक्त, न तु शुक्लान्यसाध्यानीति। "नारिकेलास्थिभल्लाततालवशाकरीरजम्। भस्माद्भि स्रावयेत् ताभिर्भावयेत् करभास्थिजम्। चूर्णं शुक्लेष्वसाध्येषु तद् वैवर्ण्य-प्रमञ्जनम्। साध्येषु साधनीयमिदमेव। निश्चलेन पुनरसाध्यानीति पठित्वा एतच्च न कदाचिदपि साध्यशुक्लगोचरतया प्रयोक्तव्यमिति यद्व्याख्यात तदपास्तम्, उक्त-वाग्भटवचनविरोधादेव॥६४॥

## पटोलाद्यं घृतम्

पटोलं कटुकां दार्वीं निम्बं वासां फलात्रिकम्।
दुरालभां पर्पटकं त्रायन्तीश्च पलोन्मिताम्॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत्॥
कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम्॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम्।
कामलाज्वरवीसर्पगण्डमालाहरं परम्॥६५॥

पटोलमित्यादि—पटोल पटोलस्य फलम्। कुटज इन्द्रयव, तन्त्रान्तरे "यष्टि-कलिङ्गभूनिम्बपिप्पलीघनचन्दनैः। कल्कैर्मुष्ट्यंशिकैराज्य प्रस्थमात्रप्रसाधितम्" इत्युक्त-त्वात्। अतएव वचनात् भूनिम्बादीना पलमानता न वोध्या॥६५॥

## कृष्णाद्यं तैलम्

कृष्णाविडङ्गमधुयष्टिकासिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम्॥६६॥

कृष्णेत्यादि—कृष्णा पिप्पली। अक्षिशब्दस्य शूलपाकात्ययाभ्यां सम्बन्ध ॥६६

**अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम्।**
**व्रणं गोमयचूर्णेन पूरयेत् सर्पिपा सह ॥६७॥**

अजकामित्यादि—सुश्रुतस्य। गोमयचूर्णेनेति पाठो लेखकदोषात्; सुश्रुते वाग्भटे च तत्तदाकारपुस्तकेषु बहुषु गोमासचूर्णेनेत्येव हि पाठो दृश्यते, टीकाकारैश्च व्याख्यात इति ॥६७॥

**सैन्धवं वाजिपादश्च गोरोचनसमन्वितम्।**
**शेलुत्वग्रससंयुक्तं पूरणश्चाजकापहम् ॥६८॥**

सैन्धवमित्यादौ—वाजिपादोऽश्वखुर, अश्वगन्धामूलमिति केचित्, व्यवहारस्तु पूर्वेणैव। शेलुर्बहुवार. ॥६८॥

## शशकघृतम्

**शशकस्य शिर कल्के शेषाङ्गक्वथिते जले।**
**घृतस्य कुडवं पक्कं पूरणश्चाजकापहम् ॥६९॥**

शशकस्येत्यादि—शशकमस्तकमात्र कल्क, शेषाङ्गस्यान्त्रादिहीनस्य क्वाथ। एतत् क्वाथार्थञ्च जलस्य षोडश शरावा, स्थाप्याश्चत्वार. शरावा इति। घृतस्य कुडवोऽष्टौ पलानि ॥६९॥

## द्वितीयं शशकाद्यं घृतम्

**शशकस्य कषाये च सर्पिष कुडवं पचेत्।**
**यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥**
**छगल्या पूरणाच्छुक्रक्षतपाकात्ययाजका।**
**हन्ति अशङ्कशूलञ्च दाहरोगानशेषत. ॥७०॥**

शशकस्य कषाये चेत्यादि—आकृतिमानात् शशकगुडकमेकम्। अत्रापि पूर्ववदेव क्वाथकरण, पयसा सम तुल्यम्, अत पञ्चगुण पाक., अन्ये तु चतुर्गुणमाहु। एतन्मते क्वाथार्थजलस्य द्वादश शरावा, स्थाप्यास्तु त्रय इति। इति कृष्णनेपु ॥७०॥

**त्रिफलाघृतं मधुयवा. पादाभ्यङ्गः शतावरी मुद्गा.।**
**चक्षुष्य संक्षेपाद्वर्ग. कथितो भिषग्भिरयम् ॥७१॥**

त्रिफलेत्यादौ—त्रिफलेति छेद, सापि क्वाथचूर्णादिविषयोपयोज्या । घृतञ्च यदि सामान्यत एव चक्षुष्य तथापि पुराणमतिशयेन बोध्यम्, सुश्रुते—"घृत पुराण त्रिफला शतावरीं पटोलमुद्गामलकान् यवानपि। निषेव्यमाणस्य जनस्य यत्नतो भय सुघोरात् तिमिरान्न विद्यते" इति ॥७१॥

लिह्यात् सदा वा त्रिफलां सुचूर्णितां घृतप्रगाढान्तिमिरेऽथ पित्तजे।
समीरजे तैलयुतां कफात्मके मधुप्रगाढां विदधीत युक्तित ॥
कल्कः क्वाथोऽथवा चूर्ण त्रिफलाया निषेवितम्।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥
यस्त्रैफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम्।
स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्य ॥
सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी ।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन ॥
त्रिफलाया कषायेण प्रातर्नयनधावनात् ॥
जलगण्डूषै प्रातर्बहुशोऽम्भोभि प्रपूर्य्य मुखरन्ध्रम्।
निर्दयमुत्क्षन्नक्षि क्षपयति तिमिराणि ना सद्य ॥ ७२ ॥

लिह्यादित्यादि—सुश्रुतस्य। युक्तित इति मात्रया । अत्र यस्त्रैफल चूर्णमित्यादेरनन्तर सघृत वा वराक्वाथ शीलयेत् तिमिरामयीति पाठो न युक्त, कल्क क्वाथोऽथवा चूर्णमित्यादिनैवोक्तार्थत्वात् । जाता इत्यादौ—धावनादिति प्रक्षालनात् । निर्दयमुत्क्षन्निति अवगाढ सिञ्चन्, ना इति पुरुष ॥ ७२ ॥

भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥ ७३ ॥

भुक्त्वेत्यादौ—पाणितलमित्यनन्तरमाचान्तवारिपरिप्लुतमिति शेष. ॥७३॥

## सुखावती वर्त्तिः

कतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मन शिला ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।

तिमिरं पटलं काचमर्म शुक्रं तथैव च।
कण्डूक्लेदार्बुदं हन्ति मलञ्चाशु सुखावती॥ ७४॥

कतकस्येत्यादि—कतकस्य फलं जलप्रसादफलं, शङ्ख शङ्खनाभि., सिता शर्करा, फेन समुद्रफेनः। क्षौद्रमत्राञ्जनार्थं, पेषणञ्च जलेन। इयञ्च वर्त्ति. पित्ताश्रिते तिमिरे भद्रा॥ ७४॥

## चन्द्रोदया वर्त्तिः

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला॥
सर्वमेतत् समं कृत्वा छागक्षीरेण पेषयेत्।
नाशयेत् तिमिरं कण्डूं पटलान्यर्बुदानि च॥
अधिकानि च मांसानि येन रात्रौ न दृश्यते।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत्॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी॥ ७५॥

चन्द्रोदयवर्त्तिस्तु कफतिमिरे प्रशस्ता। जलेन चाञ्जनमिति श्रीकण्ठः, तत् सिद्धत्वाच्चक्षुष्यत्वाच्च मधुनापि व्यवहरन्ति वृद्धा.॥ ७५॥

हरीतकी हरिद्रा च पिप्पल्यो लवणानि च।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते॥ ७६॥

हरीतकीत्यादौ—लवणशब्द' सैन्धववचन. चक्षुष्यत्वात्, तच्च प्रथमभागापेक्षया चतुर्थांशमित्याहु। इयमपि कफे हिता। न क्वचित् प्रतिहन्यत इति पित्तजेष्वपि न वार्य्यत इत्यर्थ·॥ ७६॥

## कुमारिका वर्त्तिः

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुला·।
जातीकुसुमपञ्चाशन्मरिचानि च षोडश।
एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत्॥ ७७॥

एषा कुमारिका वर्त्तिरित्यत्र कुसुमिका वर्त्तिरिति वृन्दे पठ्यते॥ ७७॥

## त्रिफलाद्यवर्त्तिः

त्रिफलाकुक्कुटाण्डत्वक् कासीशमयसो रज·।

नीलोत्पलं विडङ्गानि फेनञ्च सारितां पते ॥
आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुष ॥ ७८ ॥

त्रिफलेत्यादौ—कासीश धातुकासीशम्, अयसो मारितपुटितस्य रज । भावयेदिति स्थापयेत् लेपयेदिति वा । क्षीरेणेति आजेनैवेत्याहु वर्त्तयेदिति वर्त्ति कुर्य्यात् । अभिन्नचक्षुष इति अनष्टतारकस्य ॥ ७८ ॥

## चन्दनाद्यवर्त्तिः

चन्दनत्रिफलापूगपलाशतरुशोणितैः ।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥७९॥

चन्दनेत्यादौ—पूग गुवाकफलम्, पलाशतरुशोणित किंशुकवेष्टकम्, पलाश-पुष्पस्वरस इत्यन्ये ॥७९॥

## निशाद्यमञ्जनम्

निशाद्वयाभयामांसीकुष्ठकृष्णा विचूर्णिता ।
सर्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम् ॥८०॥

निशेत्यादौ—सुगतो बुद्धस्तन्निर्मितत्वात् सौगतम् ॥८०॥

व्योषोत्पलाभयाकुष्ठतार्क्ष्यैर्वर्त्ति कृता हरेत् ।
अर्बुदं पटलं काचं तिमिरामाश्रुनि स्रुतिम् ॥८१॥

व्योषेत्यादौ—तार्क्ष्य रसाञ्जनम् ॥८१॥

## त्र्यूषणाद्यवर्त्तिः

त्र्यूषणं त्रिफला वक्रं सैन्धवालमन शिला ।
क्लेदोपदेहकण्डूघ्नी वर्त्ति शस्ता कफापहा ॥८२॥

त्र्यूषणेत्यादौ—वक्र तगरपादुका, आल हरितालम् ॥८२॥

## नयनसुखा वर्त्तिः

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा ।
वर्त्तिरियं नयनसुखा तिमिरार्मपटलकाचाश्रुहरी ॥८३॥

एकगुणेत्यादौ—अत्र अर्मतिमिरपटलाश्रुकाचहरीति पठनीयम्, अन्यथा छन्दोभङ्गः स्यात् ॥८३॥

## चन्द्रप्रभा वर्त्तिः

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका ।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मन शिलाः ॥
एतानि समभागानि अजाक्षीरेण पेषयेत् ।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत् ॥
अर्वुदं पटलं काचं तिमिरं रक्तराजिकाम् ।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति ॥
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत् ॥८४॥

अञ्जनमित्यादि—अञ्जन रसाञ्जनम्, श्वेतमरिच शोभाञ्जनवीजम्, एव सर्वत्र ॥८४॥

## श्रीनागार्जुना वर्त्तिः

त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनम् ।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश ॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिं कार्य्या नभोऽम्बुना ।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥
नाशिनी तिमिराणाञ्च पटलानां तथैव च ।
सद्य प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम् ॥
किंशुकस्वरसेनाथ विल्वपुष्पकरङ्कता ।
अञ्जनाल्लोध्रतोयेन चासन्नतिमिरं जयेत् ॥
चिरमाच्छादिते नेत्रे वस्तमूत्रेण संयुता ।
उन्मीलयत्यकृच्छ्रेण प्रसादञ्चाधिगच्छति ॥८५॥

त्रिफलेत्यादौ—जन्तुघ्न विडङ्गम्, ताम्रञ्च मारित ग्राह्यम् । चतुर्दशेति सख्याकथनेन अस्या वर्त्तेश्चतुर्दशाङ्गीति नामान्तरमपि सूचितम् वाग्भटवचनात् । स्तम्भे शिलास्तम्भे । किंशुकस्वरसेनेति किंशुकपुष्पस्वरसेन ॥८५॥

## पिप्पल्याद्यवर्त्तिः

पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत् समधुकां सहरिद्राम् ।
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥८६॥

पिप्पलीमित्यादौ—उत्पलपत्रम् उत्पलपुष्पस्य पत्रम् । वर्त्तयेदिति वर्त्तिं कारयेत् ॥८६॥

## कोकिला वर्त्तिका

व्योषायश्चूर्णसिन्धूत्थत्रिफलाञ्जनसंयुता ।
गुडिका जलपिष्टेयं कोकिला तिमिरापहा ॥८७॥

व्योषेत्यादौ—अञ्जन सौवीराञ्जनम् । कोकिलवत् कृष्णवर्णत्वात् कोकिलेति वर्त्ते मंज्ञा ॥८७॥

त्रीणि कटूनि करञ्जफलानि द्वे रजनी सह सैन्धवकञ्च ।
विल्वतरोर्वरुणस्य च मूल वारिचरं दशमं प्रवदन्ति ॥
हन्ति तमस्तिमिर पटलञ्च पिच्चिटशुक्रमथार्जुनकञ्च ।
अञ्जनक जनरञ्जनकञ्च हक् च न नश्यति वर्षशतञ्च ॥८८

त्रीणीत्यादौ—द्वे रजनीति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गे एतत्रेकारान्तोऽपि रजनीशब्दोऽस्तीति ज्ञेयम् । वारिचर शङ्खनाभि , वारिधर इति पाठे वारिधरो मुस्तकम् । हन्ति तमस्तिमिरामिति अन्धकारत्वसाधर्म्यात् तम सदृश तिमिर हन्तीति । अञ्जनकमिति मंज्ञाया स्वार्थे क । जनरञ्जक जनानुरागकारीत्यर्थ । दोधकाख्यच्छन्द ॥८८॥

नीलोत्पलं विडङ्गानि पिप्पली रक्तचन्दनम् ।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम् ॥ ८६ ॥

नीलोत्पलमित्यादौ—अञ्जन रसाञ्जनम् , एव वक्ष्यमाणेऽपि ॥ ८६ ॥

पत्रगैरिककर्पूरयष्टीनीलोत्पलाञ्जनम् ।
नागकेशरसंयुक्तमशेषतिमिरापहम् ॥ ६० ॥

पत्रेत्यादि—पत्र तेजपत्रम् , गैरिक स्वर्णगैरिकम् ॥ ६० ॥

शङ्खस्य चतुरो भागास्तदर्द्धेन मन शिला ।
मन शिलार्द्ध मरिचं मरिचार्द्धेन पिप्पली ॥
वारिणा तिमिरं हन्ति अर्वुदं हन्ति मस्तुना ।

पिच्चिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम् ॥ ६१ ॥

शङ्खस्येत्यादौ—चतुरो भागा इति छान्दसत्वात्। एतैर्जलपिष्टै वर्त्तिः कार्य्या। स्त्रीक्षीरेण तदुत्तममिति उत्कृष्टशक्तिकमित्यर्थः ॥ ६१ ॥

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
भद्रमुस्तं विडङ्गानि सप्तमं विश्वभेषजम् ॥
गोमूत्रेण गुडी कार्य्या छागमूत्रेण चाञ्जनम् ।
ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च ॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा ।
नक्तान्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम् ॥
शिशिरेण परिस्रावमध्रुषं पिच्चिटं तथा ॥ ६२ ॥

हरिद्रेत्यादौ—भद्रमुस्तं कान्तकामकं । भृङ्गराजेनेति भृङ्गराजस्वरसेन । शिशिरेणेत्यवश्यायजलेन । अध्रुषं मुखरोगविशेषः, ज्वरांश्च निखिलान् हन्ति इति । "प्रभावादेव हन्ति ज्वरांश्च" इति निश्चलस्तु आयुर्वेदे पठति ॥ ६२ ॥

संगृह्योपरतानलक्तकरसेनामृज्य गण्डूपदान्
लाक्षारञ्जिततूलवर्त्तिनिहितान् यष्टीमधून्मिश्रितान् ।
प्रज्वाल्योत्तमसर्पिषानलशिखासन्तापजं कज्जलं
दूरासन्ननिशान्ध्यसर्वतिमिरप्रध्वंसकृच्चोदितम् ॥
भूमौ निघृष्यांगुल्या अञ्जनं शमनं तयोः ।
तिमिरकाचार्म्महरं धूमिकायाश्च नाशनम् ॥ ६३ ॥

संगृह्येत्यादौ—उपरतानिति मृतान्, आमृज्यालक्तकरसेन भावयित्वा इत्यर्थः । लाक्षारञ्जितं तूलमलक्तकम्, उत्तमसर्पिषा गव्यघृतेन । मृतगण्डूपदान् अलक्तकरसं दत्त्वा आतपे शोषयेत्, तदनु चूर्णीकर्त्तव्यं, तदनु तत् गण्डूपदचूर्णं यष्टिमधुचूर्णेन सह अलक्तपत्रमध्ये कृत्वा सूत्रेण सन्वेष्ट्य वर्त्तिः कार्य्या। तया वर्त्त्या गव्यघृतमिश्रितया दीपं प्रज्वाल्य तद्दीपशिखोपरि निर्मलकाचादिपात्रं धृत्वा कज्जलपातनं कर्त्तव्यं, तेन कज्जलेन कदुष्णेनाञ्जनं कर्त्तव्यमिति क्रियामार्गः । आन्ध्यशब्दो दूरादिभिः सम्बध्यते । प्रत्येकं तयोरिति दूरासन्नान्ध्ययोर्निशान्ध्यदिवान्ध्ययोरिति वा धूमिका धूमिकावलोकनम् ॥ ६३ ॥

त्रिफलाभृङ्गमहौषधमध्वाज्य च्छागपयसि गोमूत्रे ।
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षु ॥ ६४ ॥
त्रिफलासलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूग्रे ।
प्रतिदिनमथ तप्तं सप्त वा सीसमेकम् ।
प्रणिहितमथ पश्चात् कारयेत् तच्छलाकाम् ॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेतानर्मपैच्छिल्यरोगान् ।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥ ६५ ॥

त्रिफलेत्यादौ—हविषि च विषकल्क इति विष मारकद्रव्य कल्करूप तत्र तादृशि हविषि । अतएव चन्द्राटे "हविषि च विषमिश्रे" इत्युक्तम् । वाग्भटेऽपि "सविषाज्यमजापय" इत्युक्तम् । मधूग्र इति प्रचुरे मधुनि, अन्ये तु मधुशब्देन यष्टिमधु वदन्ति । उक्त हि वाग्भटे—"वराजल भृङ्गजल सविषाज्यमजापय. । यष्टीरसश्च यत् सीस सप्तकृत्व पृथक् पृथक्" इति । साञ्जना तिमिराञ्जनेन सहिता, व्यञ्जना तद्रहिता । करकरिका वालुकाभिभूतनेत्रवेदनावत् वेदना ॥ ६५ ॥

चिञ्चापत्त्ररसं निधाय विमले चौडुम्बरे भाजने
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं विशोष्यातपे ।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जने शस्यते
काचामार्जुनपिच्चिटे सतिमिरे स्रावञ्च निर्वापयेत् ६६

चिञ्चेत्यादौ—औडुम्बरे भाजने ताम्रादिपात्रे । गौञ्ज मूल काकणन्तिकामूलम् । विमलाञ्जन सौवीराञ्जनम् ॥ ६६ ॥

चित्रापष्ठीयोगे सैन्धवममलं विचूर्ण्य तेनाक्षि ।
सममञ्जनेन तिमिरं गच्छति वर्षादसाध्यमपि ॥ ६७ ॥

चित्रेत्यादि—चित्रापष्ठीयोग इति चित्रानक्षत्रयुक्तपष्ठ्याम् ॥ ६७ ॥

दद्यादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ।

तत् स्रुते सघृतं भूयः पचेत् क्षौद्रं क्षिपेद् घने ॥
शीते तस्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥ ६८ ॥

दध्यादित्यादि—वाग्भटस्य। कणेति पिप्पली, छान्दसत्वात् ह्रस्वत्वम्। स्रुत इति वस्त्रपरिस्रुते, एतच्चोशीरनिर्यूहविशेषणम्। उशीरमूलस्य क्वाथ:, कणासैन्धवघृतानि मिलित्वा पादिकानि अष्टमाशानि वा दत्त्वा, पाकात् घन कार्य्य। शीते चास्मिन् पादिक मधु प्रक्षेप्यम्। वैद्यप्रसारके त्वस्या विवरण यथा—'उशीरस्य पलद्वय, जलस्य चत्वार शरावा, स्थाप्यस्तु शराव एक, पूते तस्मिन् प्रक्षेपार्थं कणासैन्धवयो प्रत्येकमष्टमापक, घृतस्य च कर्ष, पुन. पाकेन घनीभूते शीते च मधुन: कर्ष. ॥ ६८ ॥

धात्रीरसाञ्जनक्षौद्र-सर्पिर्भिस्तु रसक्रिया।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा ॥ ६९ ॥

धात्रीत्यादि—धात्रीक्वाथे रसाञ्जनचूर्णं घृतञ्च प्रक्षिप्य पुन. पाकात् रसक्रिया साध्या। रसक्रियेति घनीभूतक्वाथस्य सज्ञा। शीते च मधु प्रक्षेप्यम्। मानमेषा सर्वेषा पूर्ववदिति ॥ ६९ ॥

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम् ॥ १०० ॥

शृङ्गवेरमित्यादि—यष्टिमधुसाधितेन तैलेन मिश्रित शृङ्गवेरभृङ्गराजचूर्णं नस्य किंवा भृङ्गराजस्वरसे तैलमिश्रिते शृङ्गवेरयष्टिमधुचूर्णं प्रक्षिप्य नस्य कार्य्यम् ॥ १०० ॥

'लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम्।
विद्ध्वा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत् ॥
ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥
ततो गृहे निराबाधे शयीतोत्तान एव च।
उद्गारकासक्षवथुष्ठीवनोत्कम्पनानि च ॥
तत्कालं नाचरेदूर्ध्वं यन्त्रणा स्नेहपीतवत्।
त्र्यहात् त्र्यहाद्धावयेत्तु कषायैरनिलापहैः ॥
वायोर्भयात् त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत्।

दशरात्रन्तु संयम्य हितं दृष्टिप्रसादनम् ॥
पश्चात् कर्म च सेवेत लघ्वन्नञ्चापि मात्रया ।
रागश्चोषोऽर्बुदं शोथो वुद्‌वुदं केकराक्षिता ॥
अधिमन्थादयश्चान्ये रोगा स्युर्दुष्टवेधजा. ।
अहिताचारतो वापि यथास्वं तानुपाचरेत् ।
रुजायामक्षिरोगे वा भूयो योगान् निवोध मे ॥१०१॥

लिङ्गनाश इत्यादि—लिंग्यते ज्ञायतेऽनेनेति लिङ्ग दृष्टिस्तस्य नाशो लिङ्गनाश । कफोद्भूते इत्यनेन वातज पित्तजश्च विद्धो न सिध्यतीति दर्शयति । यथवाद्विधिपूर्वकमिति—विधिश्च विदेह-सुश्रुताद्युक्त तन्त्रानुमन्धेयः, स च विस्तारभयान्न लिखित । दैवकृते छिद्रे अपाङ्गभागवर्तिन शुक्लभागस्य मध्ये यद्दैवकृत छिद्रमस्ति, तस्मिन् । तदुक्त सुश्रुते—'मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्तो ह्यपाङ्गत । उन्मील्य नयने सम्यक् छिद्र दैवकृते तत । शलाकया ताम्रमय्या व्यधयेत्' इत्यादि । कृष्णात् कृष्णमण्डलात् प्रभृति द्वौ शुक्लभागौ त्यक्त्वा मध्ये दैवकृत छिद्र यदस्ति, तस्मिन् विध्येदिति । व्यधश्च तथा कर्त्तव्यो यथा एकैव पर त्वग्भिद्यते । सम्यग्व्यधलिङ्गश्च सुश्रुतेनोक्त, यथा—"वारिगमे सम्यक्शब्दश्च व्यधने भवेत् । असम्यग्विद्धे तु शोणितागम" इति । पट्टवस्त्रेण वेष्टयेदिति—सद्य क्षतरोपणलोध्ररक्तचन्दन त्रिफलाचूर्ण दत्त्वा वस्त्रेण वेष्टनम्, अन्ये तु धुस्तूरपिण्ड दत्त्वा वस्त्रेण वेष्टयन्ति । निराबाध इति धूमातपादिरहितस्थाने । शयीतोत्तान एवेति एतच्च चक्षुर्द्वयोर्व्यधे ज्ञेयम्, एकतरस्य व्यधे तु विद्धचक्षुषोऽन्येन पार्श्वेन शयन ज्ञेयम् । वाग्भटेऽप्येवमेवोक्तम् । उद्गारेत्यादौ—उत्कम्पन कम्पनमेव । तत्कालमिति सप्ताहम् । उक्त हि वाग्भटे—"क्षवथुकासमुद्गार सप्ताह नाचरेत्" इति । उद्‌र्ध्वमिति उत्तानशयनात् पर उद्गारादीनि सप्ताह परिहरेदित्यर्थ । यन्त्रणा स्नेहपीतवदिति स्नेहपीतस्येव आहाराचारादिनियमः, पूर्ववत् इति वस्त्रेणाच्छाद्य । कियन्त कालमय विधि कार्य्य इत्याह दशाहमेवमित्यादि—संयम्येति एवमुत्तानशयनादिना आत्मान नियम्य अनन्तर दृष्टिप्रसादनादि हित पश्चाल्लघ्वन्नञ्चापि कर्म सेवेतेत्यर्थ । दृष्टिप्रसादनमञ्जनादि लघ्वन्नञ्चापीति चकाराद्दशाहाभ्यन्तरेऽपि लघ्वन्नविधि समुच्चिनोति । राग इत्यादि—सुश्रुतस्य । चोष उपतापः, चोषणवत् पीडा वा, अर्बुदम् अर्बुदाकारशोथ , वुद्‌वुद वुद्‌वुदाकारशोथ । केकराक्षिता वक्रदृष्टिता, टेरनेत्रमिति यावत् । शूकरा-

चितेति पाठान्तरे शुक्रस्येवाधोदृष्टितेत्यर्थः । रोग इत्यादि सुश्रुतस्य । यथास्वमिति वातादिप्रत्यनीकादिभिः । रुजायामिति चोपादिरूपपीडायाम् ॥१०१॥

कल्किता सघृता दूर्वयवगैरिकशारिवा ।
सुखालेपाः प्रयोक्तव्या रुजारागोपशान्तये ॥१०२॥

कल्किता इत्यादि—वाग्भटस्य । सुखालेपा इति एते ममभागैश्चक्षु समीपे प्रलेप इति । रागोऽक्षिलौहित्यम् ॥१०२॥

पयस्याशारिवापत्र-मञ्जिष्ठामधुकैरपि ।
अजाक्षीरान्वितैर्लेपः सुखोष्ण पथ्य उच्यते ॥१०३॥

पयस्येत्यादि—वाग्भटस्य । पयस्या क्षीरकाकोली, पत्र तेजपत्रम् । वाग्भटे सुखोष्ण पथ्य उच्यते इत्यत्र सुखोष्ण शर्मकृत् पर इति पाठ ॥१०३॥

वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ।
काकोल्यादिप्रतीवापं प्रयुञ्ज्यात् सर्वकर्मसु ॥
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ।
तत शिरां दहेच्चापि मतिमान् कीर्त्तितां यथा ।
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ॥१०४॥

वातघ्नेत्यादि—सुश्रुतस्य । वातघ्नो भद्रदार्वादि, तेन क्षीरसाधनपरिभाषया सिद्ध पयसि चतुर्गुणे । सर्वकर्मस्विति नस्यापानादिषु । शाम्यतीत्यादि—सुश्रुतस्य शिरामिति ललाटस्था शिरा मोक्षयेत दहेच्चापीत्यन्वय । दृष्टेरित्यादि—सुश्रुतस्य । अत इति शिराव्यधदाहानन्तरम् । व्यधदाहाभ्या दोषशेषेण वा कलुषिताया दृष्टे प्रसादनाय अञ्जनम् । अञ्जने इति अञ्जनद्वयम् ॥१०४॥

मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ।
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च ।
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ।
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥१०५॥

मेषशृङ्गो मेषशृङ्गी, पुत्रजीवकवृक्ष इत्यन्ये । आवपेदिति आलिप्य स्थापयेत् ॥१०५॥

स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्ववद्भिषक् ॥१०६॥

स्रोतोजमित्यादि—सुश्रुतस्य । स्रोतोज रसाञ्जनम् । पूर्ववदिति छागीक्षीरेण पिष्ट्वा ताम्रपात्रे सप्ताह स्थापयेदित्यर्थ ॥१०६॥

रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥१०७॥

रसाञ्जनमित्यादौ—गोशकृद्रसेन वर्त्ति कार्य्या ॥१०७॥

नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ।
गुडिकाञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम् ॥१०८॥

नलिनेत्यादि—नलिन पद्मम्, उत्पल नीलोत्पलम्, द्वयो॰ किञ्जल्क । गोशकृद्रेति गोशकृद्रसेन गुडिका कार्य्या इत्याह ॥१०८॥

नदीजशङ्खत्रिकटून्यथाञ्जनं
मनःशिला द्वे च निशे गवां यकृत् ।
सचन्दनेयं गुडिकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥ १०९ ॥

नदीजेत्यादि—सुश्रुतस्य । नदीज सैन्धवम् , शङ्ख शङ्खनाभि , शङ्खस्थाने शिम्बीति पाठे शिम्बी हरितमुद्ग , अञ्जन रसाञ्जनम् । गवा यकृत् वृक्काग्र ,शकृदित्यपि पाठान्तरम् ॥ १०९ ॥

कणाच्छागयकृन्मध्ये पक्वा तद्रसपेषिता ।
अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्रमूषणम् ॥ ११० ॥

कणेत्यादि—छागयकृत् विदार्य्य तन्मध्ये पिप्पलीं स्थापयित्वा उत्स्वेदयेत् । पक्वा उत्स्विन्ना । तद्रसपेषितेति उत्स्वेदाम्बुना पिष्ट्वा वर्त्ति॰ कार्य्येत्यर्थ । तद्वत् सक्षौद्रमूषणमिति—ऊषण मरिचम् । पूर्ववत् छागयकृत्पिण्ड विदार्य्य तन्मध्ये मरिच स्थापयित्वा उत्स्वेदयेत्, तत आकृष्य उत्स्वेदावशिष्टजलेन तन्मरिच सम्पिष्य वर्त्ति कार्य्येत्यर्थ ॥ ११० ॥

पचेत्तु गौधं हि यकृत् प्रकल्पितं प्रपूरितं मागधिकाभिरग्निना ।

निषेवितं तद् यकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु ॥१११॥

पचेदित्यादि—पचेदुत्स्वेदयेत्। गोध गोधाभव यकृत्, पिप्पलीपूरणार्थं प्रकल्पितमिति पठितम्। अग्निनेत्यत्र अम्बुनेति पाठान्तरे अम्बुना स्वेदन बोध्यम्। अत्र गोधायकृदर्द्धपाचितमित्यपि पाठ.। निषेवित यकृदिति, तथाभूत यकृत् खादितमित्यर्थ•। पिप्पली त्वञ्जनविधिना देयेति कश्चित्। अन्ये तु उत्स्विन्नकणामहित यकृत् भक्षणविधिना अञ्जनविधया च विहित नक्तान्ध्य हन्तीत्याहु.। अपरे तु उत्स्विन्नकणामहित यकृत् अञ्जनविधया निषेवितं सन्नक्तान्ध्य हन्तीति व्याचक्षते। खलुशब्द एवार्थे, असशयमेवेत्यर्थः ॥ १११ ॥

दध्ना निघृष्टं मरिचं रात्र्यान्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योतभक्षणञ्च तदर्थकृत् ॥ ११२ ॥

दध्नेत्यादि योग स्पष्ट ॥ ११२ ॥

शफरीमत्स्यक्षारो नक्तान्ध्यमञ्जनतो निहन्ति।
तद्वद्रामठटङ्कणकर्णमलश्चैकशोऽञ्जनान्मधुना ॥ ११३ ॥

शफरीत्यादि—शफरीमत्स्यमन्तर्धूम दग्ध्वा मधुना सन्ध्यायामञ्जनं कार्य्यम् ॥ ११३ ॥

केशराजान्वितं सिद्धं मत्स्याण्डं हन्ति भक्षितम्।
नक्तान्ध्यं नियतं नृणां सप्ताहात् पथ्यसेविनाम् ॥ ११४ ॥

केशराजेत्यादि—रोहितमत्स्यादीनामण्ड केशराजं दत्त्वा उपदेशात् काञ्जिकेन पक्त्वा भक्ष्यम्। इतः परं घृतान्युच्यन्ते ॥ ११४ ॥

## त्रिफलाघृतम्

त्रिफलाक्काथकल्काभ्यां सपयस्कं शृतं घृतम्।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ ११५ ॥

त्रिफलेत्यादौ—चतुर्गुणेन त्रिफलाक्काथेन व्यवहरन्ति। सपयस्कमिति क्षीर स्नेहसमम् ॥ ११५ ॥

## महात्रिफलाद्यं घृतम्

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥

अजाक्षीरं गुडूच्याश्च आमलक्या रस तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥
कल्कः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम् ।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥
तत् साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊर्द्ध्वपानमध पानं मध्ये पानञ्च शस्यते ॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति ।
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्वुदे ॥
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ।
नैत्ररोगेषु सर्वेषु वातपित्तकफेषु च ॥
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम् ।
स्रवतो वातपित्ताभ्यां सकण्ड्वासन्नदूरदृक् ॥
गृध्रदृष्टिकरं सद्यो वलवर्णाग्निवर्द्धनम् ।
सर्वनेत्रामयं हन्यात् त्रिफलाद्यं महद् घृतम् ॥ ११६॥

महात्रिफलाद्यते—वृषस्येति वामकस्य पञ्चरस प्रस्थ. । मधुपर्णी गुडूची । ऊर्द्ध्वपानादिविधिर्भोजनापेक्षया ज्ञेय । वातपित्तकफेष्विति वातपित्तकफोद्भूतेषु नेत्ररोगेषु तथा कफवातप्रदूषणात् जातामदृष्टिं मन्ददृष्टिञ्चापकर्षतीत्यर्थः । तथा वातपित्ताभ्या स्रवतश्चक्षुष पथ्यमिति शेष । तथा सकण्ड्वासन्नदूरदृक् यः तस्यापि गृध्रतुल्यदृष्टिकारकमिति सोपस्कर व्याख्येयम् । पुन सर्वनेत्रामय हरत्येव कथन सर्वनेत्रामयहरणस्यावश्यकत्वोपपादनार्थमिति ज्ञेयम् ॥ ११६ ॥

## त्रैफलं घृतम्

त्रिफला व्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलां काचमर्वुदम् ॥

विसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनं तथा ॥
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ॥
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजा ।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ।
न चैवास्मात् परं किञ्चिद्दृषिभि काश्यपादिभिः ॥
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥ ११७ ॥

त्रिफलेत्यादि—त्रिगुण त्रिफलारसमिति घृतप्रस्थविशेषणम् । विषमज्वर-मर्माणीति विषमज्वर तथा अर्माणीति विश्लेष ॥ ११७ ॥

फलत्रिकाभीरुकषायसिद्धं कल्केन यष्टीमधुकस्य युक्तम् ।
सर्पिः समं क्षौद्रचतुर्थभागं हन्यात् त्रिदोषं तिमिरं प्रवृद्धम्॥११८

फलत्रिकेत्यादौ—अभीरु शतमूली। तत्र फलत्रिकस्य क्वाथ , शतमूल्यास्तु स्वरस इत्यर्थ । सममिति साध्वित्यर्थ । उक्त हि मेदनीकरकोषे—“ सर्वसाधु समानेषु सम स्यादभिधेयवत्” इति। अन्ये तु सममिति महार्थे, यथोक्तकषायादिना सह सिद्धमित्यर्थ इत्याहु ॥ ११८ ॥

## भृङ्गराजाद्यं तैलम्

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च ।
तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत् ।
नस्याद्वलीपलितघ्नं मासेनैतन्न संशय· ॥ ११९ ॥

भृङ्गराजेत्यादि—स्पष्टम् ॥ ११९ ॥

गवां शकृत्क्वाथविपक्वमुत्तमं हितञ्च तैलं तिमिरेषु नस्तत ।
घृतं हितं केवलमेव पैत्तिके तथाश्वतैलं पवनासृगुत्थयो ॥१२०॥

गवामित्यादि—सुश्रुतस्य । गवा शकृत् क्वाथविपक्वमिति गोशकृत क्वाथोऽष्टगुणाम्बुना कार्य्य , मृदोश्चतुर्गुण देयमिति परिभाषा व्यवहारबाधिता । घृत हि केवलमिति केवलमित्यसस्कृतम् । नस्तत इति इहापि सम्बध्यते । अश्वतैलञ्च सुश्रुते वातव्याधावुक्तम् । कस्मिंश्चित् सुश्रुतपुस्तके “ घृत हित केवलमेव पैत्तिके ” इत्यस्यानन्तर “ अजाविक यन्मधुरैर्विपाचित तैल स्थिरादौ मधुरे च यद्गणे ” इति

पाठो दृश्यते, स च पाठस्तथाविधाकारपुस्तकेषु न दृश्यते, टीकाकृद्भिश्च न प्रामाणिकैर्लिखित इति कृत्वा अनार्ष इति शेयम् ॥ १२० ॥

## नृपवल्लभं तैलं घृतञ्च

जीवकर्षभकौ मेदे द्राक्षांशुमती निदिग्धिका वृहती।
मधुकं वला विडङ्गं मञ्जिष्ठा शर्करा रास्ना ॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम् ।
पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः ॥
तैलं यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम् ।
आत्रेयनिर्मितमिदं तैलं नृपवल्लभं सिद्धम् ॥
तिमिरं पटलं काचं नक्तान्ध्यमर्वुदं तथान्ध्यञ्च ।
श्वेतञ्च लिङ्गनाशं नाशयति च नीलिकां व्यङ्गम् ॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम् ।
कासं श्वासं शोषं हिक्कां स्तम्भं तथात्ययं नेत्रे ।
मुखजैह्म्यमर्द्धभेदं रोगं वाहुग्रहं शिरःस्तम्भम् ।
रोगानथोर्द्ध्वजत्रो सर्वानचिरेणैतद्विनाशयति ॥
पक्तव्यं कुडवं तैलं नस्यार्थे नृपवल्लभे ।
अक्षांशै शाणिकैः कल्कैरन्ये भृङ्गादितैलवत् ॥ १२१ ॥

जीवकेत्यादौ—अंशुमती शालपर्णी। अक्षांशकैरिति अक्ष कर्षस्तस्यांशश्चतुर्थो भाग माषकचतुष्टय, तेन शाणिकैरित्यर्थ । तेन सर्वे मिलित्वा द्वादशामाषकाधिक पल भवति, अनेन तैलकुडव' साध्य , नस्यार्थे तैलकुडव. पच्यत इति सम्प्रदाय । कुडवश्चाष्टौ पलानि । न च कल्कस्तु स्नेहपादिक इत्यनेन विरोध , कल्कपलेनापि तैलकुडव-पाकदर्शनात्, तथा पूर्वोक्तभृङ्गराजतैले, तथा वक्ष्यमाणेऽभिजितनाम्नि तैले च । किंवा अक्षांशिकैरिति कार्षिके , अस्मिन् पक्षे कल्कस्य वहुत्वात् तैलप्रस्थ साध्य. । व्यवहारस्तु पूर्वेणैव । यदि वा सर्पिरिति पैत्तिके तिमिरे सर्पि पक्तव्यम् । दृष्टिजेष्विति दृष्टिमण्डलरोगेषु ॥ १२१ ॥

## आभिजितं तैलम्

तैलस्य पचेत् कुडवं मधुकस्य पलेन कल्कपिष्टेन ।

आमलकरसप्रस्थं क्षीरप्रस्थेन संयुक्तम् ॥
कृत्वाभिजितं नाम्ना तैलं तिमिरं हन्यान्मुनिप्रोक्तम् ।
विमलां कुरुते दृष्टिं नष्टामप्यानयेत्तथा ॥ १२२ ॥

अभिजित तैल स्पष्टम् ॥ १२२ ॥

अर्म तु छेदनीयं स्यात् कृष्णप्राप्तं भवेद् यदा ।
वडिशविद्धमुन्नम्य त्रिभागश्चात्र वर्जयेत् ॥ १२३ ॥

अर्म त्वित्यादि—अर्म आमा इति ख्यातोऽक्षिरोगविशेष. । अर्म छेदनीयमिति मण्डलाग्रेणेति शेष । समुन्नम्येति सूच्यग्रेणेति शेष. । सूच्यग्रेण समुन्नम्य उत्तोल्य अनन्तर वडिशेन विद्ध्वा मण्डलाग्रेण छेदयेदित्यर्थः । त्रिभागमिति तृतीयभाग कनीनिका वर्जयेदित्यर्थ । उक्त हि 'रक्षन् कनीनिका छिन्द्याच्चतुर्भागावशेषितम्' इति ॥ १२३ ॥

पिप्पलीत्रिफलालाक्षालौहचूर्णं ससैन्धवम् ।
भृङ्गराजरसे पिष्टं गुडिकाञ्जनमिष्यते ॥
अर्म सतिमिरं काचं कण्डूं शुक्रं तदर्जुनम् ।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥ १२४ ॥

पिप्पलीत्यादि—भृङ्गराजरसेनैव पेषणमञ्जनञ्चेत्याहु. । गुडिकाञ्जन वर्त्तिरित्यर्थ । अजका अक्षिरोगभेद ॥ १२४ ॥

पुष्पाख्यतार्क्ष्यजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैश्च माक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचितिमिरार्जुनवर्त्मरोगान् ॥ १२५ ॥

पुष्पाख्येत्यादि—पुष्पाख्य पुष्पकाशीश, तार्क्ष्यज रसाञ्जन, सिता शर्करा, शख शखनाभि, गैरिकशिला गैरिकमेवेति श्रीकण्ठ । माक्षिकरसेनेति मधुरूपद्रवेण । रसक्रियेयमिति एतत् सर्व चूर्ण प्रचुरतरमधुना समालोड्य वशनलिकाया स्थाप्यमेतत् रसक्रियाविधान वदन्ति । अतएव पिष्ट क्षौद्रेण चालोड्य इत्यादि वचनमपि पठन्ति ॥ १२५ ॥

कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनै· ।
स्वादुशीतैः प्रशमयच्छुक्तिकामञ्जनैस्तत ॥ १२६ ॥

कौन्मस्येत्यादि—कौन्म मर्पिर्दशवर्षास्थित घृतम् ॥ १२६ ॥

प्रवालमुक्तावैदूर्य्यशङ्खस्फटिकचन्दनम् ।
सुवर्णरजतं क्षौद्रमञ्जनं शुक्तिकापहम् ॥ १२७ ॥
शङ्खं क्षौद्रेण संयुक्तं कतकं सैन्धवेन वा ।
सितयार्णवफेनो वा पृथगञ्जनमर्जुने ॥ १२८ ॥

प्रवालेत्यादि—क्षौद्रेण पेषणमञ्जनञ्च ॥ १२७ ॥ १२८ ॥

पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये ।
वैदेहीसितमरिचं सैन्धवं नागरं समम् ॥
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम् ॥ १२९ ॥

पैत्त विधिमिति पित्ताभिष्यन्दोक्तविधिम् । उक्तं हि 'पित्ताभिष्यन्दशमनो विधिरर्जुनशान्तिकृत्' इति । वैदेहीत्यादि—वैदेही पिप्पली, सितमरिच शोभाञ्जनबीजम् । इति शुक्लेषु ॥ १२९ ॥

भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः ।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ १३० ॥

भित्त्वेत्यादि—सुश्रुतस्य । भित्त्वेति व्रीहिमुखेनेति शेषः । यद्यप्युपनाहः केवलं कफज एव, तथापि कफजमिति स्वरूपपरं ज्ञेयम् । पिप्पलीमधुसैन्धवैरित्यनन्तरं प्रतिसारणमिति शेषः । अत्र लेखनानन्तरं प्रतिसारणं ज्ञेयम् । उक्तं हि वाग्भटे—"उपनाहं भिषक् स्विन्नं भिन्नं व्रीहिमुखेन तु । लिखेद् मण्डलाग्रेण ततश्च प्रतिसारयेत्" इति । अन्ये तु भेदनप्रतिसारणाभ्यामप्रशमे लेखनं प्रच्छनञ्च देयमित्याहुः ॥ १३० ॥

पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत वर्त्तिम् ॥
तयाञ्जयेदश्रुमतिप्रगाढमक्ष्णोर्हरेत् कण्डमपि प्रकोपम् ॥१३१॥

पथ्येत्यादौ—फलमध्यबीजपदं पथ्यादिभिः प्रत्येकं सम्बध्यते । त्रिद्व्येकभागैरिति पथ्याबीजादिषु यथाक्रमं योज्यम्, अत्र पानीयेन पेषणम् । मधुना लञ्जनमिति व्यवहरन्ति ॥ १३१ ॥

स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत् ।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥ १३२ ॥

स्रावेष्वित्यादौ—प्रयोजयेदिति पिबेत् । यथादोषमिति क्षौद्रेण पित्तरक्ते, आज्येन वाते पित्ते रक्ते च, पिप्पल्या तु कफे । एभिरप्रशमे शिराव्यधः इति ॥ १३२ ॥

त्रिफलामूलकाशीश-सैन्धवैः सरसाञ्जनैः ।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥१३३॥

त्रिफलेत्यादि—सुश्रुतस्य । त्रिफलाक्वाथगोमूत्रे मिलित्वा पलचतुष्टये, काशीश-सैन्धवरसाञ्जनं पलमानं प्रक्षिप्य पुनः पाकेन घनतामापाद्य रसक्रिया विधेया । किन्तु काशीशरसाञ्जनापेक्षया सैन्धवमल्पमानं व्यवहरन्ति वृद्धाः । मूत्रस्थाने तुल्येति निश्चलः पठति । तन्मते त्रिफलाक्वाथस्यैव पलचतुष्टयम् । किन्तु सुश्रुते बहुपुस्तकेषु च मूत्रपाठ एव दृश्यते । भिन्ने स्यात् प्रतिसारणमिति रसाञ्जनचूर्णमधुभ्यामेव प्रतिसारणं ज्ञेयम् । इति मान्थिजपुः ॥ १३३ ॥

स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥
रसाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्मवित् ।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥
स्वेदयेद् घृष्टयाङ्गुल्या हरेद्रक्तं जलौकसा ।
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ।
प्रतिसारणमेकैकं भिन्ने लगणे इष्यते ॥ १३४ ॥

प्रतिसार्य्याञ्जनैरिति अञ्जनैः कज्जलैः । रोचनेत्यादि—सुश्रुतस्य । क्षारो यव-क्षारः । रोचनादिषु प्रत्येकं क्षौद्रयोगः । प्रतिसारणमिह व्रणमुखे दानम्, न तु घर्षणम् ॥ १३४ ॥

निमेषे नासया पेयं सर्पिस्तेन च पूरणम् ।
स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयम् ।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ १३५ ॥

निमेष इत्यादौ—सर्पिस्त्रिफलासिद्धमिति केचित् । अन्ये त्वपक्वमित्याहुः । पूरणमिति तेन सर्पिषा चक्षुःपूरणमित्यर्थः । स्वेदयित्वेत्यादौ—विसग्रन्थिमिति विस-वर्त्माख्याक्षिरोगम् । निराश्रयमिति आश्रयं स्फोटकं निरवशिष्टं यथा स्यात् तथा भित्त्वेत्यर्थः । अल्पेऽल्पाश्रये सति व्याधेरस्य पुनः सम्भवात् । उक्तं हि-"विसग्रन्थिं तथा भिन्द्यात् यथा स्यान्नाश्रयः क्वचित् । पुनः प्रवर्द्धते यस्मादल्पेऽप्यस्याश्रये स्थिते" इति ॥ १३५ ॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम्।
पुनः पुनर्विरेकञ्च पिल्लरोगातुरो भजेत्॥
पिल्ली स्निग्धो वमेत् पूर्वं शिरावेधं स्रुतेऽसृजि।
शिलारसाञ्जनव्योषगोपित्तैश्चक्षुरञ्जयेत्॥ १३६॥

वर्त्मेत्यादिना पिल्लरोगचिकित्सामाह, वर्त्मावलेखमिति—कर्कशशाखोटकादिपत्रेण वर्त्मवर्षणम्। पिल्ललक्षणञ्च पूर्वमेवोक्तम्। वाग्भटेन तु कुकूणकादीनामष्टादशाना पिल्लाख्या कृता। यथा—"एतेऽष्टादश पिल्लाख्या दीर्घकालानुवन्धिन" इति। पिल्लीत्यादौ—स्वेदोऽपि बोध्यो वमनाङ्गत्वात्। शिरा लालाटी। शिलेत्यादौ—गोपित्तस्याप्राप्तौ गोरोचनया सर्वत्र व्यवहार" ॥ १३६ ॥

हरितालवचादारुसुरसारसपेषितम्।
अभयारसपिष्टं वा तगरं पिल्लनाशनम्॥ १३७॥

हरितालेत्यादौ—सुरसारसपेषितमिति सुरसा पर्णासभेद सुरहिमल्लीति लोके। प्रतिसारणमेतत्। अभयेत्यादौ—तगर तगरपादुका ॥ १३७ ॥

भावितं वस्तमूत्रेण सस्नेहं देवदारु च।
काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान्॥
धूपयेत् पिल्लरोगार्त्तं पतन्ति क्रिमयोऽचिरात्॥ १३८॥

भावितमित्यादौ—स्नेहो घृत चक्षुष्यत्वात्। एतदपि प्रतिसारणम्। काकमाचीत्यादौ—फलमेकमेव घृतलिप्त धूपार्थम्। धूपन चक्षुर्वाससाच्छाद्य कार्य्यम्। अन्ये तु एकेन केवलेन भावनादिरहितेन धूपनमित्याहु" ॥ १३८ ॥

रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला।
समुद्रफेनो लवणं गैरिकं मरिचानि च॥
एतत् समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि।
अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणाञ्च प्ररोहणम्॥ १३९॥

रसाञ्जनमित्यादौ—सर्जरसो यक्षधूप। अत्र पेषण मधुनैव ॥ १३९ ॥

मस्तकास्थि चुलुक्यास्तु तुषोदलवणान्वितम्।
ताम्रपात्रेऽञ्जनं घृष्टं पिल्ले प्रक्लिन्नवर्त्मनि॥ १४०॥

मस्तकास्थीत्यादौ—चुलुकी शिशुमार, तस्य मस्तकास्थि, तुषोदक काञ्जिकम्॥ १४०॥

**ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम्।**
**आरनालेन संघृष्टमञ्जनं पिल्लनाशनम्॥१४१॥**

ताम्रेत्यादौ—गुहा पृश्निपर्णी, तस्या मूल ताम्रपात्रे सप्ताह घर्षयेदिति ज्ञेयम्। अन्ये तु गुहास्थाने स्नुहेति पठित्वा स्नुहीमूलमाहु। तच्च प्रक्षालनेन क्षीररहित कृत्वा अञ्जनविधौ प्रयोज्यमिति वदन्ति। व्यवहारस्तु पूर्वेणैव॥ १४१॥

**हरिद्रे त्रिफला लोध्रं मधुकं रक्तचन्दनम्।**
**भृङ्गराजरसे पिष्ट्वा घर्षयेल्लौहभाजने॥**
**तथा ताम्रे च सप्ताहं कृत्वा वर्त्तिं रजोऽथवा।**
**पिच्चिटी धूमदर्शी च तिमिरोपहतेक्षणः॥**
**प्रतिनिश्यञ्जयेन्नित्यं सर्वनेत्रामयापहम्॥ १४२॥**

हरिद्रेत्यादौ—तथेत्यनेन ताम्रपात्रे सप्ताह घर्षयेदिति योज्यम्। अन्ये तु तथा ताम्रे चेति विकल्पार्थमेतद्वचनम्, न समुच्चयार्थं, तेन लौहभाजने ताम्रभाजने वा घर्षयेदित्याहु। रजोऽथवेति एतेन चूर्णाञ्जनमप्युपदिशन्ति॥ १४२॥

## चूर्णाञ्जनम्

**मञ्जिष्ठामधुकोत्पलोदधिकफत्वक्सेव्यगोरोचना-**
**मांसीचन्दनशङ्खपत्रगिरिमृत्तालीशपुष्पाञ्जनैः।**
**सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषोः**
**कण्डूक्लेदमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम्॥ १४३॥**

मञ्जिष्ठेत्यादौ—उदधिकफ समुद्रफेनः; सेव्यमुशीरम्, पत्र तमालपत्रम्, तेजपत्रमित्यन्ये, पुष्प पुष्पकाशीशम्, अञ्जन रसाञ्जनम्। तालीशपत्राञ्जनैरित्यपि पाठ। वर्त्तिरिय चूर्णाञ्जन वा॥ १४३॥

**तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः।**
**त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत्॥**
**पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि।**
**तत्सेकेनोपदेहाश्रुकण्डूशोथांश्च नाशयेत्॥ १४४॥**

तुत्थकस्येत्यादि—वाग्भटस्य । श्वेतमरिचानि शोभाञ्जनबीजानि विंशति-रित्याकृतिमानात्। उपदेहं पिञ्जोडिका ॥ १४४ ॥

याप्यः पक्ष्मोपरोधश्च रोमोद्धरणलक्षणैः ।
वर्त्मन्युपचितं लेख्यं स्राव्यमुत्क्लिष्टशोणितम् ॥
प्रवृद्धान्तर्मुखं रोम सहिष्णोरुद्धरेच्छनैः ।
सन्दंशेनोद्धरेद् दुष्ट्यां पक्ष्मरोमाणि बुद्धिमान् ॥
रक्षन्नक्षि दहेत् पक्ष्मा तप्तहेमशलाकया ।
पक्ष्मरोगे पुनर्नैवं कदाचिद्रोमसम्भवः ॥ १४५ ॥

याप्य इत्यादौ—रोमोद्धरणलक्षणैरित्यनन्तरं कर्मभिरिति शेषः । पक्ष्मोपरोधो रोमोद्धरणलक्षणैः कर्मभिर्याप्यः यापनीयः । लक्षणैरित्यत्र लेखनैरित्यपि पाठान्तरम् । वर्त्मन्युपचितमिति पक्ष्मलोमेति शेषः । केनप्रकारेणोद्धरेदित्याह सन्दंशेनेत्यादि—दुष्ट्या पक्ष्मरोमाणीत्यत्र दुष्टानि पक्ष्मरोमाणीत्यपि पाठान्तरम् । रक्षन्नित्यादौ—पक्ष्मेति पक्ष्मस्थानम् । उक्तं हि "पक्ष्मरोगे हृते लोम्नि दाहं तत्स्थानके भिषक् । तप्तया हेमसूच्या तु कुर्य्याद्याप्यभयाष्टकम्" इति ॥ १४५ ॥

उत्सङ्गिनी बहुलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितन्त्विह बद्धवर्त्म ।
क्लिन्नञ्च पोथकियुतन्त्विह वर्त्म यच्च
कुम्भीकिनी च सह शर्करयावलेख्याः ॥
श्लेष्मोपनाहलगणौ च बिसञ्च भेद्यो
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥ १४६ ॥

इदानीं नेत्ररोगेषु मध्ये ये च लेख्या ये च भेद्यास्तानाह उत्सङ्गिनीत्यादि—सुश्रुतस्य। बहुलकर्दमवर्त्मनी चेति बहुलवर्त्म कर्दमवर्त्म चेत्यर्थः । श्यावञ्चेति श्याववर्त्म, तथा क्लिन्नञ्च क्लिन्नवर्त्म । बिसमिति बिसग्रन्थिः ॥ १४६ ॥

घृतसैन्धवचूर्णेन कफानाहं पुनः पुनः ।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ १४७ ॥

घृतेत्यादि—घृतमिश्रसैन्धवचूर्णेन विलिखेत् प्रतिसारयेत् । मण्डलाग्रेण तु प्रच्छयेदित्यर्थः ॥ १४७ ॥

**पटोलामलककाथैराश्च्योतनविधिर्हित ।**
**फणिज्झकरसोनस्य रसैः पोथकिनाशनः ॥ १४८ ॥**

पोथकीचिकित्सामाह पटोलेत्यादि—फणिज्झक पर्णास । रसैरित्यनन्तर पिष्ट इति शेष । फणिज्झकपत्र रसोनस्य रसै. पिष्टमाश्च्योतनमित्यर्थ ॥ १४८ ॥

**आनाहपिडकां स्विन्नां तिर्य्यग्भित्त्वाग्निना दहेत् ।**
**अर्शस्तथा वर्त्म नाम्ना शुष्कार्शोऽर्बुदमेव च ।**
**मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषक् शनै. ॥ १४९ ॥**

आनाहपिडकामित्यादौ—दहेदिति च्छेदः । अर्श.प्रभृतीनान्तु छिन्द्यादित्यनेनान्वय ॥ १४९ ॥

**सिन्धूत्थपिप्पलीकुष्ठपर्णिनीत्रिफलारसैः ।**
**सुरामण्डेन वर्त्ति. स्यात् श्लेष्माभिष्यन्दनाशिनी ।**
**पोथकीवर्त्मोपरोधक्रिमिग्रन्थिककुणके ॥ १५० ॥**

**इति नेत्ररोगचिकित्सा ।**

सिन्धूत्थादीना प्रत्येक सम चूर्ण गृहीत्वा त्रिफलारसेन भावयित्वा सुरामण्डेन वर्त्ति कार्य्येत्यर्थ ॥ १५० ॥

इति नेत्ररोग-चिकित्साविवृति ।

---

# अथ शिरोरोगचिकित्सा ।

**वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।**
**पानान्नमुपनाहांश्च कुर्य्याद्वातामयापहान् ॥ १ ॥**

शिर सश्रितकर्णनासानयनगतरोगाणा चिकित्सितमुक्त्वा सम्प्रति तदाश्रयस्य शिरसो रोगाणा चिकित्सामाह वातिक इत्यादि—स्वेदोऽत्र वातघ्नद्रव्यकृतस्वरसादिभि । उपनाहः स्वेदविशेष । अन्ये तूपनाह शिरोबास्तिभेदमाहु येन मस्तिष्क उच्यते। तन्त्रान्तरे हि मस्तिष्क उपनाह शिरोवस्तिविशेषत्वेनोक्तः । यथा—"मस्तिष्केऽष्टागुल पट्ट वस्तौ तु द्वादशागुलम्" इति ॥ १ ॥

**कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिकपेषितम् ।**
**शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ २ ॥**

मुचुकुन्द भेदमिद इति निश्चय , किन्तु पश्चिमे स्वनामख्यातं एव ॥२॥

पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ॥
आशिरो व्यायतं चर्म कृत्वाष्टाङ्गुलमुच्छ्रितम् ।
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ।
धारयेदारुजः शान्तेर्यामं यामार्द्धमेव वा ॥
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम् ।
हनुमन्याक्षिकर्णार्त्तिमर्दितं मस्तकम्पनम् ॥
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च ॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी ।
एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे ॥ ३ ॥

पञ्चमूली वातपैत्तिके स्वल्पा, वातकफे तु महती । आशिरोव्यायतमिति— यावता चर्मणा शिरोवेष्टनं भवति तावन्मानं चर्म ग्राह्यमित्यर्थः । तैलैरिति यथाविधिसाधितैः पूरयेदित्यङ्गुलोच्छ्रयेण । ध्रुवमिति तन्त्रान्तरदर्शनात् । आरुजः शान्तेः धारयेदिति वाते यामं, पैत्तिके यामार्द्धम् । कफे वक्ष्यमाणपञ्चमात्राशतानीत्यादिवचनं भिषक्कर्तृकत्वान्मतभेदाविरुद्धं बोध्यम् । मात्रा च निमेषोन्मेषादिः । उक्तं हि—'निमेषोन्मेषणे पुंसां स्फोटनं वापि चाङ्गुलेः । अक्षरस्य लघोर्वापि मात्रोच्चारणं भवेत्' इति । व्यवहारस्तु छुटिकयेति । ककुभे तु शिरोवस्तिर्नस्यादिनिरर्जिते कफे वातस्य चानुबन्धे सति बोध्यः । केवलकफे तस्यानौचित्यात् । विधिरपि मात्रारूपः ॥ ३ ॥

पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत् ।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥ ४ ॥

पैत्ते इत्यादौ—शीता इति सेकलेपयोर्विशेषणम् । जीवनीयानि सर्पींषि जीवनीयदशककाथकल्कसाधितानि । मृद्वीकेत्यादि—मृद्वीकेक्षुरसौ त्रिवृच्चूर्णप्रक्षेपाद् विरेककारकौ ज्ञेयौ, त्रिफलाक्वाथस्तु स्वत एवेत्याहुः । क्षीरघृते चापि त्रिवृदादिसिद्धे विरेके ॥ ४ ॥

**शतधौतघृताभ्यङ्गः शीतवातादिसेवनम्।**
**शीतस्पर्शाश्च संसेव्या. सदा दाहार्तिशान्तये॥ ५॥**

शतधौतघृताभ्यङ्ग इति—शतधौतेन घृतेन शिरसोऽभ्यङ्गो ज्ञेय। उक्त हि—"सर्पिषः शतधौतस्य शिरसि धारण हितम्" इति। शीतस्पर्शा इत्यादि—शीतस्पर्शाः कुमुदोत्पलपद्मादय॥ ५॥

**चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः।**
**क्षीरपिष्टैः प्रदेह स्यात् शृतैर्वा परिषेचनम्॥ ६॥**

चन्दनेत्यादौ—व्याघ्रनखो नखीभेदः। शृतैरिति चन्दनादिक्वाथै, अन्ये तु चन्दनादिशृतै क्षीरैरित्याहुः॥ ६॥

**मृणालबिसशालूकचन्दनोत्पलकेशरैः।**
**स्निग्धशीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः॥ ७॥**

मृणालेत्यादौ—बिस बालमृणालम्, उत्पलकेशर किञ्जल्क। स्निग्धशीतैः स्निग्धत्व घृतयोगात्। तद्वदित्यनेन घृतयोगात् स्निग्धत्वमतिदिशन्ति॥ ७॥

**यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं घृतं हितम्।**
**नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे॥ ८॥**

यष्ट्याह्वेत्यादौ—अनन्ता अनन्तमूलम्, एषा कल्केन चतुर्गुणक्षीरेण घृत पक्तव्यम्। एवं शर्कराद्राक्षायष्टिमधुकल्केन चतुर्गुणक्षीरेण घृतान्तर पक्तव्यमित्यर्थः॥ ८॥

**त्वक्पत्रशर्करारास्ना नावनं तण्डुलाम्बुना।**
**क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः॥**
**रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम्।**
**शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम्॥ ९॥**

त्वक्पत्रेत्यादि—त्वक्पत्र तेजपत्रम्। क्षीरसर्पिरित्यादि—सुश्रुतस्य। क्षीरोत्थ सर्पि क्षीरसर्पि। शुभा इति सवस्काः। जाङ्गला शुभा इत्यत्र जाङ्गलाण्डजा इति पाठान्तर तन्त्रान्तरे, तथाविधाकारसुश्रुतादिपुस्तकेष्वदर्शनात् उपेक्षणीयमिति। शीतोष्णयोश्च व्यत्यास इति—शीता क्रिया कृत्वा उष्णा, उष्णाञ्च कृत्वा शीतेत्यर्थ। रक्तजेऽप्येतदुष्णक्रियाविधान यद्यपि हेतुप्रत्यनीक न भवति, तथापि व्याधिप्रत्यनीकत्वमस्य बोध्यम्॥ ९॥

कफजे लङ्घनं स्वेदो रूक्षोष्णै पाचनात्मकैः ।
तीक्ष्णावपीडा धूमाश्च तीक्ष्णोष्णकवडा हिता ॥
स्वच्छञ्च पाययेत् सर्पि पुराणं स्वेदयेत्तत ।
मधूकसारेण शिर स्विन्नञ्चास्य विरेचयेत् ॥ १० ॥

कफज इत्यादौ—पाचनात्मकैरिति आमकफपाचनस्वभावैर्मेपजैर्दशमूलादिभि. पाययेत्, सर्पि पुराणमिति–पुराणस्य सर्पिषः कालप्रकर्षकृतसंस्कारात् कफहरत्व बोध्यम् । किंवा कफजे पुराणे वातानुबन्धे विधेयम् । मधूकसारेण मधूककाष्ठसारचूर्णेन उष्णोदकेनालोडितेन अवपीड. कार्य्यं ॥ १० ॥

कृष्णान्दशुण्ठीमधुकशताह्वोत्पलपाकलै ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारण ॥११॥

कृष्णेत्यादौ—पाकल कुष्ठम् ॥ ११ ॥

देवदारु नतं कुष्ठं नलदं विश्वभेषजम् ।
लेप काञ्जिकसम्पिष्टस्तैलयुक्त शिरोऽर्त्तिनुत् ॥
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया ।
सर्पिःपानं विशेषेण पुराणन्त्वादिशन्ति हि ॥ १२ ॥

देवदार्वित्यादौ—नलद मासी । सर्पि पान पुरातनमिति पीयते इति पान, कर्मणि अनट्, तदेव पुराणमिति विशेषण गृह्यते ॥ १२ ॥

त्रिकटुकपुष्करजनीजीवकतुरङ्गगन्धानाम् ।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥ १३ ॥

त्रिकटुकेत्यादौ—जीवक पीतशाल । शिरोऽर्त्तिजालमिति नानादोषज शिरोरोगम् । द्रव्याणा तीक्ष्णवीर्य्यत्वात् पित्तज विहाय योज्योऽय योग इत्येके ॥१३॥

नागरकल्कमिश्रं क्षीरं नस्येन योजितं पुंसाम् ।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥ १

नागरेत्यादौ—गव्यदुग्ध पलैक, शुण्ठीचूर्णं माषकत्रय प्रक्षिप्य, नासया पेयमिति वृद्धा ॥ १४ ॥

नतोत्पलं चन्दनकुष्ठयुक्तं शिरोरुजायां सघृतं प्रदेहः ।
प्रपौण्डरीकं सुरदारु कुष्ठं यष्ट्याह्वमेला कमलोत्पले च ॥

शिरोरुजायां सघृतः प्रदेहो लौहैरकापद्मकचोरकैश्च ॥ १५ ॥

नतेत्यादि—नत तगरपादिका, तदभावे शियलीछोपर । प्रपौण्डरीकेत्यादौ—लोहमगुरु, एरका होगल., चोरक चोरपुष्पी। प्रपौण्डरीकादिश्चोरकान्त एको योग । निश्चलस्तु उत्पलान्त एका योग, लोहेत्याद्यपर इत्याह, तन्न, द्वात्रिंशत् प्रदेहापेक्षया प्रदेहाधिकप्रसङ्गात् ॥ १५ ॥

## शताह्वाद्यं तैलम्

शताह्वैरण्डमूलोग्रावक्रव्याघ्रीफलैः शृतम् ।
तैलं नस्यं मरुच्छ्लेष्मतिमिरोर्द्ध्वगदापहम् ॥ १६ ॥

शताह्वेत्यादौ—उग्रा वचा, वक्र तगरपादिका, व्याघ्री कण्टकारी, तस्या फलम् । फलमिति मदनफलमित्यन्ये ॥ १६ ॥

## जीवकाद्यं तैलम्

जीवकर्षभकद्राक्षासितायष्टीवलोत्पलैः ।
तैलं नस्यं पय पक्वं वातपित्तशिरोगदे ॥ १७ ॥

जीवकाद्यतैले—पय पक्वमिति चतुर्गुणदुग्धे सिद्धम् ॥ १७ ॥

## वृहज्जीवकाद्यं तैलम्

जीवकर्षभकौ द्राक्षा मधूकं मधुकं वला ।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा ॥
तैलप्रस्थं पचेदेभि. शनै. पयसि षड्गुणे ।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम् ।
वाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम् ॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति ।
दन्तचालं शिरःशूलमर्दितञ्चापकर्षति ॥ १८ ॥

वृहज्जीवकाद्यतैले—मधूक मधूकस्य पुष्प फल वा । जाङ्गलमास हरिणादि-मासम्, तस्य तुलार्द्धस्य रसेनेति तुलाद्रव्ये जलद्रोण इति वचनात् तुलार्द्धे मासे ऽर्द्धद्रोणजल दत्त्वा पादशेषो रस. प्रस्थद्वयमानो भवति । मृद्रोश्चतुर्गुण देयमिति परिभाषया क्वाथविधिरित्यन्ये । व्यवहारस्तु पूर्वव्याख्यया ॥ १८ ॥

## षड्बिन्दुतैलम्

एरण्डमूलं तगरं शताह्वा जीवन्ति रास्ना सह सैन्धवञ्च ।
भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषध कृष्णतिलस्य तैलम् ॥
आजं पयस्तैलविमिश्रितञ्च चतुर्गुणे भृङ्गरसे विपक्वम् ।
षड्बिन्दवो नासिकया विधेया शीघ्रं निहन्यु शिरसो विकारान्
च्युतांश्च केशान् पलितांश्च दन्तान् दुर्बद्धमूलांश्च दृढीकरोति ।
सुपर्णदृष्टिप्रतिमञ्च चक्षुर्बाह्वोर्बलञ्चाभ्यधिकं ददाति ॥१९॥

षड्बिन्दुतैले—तगर पिण्डतगरमूलम्, भृङ्ग गुडत्वक् । अजाक्षीरन्तु तैलसममिति, किन्तु सामान्यतस्तिलतैलगोक्षीरेणापि योगोऽयम्, तन्त्रान्तरसंवादात् ॥१९॥

क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधि ।
पाने नस्ये च सर्पि स्याद्वातघ्नैर्मधुरैः शृतम् ॥ २० ॥

क्षयजे क्षयमासाद्येति—यस्य रक्तादे, क्षयेण शिरोरोगो जातस्तस्य क्षय बुद्ध्वा तत्प्रत्यनीको बृंहणो विधि कार्य्य इत्यर्थः । वातघ्नमधुरै. शृतमिति वातघ्नो भद्रदार्व्वादि, मधुर काकोल्यादि । तत्र वातघ्नस्य क्वाथ, मधुरगणस्य तु कल्क । यदाह विदेह—"सिद्ध वातहरक्वाथे कल्के मधुरके घृतम् । पाने नस्ये विधातव्य शिरोरोगे क्षयोद्भवे" इति ॥ २० ॥

क्रिमिजे व्योषनक्ताह्व-शिग्रुबीजैश्च नावनम् ।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम् ॥ २१ ॥

क्रिमिज इत्यादौ—नक्ताह्वशिग्रुबीजैरिति, नक्ताह्व करञ्ज, चजिपदमुभयत्रापि सम्बध्यते । अजामूत्रयुतमित्यादि—क्रिमिजे शिरोरोगे यन्नस्यमुक्त तदजामूत्रयुक्त क्रिमिजित् स्यादित्यर्थ । उक्त हि—"मूत्रपिष्टा समुद्दिष्टा क्रिया क्रिमिषु योजयेत्" इति । किंवा क्रिमिजिद्विडङ्गम्, अजामूत्रयुक्त नस्य पर उत्कृष्ट स्यादित्यर्थ ॥ २१ ॥

## अपामार्गतैलम्

अपामार्गफलव्योष-निशाद्ववकरामठैः ।
सविडङ्गं शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत् ॥ २२ ॥

अपामार्गफलमिति षष्ठीसमास । द्ववको हाञ्चिया लोकनाथ इति लोके ।

रामठ हिंगु । मूत्र चतुर्गुणम् ॥ २२ ॥

**नावनं सगुडं विश्वं पिप्पली वा ससैन्धवा ।**
**भुजस्तम्भादिरोगेषु सर्वेषूर्द्ध्वगदेषु च ॥ २३ ॥**

नावनमित्यादौ—गुडमाषकाष्टौ, शुण्ठीचूर्णं माषकद्वयम्, उष्णोदकपलैकेन गोलयित्वा वस्त्रपूत कृत्वा नस्य कार्य्यम् । अयं योगो वातानुबन्धे । तथा पिप्पलीचूर्णं माषकद्वयम्, उष्णोदक कर्षकम्, पूर्ववन्नस्य कफानुबन्धे ॥ २३ ॥

**सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम् ।**
**पाययेत् सगुडं सर्पिर्घृतपूरांश्च भक्षयेत् ॥ २४ ॥**

सूर्य्यावर्त्त इत्यादि—सुश्रुतस्य । नस्यकर्मादीति हेतुभूतदोषविपरीत नस्य परिषेक शिरोविरेकादिकम् । पाययेदित्यादि—वातप्रबले घृतपलैके गुडमाषकाष्टक प्रक्षिप्य पाययेदिति । घृतपूरो भक्ष्यविशेष । यथा—“मर्दिता समिता क्षीरनारिकेलघृतादिभि । अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते” इति ॥ २४ ॥

**सूर्य्यावर्त्ते शिरावेधो नावनं क्षीरसर्पिषा ।**
**हित क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम् ॥ २५ ॥**

सूर्य्यावर्त्त इत्यादि—सूर्य्यावर्त्ते यथोक्तक्रियाभि पुनरप्रशमे शिराव्यध कार्य्य इत्याहु । क्षीरसर्पिषेति क्षीरोत्थसर्पिषा । क्षीरघृताभ्यास इति क्षीरघृतयोरभ्यास । ताभ्यामिति क्षीरघृताभ्या विरेचकद्रव्यसाहिताभ्या विरेचनम्, किंवा विरेचनमिह शिरोविरेचनम् ॥ २५ ॥

**क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ २६ ॥**

जीवनीयैश्च क्षीरपिष्टैरित्यन्वय. ॥ २६ ॥

**सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे ।**
**अर्द्धावभेदकेऽपि**

**अर्शङ्खकर्णाक्षिशिरोऽर्द्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥२७॥**

सशर्करमित्यादि—सशर्कर कुकुम घृते भृष्ट्वा घृतेनैव पिष्ट्वा समालोड्य नस्य विधेयम् । अस्य पत्री—घृत तो ४, शर्करा मा ४, कुकुम मा ४, आलोड्याग्नौ किञ्चित् तप्तीकृत्य नस्य देयम् । दिनाभिवृद्धिप्रभवो रोगः सूर्य्यावर्त्त इत्यर्थः ॥२७॥

**कृतमालपल्लवरसे खरमञ्जरिकल्कसिद्धं नवनीतम् ।**
**नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम् ॥ २८ ॥**

कृतमालेत्यादि—कृतमाल सोनालु, तस्य पल्लवस्वरस प्रस्थ एक, अपामार्गवीजस्य पलद्वय, नवनीतस्याष्टौ पलानीत्याहु ॥ २८ ॥

दशमूलीकषायन्तु सर्पिःसैन्धवसंयुतम् ।
नस्यमर्द्धावभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥
शिरीषमूलकफलैरवपीडञ्च योजयेत् ।
अवपीडो हितो वा स्याद् वचापिप्पलिभि श्चत ॥ २९ ॥

दशमूलीत्यादि—दशमूलीकाथ पल १, प्रक्षेपघृत मा ७, सैन्धव मा १ नासया पेयम् । शिरीषेत्यादि–शिरीषवल्कलमूलकवीजयो प्रत्येक मा ४, पिष्ट्वा वस्त्रेण निष्पीड्य नस्य विधेयम्, एव वचापिप्पलीभ्यामिति । एतच्चावपीडद्वयमतितीक्ष्णत्वात् यद्यपि सूर्य्यावर्त्ते वातपित्तोत्तरे न युज्यते तथापि व्याधिप्रत्यनीकत्वात् स्थानिककफक्षयार्थं वा ज्ञेयमिदम् । अन्ये तु सूर्य्यावर्त्तविपर्य्यये योगद्वयमित्याहु । सूर्य्यावर्त्तविपरीतश्च प्रत्यूषे सायञ्च महान्, मध्ये तु मन्द इति ॥ २९ ॥

जाङ्गलानि च मासानि कारयेदुपनाहनम् ।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥
एष एव विधिः कृत्स्न. कार्य्यश्चार्द्धावभेदके ।
शारिवोत्पलकुष्ठानि मधुकञ्चाम्लपेषितम् ।
सर्पिस्तैलयुतो लेप सूर्य्यावर्त्तार्द्धभेदयोः ॥ ३० ॥

जाङ्गलानीति—अत्र वृद्धवैद्योपदेशात् वातहरद्रव्यैर्मांसमुत्स्विद्य सैन्धव तैलञ्च दत्वा उष्णलेप कार्य्य । अम्लपेषितमिति काञ्जिकपेषितम् ॥ ३० ॥

पिवेत् सशर्करं क्षीर नीरं वा नारिकेलजम् ।
सुशीतं वापि पानीयं सर्पिर्वा नस्ततस्तयोः ॥ ३१ ॥

पिबेदित्यादि—योगचतुष्टय सशर्करमित्यनुवर्त्तयितु युज्यत इति निश्चल । तयोरिति सूर्य्यावर्त्तार्द्धभेदकयो ॥ ३१ ॥

अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः ।
शिरावेधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च विधातव्यो वातपित्तविनाशन ।
मधुमस्तक-संयाव-हवि पूरैश्च यः क्रमः ॥

सूर्य्यावर्त्ते हितं यत् तच्छङ्खके स्वेदवर्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्त पानञ्च शङ्खके॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
दूर्वां पुनर्नवाञ्चापि लेप साध्ववचारयेत्॥
शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान्।
कल्कैश्च क्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम्॥
क्रौञ्चकादम्बहंसानां शराय्यां कच्छपस्य च।
रसैः संबृंहितस्याथ तस्य शङ्खकसन्धिजाः।
ऊर्द्ध्वं तिस्र शिरा प्राज्ञो भिन्द्यादेव न ताडयेत्॥ ३२॥

अनन्तवातेत्यादि—सुश्रुतस्य। मधुमस्तकेति मधुमस्तकादयो भक्ष्यविशेषा सूद-शास्त्रेऽनुसन्धेया। मधुमस्त पौनिकाकारो मधुगर्भः सितावेष्टितो भक्ष्यविशेष इति वकुल, मधुन ऊर्द्ध्वमिति चक्र। सयावो यथा—"पचेद् घृतोत्तरे भाण्डे क्षिपेद् भाण्डेन वै तत। सयावोऽसौ सिताचूर्णं सखण्डलामरिचार्द्रके" इति। हविःपूरो भक्ष्यविशेष घृतपूरेति लोके। यथा "मण्डित समितापिण्ड क्षीरेणैव विलोडित। अवगाह्य घृते पक्वो घृतपूरोऽयमुत्तम" इति। क्रम इत्याह क्रम इति। क्षीरात्थ सर्पि क्षीरमर्पि, नस्त पान नासिकया पान, किंवा नस्य पानञ्च। उक्तञ्च सुश्रुते—"क्षीर-सर्पि प्रशसन्ति नस्ये पाने च शङ्खके" इति। क्षीरिवृक्षेति क्षीरिवृक्षा वटादय। सबृंहितस्येति प्राप्तमासोपचयस्य। सन्धिजा शिरा भिन्द्यादित्यत्र सूच्येति शेष। न ताडयेदिति कुठारिकयेति शेष, सन्धिभङ्गभयादिति च शेषः॥३२॥

शिरःकम्पेऽमृतारास्नाबलास्नेहसुगन्धिभि।
स्नेहस्वेदादि वातघ्नं शिरोवस्तिश्च शस्यते॥ ३३॥

शिर,कम्प इत्यादौ—स्नेहो घृतादि। सुगन्धिरगुर्वादि। सुगन्धिरित्यनन्तर लेप इति शेष। शिरोवस्तिविधि पूर्वमुक्त एव॥ ३३॥

## यष्ट्याद्यं घृतम्

यष्टीमधुबलारास्नादशमूलाम्बुसाधितम्।
मधुरैश्च घृतं सिद्धमूर्द्ध्वजत्रुगदापहम्॥ ३४॥

यष्टिमध्वित्यादि—घृत प्रस्थैक, क्वाथार्थ यष्ट्यादिदशमूलान्ताना मिलित्वा

चतु पष्टिपल, जलद्रोणैक, शेप शरावषोडश, कल्कार्थ काकोली-यष्टिमधु-काकडाशृङ्गी-मेदा जीवक ऋषभक-पुण्डरीककाष्ठ-द्राक्षा-ऋद्धि वृद्धि वशरोचना-मुगानी-मापणी-क्षीरकाकोली-पद्मकाष्ठ-गुडूची प्र क २ पलव्यम् ॥ १४ ॥

## मयूराद्यं घृतम्

दशमूलवलारास्नामधुकैस्त्रिफलै सह ।
मयूर पक्षपित्तान्त्रशकृत्पादास्यवर्जितम् ॥
जले पक्त्वा घृतप्रस्थ तस्मिन् क्षीरसमं पचेत् ।
मधुरै कार्षिकैः कल्कै शिरोरोगार्दितापहम् ॥
कर्णनासाक्षिजिह्वास्यगलरोगविनाशनम् ।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम् ।
आखुभि कुक्कुटैर्हंसैः शशैश्चापि हि वुद्धिमान् ।
कल्केनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम् ॥
दशमूलादिना तुल्यो मयूर इह गृह्यते ।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदु ॥ ३५ ॥

दशमूलेत्यादि—दशमूलस्य प्रत्येक पलत्रयम्, एव बलादीना त्रयाणामपि, तेन मिलित्वा ऊनचत्वारिंशत्पलानि भवन्ति । तथा मयूरमांसमपि पक्षपादादिरहितम् ऊनचत्वारिंशत्पल ग्राह्यम् । एव मिलित्वा यावत् क्वाथ्य भवति, तत्र "क्वाथ्याच्चतुर्गुण वारि" इत्यादि परिभाषया जलादिव्यवस्था, एतदेवाह दशमूल्यादिना तुल्यो मयूर इत्यादि । अन्ये तु दशमूलादिभि प्रत्येक त्रिपलमाने सह तरुणमयूरगुह्यकमेक पक्षादिवर्जित जलद्रोण एव पचेत्, जलद्रोणेऽत्र पादशेषः, स च पचनीयघृतापेक्षया चतुर्गुणो भवतीत्याहु । एतदेवाहु "अन्ये त्वाकृतिमानेन मयूरग्रहण विदुरिति ।" व्यवहारस्त्वनेनैव । मधुरैरिति जीवनीयदशके, जीवनीयानि च मधुरत्वमधुरविपाकत्वप्रकर्षान्मधुरशब्देनोच्यन्ते । एतन्मयूरघृत तथा अप्रमानञ्च मधुरस्थाने मूषिकादीन् दत्त्वापि कार्य्यमित्याहु । आखुना तथा मयूरापेक्षया अल्पगुणेनापि तत्रैकेन स्नेहसाधन कर्त्तव्यमित्याहु ॥ ३५ ॥

## प्रपौण्डरीकाद्यं तैलम्

प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ।

सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ।
सर्वानूर्ध्वगदान् हन्ति पलितानि च शीलितम् ॥३६॥

प्रपौण्डरीकमित्यादि—वाग्भटस्य । चन्दनोत्पलैरित्यत्र कल्कैरिति शेष. । धात्रीरसश्चात्र तैलापेक्षया चतुर्गुण ॥ ३६ ॥

## मायूरं घृतम्

शतं मयूरमांसस्य दशमूलबलातुलाम् ।
द्रोणेऽम्भस· पचेत् क्षुत्त्वा तस्मिन् पादस्थिते तत· ॥
निषिच्य पयसो द्रोणं पचेत्तत्र घृताढकम् ।
प्रपौण्डरीकवर्गोक्तैर्जीवनीयैश्च भेषजैः ॥
मेधाबुद्धिस्मृतिकरमूर्ध्वजत्रुगदापहम् ।
मायूरमेतन्निर्दिष्टं सर्वानिलहरं परम् ॥
मन्याकर्णशिरोनेत्ररुजापस्मारनाशनम् ।
विषवातामयश्वासविषमज्वरकासनुत् ॥ ३७ ॥
इति शिरोरोगचिकित्सा ।

---

शतमित्यादौ—दशमूलबलामूलयोर्मिलित्वा तुला । द्रोण इति पदमावृत्य उभयत्रापि योज्य, तेन मयूरमासशतपले एको जलद्रोण , दशमूलबलातुलायाश्चापर इति द्रोणद्वयमम्भस । पयसो दुग्धस्य द्रोण निषिच्य दत्त्वा पचेदिति । एतेन षड्गुण· पाक ।प्रपौण्डरीकवर्गोक्तैरिति प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैरित्यर्थः। जीवनीयैरिति जीवनीयदशकै । ततोऽत्र यष्टिमधुकस्य भागद्वय ग्राह्यम् ॥ ३७ ॥
इति शिरोरोगचिकित्साविवृति. ।

---

# अथासृग्दरचिकित्सा ।

दध्ना सौवर्चलाजाजीमधुकं नीलमुत्पलम् ।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ १ ॥

स्त्रीपुसा साधारणव्याधीना तथा पुम्प्रतिनियतानामप्युपदंशादीनां चिकित्सोक्ता, सम्प्रति स्त्रीनियताना प्रदरादीना चिकित्सितमभिधातुमुपक्रमते । दध्नेत्यादि—दध्न कर्पत्रय, सौवर्चलस्य मापकमेकम्, अजाज्यादीना प्रत्येक मापकद्वय, मधुनस्तु मापकचतुष्टयमित्याहु ॥ १ ॥

**पिवेदैणेयकं रक्तं शर्करामधुसंयुतम् ।**
**वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥ २ ॥**

अतिवहुस्रुतशोणिताना चिकित्सामाह पिवेदित्यादि—एणस्येदम् ऐणेय, स्वार्थे क॰ । एणस्य रक्त दशमूलयोगेन मर्दयित्वा पेय, तेन रक्तानता न स्यादित्याहु । शर्करामधुयोजितमिति पद वासकस्वरस-गुडूचीस्वरसयोरपि योज्य हारीतसवादात् ॥ २ ॥

**रोहीतकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिवेत ।**
**जलेनामलकाद्वीजकल्कं वा ससितामधु ।**
**धातक्याश्चाक्षमात्रं वा आमलक्या मधुद्रवम् ॥**
**काकजानुकमूलं वा मूल कार्पासमेव वा ।**
**पाण्डुप्रदरशान्त्यर्थं पिवेत्तण्डुलवारिणा ॥ ३ ॥**

रोहीतकादित्यत्रापि ससिता मध्विति योज्यम् । धातक्या इत्यादि—धातक्या कल्कमक्षमात्र मधुद्रव, तथामलक्या वा कल्कमक्षमात्र मधुद्रव पिवेत् । मधुद्रवो यत्र कल्के तत् मधुद्रवम् । काकजानुक काकजङ्घा ॥ ३ ॥

**अशोकवल्कलकाथशृतं दुग्धं सुशीतलम् ।**
**यथावलं पिवेत् प्रातस्तीव्रासृग्दरनाशनम् ॥ ४ ॥**

अशोकेत्यादौ—पडङ्गपरिभापयार्द्धशृतमशोकवल्कलकाथ गृहीत्वा तेन चतुर्गुणेन क्षीर साध्यमित्यर्थः । वृद्धास्तु क्वाथमकृत्वैव क्षीरसाधनपरिभापया व्यवहरन्ति ॥४

**दार्वीरसाञ्जनवृपाव्दकिरातविल्व-**
**भल्लातकैरवकृतो मधुना कपायः ।**
**पीतो जयत्यतिवलं प्रदरं सशूलं**
**पीतासितारुणविलोहितनीलशुक्लम् ॥ ५ ॥**

दार्वीत्यादौ—वृषो वासक, विल्व शुष्कविल्वशलाटु, कैरव कुमुदम् । 'भल्लातकासहत्वे तु रक्तचन्दनमिष्यते' अनेन व्यवहरन्ति ॥ ५ ॥

रसाञ्जनं तण्डुलीयस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम्।
असृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण॥
कुशमूल समुद्धृत्य पेषयेत्तण्डुलाम्बुना।
एतत् पीत्वा ऽयहान्नारी प्रदरात् परिमुच्यते॥
क्षौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक्॥
प्रदर हन्ति वलाया मूलं दुग्धेन मधुयुतं पीतम्॥ ६॥

रसाञ्जनमित्यादौ—तण्डुलीयस्य मूल लोहिततण्डुलीयस्य मूल गृह्यते। भेपजद्वयमिद प्रत्येक, मिलितञ्च बोध्य, सिद्धसारहीरातसवादात्। सर्वभवमिति वाताद्येकदोषभव सर्वे, न तु सान्निपातिक तस्यासाध्यत्वात्। उक्त हि—'सक्षौद्र-सर्पिर्हरितालवर्णं मज्जप्रकाश कुणप त्रिदोषात्। तञ्चाप्यसाध्य प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम्' इति। श्वासञ्च भार्गी सह नागरेणेति तु श्लोका-नुरोधाल्लिखितम्॥ ६॥

कुशवाट्यालकमूलं तण्डुलसलिलेन हरति रक्ताख्यम्।
शमयति मदिरापानं तदुभयमपि रक्तसंज्ञशुक्लाख्यौ॥ ७॥

रक्ताख्यमिति रक्तप्रदरम्। मदिरापानमिति मदिरया पीयते कर्मणि ल्युट्, तेन मदिरापीतमित्यर्थ। तदुभयमिति कुशवाट्यालकयोर्मूलम्॥ ७॥

गुडेन वदरीचूर्णं मोचमामं तथा पय।
पीता लाक्षा च सघृता पृथक् प्रदरनाशना॥ ८॥

गुडेनेत्यादि—योगचतुष्टयम्। बदरीचूर्णमिति वातकफे। मोचमाममोचम्, अपक्वकदलीफलचूर्णस्य कर्ष एक, एतच्च कफपित्ते॥ ८॥

रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
असृग्दरे विशेषेण कुटजाष्टकमाचरेत्॥ ९॥

रक्तपित्तविधानेनेति अधोगतरक्तपित्तविधानेन॥ ९॥

## पुष्यानुगं चूर्णम्

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदरसाञ्जनम्।
अम्बष्ठकीमोचरस-समङ्गापद्मकेशरान्॥

वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम् ।
त्रिफलां मरिचं शुण्ठी-मृद्वीका रक्तचन्दनम् ॥
कट्वङ्गवत्सकानन्ता-धातकीमधुकार्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
तानि क्षौद्रेण संयुज्य पाययेत् तण्डुलाम्बुना ।
असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते ॥
दोषागन्तुकृता ये च वालानां तांश्च नाशयेत् ।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ।
अम्वष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये तु लक्षणाम् ॥ १० ॥

पुष्यानुगचूर्णे—जम्ब्वाम्रयोर्मध्य जम्ब्वाम्रयोरास्थि । वाग्भटेऽपि जम्ब्वाम्रयोरस्थीत्युक्तम् । अम्वष्ठकी दक्षिणापथे ख्याता, तदभावे पाठामेव द्विगुणा गृह्णन्ति, लक्षणामित्यन्ये । पद्मकेशर पद्मकिञ्जल्कम्, वाह्लीक कुङ्कुमम्, विल्व विल्वशलाटु । पुष्येणेति पुष्यानक्षत्रेण ॥ १० ॥

## मुद्गाद्यं घृतम्

मुद्माषस्य निर्य्यूहे रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीविल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ ११ ॥

मुद्गेत्यादौ—मुद्गमाषाभ्यां निर्य्यूह क्काथ । रास्नादिपञ्चकस्य कल्कः बिल्वं विल्वशुण्ठकम् ॥ ११ ॥

## शीतकल्याणकं घृतम्

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥
वलातिवलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतमूली च शालपर्णी सजीवका ॥
फलं त्रपुषवीजानि प्रत्यग्रं कदलीफलम् ।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥

पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके॥
बहुरूपञ्च यत् पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम्॥ १२॥

कुमुदमित्यादि—कुमुद मह्लारपुष्पम्, पद्मक पद्मकाष्ठम्, रक्तशालेस्तु मूलम्, पयस्या क्षीरकाकोली, काश्मरी गाम्भारी, तस्या फलम्, अतिवला गोरक्षतण्डुला, जीवक जीवनीयगणमध्ये पठित वणिग्द्रव्यम्, फल त्रिफला, त्रपुष मायाम्बुफलम्, बीजमित्यन्ये। प्रत्यग्रामित्याभिनवम्, अपक्वमित्यर्थ॥ १२॥

## बृहच्छतावरीघृतम्

शतावरीरसप्रस्थं क्षोदयित्वावपीडयेत्।
घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं भिषक्॥
अत्र कल्कानिमान् दद्यात् स्थूलोडुम्बरसम्मितान्।
जीवनीयानि यान्यष्टौ यष्टीचन्दनपद्मकैः॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम्॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।
सम्यक् सिद्धन्तु विज्ञाय तद् घृतञ्चावतारयेत्॥
रक्तपित्तविकारेषु वातपित्तकृतेषु च।
वातरक्तं क्षयं श्वासं हिक्कां कासञ्च दुस्तरम्॥
अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम्।
असृग्दरं सर्वभवं मूत्रकृच्छ्रं सुदारुणम्॥
एतान् रोगान् शमयति भास्करस्तिमिरं यथा॥ १३॥

इत्यसृग्दर-चिकित्सा॥

——•◦:◦:◦•——

बृहच्छतावरीघृते—शतावरीं चोदयित्वा रसप्रस्थमवपीडयेत्, अवपीड्य गृह्णीयादित्यर्थः। स्थूलोडुम्बरसम्मितान् इति प्रत्येकं कर्षसम्मितानित्यर्थः। जीवनीयानि यान्यष्टाविति अष्टवर्गं। जीवकर्षभकौ मेदामहामेदाकाकोलीक्षीरकाकोलीऋद्धिवृद्धय इति। असृग्दरं सर्वभवमिति पूर्ववत् व्याख्येयम्॥ १३॥

इत्यसृग्दराचिकित्सा विवृति

# अथ योनिव्यापच्चिकित्सा।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित्।
वस्त्यभ्यङ्गपरीषेकप्रलेपाः पिचुधारणम्॥ १॥

प्रदरोऽपि योनिव्यापद्विशेष इति योनिव्यापत्त्वसामान्यादनन्तरं योनिव्यापाच्चिकित्सितमुच्यते, योनिव्यापत्स्वित्यादि—कर्म वातजिदिति वस्तिरुत्तरवस्तिश्च॥ १॥

वचोपकुञ्चिकाजाजी कृष्णावृषकसैन्धवम्।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम्॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद् घृतभर्जितम्।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शोविनिवृत्तये॥ २॥

वचेत्यादि—वाग्भटस्य। उपकुञ्चिका कृष्णजीरकम्, वृषको वासकमूलम्, प्रसन्ना मदिराया उपरिस्थ फेनभाग। एभ्यो वचादिभ्य समभागपिष्टेभ्य. तो २, प्रसन्ना पल २, आलोड्य घृतकर्षेण सन्तल्य पेयम्॥ २॥

गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम्।
नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभि।
तैलात् प्रसाधिताद्धार्य्यः पिचुर्योनौ रुजापह॥
पिच्छलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रिया।
शीता पित्तहराः कार्य्या स्नेहनार्थं घृतानि च॥ ३॥

नतेत्यादि—वाग्भटस्य। वार्त्ताकिनी भूकण्टकारी, गोष्ठवार्त्ताकुरित्यन्ये। अमरदारु देवदारु। एभिर्वचादिभि कल्कै तैलं साध्यम्, जलञ्च चतुर्गुणमिति। पिचुरिति भेषजसाधितस्नेहाप्लुततूल पिचु॥ ३॥

योन्यां वलासदुष्टायां सर्वं रूक्षोष्णमौषधम्।
पिप्पल्या मरिचैर्माषै शताह्वाकुष्ठसैन्धवै ।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥४॥

योन्यामित्यादौ—तुल्येति परिणाहेन दैर्घ्येण च। वर्त्तिरिति वस्त्रेण वस्त्र विना वा ॥ ४ ॥

हिंस्राकल्कन्तु वातार्त्ता कोष्णामभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफोत्तरा ॥ ५ ॥

हिंस्रेत्यादि—हिंस्रा कालाकडामूलम्। पञ्चवल्कलस्य वटोडुम्बराश्वत्थसक्त-वेतमस्य । श्यामादीनामिति कफ रोगभिषग्जितीये श्यामात्रिवृच्चतुरंगुलेत्यादिना उक्तानाम् ॥ ५ ॥

मूषिकमांससंयुक्तं तैलमातपभावितम्।
अभ्यङ्गाद्धन्ति योन्यर्शं स्वेदस्तन्मांससैन्धवै ॥ ६ ॥

मूषिकेत्यादि—मूषिकाणा मास तैलात् पादिकम्, नात्र द्रवयोग कार्य्य । आतपभावितमिति सप्ताहम्, तान्मास मूषिकमाम सैन्धवचूर्णावचूर्णितमेरण्डादिपत्रे कृत्वा योनिं स्वेदयेत् ॥ ६ ॥

गोपित्ते मत्स्यपित्ते वा क्षौमं त्रि सप्तभावितम्।
मधुना किण्वचूर्णं वा दद्यादचरणापहम्।
स्रोतसां शोधनं कण्डूक्लेदशोथहरञ्च तत् ॥ ७ ॥

गोपित्त इत्यादौ—क्षौम सूक्ष्ममसृणवस्त्रम्। किण्व सुराबीजम्, मधुना किण्व-चूर्णमिति तृतीयो योग । अचरणा नाम योनिव्यापत् ॥ ७ ॥

वामिन्यां पूतियोन्याञ्च कर्त्तव्य स्वेदनो विधि ।
क्रम कार्य्यस्तत स्नेहपिचुभिस्तर्पणं भवेत् ॥ ८ ॥

वामिन्यामित्यादौ—पूतियोनिशब्देन उपप्लुता परिप्लुता चोच्यते ॥ ८ ॥

शल्लकीजिङ्गिनीजम्बूधवत्वक्पञ्चवल्कलैः।
कषायै साधित स्नेहः पिचु स्याद्विप्लुतापह ॥ ९ ॥

शल्लकीत्यादि—शल्लकीजिङ्गिन्यौ स्वनामख्याते। त्वक्शब्द शल्लक्यादिभि प्रत्येक सम्बध्यते। अत्र कषायश्चतुर्गुण । अकल्क एवाय स्नेह । पिचुरिति एतत्तैला-प्लुत पिचु ॥ ९ ॥

कर्णिन्यां वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः।
वस्तमूत्रकृता धार्य्या सर्वञ्च श्लेष्मनुद्धितम् ॥
त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते ॥ १० ॥

कर्णिन्यामित्यादौ—कुष्ठादिभिर्वर्त्ति कार्य्या इति योज्यम्। अर्काग्रमर्कपल्लवः। त्रैवृत स्नेहनमिति सर्पिस्तैलवसामज्जस्नेह। उदावर्त्ताख्या योनिव्यापत्। अनिलार्त्ति वातिकी योनिव्यापदित्यर्थः। तदेवेति त्रैवृत स्नेहनम्। विधीयत इति अनुवासनोत्तर-वस्तिविधयेत्यर्थः चरकसंवादात् ॥ १० ॥

आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक्।
तत्तैलार्द्रं वसनमनिशं योनिभागे दधाना
हन्ति व्रीडाकरभगफलं नात्र सन्देहबुद्धिः ॥ ११ ॥

आखोरित्यादौ—सपदीति सद्यस्कमांसग्रहणार्थम्। एतन्मांसं यावदिनि खरत्वमासाद्य न द्रवति द्रवतां न गच्छति तावदेव गालनीयमित्यर्थः। भगफल कन्दरोगम् ॥ ११ ॥

शतपुष्पातैललेपाद्बदरीदलजात्तथा।
पेटिकामूललेपाच्च योनिर्भिन्ना प्रशाम्यति ॥ १२ ॥

शतपुष्पेत्यादि—योगत्रयम्। तैलपिष्टशतपुष्पया लेप इत्यर्थः। पेटिका कार्पासीडुपरीति ख्याता। भिन्नेति विदीर्णा ॥ १२ ॥

सुपर्वीमूललेपेन प्रविष्टान्तर्बहिर्भवेत्।
योनिर्मूषावसाभ्यङ्गान्निःसृता प्रविशेदपि ॥ १३ ॥

सुपर्वीत्यादि—सुपर्वीमूललेपेन कारवेल्लमूललेपेनेत्यर्थः। प्रविष्टेति अन्तः प्रविष्टा अन्तर्मुखा योनिर्बहिर्भवतीत्यर्थः। योनिरित्यादौ—मूषो मूषिकस्तस्य वसा मांसस्नेह। निःसृतेति बहिर्निःसृता। इयमेव प्रस्रंसिनीत्युच्यते ॥ १३ ॥

लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च।
वेतसमूलनि क्वाथ-क्षालनेन तथैव च।
मूषिकावागुलिवसाम्रक्षणं योनिदार्ढ्यदम् ॥ १४ ॥

लोम्नेत्यादौ—तुम्बी अलावुः, तस्या फलम् । तथैव चेति दार्ढ्यकृदित्यर्थ. । मूषिकेत्यादौ—वागुली वादुर इति ख्यातो दिवान्ध पक्षी ॥ १४ ॥

**वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च ।**
**अश्वगन्धा हरिद्रा च गाढीकरणमुत्तमम् ॥ १५ ॥**

वचेत्यादि—वचादि हरिद्रान्त एको योग. । वचादिहरिद्रान्तैर्लेपोऽवचूर्णन वा ॥ १५ ॥

**मदफलमधुककर्पूरपूरितं भवति कामिनीजनस्य ।**
**चिरगलितयौवनस्य वराङ्गमतिगाढं सुकुमारम् ॥ १६ ॥**

मदेत्यादि—मद कस्तूरी, फल जातीफलम्, किंवा मदफल मदनफलमेव । एतैर्मधुना पिष्टैर्योनिप्रपूरणम् ॥ १६ ॥

**पञ्चपल्लवयष्ट्याह्व-मालतीकुसुमैर्घृतम् ।**
**रविपक्वमन्यथा वा योनिगन्धविनाशनम् ॥ १७ ॥**

पञ्चपल्लवेत्यादि—पञ्चानाम् आम्रजम्बूकपित्थबीजपूरकविल्वाना पल्लवा· । एषा कल्क । रविपक्वमिति द्रव विनैव, अन्यथा वेत्यग्निपक्वम्, अस्मिन् पक्षे जल चतुर्गुणम् ॥ १७ ॥

**इक्ष्वाकुवीजदन्तीचपलागुडमदनकिण्वयष्ट्याह्वैः ।**
**सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसञ्जननी ॥ १८ ॥**

इदानीमार्त्तवनाशे सति आर्त्तवोत्पादनविधिमाह इक्ष्वाकुवीजेत्यादि—इक्ष्वाकुस्तिक्तालावु, चपला पिप्पली । एषा प्र मा ८, स्नुहीक्षीर मा ८, अग्नो पक्त्वा वर्त्ति· कार्य्या । कुसुम रक्तम्, तज्जननी कुसुमसञ्जननी ॥ १८ ॥

**सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम् ।**
**दूर्वायाः पिष्टकं प्राश्य वनिता त्वार्तवं लभेत् ॥ १९ ॥**

सकाञ्जिकेत्यादि—योगत्रयम् । ज्योतिष्मतीदलमपि भृष्ट बोध्यम् । दूर्वाया पिष्टकमिति दूर्वातण्डुलाभ्या कृत पिष्टकम् । योगत्रयमेतत् ॥ १९ ॥

**धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ।**
**शेलुच्छदमिश्रपिष्टं भक्षणञ्च तदर्थकृत् ॥ २० ॥**

इदानीमार्त्तवहरयोगानाह धात्रीत्यादि—धात्र्यादीना मिलितचूर्णाना तोलकैक बोध्यम् । शेलुच्छदेति शेलुपत्रतण्डुलाभ्या कृत पिष्टकमित्यर्थ ॥ २० ॥

पुष्योद्धृतं लक्ष्मणायाश्चक्राङ्कायास्तु कन्यया ।
पिष्टं मूलं दुग्धघृतपीतमृतौ तु पुत्रदम् ॥ २१ ॥

इदानीमार्त्तवे पुत्रप्रदयोगानाह पुष्येत्यादि—चक्राङ्काया इति लक्ष्मणाया विशेषणम्, तत्पत्रस्य चक्राङ्कितत्वात् । दुग्धघृतपीतमिति दुग्धेन घृतेन वा ऋतुस्नानानन्तर दिनत्रय पिवेत् । अथवा नासापुटेन विन्दुचतुष्टय पिवेदित्यर्थ । अन्ये तु, लक्ष्मणाया मूल मा २, दुग्ध तो २ घृत तो २, ऋतुस्नानानन्तर दिनत्रय पिवेदित्याहु ॥ २१ ॥

काथेन हयगन्धायाः साधितं सघृतं पयः ।
ऋतुस्नातावला पीत्वा धत्ते गर्भं न संशयः ॥ २२ ॥

क्वाथेनेत्यादि—हयगन्धा अश्वगन्धा, तस्या मूलम्, षडङ्गपरिभाषया जलाधिक दत्त्वा अर्द्धशृत क्षीराच्चतुर्गुण दत्त्वा पक्त्वा घृत प्रक्षिप्य पिवेत् । अथवा अश्वगन्धा मूल मा ८, जल पल ४, शेष पल २, घृत मा ८, वृद्धास्तु क्षीरसाधनपरिभाषया व्यवहरन्ति ॥ २२ ॥

पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं वन्ध्यापि लभते सुतम् ॥ २३ ॥

पिप्पलीत्यादौ—शृङ्गवेर शुण्ठी ॥ २३ ॥

स्वर्णस्य रूप्यकस्य चूर्णं ताम्रस्य चाज्यसंमिश्रे ।
पीते शुद्धे क्षेत्रे भेषजयोगाद्भवेद्गर्भः ॥ २४ ॥

सुवर्णस्येत्यादौ—आज्यसमिश्र इति सर्वत्र योज्यम् । मारितसुवर्णचूर्णस्य माषैक, गव्यघृतस्य कर्षद्वयम् आलोड्य पेयम् । एव रजतताम्रयोरपि । तद्भेषजयोगात् शुद्धे क्षेत्र इति योज्यम् । केचित्तु सुवर्णादित्रय एकत्रावर्त्य ततो योनिमध्ये लेपयेदिति । तत्पानञ्चोपादिशन्ति । उक्त हि,—"हेम रूप्य वर ताम्रमेकत्रावर्त्य सर्पिषा । धृष्ट्वान्तर्लेपयेद् योनिं शोधनार्थं पिवेदपि" इति ॥ २४ ॥

कृत्वा शुद्धौ स्नानं विलङ्घ्य दिवसान्तरे तत प्रात. ।
स्नात्वा द्विजाय दत्त्वा भक्त्या सम्पूज्य लोकनाथेशम् ॥
श्वेतवलाङ्घ्रिकयष्टिं कर्षं कर्षं पलन्तु शर्करायाः ।
पिष्टैकवर्णजीवद्वत्साया गोस्तु दुग्धेन ॥
समधिकघृतेन पीतं नात्र दिने देयमन्नमन्यच्च ।

क्षुधिते सदुग्धमन्नं दद्यादापुरुषसन्निधेस्तस्या ॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनी धीरा ।
त्यक्तस्त्र्यन्तरसङ्गप्रहृष्टमनसोऽतिवृद्धधातोश्च ।
पुरुषस्य सङ्गमात्वाल्लभते पुत्रं ततो नियतम् ॥ २५ ॥

कृन्वेत्यादौ—विलङ्ध्येति यस्मिन् दिने शुद्धिस्नान तस्मिन् दिने उपोष्येत्यर्थ । श्वेतवलाया अङ्घ्रि मूलम् । समाधिकघृतेनेति दुग्धापेक्षया घृतभागो अधिको देय इत्यर्थ. । यस्मिन् दिने भेषजमिदमुपयुज्यते तस्मिन्नेव दिनेऽपरमन्न नोपयोज्यम् । दिनान्तरे तु क्षुधाया सत्या क्षीरसहितमन्न दद्यात् । समादिवस इति युग्मादिने ॥ २५ ॥

गोष्ठजातवटस्य प्रागुत्तरशाखजे शुभे शुङ्गे ।
माषौ द्वौ च तथा गौरसर्षपौ दधियोजितौ ॥
पुष्यापीतौ द्रुतापन्नगर्भायाः पुत्रकारकौ ।
कानकान् राजतान् वापि लौहान् पुरुषकानणून् ॥
ध्माताग्निवर्णान् पयसो दध्नो वाप्युदकस्य वा ।
क्षिप्त्वाञ्जलौ पिवेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥ २६ ॥

गोष्ठेत्यादि—गोष्ठ पर्वतः, उपवन वेति केचित् । माषाविति माषकलायौ द्वौ चरके धान्यमाषाभ्यामित्युक्तम् । तथा गौरसर्षपौ द्वाविति । दधियोजिताविति दधि दधिप्रक्षिप्तावित्यर्थ । द्रुतापन्नगर्भाया इति यावत् स्त्रीत्व पुस्त्व वा गर्भस्य न व्यक्ती-भूतमस्ति तावदेव इद कर्म कुर्य्यात् । अङ्गाभिव्यक्तिस्तु तृतीये मासे भवतीति मास-द्वय यावत् पुसवनकर्म कुर्य्यादिति भाव. । इद कर्म लिङ्गपरावृत्तिकारक भवतीति ज्ञापनार्थ द्रुतापन्नगर्भाया इत्युक्तम् । पुरुषकानणूनिति अणुपरिमाणान् पुरुषाकृतीन् । अञ्जलावित्यस्य पयस इत्यादिभिः सम्बन्ध. । एतच्च दुग्धादि नि.शेष पेय चरक-मवादात् ॥ २६ ॥

## प्रथमं फलघृतम्

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा वला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥
अजमोदा हरिद्रे द्वे हिंगुकं कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥

एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥
सर्पिरेतन्नर पीत्वा नित्यं स्त्रीषु वृषायते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥
या चैवास्थिरगर्भा स्याद् या वा जनयते मृतम् ।
अल्पायुषं वा जनयेद् या च कन्या प्रसूयते ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सका ॥
जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते ।
आरण्यगोमयेनापि वह्निज्वाला प्रदीयते ॥ २७ ॥

मञ्जिष्ठेत्यादौ—पयस्या क्षीरविदारी । द्राक्षाकाकोल्याविति द्वन्द्व, काकोल्यत्र क्षीरकाकोली, काकोलीत्युपात्तत्वात् । शतावरीरसक्षीरयो प्रत्येक चातुर्गुण्यम् । अत्र वृद्धोपदेश लक्ष्मणाक्षिपति अनुक्तमित्यादि ॥ २७ ॥

## द्वितीयं फलघृतम्

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम् ।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरं चतुर्गुणम् ।
तत्सिद्धं प्रपिबेन्नारी योनिशूलनिपीडिता ॥
पिण्डिता चलिता या च नि सृता विवृता च या ।
पित्तयोनिश्च विस्रस्ता षण्ढयोनिश्च या स्मृता ॥
प्रपद्यन्ते तु ता स्थानं गर्भं गृह्णन्ति चासकृत् ।
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ २८ ॥

सहचरे इत्यादि—सहचरे द्वे इति सितपीतभेदेन झिण्टीद्वयम् । शुकनासा चर्मकारपुटक पिण्डितेत्यत्र योनिरिति शेष ॥ २८ ॥

## नीलोत्पलाद्यं घृतम्

नीलोत्पलोशीरमधूकयष्टिद्राक्षाविदारीकुशपञ्चमूलैः।
स्याज्जीवनीयैश्च घृतं विपक्वं शतावरीकारसदुग्धमिश्रितम्॥
तच्छर्करापादयुतं प्रशस्तमसृग्दरे मारुतरक्तपित्ते।
क्षीणे बले रेतसि सम्प्रनष्टे कृच्छ्रे च पित्तप्रभवे च गुल्मे॥२९॥

नीलोत्पलमित्यादौ—मधुकस्य पुष्प फलं वा। कुशपञ्चमूल तृणपञ्चमूल। जीवनीयैरिति जीवनीयदशकै। शनावरीरसस्य त्रय प्रस्था, दुग्धस्य चैक॰। अन्ये तु शतावरीरसस्य चत्वार प्रस्था इत्याहु। घृतप्रस्थापेक्षया शर्कराया पादोऽष्टौ पलानि॥ २९॥

## बृहच्छतावरीघृतम्

शतावरीमूलतुलाश्चतस्र सम्प्रपीडयेत्।
रसेन क्षीरतुल्येन पचेत्तेन घृताढकम्॥
जीवनीयै शतावर्य्या मृद्वीकाभिः परूषकैः।
पिष्टै. पियालैश्चाक्षांशैर्द्वियष्टिमधुकैर्भिषक्॥
सिद्धशीते च मधुनः पिप्पल्याश्च पलाष्टकम्।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम्॥
ब्राह्मणान् प्राशयेत् पूर्वं लिह्यात् पाणितलं ततः।
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनञ्च तत्॥
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम्।
कामलां वातरक्तञ्च विसर्पं हृच्छिरोग्रहम्।
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत्॥ ३०॥

शतावरीमूलत्यादि—चरकस्य। जीवनीयैरिति जीवनीयदशकै, न पुनरष्टवर्गे चरकोक्तत्वात्। द्वियष्टिमधुकैरिति एकश्च मधुकभागा जीवनीयगणपठित, अपरोऽपि मधुकस्यैको भागो देय इति द्वितीययष्टिमधुकेन। किंवा स्थलजलभेदान्मधुकद्वययुक्तै। वाग्भटे तु द्वियष्टिमधुकैरित्यत्र द्विबलामधुकैरिति पठ्यते॥ ३०॥

दग्ध्वा शङ्खं क्षिपेद्रम्भास्वरसे तत्तु पेषितम्।
तुल्यालं लेपतो हन्ति रोम गुह्यादिसम्भवम्।

रक्ताञ्जनापुच्छचूर्णं युक्तं तैलन्तु सार्षपम्।
कुसुम्भतैलाभ्यंगो वा रोम्णामुत्पाटितेऽन्तकृत्॥ ३१॥

योनौ लोमबाहुल्येन वैरस्याद्रतिर्न स्यादित्यतो लोमशातनमाह दग्धेत्यादि—रम्भास्वरसे कदलीवागुडास्वरसे। तुल्यालमिति समहरितालम्। रक्ताञ्जनेति रक्ताञ्जना लोहितवर्णाञ्जननामिका आरजिला इति लोके। तत् पुच्छं रौद्रे शोषयित्वा चूर्णं कुर्य्यात्। तच्च सार्षपतैलेऽनुरूपे प्रक्षिप्य सप्ताहं स्थाप्यमित्यर्थः। कुसुम्भेत्यादौ—उत्पाटिते इत्यनन्तरं लोम्नीति शेषः। लोम्नि उत्पाटिते सति कुसुम्भवीजतैलाभ्यङ्गो लोम्नामन्तकृद्भवतीत्यर्थः॥ ३१॥

## आरग्वधाद्यं तैलम्

आरग्वधमूलफलं कर्षद्वितयं शङ्खचूर्णस्य।
हरितालस्य च खरजे मूत्रप्रस्थं तु कटुतैलम्॥
पक्वं तैलं तदथ शङ्खहरितालचूर्णितं लेपात्।
निर्मूलयति च रोमाण्यन्येषां सम्भवो नैव॥ ३२॥

आरग्वधेत्यादौ—कर्षद्वितयमिति हरितालस्य चेत्यनेनापि सम्बध्यते। कटुतैलास्यात्राष्टौ पलानि। अथ इत्यानन्तर्य्ये, तैलपाकानन्तरं शङ्खचूर्णं हरितालचूर्णं मिलित्वा तैलात् पादिकं प्रक्षिप्य लेपो देय इत्यर्थः। किंवा शङ्खचूर्णहरितालचूर्णयोरनियतमानेन तैलं सम्पिष्य लेपो देय इति॥ ३२॥

कर्पूरभल्लातकशङ्खचूर्णं क्षारो यवानाञ्च मनःशिला च।
तैलं विपक्वं हरितालमिश्रं रोमाणि निर्मूलयति क्षणेन॥३३॥

कर्पूरेत्यादि—कर्पूरादीनां कल्कः। क्षारो यवक्षारः। तैलमिति कटुतैलम्। हरितालमिश्रितमिति पूर्ववत् व्याख्येयम्॥ ३३॥

## क्षारतैलम्

शुक्तिशम्बूकशङ्खानां दीर्घवृन्तात् समुष्ककात्।
दग्ध्वा क्षारं समादाय खरमूत्रेण गालयेत्॥
क्षाराष्टभागं विपचेत् तैलञ्च सार्षपं बुधः।
इदमन्तःपुरे देयं तैलमात्रेयपूजितम्॥

विन्दुरेकः पतेद् यत्र तत्र रोमापुनर्भवः ।
मदनादिव्रणे देयमश्विभ्यामेव निर्मितम् ॥
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्च्चिनाम् ।
क्षारतैलमिदं श्रेष्ठं सर्वक्लेददहरं परम् ॥ ३४ ॥
इति योनिव्यापच्चिकित्सा ।

---

क्षारतैले—शुक्ति शुक्तिरेव मुक्तास्फोटो वा, दीर्घवृन्त श्योनाक, मुष्कको घण्टापारुली। एतानि समभागानि दग्ध्वा चतुर्विंशतिपलक्षारो ग्राह्य, अस्य स्रावणार्थं गर्दभमूत्र षड्गुणम् अष्टादशशरावपरिमित गृहीत्वा एकविंशतिवारान् परिस्राव्य क्षारोदकस्य षोडश शरावा ग्राह्या, कटुतैलन्तु शरावचतुष्टयम्। तैलापेक्षयाऽष्टभाग क्षारस्य कल्कत्वेन प्रदेय इत्यर्थ, तेन क्षारस्य पलचतुष्टय कल्क इत्यर्थं । अन्ये तु क्षारोदक तैलापेक्षयाऽष्टगुणमित्याहु । मदनादिव्रण इत्युपदशादौ ॥ ३४ ॥
इति योनिव्यापच्चिकित्साविवृति ।

---

# अथ स्त्रीरोगचिकित्सा ।

मधुकं शाकवीजञ्च पयस्या सुरदारु च ।
अश्मन्तक कृष्णातिलास्ताम्रवल्ली शतावरी ॥
वृक्षादनी पयस्या च तथैवोत्पलशारिवा ।
अनन्तशारिवा रास्ना पद्मा मधुकमेव च ॥
वृहतीद्वयकाश्मर्य्यक्षीरिशुङ्गास्त्वचो विषम् ।
पृथक्पर्णी वला शिग्रु श्वदंष्ट्रा मधुयष्टिका ॥
शृङ्गाटकं विसं द्राक्षा कशेरु मधुकं सिता ।
मासेषु सप्त योगाः स्युरर्द्धश्लोकास्तु सप्तसु ।
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुता ॥ १ ॥

अवशिष्टस्त्रीरोगचिकित्साभिधानार्थं स्त्रीरोगचिकित्सामाह मधुकमित्यादि—सुश्रुतस्य। शाको मरुजस्तरुस्तस्य वीज, पयस्या क्षीरकाकोली, अश्मन्तको-

ऽम्ललोटक मालुया वा, ताम्रवल्ली माञ्जिष्ठा, वृक्षादनी वन्दाक । तथैवोत्पल-शारिवेत्यत्र तथा तिलशारिवे इति पाठ सुश्रुते वाग्भटे च, तट्टीकाकृतोऽतिलता दूर्वा प्रियगुर्वेति व्याख्यानयन्ति । उत्पलशारिवा अनन्तमूलम् । अनन्त अनन्तमूल, शारिवा श्यामालता, पद्मा ब्रह्मयष्टि, काश्मर्य्य गाम्भारीफल, क्षीरिणा वटादीनां शुङ्गास्त्वचश्चेति । बिस मृणालम् । एते च सप्त योगा कल्कविषये उपयोज्या । अपरे तु क्षीरसाधनपरिभाषयेत्याहु ॥ १ ॥

कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकाः ।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ २ ॥

कपित्थेत्यादि—सुश्रुतस्य । कपित्थादीना सर्वेषा मूलम् । निश्चलस्तु कपित्थस्य फल पटोलस्य फल पत्र वा, अन्येषाञ्च मूलमित्याह ; किन्तु सुश्रुतवाग्भट-टीकाकृद्भिर्न व्याख्यातोऽयमर्थ. ॥ २ ॥

नवमे मधुकानन्तापयस्याशारिवा पिबेत् ।
पयस्तु दशमे शुण्ठ्याः शृतशीतं प्रशस्यते ॥
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च ।
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च ।
शृतं दुग्धं सितायुक्तं गर्भिण्या शूलनुत् परम् ॥ ३ ॥

नवम इत्यादौ—क्षीरसिद्धानीति पद लिङ्गविपरिणामेणात्रापि सम्बध्यते, डल्वणेन व्याख्यातोऽयमर्थ । अन्ये मधुकानन्तेति योगश्च क्वाथेन किंवा मधुकादीना कल्क क्षीरेण पिबेदित्यर्थ इत्याहु । पयस्त्वित्यादि—सुश्रुतस्य । डल्वणस्तु "क्षीर शुण्ठीपयस्याभ्या सिद्ध स्याद्दशमे हितम्" इति पठति, व्याचष्ट च—दशमे मासि शुण्ठ्या क्षीर विदार्य्या वा क्षीरपाककल्पनया सिद्ध क्षीर दशमे हितमिति । वाग्भटेऽप्युक्त—"योजयेद्दशमे मासि क्षीर सिद्ध पयस्यया । अथवा यष्टिमधुकनागरामर-दारुभि " इति । एतद्वचनसंवादादेव सक्षीरा वा हिता शुण्ठीत्यादावपि शुण्ठीमधुक-देवदारुभि सिद्ध क्षीर दशमे मासि प्रशस्यत इत्यर्थो ज्ञेय । कुशेत्यादि स्पष्टम् ॥३॥

कशेरुशृङ्गाटकजीवनीयपद्मोत्पलैरण्डशतावरीभिः ।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद् गर्भमुदीर्णशूलम् ॥ ४ ॥

कशेर्वित्यादौ—जीवनीयो जीवनीयदशकम् । शर्करया विमिश्रमिति शर्करा प्रक्षेप्या ॥ ४ ॥

**कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम् ।**
**सशूलगर्भस्रुतिपीडिताङ्गना पयो विमिश्रं पयसान्नभुक् पिबेत् ॥**

कशेर्वित्यादौ—पद्मक पद्मकेशरामित्याहु । उत्पल नीलोत्पलम् । समुद्ग-यष्टिमधुकमिति–मुद्गो मुद्गपर्णी । समुद्गयष्टिमधुकमित्यत्र समुद्गपर्णीमधुकमित्यपि पाठान्तरम् ॥ ५ ॥

**गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।**
**सितामधुककाश्मर्य्यैर्हितमुत्थापने पय ।**
**गर्भशोषे त्वामगर्भा प्रसहाश्च सदा हिता ॥ ६ ॥**

गर्भे शुष्के तु वातेनेत्यादि—पूर्व वातव्याधावेव पठितमिति नेह पठनीयम् । आमगर्भा इति हसकूर्मादीनामण्डानि, प्रमहा. कुक्कुटादय ॥ ६ ॥

**पाठालाङ्गलिसिंहास्यमयूरकजटै पृथक् ।**
**नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥**
**परूपकास्थिरामूललेपस्तद्वत् पृथक् पृथक् ।**
**वासामूले ध्रुवं तद्वत् कटिबद्धे सूते द्रुतम् ॥**
**पाठायास्तु शिफा योनौ या नारी सम्प्रधारयेत् ।**
**उर·प्रसवकाले तु सा सुखेन प्रसूयते ॥**
**तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् ।**
**लाङ्गल्याश्चरणौ सूते क्षिप्रमेतेन गर्भिणी ॥**
**आटरूपकमूलेन नाभिवस्तिभगालेप· ।**
**गृहाम्बुना गेहधूमपानं गर्भापकर्षणम् ॥ ७ ॥**

पाठेत्यादौ—श्रीकण्ठो लाङ्गलीस्थाने सुरसा पठति, व्याचष्टे च–सुरसा निर्गुण्डी । सिंहास्यो वासक , मयूरकोऽपामार्ग । एषा जटा मूल ह्रस्वत्व छान्द-सत्वात् । गृहाम्बु काञ्जिक गृहधूम अलन्धुक· ॥ ७ ॥

**मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।**
**घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ ८ ॥**

मातुलुङ्गस्येत्यादौ—मधुक याष्टिमधु, एतदुभयमपि मधुसयुक्त शृतेन सह पानव्यमित्यर्थ ॥ ८ ॥

पुटदग्धसर्पकञ्चुकमसृणमसीकुसुमसारसहिताञ्जिताक्षी ।
झटिति विशल्या जायते गर्भवती मूढगर्भापि ॥
गृहाम्बुना हिंगुसिन्धुपानं गर्भापकर्षणम् ॥ ९ ॥

पुटेत्यादि—पुटपाकविधया दग्धा या सर्पनिर्मोकमसी, तया मधुसहितया अञ्जितलोचना सती विगर्भा भवेदित्यर्थ । गृहाम्बुनेत्यादौ—सिन्धु सैन्धवम् ॥९॥

इहामृतश्च सोमश्च चित्रभानुश्च भामिनि ! ।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥
इदममृतमपां समुद्धृतं वै भव लघुगर्भमिमं विमुञ्चतु स्त्री ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥
मुक्ता पाशा विपाशाश्च मुक्ता सूर्य्येण रश्मयः ।
मुक्त सर्पभयाद्गर्भ एह्येहि मा रिच स्वाहा ॥"
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम् ।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम् ॥
तथोभयपञ्चदशदर्शनं सुखसूतिकृत् ।
नारी ऋतुवसुभि सह पत्तदिगष्टादशभिरेव च ।
अर्कभुवनाब्धिसहितैरुभयत्रिंशकमिदमाश्चर्य्यम् ॥
वसुगुणाब्ध्येकवाणनवषट्सप्तयुगे. क्रमात् ।
सर्व पञ्चदशद्विस्तु त्रिंशक नवकोष्ठके ॥१०॥

इहेत्यादि-स्वाहान्तोऽय मन्त्रश्च सुश्रुतस्य । अयमेव गर्भच्यवनमन्त्र । जल च्यवनमन्त्रेण सप्तवाराभिमन्त्रित पीत्वेति वृद्धवद्यव्यवहार सग्रहकृद्भिर्लिख्यते, न तु सुश्रुतेन, सुश्रुतेन तु च्यवनमन्त्रेण गर्भिणीं स्नावयेदित्युक्तम् । उभयपञ्चदशकमुभयात्रिंशकञ्चाह वस्वित्यादि—वसवोऽष्टौ, गुणास्त्रय., अब्धयश्चत्वार , वाणा पञ्च, युग द्वयम् । एतद्द्वैगुण्यादुभयत्रिंशक भवति । एते नव कोष्ठान् कृत्वा तदभ्यन्तरे लेख्या । वृन्दे तु उभयत्रिंशकमप्युक्तम् । एतद्द्वय शरावमध्ये लिखित्वा सम्पूज्य दर्शयितव्यम् ॥१०॥

कट्टुतुम्ब्यहिनिर्मोक-कृतवेधनसर्षपैः।
कटुतैलान्वितो धूमो योनेः पातयतेऽमराम्॥
कचवेष्टितयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा॥
"एरण्डस्य वने काको गङ्गातीरमुपागत।
इत पिवति पानीयं विशल्या गर्भिणी भवेत्॥"
अनेन सप्तधामन्त्र्य जलं देयं विशल्यकम्॥
मूलेन लाङ्गलिक्या संलिप्ते पाणिपादे च।
अमरापातनं मद्यै पिप्पल्यादिरज पिवेत्॥
शालिमूलाक्षमात्रं वा मूत्रेणाम्लेन वान्वितम्।
उपकुञ्चिकां पिप्पलीञ्च मदिरां लाभत पिवेत्।
सौवर्च्चलेन संयुक्तां योनिशूलनिवारणीम्॥११॥

कट्टुतुम्बीत्यादि—कट्टुतुम्बी तिक्तालावुफलं, कृतवेधन घोषकभेद तस्य फल, मर्षप. श्वेतसर्षप। एतैर्धूम कृत्वा योनिमुखे दद्यात्। उक्त हि सुश्रुते—"योनिमुख धूपयेत्" इति। अमरापातनमित्यादौ—पिप्पल्यादिरज इति सुश्रुतस्य पिप्पल्यादि-गणचूर्णम्। अम्लेन काञ्जिकेन, मद्येनेत्यन्ये। उपकुञ्चिका कृष्णजीरकम्। पिप्पली-मित्यनन्तर प्रक्षिप्येति शेष. ॥११॥

सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञितम्॥
यवक्षारं पिवेत्तत्र सर्पिषोष्णोदकेन वा।
पिप्पल्यादिगणक्काथं पिवेद्वा लवणान्वितम्॥१२॥
पारावतशकृत्पीतं शालितण्डुलवारिणा।
गर्भपातान्तरोत्थे तु रक्तस्रावनिवारणम्॥१३॥

सूताया इत्यादि—सुश्रुतेऽप्युक्त—"प्रसूतायास्तु वस्त्युदरशिरोयोनिशूल रक्त नरुध्य वायु· करोति, स मक्कल्लसंज्ञित ॥१२॥ १३॥

जलपिष्टवरुणपत्रैः सघृतैरुद्वर्त्तनालेपौ।
किक्किशरोगं हरतो गोमयघर्षादथो विहितौ॥१४॥

जलपिष्टेत्यादौ—किक्किशरोगो गर्भोत्पीडनेन वस्त्यादिदेशे मनाक् चर्मविदा-रणम्। अथो अनन्तर गोमयघर्षणानन्तरं विहितावित्यर्थ. ॥१४॥

ह्रीवेरारलुरक्तचन्दनबलाधन्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविपाकार्थं पिबेद्गर्भिणी ।
नानादोषयुतातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदित सूत्यामये शस्यते ॥१५

ह्रीवेरेत्यादौ—वत्सादनी गुडूची ॥१५॥

अमृतानागरसहचरभद्रोत्कटपञ्चमूलं जलदजलशीतम् ।
मधुसंयुक्तं निवारयति सज्वरं सूतिकातङ्कम् ॥१६॥

अमृतेत्यादौ—भद्रोत्कटो मादखेड इति राढाया ख्यातस्तरु । अन्ये तु भद्र भद्रमुस्तकम्, उत्कट इक्कर इति ख्यातस्तस्य मूलमित्याहु । पञ्चमूल स्वल्पपञ्चमूल, जलद मुस्तकम्, जल क्वाथ ॥१६॥

सहचरपुष्करवेतसमूलं विकङ्कतदारुकुलत्थसमम् ।
जलमत्र सैन्धवहिङ्गुयुतं सद्यो ज्वरसूतिकरोगहरम् ।
दशमूलीकृत· क्वाथ सद्यः सूतिरुजापह ॥१७॥

सहचरेत्यादौ—विकङ्कत वँइर इति लोके, तस्य मूलम् । कुलत्थ· समो यत्र तत् तथा कुलत्थसमम् । जल क्वाथ । दशमूलीत्यादि—आमग्लादिपीठाया पुन-धान्यशुण्ठ्या युक्तस्य धान्यपञ्चकयुक्तस्य क्वाथमुपदिशन्ति वृद्धा ॥१७॥

## वज्रकाञ्जिकम्

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका ।
जीरके द्वे हरिद्रे द्वे विडसौवर्चलं तथा ॥
एतैरेवौषधै पिष्टैरारनालं विपाचितम् ।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥
काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम् ।
मक्कल्लशूलशमनं परं क्षीराभिवर्द्धनम् ।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १८ ॥

वज्रकाञ्जिके—पिप्पल्यादिद्रव्यस्य मिलित्वा कर्षत्रय, काञ्जिकस्य शराव एक, पानीयमप्यल्पम्, एवमेव प्रायशो व्यवहरन्ति वृद्धा, सकल्ककाञ्जिकपानमुपदिशन्ति च । चक्रस्त्वाह क्षीरपाकविधानेन काञ्जिकस्यापि साधनमिति ॥ १८ ॥

## पञ्चजीरकगुडः

जीरकं हवुषा धान्यं शताह्वा वदराणि च।
यमानी कुञ्चिको हिंगुपत्रिका कासमर्दकम्॥
पिप्पली पिप्पलीमूलमजमोदाथ वाष्पिका।
चित्रकञ्च पलांशानि तथान्यच्च चतु पलम्॥
कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च।
गुडस्य च शतं दद्याद् घृतप्रस्थं तथैव च॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते॥
गर्भार्थिनीनां नारीणां वृंहणीये समारुते।
विंशतिव्यापदो योने कासं श्वासं ज्वरं क्षयम्॥
हलीमकं पाण्डुरोगं दौर्गन्ध्यं मूत्रकृच्छ्रताम्।
घ्नन्ति पीनोन्नतकुचा पद्मपत्रायतेक्षणा.।
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिता॥ १९॥

पञ्चजीरकगुडे—जीरक सूक्ष्ममुखकृष्णजीरक गुर्जरप्रसिद्ध, कुञ्चिको राजिका, हिंगुपत्रिका वंशपत्रिका, अजमोदा वनयमानी, अन्त परिमार्जनत्वात् यमान्या एव भागद्वयम्। वाष्पिका क्षुद्रराजिका। तथा चान्यच्चतु पलमिति वक्ष्यमाणकशेरुकादि-चतुष्टय प्रत्येक चतु पलमित्यर्थं। दीप्यक स्थूलजीरकम्। आदौ गुडघृत क्षीरेण पक्त्वा सिद्धे सति जीरकादिचूर्णप्रक्षेप। पञ्चपलजीरकयोगात् पञ्चजीरक इति सञ्ज्ञा। समारुत इत्यत्र गर्भ इति शेष, कुपितमारुतयोगात् क्षीयमाण इत्यर्थं॥ १९॥

वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा।
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्द्धनम्॥
दुग्धेन शालितण्डुलचूर्णपानं विवर्द्धयेत्।
स्तन्यं समाहृत क्षीरसेविन्यास्तु न संशय॥ २०॥

सम्प्रति स्तन्यवर्द्धनयोगानाह वनकार्पासिकेत्यादि—सौवीरकेण काञ्जिकेन। विदारीकन्द भूमिकुष्माण्डम्॥ २०॥

हरिद्रादिं वचादिं वा पिबेत् स्तन्यस्य वृद्धये ।
तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ॥
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम् ।
धात्री कुमारश्च पिबेत् क्वाथयित्वा सशारिवम् ॥
कफे वा त्रिफलां मुस्तं भूनिम्बं कटुरोहिणीम् ।
धात्रीस्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी ।
भार्गीदारुवचापाठाः पिबेत् सातिविषाः शृता ॥ २१ ॥

हरिद्रादिमित्यादि—हरिद्रादि-वचादिगणौ सौश्रुतौ—यथा—'हरिद्रादारुहरिद्राकलसीकुटजबीजानि मधुकञ्च' इति । कलसी पृश्निपर्णी । 'वचामुस्तातिविषाभद्रदारुनागरशतमूली अनन्तमूलञ्च' इति । भद्रदारु देवदारु । अभीरु शतावरी, शारिवा अनन्तमूलम् । सशारिवमित्यत्र सशर्करमिति पाठान्तरम् । अमृतादिशारिवान्तस्य क्वाथः ॥ २१ ॥

कुक्कुरमेन्चुकमूलं चर्वितमास्ये विधारितं जयति ।
सप्ताहात् स्तनकीलं स्तन्यञ्चैकान्ततः कुरुते ॥
शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितन्त्विह भेषजं तत् ।
आमे विदह्यति तथैव गते च पाकं
तस्याः स्तनौ सततमेव च निर्दुहीत ॥
विशालामूललेपस्तु हन्ति पीडां स्तनोत्थिताम् ।
निशाकनकफलाभ्यां लेपश्चापि स्तनार्त्तिहा ॥ २२ ॥

स्तनविद्रधिचिकित्सामाह कुक्कुरेत्यादि—कुक्कुरमेन्चुको गोरक्षतण्डुला । स्तनकील स्तनविद्रधि । निशेत्यादौ—कनकफल धुस्तूरफलम् ॥ २२ ॥

मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया ।
अभ्यङ्गमर्दनाभ्यां कठिनपीनस्तनौ भवतः ॥ २३ ॥

स्तनशोषचिकित्सामाह—मूषिकवसाया शूकरादिमांसचूर्णं प्रक्षिप्य स्तनयोरभ्यङ्गमर्दन भावपुष्पोत्सवे ॥ २३ ॥

महिषीभवनवनीतं व्याधिबलोग्रा तथैव नागबला ।
पिष्ट्वा मर्दनयोगात् पीनं कठिनं स्तनं कुरुते ॥ २४ ॥

महिषीत्यादौ—व्याधि कुष्ठम्, उग्रा वचा ॥ २४ ॥

## श्रीपर्णीतैलम्

श्रीपर्णीरसकल्काभ्यां सिद्धं तैलं तिलोद्भवम् ।
तूलकेनैव तत्तैलं स्तनस्योपरि धारयेत् ।
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ ॥ २५ ॥

श्रीपर्णी गाम्भारी, तस्यास्त्वचो रस स्वरस । स्तनस्योपरि कुचाग्रे ॥ २५ ॥

## काशीशाद्यं तैलम्

काशीशतुरगगन्धाशावरीगजपिप्पलीविपक्केन ।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिंगानि ॥ २६ ॥

काशीशेत्यादि—काशीश धातुकाशीश, शावरी लोध्रम् । एषा कल्क । जल चतुर्गुणम् । कर्ण कर्णपाली; वराङ्ग स्त्रीगुह्यम् ॥ २६ ॥

प्रथमर्त्तौ तण्डुलाम्भो नस्यं कुर्य्यात् स्थिरौ स्तनौ ॥ २७ ॥

प्रथमर्त्तौ आद्यपुष्पोत्सवे ॥ २७ ॥

गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः ।
सत्रिकटुनिशाभिः सिद्धं नस्यं स्तनोत्थापनं परम् ॥
सुतनूकरोति मध्यं पीतं मथितेन माधवीमूलम् ।
स्याच्छिथिलापि च गाढा सुरगोपाज्याभ्यंगतो योनि- ॥२८॥

गोमहिषीत्यादौ—गोमहिषीघृतयोर्मिलित्वा एको भाग., अपरश्च तैलस्य । श्यामा प्रियंगु ; कृताञ्जलि. सूर्य्यभक्ता अञ्जलिकारिकेति ख्याता, लाजालुया इत्यन्ये लज्जावतीति कुत्रचित् । कटुका कटुरोहिणी । एषा कल्क । जल चतुर्गुणम् । सुतनूकरोतीत्यादौ—मध्य स्त्रिया मध्यदेशः, मथितेन घोलेन, माधवीमूल माधवीलतामूलम् । सुरगोप इति इन्द्रगोपाख्य कीट सिन्दुरियापोका इति लोके, आज्य घृतम्, अनयोरभ्यङ्गात् ॥ २८ ॥

शववहनस्थितबन्धनरज्ज्वा सन्ताडनाद्धि दयितेन ।
नश्यत्यबलाद्वेषः पत्यौ सहजः कृतोऽथवा योगै· ॥
दत्त्वैव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम् ।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये ॥ २९ ॥

इति स्त्रीरोगचिकित्सा ।

शववहनेत्यादि—शवो मृत, तद्वहनाय स्थिता या बन्धनरज्जुस्तया । त्यक्तेन भर्त्रा । विप्राय दुग्धभक्तं दत्त्वेति पूर्वेण योज्यम् । भक्ष्ये भक्तादौ ॥ २६ ॥

इति स्त्रीरोगचिकित्सा विवृति ।

# अथ बालरोगचिकित्सा ।

कुष्ठवचाभयाब्राह्मीकनकं क्षौद्रसर्पिषा ।
वर्णायु कान्तिजननं लेहं बालस्य दापयेत् ॥ १ ॥

दुष्टस्तन्यपानादिना बालाना रोगसम्भवादनन्तर बालरोगाधिकार । तत्र बालरोगाधिकारे वक्तव्ये प्रथमत बालस्य सुस्थवृत्तमाह कुष्ठमित्यादि—कनक मारितजारितस्वर्णचूर्णम् । तत्र सुवर्णमारणविधिर्यथा—कण्टकवेध्यसुवर्णपत्र जम्बीरस्वरसेन स्थापयित्वा सुवर्णकफलस्थितगुडप्रायस्नेहभागेन लिप्त्वा गोरक्षकर्कटामूलपिण्डमध ऊर्ध्वं च दत्त्वा शरावसम्पुटे निक्षिप्य प्रलिप्य च गोमयाग्नौ वारद्वय त्रय वा प्रपुटेत्, ततश्चूर्णयित्वा दृढघनवस्त्रेण छानयेदिति । लेहोऽय जातदिने तदुपरि च प्रचरति । तन्त्रान्तरे च "स्वर्णादिलेहान्तरस्य सम्वत्सर यावदुपयोग " इति ॥ १ ॥

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
तर्कधो गुडिकां तप्तां निर्वाप्य कटुतैलके ।
तत्तैलं पानतो हन्ति बालानामुल्वमुद्धतम् ॥ २ ॥

तद्गुणमिति सस्काराल्लघूकृतम् । तर्कध इति तर्कु टाकुया इति ख्याता, तस्या अधोगुडिका वाङ्कनीति ख्याता । उल्व बालकस्य कण्ठगतश्लेष्मा ॥ २ ॥

व्योषशिवोग्रारजनीकल्कं वा पीनमथ पयसा ।
उल्वं नि शेषं कुरुते पटुतां बालस्य चात्यन्तम् ॥ ३ ॥
मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥ ४ ॥

व्योषेत्यादौ–शिवा हरीतकी, उग्रा वचा । स्तन्येन पयसेति नारीक्षीरेणेत्यर्थ, वाशब्दोऽत्र पूर्वयोगापेक्षया ॥ ३ । ४ ॥

नाभिपाके निशालोध्रप्रियंगुमधुकैः शृतम् ।
तैलमभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम् ॥ ५ ॥

नाभीत्यादौ—मधुक यष्टिमधुकम् ॥ ५ ॥

**सोमग्रहणे विधिवत् केकिशिखामूलमुद्धृतं बद्धम्।**
**जघनेऽथ कन्धरायां क्षपयत्यहितुण्डिकां नियतम् ॥६॥**

सोमग्रहण इत्यादौ—विधिवत् उद्धृत इत्यन्वय । विधिश्च मुक्तकचशिखेन पुमा उद्धरणम्। केकिशिखा मयूरशिखा । उद्धृत्य बद्धेति पाठे आमूलमुद्धृत्येति योज्यम्। अत्र भिक्षुप्रार्थितकपर्दककुहरे पारद पूरयित्वा सिक्थकेन संरुध्य कुमारी धत्ते इत्युपदिशन्ति वृद्धाः ॥ ६ ॥

**सप्तदलपुष्पमरिचं पिष्टं गोरोचनासहितम्।**
**पीतं तद्वत् तण्डुलभल्लकृतो दग्धपिष्टकप्राश ॥ ७ ॥**

सप्तदलेत्यादि—सप्तदल॰ सप्तच्छद, तस्य पुष्पम् । पीतमित्यत्र जलेनेति शेष । तद्वदिति अहितुण्डिका क्षपयतीति शेष । तण्डुलेत्यादि योगान्तरम्। भल्लस-हिततण्डुलान् पिष्ट्वा पत्रेणावेष्ट्य कुशेन बद्ध्वा अङ्गारैर्दग्ध्वा भक्षणीयमित्यर्थ ॥७॥

**जम्बूकनासा वायसजिह्वा नाभिर्वराहसम्भूता।**
**कांस्यं रसोऽथ गरलं प्रावृड्भेकस्य वामजङ्घास्थि ॥**
**इत्येकशोऽथ मिलितं विधृतं ग्रीवादिकटिदेशे।**
**अहितुण्डिकाप्रशमनमभ्यङ्गो नातिपथ्यविधिः ॥ ८ ॥**

जम्बूकेत्यादि—जम्बूक शृगालस्तस्य नासा, वायसः काकस्तस्य जिह्वा; रसः पारद, गरलं विषम् । प्रावृड्भेक वर्षाकालजमण्डूक, स च पीतच्छविः सोना-बेङ इति ख्यात, तस्य वामपदास्थि। एतत् सर्वं प्रत्येक मिलित्वा वा ग्रीवाया कट्या वा धारणीयम्। नातिपथ्यविधिरिति व्याधिप्रभावादेवायम् ॥ ८ ॥

**अनामके घुर्घुरिकावुक्कामरिचरोचनाः।**
**नवनीतञ्च सम्मिश्र्य खादेत् तद्रोगनाशनम् ॥ ९ ॥**

अनामक इति निर्नामरोग इति ख्यात, केचिच्च पुञ्जिकारोग इति ख्यात । घुर्घुरिका कीटविशेषतस्य वुक्का वुक्कभाग इत्यर्थ ॥ ९ ॥

**तैलाक्तशिरस्तालुनि सप्तदलार्कस्नुहीभवं क्षीरम्।**
**दत्त्वा रजनीचूर्णं दत्ते नश्येदनामाख्य ॥ १० ॥**

तैलाक्तेत्यादौ—तैलाभ्यक्तशिरस्तालुनि सप्तदलार्कस्नुहीक्षीरं दत्त्वा तदुपरि हरिद्राचूर्णं दद्यादित्यर्थः ॥ १० ॥

लेहयेच्च शुना वालं नवनीतेन लेपितम् ।
स्फुटकीपत्रजरसेनोद्वर्त्तनञ्च तद्धितम् ॥ ११ ॥

लेहयेदित्यादौ—नवनीताक्तगात्र शिशु कृत्वा शुना कुक्कुरेण लेहयेद्, तत पुटकीस्वरसेनोद्वर्त्तयेत् ॥ ११ ॥

तैलस्य भागमेकं मूत्रस्य द्वौ च शिम्बीदलरसस्य ।
गव्यं पयश्चतुर्गुणमेवं दत्त्वा पचेत्तैलम् ।
तेनाभ्यक्त सततं रोगमनामकाख्यमुपहरति ॥ १२ ॥

तैलस्येत्यादौ—शिम्बीदल शिम्बीपत्रम् ॥ १२ ॥

आर्कं तूलकमाविकरोमाण्यादाय केशराजस्य ।
स्वरसेनाक्ते वस्त्रे कृत्वा वर्त्तिञ्च तैलाक्ताम् ॥
तज्जातकज्जलाञ्चितलोचनयुगलोऽप्यलङ्कृतो वाल'
कष्टमनामकरोगं क्षपयति भूतादिकञ्चापि ॥ १३ ॥

आर्कमित्यादि—अर्कस्य तूलकम्, आविकरोमाणि मेषरोमाणि चेति भागद्वय केशराजस्वरसरञ्जितवस्त्रैरावेष्ट्य तैलाक्त ज्वालयेत् । तच्छिखोपरि पात्र धृत्वा पतित-कज्जलेन चक्षुषो रञ्जन कार्य्यम् ॥ १३ ॥

चालनिकातलसंस्थितपोतं संस्राव्य गव्यमूत्रेण ।
ओकोदशालिकायां रजकक्षारोदकस्नानम् ॥
दासक्रयणश्रावणवटिका रसेन्द्रपूरिता धृता कण्ठे ।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम् ॥ १४ ॥
भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु ।
देयं तदेव वालानां मात्रा तस्य कनीयसी ॥ १५ ॥

चालनिकेत्यादि—ओकोदशालिकाया चालनिकातले संस्थितवालक चालनिकारन्ध्रपतितगोमूत्रेण स्नापयित्वा रजकक्षारजलेन स्नापयेत् । दासेत्यादौ—श्रावण· पापण्डविशेष भिक्षुवेशधारी योगीति लोके, तस्य वटिका वराटिका कपर्दिकेति यावत्, दासेन दासद्वारा क्रयण यस्या सा तथा, तत कर्मधारय । रसेन्द्रेण पारदेन पूरिता सा कण्ठे धृतेत्यर्थ । नलिनीदल पद्मपत्रम् ॥ १४ । १५ ॥

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका ।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतै ॥
एकैकां वर्द्धयेत्तावद् यावत् संवत्सरो भवेत् ।
तदूर्द्ध्वं माषवृद्धि स्याद् यावदाषोडशाब्दिकः ॥१६॥

मात्रा चात्र कनीयसीति यदुक्तम् अतस्तामेव मात्रा प्रतिपादयितु परिभाषामाह प्रथम इत्यादि—माध्विति मध्वादिविकल्पो दोषप्रकृत्यादिभेदात् । एकैकामिति मासि मासि एकैका रक्तिका कृत्वा वर्द्धयेदित्यर्थ, तदूर्द्ध्वमिति वर्षादूर्द्ध्वं वर्षे वर्षे मापेण मापेण वृद्धिर्माषवृद्धिः । एतत्परिभाषाशेषो यथा—"प्रतिमास प्रयोक्तव्या वृद्धिरेषा भिषग्वरै । मानमेतत् प्रयोक्तव्य सर्वमानविधावपि । षोडशाब्दाद्भवेदूर्द्ध्वं यावदासप्ततेरिति । एष एव विभागोऽय तदूर्द्ध्वं वालवत् क्रिया" इति ॥ १६ ॥

## हरिद्रादिः

हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः ।
शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषजित् ॥ १७ ॥

हरिद्रत्यादौ—सिंहीं पृश्निपर्णी । यत्र हरिद्रादिगण एवाय श्लोकेन निवद्ध, तत्र च कलसीति पठिता, निश्चलस्तु सिंही वासक इत्याह । यस्तु क्षीरपो वाल कषाय पातुमसमर्थस्तस्य धात्रीम् पाययेत् । सुश्रुतेन कषायोक्तद्रव्यकल्केन लिप्तयोः स्तनयोः पानमपि दर्शितम् ॥ १७ ॥

## वालचातुर्भद्रिका

घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥ १८ ॥

घनेत्यादि—घन मुस्तकम् ; अरुणा अतिविषा ॥ १८ ॥

## धातक्यादिः

धातकीविल्वधन्याकलोध्रेन्द्रयववालकैः ।
लेहः क्षौद्रेण वालानां ज्वरातीसारवान्तिनुत् ॥ १९ ॥

धातक्यादि—स्पष्टम् ॥ १९ ॥

रजनीदारुसरलश्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥

अग्निदीपनं हन्ति मारुतार्तिं सकामलाम् ।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत् ॥ २० ॥

रजनीत्यादि—वाग्भटस्य । श्रेयसी गजपिप्पली । बालाना सर्वरोगनुदित्यत्र बालाना सर्वशोथनुदित्यपि पाठो वाग्भटे चन्द्राटेऽपि दृश्यते ॥ २० ॥

मिषीकृष्णाञ्जनं लाजाशृङ्गीमरिचमाक्षिकै: ।
लेह शिशोर्विधातव्यश्छर्दिकासज्वरापह. ॥ २१ ॥

मिषीत्यादि—मिषी मधुरिका , कृष्णा पिप्पली , अञ्जन रसाञ्जन , शृङ्गी कर्कटशृङ्गी ॥ २१ ॥

## शृङ्ग्यादिः

शृङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्दिभिरर्दितानां समाक्षिकश्चातिविषां तथैकाम् २२

शृङ्ग्यादि–स्पष्टम् ॥ २२ ॥

पीतं पीतं वमेद् यस्तु स्तन्यं तन्मधुसर्पिषा ।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥
आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत् ॥ २३ ॥

पीतमित्यादि—वाग्भटस्य । द्विवार्त्ताकी बृहतीद्वयम् । फलरसमिति वार्त्ताकीफलरसम् । योगोऽयमेक इति श्रीकण्ठ । निश्चलस्तु चशब्दो विकल्पे, अतो योग द्वय , यदुक्तमायुर्वेदसारे—"पीत्वा यो वमति स्तन्य भृश यो मधुसर्पिषा । कोलीफलरस यद्वा पञ्चकोल प्रलेहयेत्" इति । अयञ्च व्यवस्थितो विकल्प , तत्र पित्तोत्तरे कफे बृहतीद्वयफलरस , वातश्लेष्मणि च पञ्चकोलमित्याह ॥ २३ ॥

पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम् ।
रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम् ॥ २४ ॥

पिप्पलीत्यादौ—रसेन मातुलुङ्गस्येत्यत्र लिह्यादिति शेष ॥ २४ ॥

पेटीपाठामूलाज्जम्ब्वाः सहकारवल्कतः कल्कः ।
इत्येकशश्च पिण्डो विधृतो ह्यनाभिमध्यतात्वादौ ॥
छर्द्यतीसारजवेगं प्रबलं धत्ते तदेव नियमेन ॥ २५ ॥

पेटीत्यादि—पेटारीति ख्याता, झापीडुपरीति लोके । चकारान्मिलित्वा प्रत्येकञ्च योग ॥२५॥

विल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च।
क्काथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥२६॥

विल्वेत्यादौ—जल बालकम्। क्काथावलेहाविति क्काथो वा अवलेहो वेत्यर्थं। अवलेहपक्षे सर्वं सञ्चूर्ण्य अनुरूपमधुना लेह्यम् ॥२६॥

समङ्गाधातकीलोध्र-शारिवाभिः शृतं जलम्।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥
नागरातिविषामुस्तं बालकेन्द्रयवैः शृतम्।
कुमारं पाययेत् प्रातः सर्वातीसारनाशनम् ॥
समङ्गा धातकी पद्मं वयःस्था कच्छुरा तथा।
पिष्टैरेतैर्यवागू स्यादतीसारविनाशिनी ॥२७॥

समङ्गेत्यादि—समङ्गा वराहक्रान्ता, पद्म पद्मकेशरः वयस्था गुडूची, कच्छुरा—शूकशिम्बीमूलम्। कल्कसाध्या इयम् ॥२७॥

विल्वचूतकषायेण लाजाश्चैव सशर्कराः।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशिनी ॥२८॥

विल्वेत्यादौ—कषायोऽर्द्धशृत। अतएव निर्देशात् लाजाशब्द स्त्रीलिङ्गोऽप्यस्तीति। योगोऽय छर्द्यतिसारनाशनो बोध्य इति शेष ॥२८॥

कल्कः प्रियङ्गुकोलास्थिमध्यमुस्तरसाञ्जनैः।
क्षौद्रलीढ कुमारस्य च्छर्दितृष्णातिसारनुत् ॥
मोचरस समङ्गा च धातकी पद्मकेशरम्।
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥२९॥

कल्क इत्यादौ—कोलास्थि मध्य बदरास्थिमज्जा, मोच शाल्मलीवेष्टक ॥२९॥

लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्कितः।
बालस्य रुन्ध्यान्नियतं रक्तस्रावप्रवाहिकाम् ॥३०॥

लेह इत्यादौ—रक्तस्रावप्रवाहिकामिति प्रवाहिकायामेव यत्र रक्तस्रुतिस्तत्राय योग, न तु केवलरक्तस्रावे; तैलतिलयोरुष्णवीर्य्यत्वेन तत्रानर्हत्वात् ॥३०॥

लाजा सयष्टिमधुकं शर्कराक्षौद्रमेव च।
तण्डुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥३१॥

लाजा इत्यादौ—सयुक्तमित्यनन्तर पीतमिति शेष । लाजादिचूर्णं यथायोग्य गृहीत्वा तण्डुलोदकेन पेयम् ॥३१॥

अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतीसारं ग्रहणीरोगं सुदुर्वारम् ॥३२॥

अङ्कोठेत्यादि—अङ्कोठ अङ्कोड इति ख्यातस्तरु । योगद्वये तण्डुलोदक सम्बध्यते । वटजमूल वटजातमूल मूलाकार ह्रस्वप्रमाण 'व' इति ख्यातम्, अतएवोक्त वटजमूलमिति, न तु वटमूलम् ॥३२॥

सितजीरकसर्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुडसहितः श्वेतसर्जो वा ॥
मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुडतक्रयुक्तमेतद् ग्रहणीरोगं निहन्त्याशु ॥३३॥

सितेत्यादौ—विल्वदलोत्थाम्बु विल्वपत्रस्वरस । गुडेन मधुरीकृत तक्र गुडतक्रम् ॥ ३३ ॥

विल्वशक्राम्बुमोचाब्दसिद्धमाजं पयः शिशो ।
समांशं रक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रत ।
तद्वदजाक्षीरसमो जम्बूत्वगुद्भवो रस ॥३४॥
गुदपाके तु वलानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥३५॥
कणोपणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृत ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तम• ॥३६॥

विल्वेत्यादौ—शक्रमिन्द्रयवम्, अम्बु वालकम्, मोच शाल्मलीवेष्टक । सिद्ध-मिति क्षीरपरिभाषया पाक ॥३४–३६॥

घृतेन सिन्धुविल्वैलाहिङ्गुभार्गीरजो लिहन् ।
आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः ॥ ३७ ॥

घृतेनेत्यादौ—सिन्धु सैन्धवम् । एषा चूर्णं घृतेन लेह्यम् । तोयेन वेत्यनन्तरं पिवन्निति शेष । तेन तोयेन कोष्णजलेन वा पिवेदित्यर्थ ॥ ३७ ॥

हरीतकीवचाकुष्ठं कल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात् ॥ ३८ ॥

हरीतकीत्यादि—वाग्भटस्य । तालुपातेन तालुप्रदेशस्य निम्नता । तालुकण्टकादित्यपि पाठ ॥ ३८ ॥

मुखपाके तु बालानां साम्रसारमयोरजः ।
गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम् ॥
अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ।
दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम् ॥ ३९ ॥

मुखपाक इत्यादौ—आम्रसार आम्रसदृशपत्र स्वनामख्यातो राढायामिति केचित् । अन्ये आम्रसार, आम्रफलस्थिमज्जेत्याहु । आम्रसारादि-रसाञ्जनान्तम् एक एव प्रलेप । अश्वत्थस्य त्वक् पत्रञ्च । अपरमित्यत्र प्रलेपनमित्यन्वय· ॥ ३९ ॥

सह जम्बीररसेन स्नुग्दलरसघर्षणं सद्यः ।
कृतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥ ४० ॥

सहेत्यादौ—जम्बीर पर्णाशभेद । स्नुग्दल स्नुहीपत्रम्, तस्य स्वरस पुटपाकविधिनैव ग्रहीतु शक्यते ॥ ४० ॥

लावतित्तिरिवल्लूररजः पुष्परसान्वितम् ।
द्रुतं करोति बालानां दन्तकेशरवन्मुखम् ॥ ४१ ॥

लावेत्यादि—वाग्भटस्य । लावतित्तिर्योर्वल्लूर शुष्कमामम्, पुष्परसो मधु । एतन्मासचूर्णं मधुना लेह्यमिति केचित् । अन्ये तु मधुनैतच्चूर्णेन दन्तपालिं प्रतिसारयेदित्याहु । किन्त्वय योगो वाग्भटे प्रतिसारणप्रकरणे पठित । दन्तकेशरमिति दन्ता एव केशर सुकुमारत्वात् ॥ ४१ ॥

दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदा· ॥ ४२ ॥

दन्तोद्भेदेत्यादि—वाग्भटस्य । दन्तोद्भेदो दन्तभेद । "दन्तोद्भेदश्च रोगाणा सर्वेषामपि कारणम् । विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम्" इत्यादि । न बालमतियन्त्रयेदिति आहाराचारनियमेनेत्यर्थ ॥ ४२ ॥

पञ्चमूलीकषायेण सघृतेन पय शृतम् ।
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥

सुवर्णगैरिकस्यापि चूर्णानि मधुना सह ।
लीढ्वा सुखमवाप्नोति क्षिप्रं हिक्कार्दितः शिशुः ॥ ४३ ॥

पञ्चमूलीत्यादि—पञ्चमूली महती वातकफप्रधानहिक्काहरत्वात् । अत्र क्वाथात् पादिकं घृतम् अष्टमांशं वा, दुग्धाच्चतुर्गुणः क्वाथः । एतत् सर्वमेकीकृत्य पक्त्वा क्वाथं शोषयित्वा सघृतं दुग्धं स्थाप्यम्, तत्र शुण्ठीचूर्णं गुडञ्चानुरूपं प्रक्षिप्य यथार्हं पिबेदित्याहुः । अन्ये तु घृतस्यापि पानकाले प्रक्षेप्यत्वमिति वदन्ति । सुवर्णगैरिकस्य अत्यन्तलोहितगैरिकस्य ॥ ४३ ॥

चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाक्ष्यपि ।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिबेत् ।
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत् ॥ ४४ ॥

चित्रकमित्यादौ—गवाक्षी गोरक्षकर्कटी । सविबन्धे वाते कफेऽस्य योगः ॥४४॥

द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ।
लीढं श्वासं निहन्त्याशु कासञ्च तमकं मथा ॥ ४५ ॥
पुष्करातिविषाशृङ्गीमागधीधन्वयासकम् ।
चूर्णितं मधुना लीढं शिशूनां पञ्चकासनुत् ॥ ४६ ॥

द्राक्षेत्यादि—कफपित्ते । यासो दुरालभा । तमकं श्वासमित्यर्थः ॥४५।४६॥

दाडिमस्य च वीजानि जीरकं नागकेशरम् ।
चूर्णितं शर्कराक्षौद्रलीढं तृष्णानिवारणम् ॥ ४७ ॥

दाडिमस्येत्यादौ—चूर्णितमित्यत्र कृष्णा चेति पाठान्तरम् ॥ ४७ ॥

मयूरपक्षभस्मव्युषितजलं तेन भावितं पेयम् ।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वक्त्रशोषजिद्धृतं वक्त्रे ॥
पिष्टैश्छागेन पयसा दार्वीमुस्तकगैरिकैः ।
बहिरालेपनं शस्तं शिशोर्नेत्रामयापहम् ॥ ४८ ॥

मायूरेत्यादि—मयूरपक्षभस्मस्रावितजलेन व्युषितेन भावितवटकाष्ठभस्म स्रावितजलेन पेयमित्यर्थः । मयूरपक्षभस्म पल १, जल पल ६, एतद्बहुधा वस्त्रे परिस्राव्य गृहीतजले व्युषिते षष्ठांशेन वटकाष्ठभस्म प्रक्षिप्य बहुधा परिस्राव्य यथार्हं पिबेत् ॥ ४८ ॥

मनःशिला शङ्खनाभि पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्ति क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥ ४६ ॥

मन शिलेत्यादौ—क्षौद्रेण सयुक्ता सघृष्टेत्यर्थः ॥ ४६ ॥

मातृस्तन्यकटुस्नेहकाञ्जिकैर्भावितो जयेत् ।
स्वेदाद्दीपशिखोत्तप्तो नेत्रामयमलक्तकः ॥ ५० ॥

मातृस्तन्येत्यादौ—कटुस्नेह कटुतैलम् । एतैर्मातृस्तन्यादिभिः प्रत्येकश. सप्ताह भावितोऽलक्तकरस. अनन्तरं दीपशिखातप्त. सन् स्वेदविधिना नेत्रामय जयेदित्यर्थ. ॥ ५० ॥

शुण्ठीभृङ्गनिशाकल्कः पुटपकः ससैन्धव ।
कुकूणकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥ ५१ ॥

शुण्ठीत्यादौ—भृङ्गो भृङ्गराज । शुण्ठ्यादीना पिष्टाना प्रत्येक माषद्वयम् , सैन्धव रक्तिपञ्चकम् । एतत् सर्व पुटपाकविधिना पक्त्वा तत आकृष्य वस्त्रे पोट्टलीं बद्ध्वा चक्षुषि आश्च्योतन कार्य्यम्। कुकूलक इति पाठे कुकूलकस्तुषाग्निः, एतस्मिन् पुटपक इत्यान्वयः। उक्त हि वाग्भटे—"शृङ्गवेर निशा भृङ्ग कल्कित वटपल्लवै । बद्ध्वा गोशकृता लिप्त कुकूलै स्वेदयेत् ततः । रसेन लिम्पेत् ताल्वास्य नेत्रे च परिषेचयेत्" इति ॥ ५१ ॥

क्रिमिघ्नालशिलादार्वी-लाक्षाकाञ्चनगैरिकै. ।
चूर्णाञ्जनं कुकूणे स्याच्छिशूनां पोथकीषु च ॥
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके ॥
गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशो· ।
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्च्चिकाः ॥ ५२ ॥

क्रिमिघ्नेत्यादौ—आल हरितालम् ; शिला मन शिला; काञ्चनगैरिक स्वर्णगैरिकम् । चूर्णाञ्जनमिति मधुम्रक्षितशलाकया चूर्णाञ्जन कार्य्यम् । सुदर्शनेति सुदर्शना त्रिशुरीति ख्याता जीवपेतीति च ख्याता ॥ ५२ ॥

## अश्वगन्धाघृतम्

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ५३ ॥

पादकल्क इत्यादौ—पेय कुमाराणामिति कुमारैः पेयमित्यर्थः । वा कर्त्तरि कृत्यैरिति षष्ठी ॥ ५३ ॥

## बालचाङ्गेरीघृतम्

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत् ।
कपित्थव्योपसिन्धूत्थसमङ्गोत्पलवालकैः ॥
सबिल्वधातकीमोचैः सिद्धं सर्वातिसारनुत् ।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥ ५४ ॥

चाङ्गेरीत्यादौ—अजाक्षीरचाङ्गेरीस्वरसौ घृताद् द्विगुणौ, पाकसाधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात् ॥ ५४ ॥

## कुमारकल्याणकं घृतम्

शङ्खपुष्पी वचा ब्रह्मी कुष्ठं त्रिफलया सह ।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥
शटी दुरालभा बिल्वं दाडिमं सुरसः स्थिरा ।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यमग्निपुष्टिविवर्द्धनम् ॥
छायासर्वग्रहालक्ष्मी-क्रिमिदन्तगदापहम् ।
सर्वबालामयहरं दन्तोद्भेदं विशेषतः ॥ ५५ ॥

शङ्खपुष्पीत्यादौ—जीवक जीवनीयवर्गमध्ये पठितद्रव्यम् । सुरसः पर्णाश । कण्टकारीस्वरस क्षीरञ्च प्रत्येक घृताच्चतुर्गुणम् । भूतादिकृत मुखादिवैवर्ण्यं छाया ॥ ५५ ॥

## अष्टमङ्गलघृतम्

वचा कुष्ठं तथा ब्रह्मी सिद्धार्थकमथापि च ।
शारिवा सैन्धवञ्चापि पिप्पली घृतमष्टमम् ॥

मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने ।
दृढस्मृति क्षिप्रमेधा· कुमारो बुद्धिमान् भवेत् ॥
न पिशाचा न रक्षांसि न भूता न च मातर· ।
प्रभवन्ति कुमाराणां पिवतामष्टमङ्गलम् ॥ ५६ ॥

वचेत्यादि—वचादीना कल्क, जलं चतुर्गुणमिति ॥ ५६ ॥

## लाक्षादितैलम्

लाक्षारससमं सिद्धं तैलं मस्तुचतुर्गुणम् ।
रास्नाचन्दनकुष्णाब्द-वाजिगन्धानिशायुगैः ॥
शताह्वादारुयष्ट्याह्वमूर्वातिक्ताहरेणुभि ।
वालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत् ॥ ५७ ॥

लाक्षातैले—कुष्ठाब्दचन्दनैरित्येव पाठो वाग्भटपुस्तकेषु दृश्यते, न तु कृष्णाब्दचन्दनैरिति । तिक्ता कटुरोहिणी, न तु लताकस्तुरी, "समूर्वारोहिणीरास्नाशताह्वामधुकैः समैः" इति सिद्धसारदर्शनात् ॥ ५७ ॥

सहामुण्डितिकोदीच्यकाथस्नानं ग्रहापहम् ।
सप्तच्छदनिशाकुष्ठ-चन्दनैश्चानुलेपनम् ॥ ५८ ॥

सहेत्यादि—सहा माषपर्णी । क्वाथोऽस्यार्द्धश्रृत ॥ ५८ ॥

सर्पत्वक् लशुनं मूर्वासर्षपारिष्टपल्लवाः ।
वैडालविड्जालोम मेषशृङ्गी वचा मधु ।
धूप· शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥ ५६ ॥

सर्पेत्यादि—सर्पत्वक् निर्मोक , अरिष्टो निम्ब·, सर्षप· श्वेतसर्षप , मेषशृङ्ग्या· पत्रम् । मेषशृङ्गमिति पाठे मेषस्य गडरस्य शृङ्गम् ॥ ५६ ॥

वलिशान्तीष्टकर्माणि कार्य्याणि ग्रहशान्तये ।
मन्त्रश्चायं प्रयोक्तव्यस्तत्रादौ सार्वकामिक· ॥
ॐ नमो भगवते गरुडाय त्र्यम्वकाय सद्यस्तव स्तुतः स्वाहा । ॐ कं पं टं शं वैनतेयाय नमः । ॐ ह्रीं ह्रूं क्ष· ॥६०॥

वलीत्यादौ—तत्रादावित्यत्र मन्त्रादाविति पाठान्तरे कुमारस्य हस्तकस्यादि-

सूत्रबन्धन इत्यर्थ । ॐ इत्यादिस्वाहान्त एको मन्त्र । ॐ इत्यादिबीजाक्षरात्मको द्वितीय । एव ॐ इत्यादि च इत्यन्तस्तृतीय । किंवा मिलित्वा एक एव बलिदानमन्त्र ॥ ६० ॥

बालदेहप्रमाणेन पुष्पमालान्तु सर्वत. ।
प्रगृह्य मुच्छिकाभक्तबलिर्देयस्तु शान्तिक. ।
"ॐकारी सुवर्णपक्षी बालकं रक्ष रक्ष स्वाहा" ॥ ६१ ॥

बालदेहेत्यादौ—पुष्पमाला शुक्ला । सर्वत इति सर्वासु दिक्षु । भक्त शरावस्योपरिस्थभक्त चतुष्पार्श्वस्थभक्त वा । मुच्छिका स्वल्पशरावा । अत्र मत्स्यमासव्यञ्जनधूपदीपदानमप्युपदिशन्ति वृद्धाः । अय गरुडबलि सन्ध्याया दिनत्रय दीयत इति वृद्धे । बालकरक्षामन्त्रमाह ॐकारीत्यादिस्वाहान्त ॥ ६१ ॥

ॐ नारायणाय नम । प्रथमे दिवसे मासे वर्षे वा गृह्णाति नन्दा नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर । अशुभं शब्दं मुञ्चति, आत्कारञ्च करोति, स्तन्यं न गृह्णाति ।
बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।
नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लौदनं, शुक्लपुष्पं, शुक्लसप्तध्वजा , सप्त प्रदीपा , सप्त स्वस्तिका , सप्त वटका, सप्त शष्कुलिकाः, जम्बुलिका, सप्त मुस्तकाः, गन्धं, पुष्पं, ताम्बूलं, मत्स्यं, मांसं, सुराभक्तञ्च पूर्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्दातव्य । तत अश्वत्थपत्रं जलकुम्भे निक्षिप्य शान्त्युदकेन स्नापयेत्, रसोनसिद्धार्थकमेषशृङ्गनिम्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत् । ॐ नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा"। एवं दिनत्रयं बलिं दत्त्वा चतुर्थे दिवसे ब्राह्मणं भोजयेत् । ततः सम्पद्यते शुभम् ॥ ६२ ॥

इदानीं प्रसिद्धफल रावणकृतकुमारतन्त्रमाह ॐ नारायणाय नम इत्यादि—प्रथमे मासि वर्षे वेत्यादि कथम् ? यतो वक्ष्यमाणद्वितीयदिवसादिना प्रथममासस्य बाधितत्वात्; एव प्रथमवर्षस्यापि द्वितीयतृतीयमासादिद्वादशमासान्ते परिभूतत्वादिति ।

अत्रोच्यते द्वादशदिनात् परतोऽस्त्येव प्रथममासस्यावकाशः, एव वर्षस्यापि। तथाहि—यदि कुमारो माघे जातस्तदा माघादिगणनया पौषमासि द्वादशमासा भवन्ति। प्रथम-द्वितीयदिवसविधिरेव, तत ऊर्द्ध्वं द्वादशमासि वर्षवृद्धिदिन यावत् प्रथमसम्वत्सरविधि-र्विधेय इति युक्तमुत्पश्यामः। मासेन गणनया, न तु चन्द्रादित्यगत्या दिनविभाग कृत्वा मासादिगणना कार्य्या, इह द्वादशमासवर्षयोर्विषयत्वाभावप्रसङ्गात्। किंवा आदित्य-गत्यादिगणनयापि जन्मदिन एव प्रथमवर्षविधेश्चारितार्थत्वमिति। नन्दादिनाम-कीर्त्तनञ्च तदुद्देशेन वलिदानार्थम्, यथा—अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा नन्दायै नम इति वलिदानम्। अशुभशब्दममङ्गलवाक्य मुञ्चति विरौति। आत्कारश्छर्दिः। स्वस्तिका वेदिका। जम्बुलिका उत्स्विन्नमाषा। अश्वत्थपत्र जल-कुम्भे प्रक्षिप्य गायत्रीं पठित्वा द्विजेन शान्त्युदक कर्त्तव्यम्, किंवा वलिदानमन्त्रे-णैव भिषजा कार्य्यमित्याहुर्वृद्धा। मेषस्य गडरस्य शृङ्ग। यत्र धूपो नोक्तस्तत्राय-मेव धूपो विधेय। यत्र शान्त्युदक नोक्त तत्र इदमेव शान्त्युदकमुपदिशन्ति। ॐ नम इत्यादि—मन्त्रो ध्रुव, येऽविशेषास्ते प्रतिमातृक वाच्या कुमारस्य नामो-च्चारणपूर्वक पठनीया, यथा—अमुकस्य व्याधिं हन हन मुञ्च मुञ्च इति ॥६२॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वर। चक्षुः उन्मी-लयति, गात्रमुद्वेजयति, न शेते, क्रन्दति, स्तन्यं न गृह्णाति, आत्कारश्च भवति।

वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

तण्डुलं हस्तपृष्ठैकं गृहीत्वा दधि गुडघृतञ्च मिश्रितं, शरावकं, गन्धताम्बूलं, पीतपुष्पं, पीतसप्तध्वजा, चत्वार प्रदीपाः, दश स्वस्तिका, मत्स्यमांससुराग्रभक्ततिलचूर्णानि पश्चिमायां दिशि चतुष्पथे वलिर्दातव्यः दिनानि त्रीणि सन्ध्या-याम्। ततः शान्त्युदकेन स्नापयेत्, शिवनिर्माल्यसिद्धार्थमार्जार-रोमोशीरवालकघृतै धूपं दद्यात्। "ॐ नमो रावणाय अमु-कस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीं फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम् ॥६३॥

द्वितीय इत्यादौ—उन्मीलयति उपरि भृशमुत्क्षिपति। हस्तपृष्ठैकमिति एकवार-

परिमितिहस्तपृष्ठे तण्डुलान् गृहीत्वेत्यर्थः। अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते भक्तं तदग्रभक्तम्। शान्त्युदकेनेति शान्त्युदकमिदं कुशेन कार्य्यम्; एवं सर्वत्र विशेषोक्तिं विना ॥६३॥

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिं वध्नाति, क्रन्दति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिका गृहीत्वा पुत्तलिकां कृत्वा रक्तचन्दनं, गन्धताम्बूलं, रक्तसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिकाः पक्षिमांससुराग्रभक्तञ्च दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः। शिवनिर्माल्यगुग्गुलुसर्षपनिम्बपत्रमेषशृङ्गैर्दिनत्रयं धूपयेत्। "ॐ नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रासय ह्रासय स्वाहा।" एवं दिनत्रयं कार्य्यम्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥६४॥

तृतीय इत्यादौ—अग्रभक्तमिति ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते तत् अग्रभक्तम् ॥६४॥

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। ग्रीवां नामयति, चक्षुरुन्मीलयति, स्तन्यं न गृह्णाति, रोदिति, स्वपिति, मुष्टिं वध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पलपुष्पं, गन्धं, ताम्बूलं, दश ध्वजाः, दीपाश्चत्वारः, त्रयोदश स्वस्तिकाः, मत्स्यमांससुराग्रभक्तञ्च उत्तरस्यां दिशि अपराह्णे बलिर्देयश्चतुष्पथे। "ॐ नमो रावणाय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा।" चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥६५॥

चतुर्थ इत्यादौ—दशध्वजा इति शुक्ला, विशेषाभावात ॥६५॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वरः । गात्रमुद्वेजयति, स्तन्यं न गृह्णाति । मुष्टिं वध्नाति ।

वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।

कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां विधाय गन्धताम्बूलं, शुक्लपुष्पं, शुक्लौदनं, पञ्च ध्वजा, पञ्च प्रदीपा, पञ्च वटकाः, ऐशान्यां दिशि वलिर्दातव्य, शान्त्युदकेन स्नापयेत्, शिवानिर्माल्यसर्पनिर्मोकगुग्गुलुनिम्बपत्रवालकघृतैर्धूपं दद्यात् । 'ॐनमो रावणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा ।' चतुर्थदिवसे ब्राह्मणान् भोजयेत् । तत सम्पद्यते शुभम् ॥ ६६ ॥

पञ्चम इत्यादौ—कुम्भकारचक्रमृत्तिका कुम्भकारचक्रसलग्नमृत्तिका ॥ ६६ ॥

षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिका नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर । गात्रभेदञ्च दर्शयति, मुष्टिं वध्नाति, दिवारात्रावुत्थानं भवति, ऊर्द्ध्वं निरीक्षते ।

वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।

पिष्टकेन पुत्तलिकां कृत्वा शुक्लौदन, पीतपुष्पं, रक्तपुष्पं, गन्धताम्बूलं, दश दीपाः, दश पीतध्वजा, दश स्वस्तिका, दश वटकाः, क्षीरजम्बूलिका, मत्स्यमांससुरा आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने वलिर्दातव्य, शान्त्युदकेन स्नापयेत्, शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोकनिम्बपत्रघृतैर्धूपं दद्यात् । 'ॐ नमो रावणाय अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा ।' चतुर्थे दिवसे ब्राह्मणान् भोजयेत् । ततः सम्पद्यते शुभम् ॥ ६७ ॥

षष्ठ इत्यादौ—क्षीरजम्बूलिका क्षीरसहितस्विन्नमाषा ॥ ६७ ॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम

मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर । गात्रमुद्वेज-यति, मुष्टिं बध्नाति, रोदिति ।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।

रक्तपुष्पं, शुक्लपुष्पं, गन्धताम्बूलं, रक्तौदनं, कृशरा , त्रयो-दश स्वस्तिका , त्रयोदश शष्कुलिकाः, जम्बुलिकाः, मत्स्यमांस-सुरा , त्रयोदश ध्वजा., पञ्च प्रदीपा पश्चिमाया दिशि ग्राम-निष्काशेऽपराह्णे वृक्षमाश्रित्य बलिर्दातव्य , शान्त्युदकेन स्नाप-येत्, गुग्गुलुमेषशृङ्गसर्षपोशीरवालकघृतैर्धूपं दद्यात् । 'ॐ नमो रावणाय दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा ।' चतुर्थे दिवसे ब्राह्मणान् भोजयेत् । तत सम्पद्यते शुभम् ॥ ६८ ॥

सप्तम इत्यादौ—रक्तौदन शाल्यादिभक्तम्, अलक्तकादिरञ्जितभक्त वा, कृशरा तिलतण्डुलनिर्मितयवागू । ग्रामनिष्काशे ग्रामप्रान्ते ॥ ६८ ॥

अष्टमे दिवसे मासे वर्षे वा गृह्णाति अर्य्यका नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर । गृध्रगन्ध , पूतिगन्धश्च जायते, आहारं न गृह्णाति, गात्राणि उद्वेजयति ।

बलिं तस्य प्रवक्ष्यामि यत सम्पद्यते शुभम् ।

रक्तपीतध्वजा., चन्दनं, पीतपुष्पं, शष्कुल्य , पर्पटिकाः, मत्स्यमांससुरा., जम्बूलिका प्रत्यूषे बलिं दद्यात् । 'ॐ नमो रावणाय त्रैलोक्यविद्रावणाय चतुर्दिशमोक्षणाय व्याधिं हन हन मुञ्च मुञ्च दह दह ओं ह्रीं फट् स्वाहा ।' चतुर्थे दिवसे ब्राह्मणान् भोजयेत् । तत सम्पद्यते शुभम् ॥ ६९ ॥

नवमे दिवसे मासे वर्षे वा गृह्णाति सूतिका नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर । नित्यं छर्दयति, गात्र-भेदं दर्शयति, मुष्टिं बध्नाति, निद्रातितरा स्यात् ।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् ।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्लव-स्त्रेण वेष्टयेत् । शुक्लपुष्पं, शुक्लौदनं, गन्धताम्बूलं, शुक्लत्रयोदश-

ध्वजा , त्रयोदश प्रदीपाः, त्रयोदश स्वस्तिकाः, त्रयोदश पुत्त-
लिका , मत्स्यमांससुरा. उत्तरदिग्विभागे ग्रामनिष्काशे वलिं
दापयेत्, शान्त्युदकेन स्नापयेत्, गुग्गुलुनिम्बपत्रगोधूमगो-
शृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। ॐ 'नमो रावणाय चतुर्भुजाय
हन हन मुञ्च मुञ्च स्वाहा।' चतुर्थे दिवसे ब्राह्मणान् भोज-
येत्। तत सम्पद्यते शुभम् ॥ ७० ॥

दशमे दिवसे मासे वर्षे वा गृह्णाति निर्ऋता नाम मातृका।
तया गृहीतमात्रेण प्रथमं भवति ज्वर.। गात्रमुद्वेजयति,
आत्कार करोति, रोदिति, बध्नाति मूत्रं, पुरीषञ्च भवति।

वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पारावारमृत्तिकां गृहीत्वा, पुत्तलिकां कृत्वा, गन्धताम्बूलं,
रक्तपुष्पं, रक्तचन्दनं, पञ्चवर्णपञ्चध्वजाः, पंच प्रदीपा, पंच
स्वस्तिका., पंच पुत्तलिका, मत्स्यमांससुराः वायव्यां दिशि
वलिं दद्यात्, काकविष्ठागोमांसगोशृङ्गरसोनमार्जाररोमनिम्ब-
पत्रघृतैर्धूपयेत्। 'ॐ नमो रावणाय चूर्णितहस्ताय हन हन
मुञ्च मुञ्च स्वाहा'। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। तत
सम्पद्यते शुभम् ॥ ७१ ॥

एकादशे दिवसे मासे वर्षे वा यदा गृह्णाति पिलिपिच्छिका
नाम मातृका, तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं
न गृह्णाति, उद्ध्वंदृष्टिर्भवति, गात्रभंग आत्कारश्च भवति।

वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनं रक्तपुष्पञ्च, तस्या
मुखं दुग्धेन सिञ्चेत्। पीतपुष्पं, गन्धताम्बूलं, सप्त पीतध्वजाः
सप्त प्रदीपाः, अष्टौ वटकाः, अष्टौ शष्कुलिका, अष्टौ पूपिका,
मत्स्यमांससुराः पूर्वस्यां दिशि वलिर्दातव्यः, शान्त्युदकेन
स्नापयेत्, शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्।

'ओं नमो रावणाय मुञ्च मुञ्च स्वाहा' चतुर्थे दिवसे विप्रान् भोजयेत्। ततः सुस्थो भवति बालकः। तेन सम्पद्यते शुभम्॥ ७२॥

अष्टमनवमदशमैकादश इति स्फुटाः ॥६९—७१॥

द्वादशे दिवसे मासे वर्षे वा यदा गृह्णाति कालिका नाम मातृका, तथा गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य वादयति, करेण तर्जयति, गृह्णाति, क्रामति, निश्वसिति, मुहुर्मुहुश्छर्दयति, आहारं न करोति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

क्षीरेण पुत्तलिकां कृत्वा शुक्लकुसुमं, गन्धताम्बूलं, शुक्लसप्तध्वजा, सप्त शष्कुलिकाः, सप्त प्रदीपाः करम्भकेण सर्वकर्मबलिं दद्यात्, शान्त्युदकेन स्नापयेत्। श्वेतसर्षपगुग्गुलुशिवनिर्माल्यघृतैर्धूपयेत्। 'ॐ नमो रावणाय मुञ्च मुञ्च हन हन स्वाहा।' चतुर्थे दिवसे विप्रान् भोजयेत्॥ ७३॥

इति रावणकृतं कुमारतन्त्रं समाप्तम्॥

इति बालरोग-चिकित्सा।

---

द्वादशे—वादयतीति सम्भाषते। रोदितीति पाठान्तरम्। क्षीरेणेति पाकात् पिण्डीभूतेन क्षीरेणेत्यर्थः। करम्भकेण दधिमिश्रितभक्तेन॥ ७३॥

इति बालरोगचिकित्साविवृतिः।

---

# अथ विष-चिकित्सा

अरिष्टाबन्धनं मन्त्रप्रयोगश्च विषापहः।

दंशनं दंशकस्याहेः फलस्य मृदुनोऽपि वा॥ १॥

इदानीमातुरहितचिकित्सापारिशेष्यात् विषचिकित्सामाह अरिष्टेत्यादि—अरिष्टाबन्धनं धमनीबन्धः, स च दष्टदेशादूर्ध्वं चतुरङ्गुले। यदाह वाग्भटः,—'दश-

स्योपरि बध्नीयादरिष्टा चतुरङ्गुले । क्षौमादिभिर्वल्कलैर्वा सिद्धमन्त्रैश्च मन्त्रयेत्' इति। दशकस्याहेरिति दशकर्त्तुं सर्पस्य दशन दन्तपक्तिद्वयेनातिपीडनम्। एव मृदुफलस्यापि। एतच्च सुकुमारद्रव्योपलक्षण, तेन रम्भामृणालकाण्डाद्यपि बोध्यम्। तत्र सर्वत्र विपसङ्क्रमण भवतीति भाव । यदुक्त वृन्दे—'धर्त्तु दंशविधौ न भोगिनमसौ प्राप्नोति दष्टो यदा रम्भाखण्डमृणालकोमलफल दन्तैर्दशत्याशु यत्। गच्छेत् तत्क्षणमेव तस्य गरल तद्दष्टवस्त्वन्तर दश नीरसता नयेच्च बहुधा सम्बध्य हस्तेन वै' इति ॥ १ ॥

**मूलं तण्डुलवारिणा पिवति य प्रत्यङ्गिरासम्भवं**
**निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।**
**दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपं**
**स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात् ॥२॥**

मूलमित्यादौ—प्रत्यङ्गिरा कण्टकीशिरीष । शुचिराषाढस्तस्य भद्रयोगदिवसे शुभयोगनक्षत्रादियुक्तदिने पुष्यानक्षत्रादियुक्ते दिने इत्यन्वय. ॥ २ ॥

**मसूरं निम्वपत्राभ्यां खादेन्मेषगते रवौ ।**
**अब्दमेकं न भीतिः स्याद्विषात् तस्य न संशयः ॥**
**धवलपुनर्नवजटया तण्डुलजलपीतया च पुष्यर्क्षे ।**
**अपहरति विषधरविषोपद्रवमासंवत्सरं पुंसाम् ॥ ३ ॥**

मसूरमित्यादि—मसूरगुडकमेक, निम्बस्य द्वे पत्रे, तृतीया सहार्थे । मेषगते रवौ वैशाखे । धवलेत्यादि–स्पष्टम् ॥ ३ ॥

**गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम् ।**
**अपि वासुकिना दष्ट पिबेद्दधिघृताप्लुतम् ।**
**कुलिकामूलनस्येन कालदष्टोऽपि जीवति ॥ ४ ॥**

गृहधूम इत्यादौ—तण्डुलीयकमिति केवलतण्डुलीयकमूलमिति बोध्यम्। तदुक्त विन्दुसारे—"तण्डुलीयकमूलन्तु पीत तण्डुलवारिणा । तक्षकेणापि सदष्ट निर्विष कुरुते नरम्" इति । कुलिकेत्यादि—कुलिक कालाकडभेद स्वल्पफल कुडकराणि इति ख्यात. । उपदेशात् तण्डुलोदकेन नस्य कार्य्यः; केचित् पान वदन्ति ॥ ४ ॥

**श्लेष्मणा कर्णगूथस्य वामानामिकया कृतः ।**
**लेपो हन्याद्विषं घोरं नृमूत्रसेचनं तथा ॥ ५ ॥**

श्लेष्मण इत्यादि—योगत्रयम् । मुखस्थितश्लेष्मण इत्येक , कर्णगूथस्येति द्वितीय वामनामिकया कृत इति कनिष्ठाङ्गुलीसमीपे या अङ्गुली, सा अनामिकेत्युच्यते । वामहस्तस्य अनामिकाङ्गुल्या कृत इत्यर्थ । नृमूलमेचन दशदेशे स्वीयमूत्रसेक । उक्त हि—"सर्पदष्टप्रदेशे तु स्वयमेव विचक्षण । मूत्रयेत् तत्क्षणादेव निर्विषत्वमवाप्नुयात्" इति । अथ तृतीय योगः ॥ ५ ॥

**शिरीषपुष्पस्वरसे भावितं श्वेतसर्षपम् ।**
**सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम् ॥ ६ ॥**

शिरीषेत्यादि—वाग्भटस्य । श्वेतसर्षपमित्यत्र मरिचानत्तमिति पाठ मरिच श्वेतमरिच शोभाञ्जनबीजम् । अयमेव पाठश्चन्द्राटादौ दृश्यत । अत श्वेतसर्षपमिति पाठान्तरमुक्तम् ॥ ६ ॥

**द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतु पलम् ।**
**अपि तक्षकदष्टानां पानमेतत् सुखावहम् ॥ ७ ॥**

द्विपलमित्यादि—वाग्भटस्य । पट्पलीय मात्रा सर्पदष्टविषये विशेषविहितत्वात् न दोषावहेति ॥ ७ ॥

**वन्ध्याकर्कोटजं मूलं छागमूत्रेण भावितम् ।**
**नस्यं काञ्जिकसंयुक्तं विषोपहतचेतस ॥ ८ ॥**

वन्ध्येत्यादि—वन्ध्य फलरहित ॥ ८ ॥

**त्रिवृद्विशल्या मधुकं हरिद्रे मञ्जिष्ठवर्गो लवणञ्च सर्वम् ।**
**कटुत्रिकञ्चैव विचूर्णितानि शृंगे निदध्यान्मधुसंयुतानि ॥**
**एषोऽगदो हन्त्युपयुज्यमान पानाञ्जनाभ्यञ्जननस्ययोगै ।**
**अवार्य्यवीर्य्यो विषवेगहन्ता महागदो नाम महाप्रभावः ॥ ९ ॥**

त्रिवृदित्यादि—सुश्रुतस्य । विशल्या दन्ती, काष्ठपाटला वा, विशालेति पाठे गोरक्षकर्कटी । मञ्जिष्ठावर्गो मञ्जिष्ठासहितोऽयमेव त्रिवृदादिवर्ग इत्यर्थ । अन्ये तु मञ्जिष्ठावर्गं पृथगेव पठन्ति । तच्च टीकाकारैर्न व्याख्यातम् । डल्वणस्तु "त्रिवृद्विशल्ये मधुक हरिद्रे रक्तो नरेन्द्रो लवणश्च वर्ग" इति व्याचष्ट च विशल्या दन्ती, काष्ठपाटला वा, रक्त मञ्जिष्ठा, नरेन्द्र स्वर्णालु:, लवणवर्गो लवणपञ्चकमिति । शृङ्गे इति गोशृङ्गे निदध्यादिति पक्षमेक स्थापयेत् । एतच्च गोशृङ्गे पक्षैक स्थापन सौश्रुतवक्ष्यमाणयोगे तथा दर्शनात् । यथा "शृङ्गे गवा शृङ्गमयेण चैव प्रच्छादित पक्षमुपेक्षितश्च" ॥ ९ ॥

पीते विषे स्याद्वमनञ्च त्वक्स्थे प्रदेहसेकादिसुशीतलञ्च ॥
कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥ १० ॥

पीत इत्यादौ—वमनमिति गोमयस्वरसेन मधुयुक्तेन वान्तिः कार्य्या। उक्तं हि—"समधुविषपीतस्य वमनं गोमयाद्रसः" इति। त्वक्स्थे तु विषे शीतलं प्रदेहसेकादि कार्य्यम्। कपित्थेत्यादि—कपित्थस्य मांसं त्वगस्थ्यादिरहितं मध्यम्। लिह्यादित्यादौ—ताभ्यामिति सिताक्षौद्राभ्याम्, नतादिति तगरपादिकात ॥ १० ॥

विषे पक्वाशयगते पिप्पलीरजनीद्वयम्।
मञ्जिष्ठाञ्च समं पिष्ट्वा गोपित्तेन नरः पिबेत् ॥ ११ ॥

विष इत्यादौ—पिप्पलीद्वयं रजनीद्वयञ्च। सममिति समभागं जलेन पेषणं पानञ्चेत्याह ॥ ११ ॥

रजनीसैन्धवक्षौद्रसंयुक्तं घृतमुत्तमम्।
पानं मूलविषार्त्तस्य दिग्धविद्धस्य चेष्यते ॥
सितामधुयुतं चूर्णं ताम्रस्य कनकस्य वा।
लेहः प्रशमयत्युग्रं सर्वं संयोगजं विषम् ॥ १२ ॥

रजनीत्यादौ—उत्तमं घृतं गव्यघृतम्। दिग्धो विषाक्तशरः, तेन विद्धस्य। कनकस्य वेति मारितस्य ताम्रस्य तथा मारितस्य सुवर्णस्येत्यर्थः ॥ १२ ॥

अङ्कोठमूलनिःक्वाथं फाणितं सघृतं लिहेत्।
तैलाक्त· स्विन्नसर्वांगो गरदोषविषापहः ॥ १३ ॥

अङ्कोठेत्यादि—अङ्कोठमूलक्वाथमेव पुनः पाकात् फाणिताकारं कुर्य्यात् ॥ १३ ॥

कटभ्यर्जुनशैरीयशलुक्षीरिद्रुमत्वचः।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥ १४ ॥

इदानीं कीटादिविषचिकित्सामाह कटभीत्यादि—शैरीयो झिण्टी, शेलुर्बहुवारः, क्षीरिद्रुमा वटोडुम्बरादयः ॥ १४ ॥

आगारधूममञ्जिष्ठारजनीलवणोत्तमैः।
लेपो जयत्याखुविषं कर्णिकायाश्च पातनम् ॥

य. कासमर्दनेत्रं वदने निक्षिप्य कर्णे फूत्कारम्।
मनुजो दधाति शीघ्रं जयति विषं वृश्चिकानां स ॥ १५ ॥

आगारधूमेत्यादौ—कर्णिका कीटवक्त्रशृङ्ग। य इत्यादौ—नेत्र मूत्र, निक्षिप्य चर्वय्य ॥ १५ ॥

दंशे भ्रामणविधिना वृश्चिकविषहृत् कुठेरपादगुडिका।
पुरधूपपूर्वमर्कच्छदमिव पिष्ट्वा कृतो लेप ॥ १६ ॥
जीरकस्य कृत कल्को घृतसैन्धवसंयुत।
सुखोष्णो वृश्चिकार्त्तानां सुलेपो वेदनापह ॥ १७ ॥

दश इत्यादि—दंशे वृश्चिकदंशे। कुठेरपादगुडिका पर्णासमूलकृतगुटिका। पुरधूपपूर्वमिति गुग्गुलुना पूर्वं धूपयित्वा अर्कपत्रकृतो लेप. ॥ १६। १७ ॥

कुंकुमकुनटीकर्कटपलहरितालैः कुसुम्भसम्मिलितैः।
कृतगुडिकाभ्रामणतो विदृष्टगोधाशरटादिविषजित् ॥ १८॥
अङ्कोठपत्रधूमो मीनविषं झटिति विघट्टयेच्छृङ्गी।
गोधावरटीविषमिवालेपेन कूढकराणिजटा ॥ १९ ॥

गोधादिविषचिकित्सामाह कुङ्कुमेत्यादि। कुनटी मन शिला; कर्कटकस्य पलल नामन कुसुम्भ कुसुम्भपुष्पम्। शरटादीत्यादिशब्दादञ्जननामिकाज्येष्ठाप्रभृतीनां ग्रहणम् ॥ १९ ॥

कनकोडुम्बरफलमिव तण्डुलजलपिष्टं पीतमपहरति।
कनकदलद्रवघृतगुडदुग्धपलैकं शुनां गरलम् ॥ २० ॥

कुक्कुरविषचिकित्सामाह कनकेत्यादि—कनकौ धुस्तूरं, उडुम्बरं यज्ञोडुम्बरम्. नयो फलम्। कनकदलेत्यादि योगान्तरम्। कनकदलद्रवो धुस्तूरपत्ररस। एषां पल मिलित्वा ॥ २० ॥

लेप इव भेकगरलं शिरीषबीजैः स्नुहीपय सिक्तैः।
हरति गरलं त्र्यहमशिताङ्कोठजटा कुष्ठसम्मिलिता ॥
मरिचमहौषधवालकनागाह्वमाक्षिकाविषे लेप.।
लालाविषमपनयतो मूले मिलिते पटोलनीलिकयो. ॥

सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥
वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली ।
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।
कीटदष्टक्रिया· सर्वाः समानाः स्युर्जलौकसाम् ॥ २१ ॥

नेकविषचिकित्सामाह लेप इत्यादि—अशिता भक्षिता । क्वाथविधया कल्कविधया वा योज्यमेनत्। लालाविषमिति लालैव विष लालाविषम् । सोमवल्क कट्फलम्, अश्वकर्ण· शालभेद , गर्दभाण्डो वा। पीत्वेति क्वाथविधया कल्कविधया वा योज्यम्। अतिदेशेन जलौकश्चिकित्सामाह कीटदष्टेत्यादि ॥ २१ ॥

## मृतसञ्जीवनोऽगदः

पृक्कास्थौणेयकांक्षीशैलेयरोचनातगरम् ।
ध्यामकं कुङ्कुमं मांसी सुरसाग्रैलालकुष्ठम् ॥
बृहतीशिरीषपुष्पश्रीवेष्टकपद्मचारटीविशाला· ।
सुरदारुपद्मकेशरशावरकमन शिलाकौन्त्य· ॥
जात्यर्कपुष्पसर्षपरजनीद्वयहिंगुपिप्पलीलाक्षाः ।
जलमुद्गपर्णीमधूकमदनकफलसिन्धुवाराश्च ॥
शम्पाकलाभ्रमयूरकगन्धफलीलाङ्गलीविडङ्गाश्च ।
पुष्येणोद्धृत्य समं पिष्ट्वा गुडिका विधेया स्युः ॥
जन्तुविषघ्नो जयकृद् विषमृतसञ्जीवनो ज्वरनिहन्ता ।
श्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ।
भूतविजयन्त्वलक्ष्मीकार्मणमन्त्राग्न्यशन्यरीन् हन्यात् ।
दु स्वप्नस्त्रीदोषानकालमरणाम्बुचोरभयम् ॥
धनधान्यकार्य्यसिद्धिश्रीपुष्ट्यायुर्विवर्द्धनो धन्य ।
मृतसञ्जीवन एप प्रागमृताद् ब्रह्मणाभिहित ॥ २२ ॥

इति विषचिकित्सा ।

पृक्केत्यादौ—स्थौणेय ग्रन्थिपर्णम्, काक्षी सौराष्ट्रमृत्तिका, ध्याम गन्धतृणम्, सुरसाग्र निर्गुण्डीमञ्जरी, आल हरितालम्, कुष्ठघ्नमेडगज, श्रीवेष्टको नवनीतखोटी, पद्मचारटी कुम्भारुलता, पद्मस्य केशर किञ्जल्क, शावरको लोध्र, कौन्ती रेणुका। जात्यर्कपुष्पमिति जात्यर्कयो पुष्पम्, जल वालकम्, निर्गुण्ड्याकार शुक्लपुष्प सिन्धुवार, शम्पाक आरग्वधस्तस्य फल ग्राह्यम्। लोध्र लोहितलोध्रम्, मयूरोऽपामार्ग, गन्धफली प्रियगु, नाकुली रास्ना। पुष्ये पुष्यानक्षत्रयुक्तकाले। जन्तव क्रिमय, कार्मण परद्रोहोपायः, मन्त्रोऽभिचारमन्त्र। अशनिर्वज्रम्, स्त्रीदोष सौभाग्यार्थकृतगरादिदोषा ॥ ७२ ॥

इति विष-चिकित्साविवृति ।

---

# अथ रसायनाधिकारः

**यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ १ ॥**

भेषज तावद् द्विविधम्—आतुरहित सुस्थहितञ्च। सुस्थहितमपि द्विविध रसायन-वाजीकरणभेदात्। अत्रातुरहित तावदुक्तमेव सम्प्रति सुस्थहित वाच्यम्; तत्रापि वाजीकरणापेक्षया रसायनस्य वर्षसहस्रायुष्ट्वात् महाफलत्वाच्च प्रथमतो रसायनमाह यदित्यादि—जराविध्वसि जरारूपव्याध्युत्पत्तिप्रतिबन्धकम्। एतेन विशिष्टरसजनकत्वे सति जरानिवर्त्तकत्व रसायनत्वमिति लक्षण सूचितम्। अत्र रसशब्देन रसकार्य्यत्वात् सप्तानामेव धातूना ग्रहणम्, अत्राद्यविशेषणसन्निवेशात् कपालरञ्जनादिषु नातिव्याप्ति। वृद्धो न रसायनाधिकारी, वक्ष्यति—पूर्वे वयसीत्यादि। अन्यत्राप्युक्त 'जरापक्वशरीरस्य व्यर्थमेव रसायनम्' इति। तत् कथ जराप्रशमकत्व रसायनमिति? नैव जराशब्देनात्र अकालपलित कालिकञ्च भाविपलितमुच्यते, अतो नोक्तो दोष। यत्तु च्यवनप्राशादौ सुवृद्धोऽभूत पुनर्युवेति, तत्र न वृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तम्, तत्तप प्रभावेणानुगृहीतस्य फलम्, न रसायनमात्रस्येति। सुदान्तस्त्वाह—'रसायनञ्च सुस्थातुरविषयम्। जरा च व्याधिश्च तद्विध्वसितु शील यस्य तद्रसायनम्। जरा हि मृदुत्वेन, न पूर्वापरविरोध अकालजराहरत्वाद्रसायनस्य। भेषजपदेन ध्यानमन्त्रादिक व्यवच्छिनत्ति। ज्वरेति ज्वरातिसारादिभेषज वाजीकरण व्यवच्छिनत्ति। व्याधीति कपालरञ्जनकृष्णीकरणादिकञ्च व्यवच्छिनत्तीति' ॥ १ ॥

**पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ २ ॥**

पूर्वं इत्यादि—पूर्वं इति यौवनप्रवेश एव । मध्य इति यौवनशेषे । बाल-वृद्धौ तु रसायनाविषयौ भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च । शुद्धकाय इति वमनविरेचनाभ्यां शुद्धशरीर ॥ २ ॥

**नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।**
**न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ ३ ॥**

अविशुद्धे तथा फल नास्तीति मत्वाह अविशुद्धशरीरस्येत्यादि—सुश्रुतस्य । युक्त इति प्रयुक्तः । क्लिष्ट इति मालिने ॥ ३ ॥

**गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।**
**द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥**
**सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ।**
**वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥**

प्रथमत. हरीतकीरसायनमाह सिन्धूत्थेत्यादि—वर्षासु हरीतकी मा ६, सैन्धव मा २ गिलनीया । शरदि हरीतकी मा ५, शर्करा मा ४ खाद्यम्, शीत-जल पेयम् । हेमन्ते हरीतकी मा ३, शुण्ठी मा २, तप्तजल पेयम् । शिशिरे हरीतकी मा ३, पिप्पली मा २, तप्तजल पेयमिति ॥ ४ ॥

**त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।**
**तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥**
**प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत् ।**
**अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥५॥**

त्रैफलेनेत्यादौ—आयसीं पात्रीमिति कान्तादिलौहपात्रीम्, नवामित्यनेन निर्मलत्वमपि सूच्यते । कल्केनेति कर्षमितेन । अम्लपित्ते त्विद क्रियत इत्याहुर्वृद्धा. । केचित् उदकस्थाने घृतमिति पठन्ति ॥ ५ ॥

**पञ्चाष्टौ सप्त दश वा पिप्पलीः क्षौद्रसर्पिषा ।**
**रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ६ ॥**

पञ्चाष्टावित्यादि—सप्तेति छेद. । सख्यान्यातिक्रमेण नानुक्तपिप्पलीनामुप-योग सूचयतीति चक्र. । यद्यपि त्रीणि द्रव्याणि नात्युपयुञ्जीत पिप्पली क्षार

लवणमिति, तथापि इह द्रव्यान्तरसंयुक्ताना पिप्पलीनामभ्यासो न विरुद्ध । किंवा उक्तपिप्पल्यभ्यासव्यतिरेकेण उत्सर्गापवादन्यायनिषेधो ज्ञेय । रसायनगुणाश्चरकोक्तबृंहणत्वादय ॥ ६ ॥

तिस्रस्तिस्रस्तु पूर्वाह्ने भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्य किंशुकक्षारभाविता घृतभर्जिता' ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।
जेतुं कासं क्षयं शोषं श्वास हिक्का गलामयम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम् ।
वैस्वर्य्यं पीनसं शोथं गुल्मं वातबलासकम् ॥ ७ ॥

तिस्र इत्यादौ—किंशुक' पलाश । क्षारमिति क्षारोदकम् । भावित इति सप्ताहम् ॥ ७ ॥

जरणान्तेऽभयामेकां प्राग्भक्ताद् द्वे विभीतके ।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्य्यामलकानि च ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम् ।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ८ ॥

जरणान्त इति प्रात । प्राग्भक्तादिति भोजनादौ । मधुसर्पिर्भ्यामित्यभयादिभिस्त्रिभिरेव सम्बध्यते ॥ ८ ॥

मण्डूकपर्ण्या· स्वरस प्रयोज्य क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प्याः कल्क प्रयोज्य खलु शङ्खपुष्प्या ॥
आयु'प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शङ्खपुष्पी ॥९॥

मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुरो योगानाह—समूलपुष्प्या इति गुडूच्या' शङ्खपुष्प्या वा विशेषणम् ॥ ९ ॥

पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाम्बुवृष्टिः ॥
धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण ।
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयो वर्षशतं भवेयुः ॥

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह भोजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः।
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥ १०॥

पीतेत्यादि—वाग्भटस्य। अश्वगन्धायाश्चूर्णं पयसा पित्ते, घृतेन वातपित्ते, तैलेन वाते, उष्णोदकेन वातकफ इत्याहु। धात्रीत्यादौ—तिलाश्च कृष्णाः प्रशस्ता.। भृङ्गरज इति निर्देशात् सान्तो भृङ्गरज शब्दो भृङ्गराजवचन उन्नीयते। क्रमेणेति रसायनक्रमेण॥ १०॥

हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहाराचारोऽपि सहस्रायुर्भवेन्नरः॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुनात्युग्रवेगः स्याद् बलिष्ठ स्त्रीसहस्रगः।
मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥

"ॐ नमो महाविनायकाय अमृतं रक्ष रक्ष मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा।"

धात्री चूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिः समांशं
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत् समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्य्यसत्त्वैरुपेतः॥११॥

हस्तिकर्णेति—हस्तिकर्णो हस्तिकर्णपलाशमूलम्। ॐ नम इत्यादिमन्त्रो हस्तिकर्णेत्यादियोगस्यैवाभिमन्त्रणाय। धात्रीत्यादौ—कस चतुःषष्टिपलानि। स्वरसपरिगतमिति आमलकफलमहस्ररसेन भावितम्। भावना च एकविंशतिवारम्। क्षौद्रमर्पि समांशमिति धात्रीचूर्णापेक्षया प्रत्येक समभागमित्यर्थ। तेन मधुघृतयो प्रत्येक चतु षष्टिपलानि। मानीत्यष्टौ पलानि। सिताया शर्कराया अष्टौ प्रसृतानि षोडशपलानीत्यर्थ.। स्थापित भस्मराशाविति प्रावृडारम्भ इति शेष.। वर्षान्ते प्रावृट्कालान्ते शरदीत्यर्थ.॥११॥

गुडूच्यपामार्गविडङ्गशङ्खिनीवचाभयाकुष्ठशतावरी समा ।
घृतेन लीढा प्रकरोति मानवं त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥१२

गुडूचीत्यादौ—शङ्खिनी शङ्खपुष्पी । क्वचित् वचास्थाने वृषेति पठ्यते, किन्तु-वाग्भटे वचैव पठिता ॥१२॥

## ब्राह्मीघृतम्

समूलपत्रामादाय ब्राह्मीं प्रक्षाल्य वारिणा ।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत् ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत् ॥
हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी ।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा ।
सर्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतत् प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत् ।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च ।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥
वन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥१३॥

ब्राह्मीघृत स्पष्टम् ॥१३॥

कासश्वासातिसारज्वरपिडककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलादिरोगान् ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥

व्यङ्गवलीपलितघ्नं पीनसवैस्वर्य्यकासशोथघ्नम्।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिजननञ्च ॥१४॥

कासेत्यादौ—पिडक पिडका। पय इति दुग्ध पानीय वा, सुश्रुते प्रात क्षीर-पानस्य जलपानस्यापि दर्शितत्वात्। यथा—"शीतोदक पय क्षौद्र सर्पिरित्येकशो द्विश। त्रिश समस्तमथवा प्राक्पीत स्थापयेद्वय।" प्रागिति प्रात। अत्र चतुर्गुणजलश्रृतगव्यदुग्धस्य धारोष्णस्य वात्र द्वित्रिकर्षपलादि षोडशपल यावदित्यर्थ ॥१४

## साध्यसाधनपरिमाणम्

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूम ॥
मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्वाक्।
सुबहुप्रयोगदोषादूर्ध्वञ्च पलत्रयोदशकात्।
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते ॥
लोहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका।
मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः ॥
त्रिफलाया भागद्वितयं ग्रहणीयं लौहपाकार्थम् ॥ १५ ॥

यद्यपि सर्वरसायनश्रेष्ठत्वात् प्रथममेवामृतसारलौहाभिधानमुचित तथापि सूचीकटाहन्यायेन रसायनान्तराण्यभिधाय बहुप्रपञ्चतया सम्प्रत्यमृतसारलौहमाह नागार्जुन इत्यादि—तत्र मारणादिविधेरप्रशस्तत्वेन प्रथम तदभिधान वक्तुमुचित तथापि दुरूहप्रमेयत्वेन साध्यसाधनपरिमाणविधिर्वक्तव्य। तत्र कियन्मानलौह पक्तव्य इत्याह मेने मुनिरित्यादि—पलपञ्चकादर्वागित्यत्र सस्कारस्याल्पकालव्यापकतया बहुगुणत्व न स्यादित्येव हेतुरुन्नेय। ननु पञ्चपलादर्वाङ् न पक्तव्य, उक्तञ्चापि पलाष्टकादिति योगरत्नाकरेऽभिहितमित्यत आह स्वतन्त्र इति—स्वतन्त्रे स्वीयशास्त्रे एव नान्यत्र, तेनाशक्तौ न्यूनमानमपि शास्त्रान्तरोक्त न विरोधमावहतीति भाव। लोहसस्कारसाधनार्थं क्वाथपरिभाषामाह तत्रायसीत्यादि—पचनीयेऽयसीति पञ्चपलादित्रयोदशपलान्तलौहे यावत्परिमाण लौह पक्तु शक्य तावत्परिमितलोहापेक्षया मिलिता त्रिगुणा षट्पलैरधिका ग्राह्या, तेन पञ्चपले लौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलाया पञ्चदशपलानि श्रुतषट्पलेन सह मिलित्वा

एकविंशतिपलानि भवन्ति। एवं सप्तपलादिष्वपि बोध्यम्। ननु लौहस्य मारणमारणस्थालीपाकपुटपाकनिष्पत्तिपाकाः सन्ति, तत्र कुत्र कियत् त्रिफलापरिमाणम् इत्यतो विभज्य त्रिफलापरिमाणं दर्शयति मारणपुटेत्यादि—लौहमेकस्य कृतस्ति गुणत्रिफलाद्रव्यं ध्रुवषट्पलमहितमेव त्रिभागं कृत्वा भागद्वयं प्रधाननिष्पत्तिपाकार्थमवस्थाप्यम्, अपरैकभागेन लौहमारणस्थालीपाकपुटनानि कर्त्तव्यानीत्यर्थः॥ १५॥

**सर्वत्राय पुटनाद्यर्थंकाशे शरावसंख्यातम्।**
**प्रतिपलमेव त्रिगुणं पाथः क्वाथार्थमादेयम्॥ १६॥**

तदिह लौहमारणपुटनस्थालीपाकार्थगृहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह सर्वत्रेत्यादि—आदिशब्दान्मारणस्थालीपाकौ ग्राह्यौ। सर्वत्रेति पञ्चपलादित्रयोदशपलान्तनिखिलमाने। पुटनाद्यर्थकाशे इति पुटनमारणस्थालीपाकार्थगृहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः। तत्र पञ्चपललौहपुटादित्रयार्थस्थापितत्रिफलैकभागः सप्तपलो भवति, तत्र जलैकविंशतिशरावा इत्यर्थः। एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादयः, तत्र जलस्यापि चतुर्विंशतिशरावादयो ज्ञेयाः॥ १६॥

**सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावैस्त्र।**
**ऽयाद्यैकादशकान्तैरधिकं तद्वारि कर्त्तव्यम्॥**
**तत्राष्टमो भाग शेषः क्वाथस्य यत्नतः स्थाप्यः।**
**तेन हि मारणपुटनस्थालीपाका भविष्यन्ति॥ १७॥**

किन्तु त्रिगुणतया अधिकमपि जलं देयं, तदर्थमाह सप्तपलादावित्यादि—अस्यार्थः—पाचनीयपञ्चपलादिलौहमारभ्य त्रयोदशपलान्तलौहापेक्षया त्रिगुणत्वेन ध्रुवषट्पलाधिकतया फलनयस्यैकविंशतिपलरूपं चतुर्विंशतिपलरूपं मानं वा तस्य तृतीयभागे पुटनादिकर्मत्रयार्थस्थापिते सप्तपलाष्टपलादिकलगणनया लौहत्रयोदशपलान्तेन त्रिफलायाः पञ्चदशपलानि भवन्ति, तेषां क्वाथं प्रतिशरावसंख्यया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य पञ्चदशपलपर्य्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्य्यन्तं जलशरावैरधिकं विधेयमित्यन्वयः। तेन सप्तपले त्रिफलाद्रव्ये जलशरावत्रयमधिकम्, अष्टपले च शरावचतुष्टयम्, एवं क्रमेण त्रयोदशपलान्तं ज्ञेयम्। एतद्वचनं स्पष्टीकरणार्थं पत्रिका लिख्यते—लौहपलं ५, मारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ७, पाथः श २१, अधिक श ३, मिलित्वा

श २४। एवं षट्पललौहमारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ८, पाथ श २४, अधिक श ४, मिलित्वा श २८। सप्तपललौहमारणादिकर्मत्रयार्थस्थापितत्रिफलैकभाग पल ९, पाथ श २७, अधिक श ५, मिलित्वा श ३२। अष्टपललौहे त्रिफलैकभाग पल १०, पाथ श ३०, अधिक श ६, मिलित्वा श ३६। नवपललौहे त्रिफलैकभाग पल ११, श ३३, अधिक श ७, मिलित्वा श ४०। दशपललौहे त्रिफलैकभाग पल १२, पाथ श ३६, अधिक श ८, मिलित्वा श ४४। एकादशपललौहे त्रिफलैकभाग १३, पाथ श ३९, अधिक श ९, मिलित्वा श ४८। द्वादशपललौहे त्रिफलैकभाग पल १४, पाथ श ४२, अधिक श १०, मिलित्वा श ५२। त्रयोदशपललौहे त्रिफलैकभाग पल १५, पाथ श ४५, अधिक श ११, मिलित्वा श ५६। इदानीमेतज्जल क्वाथ्यमान कियदवशिष्टमित्याह तत्रेत्यादि—तत्रेति त्रिफलैकभागस्य क्वाथार्थजले। तेन पञ्चपललौहे त्रिफलैकभागक्वाथार्थ जलशराव २३, शेष श ३। एवं षट्पललौहे त्रिफलाक्वाथार्थ जल श २८, शेष सार्द्धशरावत्रयमित्यादि ज्ञेयम्। यत्नत इति—तृणधान्यादिनिवारणार्थं न्यूनाधिकतापरिहारार्थञ्च। उक्तं हि योगरत्नाकरे—क्वाथेन मन्दपाकेन वह्निमान्द्य भवेद् ध्रुवम्। क्वाथस्याधिकपाकस्य मन्दमाचक्षते फलम्" इति। हि हेतौ, मारणपुटनादि महत् कर्मत्रय तेन क्वाथेन कर्त्तव्यमस्ति, तेन तत्र यत्नत कर्त्तव्य इत्यर्थः। ननु एकस्मिन् दिने मारणादिकर्मत्रय कर्त्तुमशक्यम्, यदि पुनरेकस्मिन् दिने मारणम्, अपरेद्युर्दिने पुटनादिक क्रियते, तदा क्वाथस्य पर्य्युषितत्वेनाम्लत्व स्यात्। सत्य, प्रत्यह तत्क्वाथस्य उष्णीकरणात् नाम्लता। यद्यपि तापादल्पक्षयित तदपि सूक्ष्मत्वात सङ्क्रान्ताधिकत्वाच्च तत्र दोषमावहति। एवमेव वृद्धा अपि व्यवहरन्ति। लौहशास्त्रेऽप्युक्त 'पथ्याभिर्कङ्कुकाश्मभिर्मोचिकलेपो निहन्त्ययाः सुतराम्। पर्य्युषित. परिशोषाद् ग्राह्य पटाद् गलित" इति। भव्यदत्तदेवस्तु त्रिफलायास्तृतीयभागमपि त्रिधा समभागन विभज्य मारणपुटनस्थालीपाकरूपकर्मत्रयार्थक्वाथ प्रत्यहमेव कार्य्य इत्याह ॥ १७ ॥

पाकार्थे तु त्रिफलाभागद्वितये शरावसंख्यातम्।
प्रतिपलमम्बु समं स्यादधिकं द्वाभ्यां शरावाभ्याम् ॥
तत्र चतुर्थो भाग शेषो निपुणै प्रयत्नतो ग्राह्य।
अयस पाकार्थत्वात् स च सर्वस्मात् प्रधानतम ॥
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम् ॥ १८ ॥

इदानीं प्रधाननिष्पत्तिपाकार्थस्थापितत्रिफलाभागद्वयस्य क्वाथविधिमाह पाकार्थे त्वित्यादि—पाकार्थ इति प्रधाननिष्पत्तिपाकार्थे, त्रिफलाभागद्वितय इति पूर्वोक्तरीत्या लौहपञ्चपलादौ त्रयोदशपलान्ते क्रमेण त्रिफलाया भागद्वय चतुर्दशपलषोडशपलाष्टादशपलादयास्त्रिंशत्पलान्ता भवन्ति । तत्र त्रिफलाया प्रतिपल एकशराव जल दातव्यम्, किन्तु सर्वत्रैव शरावद्वयमधिक ध्रुवत्वेन देयम्, तेन त्रिफलायाश्चतुर्दशपले षोडश वारिशरावा क्वाथार्थं देया, षोडशपले अष्टादशजलशरावा इत्यादिक्रमेण बोद्धव्या । स च क्वाथ. कियदवशिष्ट स्थाप्य इत्याह ततेत्यादि—प्रयत्नतो ग्राह्य इत्यस्य हेतुमाह अयम इत्यादि—चतुर्थावशिष्टक्वाथस्य निखिलकर्मप्रधाननिष्पत्तिपाकार्थत्वादित्यर्थ । स चेति निष्पत्तिपाक । सर्वस्मादिति मारणपुटनादे. । प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि, तच्च दुग्ध पञ्चपलादित्रयोदशपलान्तलौहेषु कियन्मान देयमित्याह पाकार्थमित्यादि—अत्र एक आदिर्येषा पादाना शरावचतुर्थांशाना ते पादद्वयत्रयादय एकादिका पादा, तैरधिक दुग्धशरावद्वय पुटनान्तेऽश्मसारे लौहचूर्णे पञ्चपलादित्रयोदशपलान्ते यथाक्रम पक्तव्यमित्यर्थ । तेन पञ्चपललौहे पक्तव्ये सति सपाददुग्धशरावद्वयम् । षट्पले तु पादद्वयाधिक दुग्धशरावद्वयम् । सप्तपले पादत्रयाधिक दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्य्यन्तमुन्नेयमिति ॥ १८ ॥

**पञ्चपलादिकमात्रा तदभावे तदनुसारतो ग्राह्यम् ।**
**चतुरादिकमेकान्तं शक्तावधिकं त्रयोदशकात् ॥ १९ ॥**

अथ लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति तदा पञ्चपलादर्वागपि एकपलादिचतु पलपर्य्यन्त लौहपाकः कर्त्तव्य, तथा यथाशक्तिसम्भव त्रयोदशपलादुपर्य्यपि चतुर्दशपलादिलौहस्य पाक इत्यर्थमाह पञ्चपलादीत्यादि—चतुरादिकमेकान्तमिति चतुस्त्रिद्व्येकम् । नन्वेव सत्येकपलादिचतु पलान्ते लौहे तथा त्रयोदशपलादूर्ध्वञ्च चतुर्दशपलादौ लौहे जारणादिकर्मत्रयार्थम्, तथा प्रधाननिष्पत्तिपाकार्थञ्च कीदृश क्वाथ्यत्रिफलाया मान ग्रहणम्, एतत्क्वाथार्थं जलदान वा कीदृशम्, स्थाप्य· शेषो वा कीदृश, प्रधाननिष्पत्तिपाकार्थं दुग्धदान वा कीदृश ? तदर्थमाह तदनुसारतो ग्राह्य इति—पञ्चपलादिलौहमारणाद्युक्तक्वाथादिदानानुसारत इत्यर्थ. । इदानीं तदनुसारत इत्यस्य विवरणाय पत्री लिख्यते.—तत्रैकपले लौहे मारणादिकर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पलत्रय भवति, प्रतिपलञ्च जलशरावत्रयवृद्धिरुक्ता, ततस्तदनुसारात् प्रतिपलञ्च जलशरावत्रैगुण्यात् नव

जलशरावा भवन्ति। तथा सप्तपलादौ भाग इत्यनेन त्र्यादिशरावै-रधिकत्वमुक्तम् अतस्तदनुसारात् पञ्चपलादर्वागपि क्रमेण पादद्वय ह्रासयेत्। तेनैकपललौहस्य मारणादिकर्मत्रयार्थं गृहीतत्रिफलायास्तृतीयभागे अपरोऽपि जल-शराव एको ध्रुवत्वेन देयो भवति, अत पूर्वोक्तनवजलशरावैर्मिलित्वा दश शरावा इति। तथा द्विपललौहे कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयो भाग पल-चतुष्टयो भवति। प्रतिपलञ्च शरावत्रैगुण्यात् द्वादश जलशरावा, तथा सप्तपलादौ भाग इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एको ध्रुवत्वेन देयो भवति, अतो मिलित्वा सार्द्धत्रयोदश जलशरावा भवन्ति। एव त्रिपललौहे कर्मत्रयार्थं ध्रुव षट्पलसहितत्रिफलायास्तृतीयभागे पञ्च पलानि भवन्ति, प्रतिपलञ्च जलशरावत्रै-गुण्यात् पञ्चदश जलशरावा, सप्तपलादौ भाग इति वचनानुसारादपरमपि जलशरावद्वयमधिक ध्रुवत्वेन देयम्, तेन मिलित्वा सप्तदश शरावा। चतु.पल-लौहेऽपि कर्मत्रयार्थं ध्रुवषट्पलसहितत्रिफलायास्तृतीयभागे पलषट्कम्, प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादश जलशरावा, सप्तपलादौ भाग इत्यनुसारादपरमपि पाद-द्वयाधिकजलशरावद्वय ध्रुवत्वेन देय भवति, तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे यत् क्वाथादिमान तत् पूर्वमेव विवृतम्। त्रयोदशपला-दुपरि चतुर्दशपलादौ त्र्याधेकादशकान्तैरित्यनुसारात् पूर्वापेक्षया शरावेणैव जलस्य वृद्धि कर्त्तव्या, क्वाथस्याष्टमांश शेष; एव सर्वत्रैव। प्रधाननिष्पत्तिपाकार्थमपि एकपललौहे च त्रिफलाया भागद्वये षट् पलानि; प्रतिपलमम्बुसम स्यादित्युक्तेश्च त्रिफलाया क्वाथार्थम्, जलस्य षट् शरावा, ते च द्वाभ्या शरावाभ्यामधिका. कर्त्तव्या इति मिलित्वा अष्टौ जलशरावा, चतुर्थभागावशेषादत्र स्थाप्य शरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च एकपले तु लौहे क्रमात् पादह्रासेन सपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुण त्रिगुणं चतुर्गुण लौहापेक्षया, यथाप्रकृतिदोषभेदेन, तेन वातप्रकृतौ घृत लौहाच्चतुर्गुणम्, पित्तप्रकृतौ त्रिगुणम्, श्लेष्मप्रकृतौ द्विगुणमिति। एव द्विपले लौहे। द्विपललौहस्य प्रधानपाके त्रिफलाया भागद्वयेऽष्टौ पलानि, प्रतिपलमम्बुसमम् स्यादित्युक्तेश्च जल-स्याष्टौ शरावा ते च द्वाभ्या शरावाभ्यामधिका कर्त्तव्या इति मिलित्वा दश जल-शरावा; चतुर्थभागावशेषात् स्थाप्य सार्द्धशरावद्वयम्, पञ्चपललौहस्य प्रधानपाके तु सपाददुग्धशरावद्वयोक्तेश्च द्विपले तु क्रमात् पादह्रासेन दुग्धञ्च सार्द्धशरावैक भवति, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। त्रिपललौहस्य प्रधानपाके तु त्रिफ-लाया दश पलानि; प्रतिपलमम्बुसम स्यादित्युक्तेश्च जलस्य दश शरावा., ते च

द्वाभ्यां शरावाभ्यामधिका कर्त्तव्या इति मिलित्वा द्वादश जलशरावा, चतुर्थभागावशेषात् स्थाप्य शरावत्रयम्, दुग्धञ्च पादोनशरावद्वयम्, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव ज्ञेयम्। चतुःपललौहस्य प्रधानपाके तु त्रिफलाया द्वादश पलानि, प्रतिपलमम्बुसम स्यादित्युक्तेश्च जलस्य द्वादश शरावा, ते च द्वाभ्यां शरावाभ्यामधिका कर्त्तव्या इति मिलित्वा चतुर्दश शरावा, चतुर्थभागावशेषात् स्थाप्यन्तु सार्द्धशरावत्रयम्, दुग्धञ्च शरावद्वयम्, घृतञ्च पूर्ववदिति। त्रयोदशपलादुपरि चतुर्दश पललौहस्य प्रधानपाके स्थापितात्रिफलाया भागद्वये पूर्ववदेव जलं देयम्, स्थाप्यञ्च चतुर्थभागम्, पूर्वपूर्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः स्पष्टतरैव, घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिकमेवेति। तदनुसारत इति ग्रन्थो विवृतः ॥१९॥

त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि।
जातीफलजातीकोषैलाकक्कोललवङ्गानाम्।
सितकृष्णजीरयोरपि चूर्णान्ययसा समानि स्युः ॥ २० ॥

पक्त्वावतारितमात्रे लौहे प्रक्षेपार्थं चूर्णमाह त्रिफलेत्यादि—कान्तक्रामकः काञ्जिकामुस्तकम्। सितकृष्णेति द्वयं जीरकविशेषणम्। अयसा समानीति यावल्लौहचूर्णम्, तावदेव मिलित्वा त्रिफलादिचूर्णमित्यर्थः ॥ २० ॥

त्रिफलात्रिकटुविडङ्गा नियता अन्ये यथाप्रकृति ॥
कालायसदोषहृते जातीफलादेर्लवङ्गान्तस्य।
दोषप्राप्त्यनुरूपः सर्वस्योनस्य चैकाद्यैः ॥
कान्तक्रामकमेकं निःशेषं दोषमपहरत्ययसः।
द्विगुणत्रिगुणचतुर्गुणमाज्यं ग्राह्यं यथाप्रकृति ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वा तथापि चूर्णानाम्।
अयसा साम्यं संख्या भूयोऽल्पत्वेन भूयोऽल्पा ॥२१॥

इदानीमेतेषु त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह त्रिफलेत्यादि—कालायसदोषहृत इति छेदः। अन्य इति जातीफलादयः। उक्तत्रिफलादिसप्तकस्य नियतत्वे हेतुमाह कालायसदोषहृत इत्यादि—कालायसं वज्रपाण्ड्यादिलौह एव, कालत्वञ्चास्य प्रशस्तत्वेन कीर्त्त्यते। यदुक्तं पातञ्जले—"कज्जलाभा शिरोजास्ते रसायनविधौ मता" इति, पतितदानवशिरसि जाता इत्यर्थः। उक्तं हि पातञ्जले—"कफपित्तानिलप्राया देहास्तत्र महीतले। पतिता दानवास्तत्र प्रदेशाश्चापि तादृशाः।

गिरिसारास्ततो जाता उत्तमाधममध्यमा । कफक्षेत्र शिरःस्थानं हृदय पित्तमण्डलम्। वायोर्नाभिरध क्षेत्रमिति देहविदो विदु । वक्षोजा व्याधिनाशार्थं कटिजा वाजिकर्मणि। शिरोजा देहसिद्ध्यर्थमित्येव त्रिविधा मता." इत्यादि । अयोभवो दोष• आयस•, स चाकारदृष्टिवशात्, तस्याकृतिहरण प्रशम इति यावत् । यद्यपि कान्तक्रामकस्यापि लोहदोषहरणत्वेनावश्यप्रक्षेप्यत्वोपवर्णनमिहैव युज्यते, तथापि तस्यैकस्यापि नि शेष-दोषहरणत्वकरणार्थं पृथगभिधान कान्तक्रामकमित्यादिनाग्रे करिष्यति, तथा कान्तक्राम-कस्यापि नियत प्रक्षेप्यत्वमिति ज्ञेयम्। जातीफलादीना प्राप्त्यनुरूप प्रक्षेप्यत्वमाह जाती-फलादेरित्यादि—प्राप्त्यनुरूप इत्यस्यार्थमाह सर्वस्योनस्य चैकाद्यैरिति यदुक्त जाती-फलादिलवङ्गान्त यदा सर्वमेव प्राप्यते तदा सर्वस्यैव प्रक्षेप, यदा सर्वं न लभ्यते तदा एकद्वित्र्यादिभिर्जातीफलादिद्रव्यैरूनस्यापि प्रक्षेपः । कान्तक्रामकस्यापि अवश्यप्रक्षेप्य-त्वमाह कान्तक्रामकमेकमित्यादि—किन्तु यदा लौहस्य निष्पत्तिपाक कर्तव्य, तदा प्रथमतो घृत देयम्, ततो लौहचूर्णम्, ततस्त्रिफलाक्काथ., ततो दुग्धम्, तत एकीकृत्य लौहः पच्यते । घृतव्यतिरेकेण च सर्वत्र लौहपाकानुपलम्भ इति स्थितिः, अत परि-माणपूर्वक घृतमाह द्विगुणेत्यादि । द्विगुणत्वादिकञ्च लौहमपेक्ष्य, यथाप्रकृतीति कफ-पित्तवातप्रकृतिषु यथाक्रम द्विगुणत्वादि बोद्धव्यमिति, द्वन्द्वप्रकृतौ च मिश्रविधिः, समप्रकृतौ च मध्यविधिः, तेन त्रिगुणमित्यन्वयः । ननु त्रिफलादि लवङ्गान्तसमग्र-भेषजप्राप्तिर्यदि भवति, तदा प्रक्षेप्यचूर्णस्य भूयस्त्वम्, यदि समग्र न लभ्यते, तदाल्पीयस्त्वम्, अत कथमयसा साम्यमित्याह यदीत्यादि—भूयोऽल्पसङ्ख्येति सम्बन्ध, भूयसी अल्पा वा सङ्ख्या प्रक्षेप्यचूर्णाना भूयस्त्वेऽल्पत्वे वा न प्रयोजिकेति शेष । तेन यदा भेषजाना समग्रेण प्राप्तौ सङ्ख्याकृतभूयस्त्व तदा भागह्रासेन मिलितचूर्णाना लौहचूर्णेन समत्वम्। समग्राप्राप्तौ च सङ्ख्याकृतभूयस्त्व तदा भागवृद्ध्या मिलितचूर्णाना लौहचूर्णेन समत्व विधेयमिति भाव । यद्यपि नानाचार्यैस्तेषु लौह-प्रयोगेषु प्रक्षेप्यचूर्णाना लौहसमत्वम्, तदर्द्धमानत्वम्, तच्चतुर्थमानत्वञ्चाभिहित तथाप्यमृतसारलौहे प्रक्षेप्यचूर्णाना मिलित्वा लौहचूर्णसमत्वमेवेति वचनादेवाव-सीयते ॥ २१ ॥

एवं धात्वनुसारात् तत्तत् कथितौषधस्य वापेन ।
सर्वत्रैव विधेयस्तत्तत् कथितस्यौषधस्योहः ॥ २२ ॥
इति साध्यसाधनपरिमाणविधि. ॥

इदानीमुक्तौषधमध्ये यद् यद्दोपाधनुरूप तदपनीयम्, यत् तत्रोचित तदपि विधेयमित्याह एवमित्यादि। पूर्वन्तु तत्तद्वचनव्याख्यानाभिव्यक्तिनिमित्त स्थाने स्थाने पत्रिकाक्रमो लिखित ।इदानीं तत्सर्वमेकीकृत्य एकपलादित्रयोदशपलपर्य्यन्त पत्रिकाक्रमेण लिख्यते। तत्र एकपललौहे मारणादिकर्मत्रयार्थं मिलित्वा त्रिफला पल ६, पाथ श १, शेप श १ पल २, तथा निष्पत्तिपाकार्थं मिलित्वा त्रिफला पल ६, पाथ श ८, शेप श २, दुग्ध श १ पल २, घृतञ्च यथाप्रकृत्यैव, चूर्णमानन्तु स्पष्टमेव । अथ द्विपललौहे मारणादिकर्मत्रयार्थं त्रिफला मिलित्वा पल ४, पाथ श १३ पल ४, शेप श १ पल ५ कर्ष २, निष्पत्तिपाकार्थं त्रिफला मिलित्वा पल ८, पाथ श १०, शेप श २ पल ४, दुग्ध श १ पल ४, घृतञ्च यथाप्रकृत्यैव, चूर्णमानन्तु स्पष्टमेव। अथ त्रिपललौहे मारणादिककर्मत्रयार्थं मिलित्वा त्रिफला पल ५, पाथ श १७, शेप श २ पल १, निष्पत्तिपाकार्थं त्रिफला पल १०, पाथ श १२, शेप श ३, दुग्ध श १ पल ६, घृत चूर्णमानञ्च स्पष्टमेव । चतु पललौहे जारणादिकर्मत्रयार्थं त्रिफला पल ६, पाथ श २०, पल ४, शेप श २ पल ४ कर्ष २, प्रधानपाकार्थं त्रिफला मिलित्वा पल १२, पाथ श १४, शेप श ३ पल ४, दुग्ध श २, घृत चूर्णमानञ्च स्पष्टमेव। पञ्चपललौहे मारणादिकर्मत्रयार्थं त्रिफला पल ७, पाथ श २४, शेप श ३, प्रधानपाकार्थं त्रिफलापल १४, पाथ श १६, शेप श ४, दुग्ध श २ पल २, घृतादि स्पष्टमेव । षट्पललौहे जारणादिकर्मत्रयार्थं त्रिफला पल ८, पाथ श २८, शेप श ३ पल ४, प्रधानपाकार्थं त्रिफला पल १६, पाथ श १८, शेप श ४ पल ४, दुग्ध श २ पल ४, घृत चूर्णमानञ्च स्पष्टमेव। सप्तपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल ९, पाथ श ३२, शेप श ४, प्रधानपाकार्थं त्रिफला पल १८, पाथ श २०, शेप श ५, दुग्ध श २ पल ६, घृत चूर्णमानञ्च स्पष्टम्। अष्टपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल १०, पाथ श ३६, शेप श ४ पल ४, प्रधानपाकार्थं त्रिफला पल २०, पाथ श २२, शेप श ५ पल ४, दुग्ध श ३, घृत चूर्णमानञ्च स्पष्टम्। नवपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल ११, पाथ श ४०, शेप श ५, प्रधानपाकार्थं त्रिफला पल२२ पाथ श २४, शेप श ६, दुग्ध श ३ पल २, घृत चूर्णमानञ्च स्पष्टम्। दशपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल १२, पाथ श ४४, शेप श ५ पल ४, प्रधानपाकार्थं त्रिफला पल २४, पाथ श २६, शेप श ६ पल ४, दुग्ध श ३ पल ४, घृत चूर्णमानञ्च स्पष्टम्। एकादशपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल १३, पाथ श ४८, शेप श ६, प्रधानपाकार्थं त्रिफला पल २६, पाथ श २८, शेप श ७, दुग्ध श ४, घृत चूर्णमानञ्च

स्पष्टम् । द्वादशपललौहे जारणादिकर्मत्रयार्थं त्रिफला पल १४, पाथ श ५२, शेष श ६ पल ४, प्रधानपाकार्थं त्रिफला पल २८, पाथ श ३०, शेष श ७ पल ४, दुग्ध श ४ पल २, घृतं चूर्णमानञ्च स्पष्टम् । त्रयोदशपललौहे जारणादि-कर्मत्रयार्थं त्रिफला पल १५, पाथ श ५६, शेष श ७, प्रधानपाकार्थं त्रिफला पल ३० पाथ श ३२, शेष श ८, दुग्ध श ४ पल ४। तदेव एकादित्रयोदशपलान्तलौहस्य *साध्यसाधनपरिमाणे पत्रिका लिखिता, एवमुक्तरीत्या च चतुर्दशपलादिलौहेऽपि* साध्यसाधनपरिमाणमुन्नेयमिति। साध्यसाधनपरिमाणविधिरिति साध्य लौह साधन त्रिफलादि, तयो परिमाणविधिरित्यर्थ ॥ २२ ॥

इति साध्यसाधनपरिमाणविधि ।

## लौहमारणविधिः

**कान्तादिलौहमारणविधानसर्वस्वमुच्यते तावत् ॥२३॥**

इदानीं लौहजारणविधिमाह कान्तादीत्यादि—आदिशब्दात् पाण्डिवज्रादयोऽपि गृह्यन्ते; एषा लक्षणानि प्रदीपस्य चतुर्थपरिच्छेदेऽनुसन्धेयानि । लौहमारणविधानमेव सर्वस्व तदधीनत्वात् पुटादिकर्मणा, किन्तु सुमृतमेव लौह गुणकर, तदुक्त —"सुमृ-तञ्च यतो लौहममृतेन सम नृणाम्। दुर्मृत शूलविष्टम्भौ शरीरस्थितिसशयम्। भवेदयोवधे तस्माद् यत कुर्य्याद्भिषग्वर" ॥ २३ ॥

**यस्य कृते तल्लौहं पक्तव्यं तस्य शुभदिवसे ।**
**समृदङ्गारकरालितनतभूभागे शिवं समभ्यर्च्य ।**
**वैदिकविधिना वह्निं निधाय हुत्वाहुतीस्तत्र ॥ २४ ॥**

*यस्य कृत इति यस्यातुरस्य निमित्तम् । लौहमारणाय भूमिसस्कारपूर्वकमिति-*कर्त्तव्यतामाह समृदित्यादि— मृदा सह अङ्गारमेकीकृत्य सञ्चूर्ण्य तेन करालिते दन्तु-रिते लिप्त इति यावत्, एतेनातितापान्मृत्तिका न गलति, नतभूभागे मध्यनिम्नभूभागे । शिवमित्युपलक्षण, तदुक्त—"अर्चयित्वा विधानेन हेरम्ब गुरुभास्करौ । लोकपालान् ग्रहांश्चैव क्षेत्रपालानथौषधम्। आदित्यदेवतांश्चेष्ट्वा धन्वन्तरिपतञ्जली। दद्याद् वलिञ्च सर्वेभ्यो नानाभक्ष्योपचारत" इति । वह्निमिति वन्यदिव्यानल, तदभावे दारुद्वय-सङ्घट्टनजमग्निम्। यदाह पतञ्जलिः—"दिव्य दाव समादाय लौहकर्म समाचरेत् । यदि दिव्यानलाभावस्ततो घर्षणसम्भवः॥ आरोप्य कर्मशालायामग्निं यत्नेन पूजयेत् इति ॥ २४ ॥

धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि ।
शक्त्यनुरूपं दद्याद् द्विजाय सन्तापिणे गुणिने ॥
सन्तोष्य कर्मकारं प्रसादपूगादिदानसम्मानैः ।
आदौ तदश्मसारं निर्मलमेकान्ततः कुर्य्यात् ॥ २५ ॥

यद्यपि दृष्टादृष्टरूपेण कार्य्यचक्रेण कार्य्यं सिध्यति तथा दृष्टमप्यदृष्टवशादेव उपनिष्ठते । इत्यदृष्टस्यैव रमणीयत्वं मन्यमान आह धर्मादित्यादि—श्रेय इत्यभिमतप्रशस्तफलम् । किमपीति धान्यहिरण्याद्यदानाद्यन्यतमं यथाशक्ति दद्यादित्यर्थः । मारणार्थं लौहसंस्कारमाह आदावित्यादि—अश्मसारं लौहं निर्मलमिति शोधनविधिना कार्य्यं तद् यथा प्रथमं लौहं शिलादिना निर्मलीकृत्य पत्तलं कार्य्यं, तदनु चाङ्गेरीमातुलुङ्गाम्लवेतसेनाम्लयित्वा सप्तवारं प्रत्येकेन आतपे संशोष्य ततः काञ्जिकादौ दिनद्वयं त्रयं वा स्थाप्यम्, एवमलभावना विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयम्, ततश्च मनःशिलावल्मीकमृत्तिकाकुठारिकामूलचाङ्गेरीश्वेतदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम् । ततश्च "पत्तलं निर्मलं कृत्वा लौहमम्लीकृतं पुनः । मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया । भावितं भावयेत् तच्च वल्मीकामलकेऽपि च । परशुच्छिन्ना चाङ्गेरी गण्डदूर्वा ससैन्धवा ॥ आमिलिप्तं यथाप्राप्ति शोष्यं सूर्य्यातपे क्रमात् ॥" गण्डदूर्वा श्वेतदूर्वेति नाम । तदेव भावना विधाय तदनु भस्त्रया वह्निं ध्मापयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु वारत्रयं कृत्वा निर्वापणीयम् । उक्तं हि—"क्षीरारनालगोमूत्रत्रिफलाक्वाथवारिणि । प्रतिद्रव्यं निषेकश्च त्रिधा चैव विधानतः" इति । निषेकमात्रा च—"लौहपत्रं मनाक्तप्तं द्विगुणे तद्रवे क्षिपेत् । निषेक एष निर्दिष्टो निषेकार्थकवादिभिः" इति । निषेकार्थं त्रिफलाक्वाथविधानञ्च यथा—"सिद्धार्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा । चतुर्गुणं फलात् तोयमर्द्धभागावशेषितम्" इति । दोषविशेषे च निषेकविशेषो यथा—"विशेषतः कफे तीक्ष्णकटुतिक्तकषायकैः । वाते तु मधुरस्निग्धैः पित्ते मधुरशीतलैः । निषेकः शस्यते नित्यं सर्वदोषापनायकः ।" तदेवमुक्तक्रमेण निषेकं विधाय रात्रिमेकां विश्राम्य लौहमारणादिषु योजयेत् । उक्तं हि—"विश्राम्य रजनीमेकां ततः कर्म समाचरेत्" इति ॥ २५ ॥

तदनु कुठारच्छिन्नात्रिफलागिरिकर्णिकास्थिसंहारैः ॥
करिकर्णच्छदमूलशतावरीकेशराजाख्यैः ॥

शालिञ्चमूलकाशीमूलप्रावृड्जभृङ्गराजैश्च ।
लिप्त्वा दग्धव्यं तदृष्टक्रियलोहकारेण ॥ २६ ॥

इदानीं लोहमारणार्थं भेषजान्याह तदन्वित्यादि—तदन्विति शोधनानन्तरं किन्तु लोहजारणसमीपकाले पुनरपि स्वच्छकाञ्जिकमध्ये लौहस्य निषेकं कृत्वैव मारणं कर्त्तव्यम् । उक्तं हि पातञ्जले—"काथं पर्य्युषितं कृत्वा बलिं दत्त्वा चतुर्दश । अपरेऽपि न दातव्यो निषेको व्यधमर्णिणा । अम्लस्वच्छारनालं च ततो व्यधमुपक्रमेत् ॥" कुठारच्छिन्ना कुठारिका, गिरिकर्णी श्वेतापराजिता, अस्थिसंहारो हारसङ्कारिः, ण्डूदमूल दन्तिकर्णपलाशमूलम्, काशी स्वनामख्याता । प्रावृड्जा वर्षाभू, पुनर्नवेति यावत् । यद्यपि एतैरेव भेषजैर्लिप्त्वा शुद्धे सति नियतमेव लौहस्य मारणं भवति तथापि वृद्धा लोहार्द्धभागपरिमितम्, लोहापेक्षया षोडशांशेन परिमितं वा शोधितस्वर्णमाक्षिकचूर्णं त्रिफलाक्वाथेनालोड्य तेन लौहं लिप्त्वा तदनन्तरम् उक्तकुठारच्छिन्नादिभिर्लौहापेक्षया षोडशांशैरालिप्य ततोऽस्य ध्मापनमुपदिशन्ति । उक्तं च चक्रपाणिना यथा—"लोहार्द्धेन विख्यातः प्रलेपो माक्षिकेण च । माक्षिकान्नगुणा प्रोक्ता कुनटी नाम्लपेषिता । मारकद्रव्यमनुक्तं षोडशांशेन ध्माप्यते ॥" षोडशिमाक्षिकस्यापि षोडशांशमाह यथा—"त्रिफलावाङ्किवीहिगुणवपादरजोऽन्वितम् ।" तत्र वाङ्किवीहिगुणत्र स्वर्णमाक्षिकम्, पादश्च षोडशांश इति व्याख्यानयन्ति । तथा तत्रापि "लौह लोहार्द्धमानेन षोडशांशेन वा पुनः । त्रिफलाक्वाथपिष्टेन माक्षिकेण प्रलेपयेत् । लौहाच्चतुर्थांशकुनट्या चाम्लपिष्टया" इति । कुनटी मनःशिला । अत्र लौहजारणाङ्गीभूतस्वर्णमाक्षिकस्य शोधनं लक्षणञ्च लिख्यते "मध्ये तु स्वर्णसङ्काशो मनाक् कृष्णश्च विघर्षितः । वृहद्गुणः इति ख्यातो माक्षिकोऽत्र प्रशस्यते ।" एवंविधमाक्षिकचूर्णं क्षुद्रमारिषशालिञ्चक्वाथमध्ये पत्तनिकायां स्थापयेत् । पत्तनिकास्थापितक्वाथे तत् स्वर्णमाक्षिकचूर्णं वस्त्रे पोट्टलिकां बद्ध्वा निक्षिप्य दोलापाकक्रमेण पचेत् । पत्तनिकाभ्यन्तरे क्वाथमध्ये पोट्टलिकाया यत् तोयवत् गलति तत् ग्राह्यम् । तदुक्तं—"स्वर्णमाक्षिकचूर्णं च वस्त्रबद्धं विपाचयेत् । कालमारिषशालिञ्चक्वाथे दोलाविधानतः । तदधः पतितं ग्राह्यमेव शुध्यति माक्षिकम्" इति॥ २६॥

चिरजलभावितनिर्मलशालाङ्गारेण परित आच्छाद्य ।
कुशलाध्मापितभस्त्रानवरतमुक्तेन पवनेन ॥
वह्नेर्बाह्यज्वाला बोद्धव्या जातु नैव कुञ्चिकया ।

मृल्लवणसलिलभाजा किन्तु स्वच्छाम्बुसंप्लुतया ॥
द्रव्यान्तरसंयोगात् स्वां शक्तिं भेषजानि मुञ्चन्ति ।
मलधूलिमत् सर्वं सर्वत्र विवर्जयेत् तस्मात् ॥२७॥

इदानीं तत्पाकाय यादृशोऽङ्गारो ग्राह्यस्तमाह चिरेत्यादि—चिर पक्षमासा-दिकम्, भावित स्थापितम्, निर्मल तृणधान्यादिविरहात् । कुशलोऽत्र स्थिरोऽनल-सश्च । कुञ्चिका वंशशाखा कुञ्चीति ख्याता । विपक्षे दोषमाह द्रव्यान्तरेत्यादि—मृदादिससर्गे सति यस्माल्लौहससृष्टभेषजानि हीनशक्तिकानि भवन्ति,तस्मात् मृदादि-कर्वुरितसलिलयुक्तकुञ्चिकया वह्निज्वाला न बोद्धव्या,किन्तु निर्मलजलयुक्तकुञ्चिक-यैवेत्यर्थ ॥२७॥

सन्दंशेन गृहीत्वान्तःप्रज्वालिताग्निमध्यमुपनीय ।
गलति यथायथमग्रे तथैव मृदु वर्द्धयेन्निपुण ॥
तलनिहितोर्द्ध्वमुखांकुशलग्नं त्रिफलाजले विनिक्षिप्य ।
निर्वापयेदशेषं शेषं त्रिफलाम्बु रक्षेच्च ॥२८॥

इदानीं तल्लौह येन प्रकारेण वह्निमध्ये प्रवेशनीय तदाह सन्दशेनेत्यादि—सन्दश साँडाशीति ख्यात । मृदु वर्द्धयेदिति क्रमशस्तल्लौहखण्ड वह्निमध्ये प्रवेशये-दित्यर्थ । गलितञ्च यथा तथा त्रिफलाक्वाथे देय तदाह तलेत्यादि—पाकेन यथायथ गलति तथा तलनिहितोर्द्ध्वमुखाङ्कुशेन जतुवल्लभ विहित समुद्धृत्य सन्दशेन पीडयित्वा यथोक्तत्रिफलाजले शनै. शनैर्निर्वापयेत् । शेष त्रिफलाम्बु रक्षेच्चेति पुटपाकार्थं स्थालीपाकार्थं स्थापितत्रिफलाक्वाथभागद्वयमेव शेषशब्दवाच्यम् । उक्तार्थे पातञ्जले यथा—"हस्तिकर्णसमीरेण अङ्गाराध्मापित भृशम् । उत्तोलित त्रिधा लीन स्फुलिङ्गै परिवर्जितम् । ततोऽङ्कुशमुखे लग्न सन्दशपीडित यथा । उद्धृत्य त्रिफला-तोये प्रक्षेप्तव्य शनै शनै." इति ॥२८॥

यल्लोहं न मृतं तत् पुनरपि पक्तव्यमुक्तमार्गेण ।
यन्न मृतं तथापि तत् त्यक्तव्यमलौहमेव हि तत् ॥२९॥

त्रिचतुर्वारमङ्गारक्षयात् तावत् सर्वमेव लौह म्रियते, तथापि यन्न मृत तत् किं कर्त्तव्यम्, तदाह यल्लौहमित्यादि—उक्तमार्गेणेति उक्तभेषजलेपादिक्रिया वर्त्तनीया । तथापि यन्न मृत तत् त्याज्यमेवेत्याह यन्न मृतमित्यादि । तथापीति सप्तभिरङ्गारै सप्त-वारपाकेनापीत्यर्थ । उक्त हि—"सप्तवारान् तथा लौह पूर्ववत् पूर्वभेषजै. । ध्मात्वा

ध्मात्वा समुत्थाप्य निक्षिपेत् त्रिफलाम्भसि। एव नामान यो लौहो न मृतस्त्याज्य एव स" इति। प्रमग्णे हेतुमाह अलौहमित्यादि। उक्तौपधलिप्तानेकवारध्मात-मरणव्याप्त हि सुलौहत्वम्। तन्मरण निवृत्तिमान सुव्याप्त लौहशास्त्रोदितसुलोह-त्वमादायैव निवर्त्तत इति भाव। मृतलौहलक्षणञ्च यथा—"लौहगूथसमाकार-स्पर्शग्राह्य: प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतो वैद्यसत्तमै.॥ २६॥

**तदनु घनलौहपात्रे कालायसमुद्गरेण सञ्चूर्ण्य।**
**दत्वा बहुश· सलिलं प्रक्षाल्याङ्गारमुद्धृत्य॥**
**तदय· केवलमग्नौ शुष्कीकृत्याथवातपे पश्चात्।**
**लौहशिलायां पिंष्यादसितेऽश्मनि वा तदप्राप्तौ॥ ३०॥**

## इति लौहमारणविधि.।

इदानीं जारणानन्तर प्रक्षालनञ्च तथा त्रिफलाक्काथावसिक्तस्य सूर्य्यातपे शोषणरूपो भानुपाकश्च यथा कर्त्तव्यस्तदाह तदन्वित्यादि—घन दृढ छिद्राद्यभाव-युक्तम्। लौहपात्र इति लौहोदूखलादाविल्यर्थ.। कालायसमुद्गर तीक्ष्णलौहमुद्गरम्। एतदुभयमप्युपलक्षण, तेन दृढदृशदादिकञ्च बोध्यम्। सञ्चूर्ण्येत्यत्र मुद्गनिभमिति शेप.। सलिलमित्युपलक्षण, तेन त्रिफलाक्काथोऽपि बोध्य। शुष्कीकृत्येति त्रिफला-क्काथेनैव सप्तधा सूर्य्यातपे सशोष्येत्यर्थ। उक्तार्थे पातञ्जले यथा—"अयोघनेन तत् पिष्ट शिलया दृढया यथा। अयोमलसम पिण्ड कृत्वा मुद्गसम पुन। त्रिफला-वारिणा धौत विशुष्क चूर्णित पुन।" इत्यादि। योगरत्नाकरेऽप्युक्त—"मृत-ञ्चोदूखले लौहे मूपलेनापि तादृशा। सञ्चूर्ण्य त्रिफलाम्भोभि सप्तधा सूर्य्यपाचि· तम्। एव पुटविधौ योग्यो विज्ञेयो भिषजां वरै·।" इत्यादि। अत्र लौहप्र· क्षालनार्थं भानुपाकार्थञ्च त्रिफलाक्काथविधिर्यथा योगरत्नाकरे—"शुद्ध्यर्थ त्रिफला लौहात् कर्त्तव्या त्रिगुणा सदा। चतुर्गुणफलात् तोयमर्द्धभागावशेषितम्। एप एव विधिर्नित्य क्षालनेऽपि च शस्यते।' इति तथा—"भानुपाकार्थमिच्छन्ति त्रिफला-मयसा समम्। सलिल द्विगुण तत्र चतुर्भागावशेपितम्।" इति॥ ३०॥

इति लौहमारणविधि·॥

## स्थालीपाकविधिः

**अथ कृत्वायोभाण्डे दत्त्वा त्रिफलाम्बु शेपमन्यद्वा।**
**प्रथमं स्थालीपाकं दद्यादातत्क्षयात् तदनु॥**

गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः ।
प्राग्वत् स्थालीपाकं कुर्य्यात् प्रत्येकमेकं वा ॥ ३१ ॥
इति स्थालीपाकविधि ।

स्थालीपाकमाह अथेत्यादि—अयोमाण्डे लौहपत्तनिकायाम् । शेष त्रिफलाम्बु त्रिफलैकभागकृतक्वाथस्य ध्मातनिर्वापणावशिष्टम् । अथ यदि कथमपि तद्विनष्ट स्यात् तदा का गतिरित्याह अन्यद्वेति तत्प्रक्रिययैव क्वाथान्तर कार्य्यमिति भाव । प्रथम स्थालीपाक दद्यादिति प्रथम स्थाल्या लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाक विधाय त्रिफलाक्वाथत्रय. कर्त्तव्य । इत्येप स्थालीविधानक्रमः आतत्त्वयादिति त्रिफलाक्वाथशोपपर्य्यन्तम् । तद्वन्विति प्रथम त्रिफलाक्वाथेन स्थालीपाक विधाय अनन्तर हस्तिकर्णपलाशादीना व्यस्ताना समस्ताना वा स्वरसैरपि पूर्ववद् स्थालीपाक कार्य्य इत्याह गजकर्णेत्यादि—गजकर्णो हस्तिकर्णपलाश । प्राग्वदित्यनेनैव यावतीयत्रिफलाक्वाथस्य स्थालीपाके मात्रा द्रवत्रयानन्तरञ्च पाकस्तथा गजकर्णादिस्वरसादावित्यर्थ । किन्तु तत्र व्याध्यनुरूपस्थालीपाकीयद्रव्याणामन्तरे यदि स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थे त्रिफलाक्वाथानुसारेणैव क्वाथ्यजलादिक दत्त्वा क्वाथ विधाय स्थालीपाको विधेय इति ॥३१॥

इति स्थालीपाकविधि ।

## पुटपाकविधिः

हस्तप्रमाणवदन श्वभ्रं हस्तैकखाति सममध्यम् ।
कृत्वा कटाहसदृशं तत्र करीप तुपञ्च काष्ठञ्च ॥
अन्तर्धनतरमर्द्धं शुषिरं परिपूर्य्य दहनमायोज्यम् ।
पश्चादयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात् ॥
त्रिफलाम्बुभृङ्गकेशरशतावरीकन्दमाणसहजरसै ॥
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसै ॥
लिप्त्वाथ लौहपात्रे मार्दे वा लौहमार्दपात्राभ्याम् ।
तुल्याभ्यां पृष्ठनाच्छाद्यान्ते रन्ध्रमालिप्य ॥
तत्पुटपात्रं तत्र श्वभ्रज्वलने निधाय भूयोभि ।
काष्ठकरीपतुपैस्तत् सञ्छाद्याहर्निशं दहेत् प्राज्ञः ॥ ३२ ॥

पुटपाकविधिमाह हस्तप्रमाणेत्यादि—श्वभ्र खातम् हस्तैकखातिसममध्यमिति हस्तैकप्रमाणा खाति खननं यस्य, सर्वतो हस्तैकमात्रपरिमाणमित्यर्थ. । समोऽनिम्नो मध्योऽभ्यन्तरभागो यस्य तत् सममध्यम् । कटाहसदृशमित्यनेनैव वर्त्तुलाकारत्वमुक्त, तेन चतुष्कोण न कार्य्यमित्यर्थ । तत्र श्वभ्र अन्तरिति मध्ये घनतर बहुतर निविड-तरमिति यावत् । अर्द्धशुषिर परिपूर्य्येति करीषादिभि श्वभ्रस्यार्द्धभाग परिपूर्य्ये-त्यर्थ । कैर्द्रवै: पङ्कोपम कुर्य्यादित्याह त्रिफलेत्यादि—त्रिफलाम्बु त्रिफलाक्काथ, भृङ्गकेशरौ भृङ्गराजकेशराजौ, कन्द. शूरण. । एषा भृङ्गादीना सहजरसः स्वरस. । भल्लातकस्य पुन. क्काथ एव, स च भल्लातकसहस्रे मत्येव बोध्यः । अयश्चूर्ण त्रिफलाक्काथादिभि पङ्कोपम कृत्वा किं कर्त्तव्य तदाह क्षिप्त्वेत्यादि—मार्दे इति कृष्णमृत्तिकाभवपात्रे, एतच्च मृत्पात्र सर्वथा लौहपात्राभावे हि बोध्य, किन्तु दक्षिणराढायां सममसृणे मृत्सम्पुटे लौह कृत्वा वस्त्रमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहार । अयञ्च पक्ष. साधीयान् भवति, यतो लौहसम्पुटमध्येऽ-धमलौहघटितसम्पुटमात्रस्यापि पुटपाकौषधसंसर्गजीर्णतया तदीयरजसोऽनुप्रवेशो दुर्निवार इति । पृष्ठेनाच्छाद्येति—यत्र पात्रान्तरे पङ्कोपम लौहचूर्णमस्ति तन्मुख-मपरतत्तुल्यपात्रस्य कटीभागे । निधायेत्यर्थ । अन्ते रन्ध्रमालिप्येति कुट्टितमृद्वस्त्रा-दिभिरिति शेष । भूयोभिरिति प्रचुरैः । इदञ्च काष्ठादिक पुटमात्रोपदर्शनार्थम्, अतो न पौनरुक्त्यम् । भूयोभिरित्यनेन गर्त्तपूरण कृत्वा तदुपर्य्यपि करीषसमुच्छ्रयः कार्य्य इति दर्शयति । अहर्निशमित्यनेन दिवसे रात्रौ वा पुटो देय इति दर्शयति । अन्ये तु पुटपाकस्याष्टप्रहरव्यापनार्थमहर्निशमिति वचनमाहु, तन्न, पुटपाकस्य चतु.प्रहरसम्पाद्यत्वात् । उक्त हि पातञ्जलौ—“ चतुर्भि प्रहरैर्ज्ञेय पुटपाकक्षणो बुधै. ।” तथा योगरत्नाकरसमुच्चयेऽपि—“ चतुर्भि प्रहरैरेव पुटपाकः प्रकीर्त्तित । पुटपाकक्षणादूर्द्ध्वं स्थितो भवति भस्मसात् । अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यत । कुण्डस्थो भस्मनाच्छन्न आकृष्टव्य. सुशीतल । समाकृष्टस्य तप्तस्य गुणहानि प्रजायते ” इति । तत्र सक्षेपात् पुटपाकपरिपाटी लिख्यते । त्रिफला-क्काथादिभि पङ्कोपम लौह विधाय सम्पुटाकृतिलौहपात्रस्थ कृत्वा वस्त्रादिभिरव-गुण्ठ्य कुट्टितवस्त्रमृत्तिकया पात्रयोरवकाशमालिप्य हस्तमात्रपरिमितसमतलभूगर्त्ते करीषतुष. शुष्कगोमयमात्रेण वा खातस्यार्द्ध प्रपूर्य्य तत्र तल्लौहसम्पुट निधाय वह्निं नियोज्य तदुपरि अपरकरीषादिभि शुष्कगोमयमात्रेण वा श्वभ्र परिपूरयेत्, एवं चतुर्भि. प्रहरैरेव पुटो देय, शीतीभूतमाकृष्टव्यम् ॥ ३२ ॥

एवं नवभिरमीभिर्भेषजराजैः पचेत्तु पुटपाकम् ।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान् ॥
प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत् ।
तादृशि दृशदि न पिंष्याद् विगलद्रजसा तु युज्यते यत्र ॥
तदयश्चूर्णं पिष्टं घृष्टं घनसूक्ष्मवाससि श्लक्ष्णम् ।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम् ॥
पुटेन स्थालीपाकेऽधिकृतपुरुषे स्वभावरुगधिगमात् ।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि ॥ ३३ ॥

इति पुटपाकविधिः ॥

इदानीमुक्तैस्त्रिफलादिभिः पुनर्नवास्वरसान्तैः प्रत्येकं, मिलित्वा वा पुटो देय इत्याह एवमित्यादि—नवभिरिति इह त्रिफला एकत्वेनैव गणनीया, तेन न सङ्ख्यातिरेकः । त्रिफलेत्यनेन त्रिफलादिगणमिच्छन्ति केचित्, तद्यथा—'त्रिफला-त्रिवृतादन्तीत्रिकटुतालमूलिकाः । वृद्धदारश्च वृश्चीरवृषपत्रकचित्रकाः । शृङ्गवेर-विडङ्गौ च भृङ्गभल्लातकौषधम् । दाडिमस्य च पत्राणि शतपुत्री पुनर्नवा । कुठार-कामकौ कन्दस्तन्त्री भेकस्य पर्णिका । हस्तिकर्णपलाशश्च कुलिशं केशराजकः । माणः खण्डितकर्णश्च गोजिह्वा लौहमारकः । गिरिमन्तानकः प्रोक्तस्त्रिफलादिरयं गणः । सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः ।" इति । दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः । ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति । किञ्च यस्मिन् व्याधौ ये ये योगा हितास्तस्मिन् व्याधौ तत्तत्क्वाथैरपि पुटो देयः । उक्तं हि—"ये ये यत्र गदे योगास्तेषां तेषाञ्च वारिणा । विधिनाध्माय तेनैव पुटो रोगे च सम्मतः ।" इति । विधिनेति साध्यसाधनपरिमाणोक्तपुटपाकार्थत्रिफ-लाक्वाथविधिना, अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्यान्तराण्यनुक्तमानानि सन्ति, देयजलमानं शेषजलमानञ्च नोपात्तं, तत्र योगरत्नाकरोक्तव्यवस्थैवानुसर्त्तव्या । यदुक्तं क्वाथविधौ तत्रैव—"अन्यानि यानि व्यक्तानि योक्तव्यानि पुटादिषु । तानि लौहसमान्येव जलं प्रागेव कीर्त्तितम् । लभ्यते स्वरसो येषां तेषां क्वाथस्तु नेष्यते । त्रिफलाव्यतिरिक्तेन मतमेतत् पतञ्जलेः ।" इति । जलं प्रागेव कीर्त्तितमिति मृदौ क्वाथार्थं चतुर्गुणं जलं देयं, स्थाप्यश्चतुर्थो भागः । मध्यद्रव्येऽष्टगुणं जलं देयं, स्थाप्यश्चाष्टमो भागः । कठोरद्रव्ये षोडशगुणं जलं देयं, स्थाप्यश्च षोडशो

भाग इति । ननु पुटेन किमत्र क्रियते ? उच्यते, दोषनाशगुणोदय इति । यदुक्त—
" पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदय । म्रियते हि पुटाल्लौह पुटास्तस्मात् समाचरेत् । यथा यथा प्रदीयन्ते पुटा सुबहवो यदि । तथा तथाभिवर्द्धन्ते गुणा एव सहस्रश । तावल्लोह पुटैर्देयो यावच्चूर्णीकन जले । निस्तरङ्गे लघुत्वेन समुत्तरति हसवत् । तावच्च चूर्णयेदेन यावत् कज्जलसान्निभम् । करोति विहिते नेत्रे नैव पीडा मनागपि ।" इति । पुटाना कर्मभेदेन सख्याभेदो यथा—"शतादिस्तु सहस्रान्त पुटो देयो रसायने । दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः । वाजिकर्माणि विज्ञेय पुट' पञ्चशताधिक । दशोत्तरशतान्तस्तु पुट पुटविचक्षणै ।" यदा तु चुद्रितमात्रे लौहे पुटा देयास्तदा एतावद् भूय' सख्यका अपि पुटा दीयन्ते । यदा तु प्रतिपुटान्ते पेषण वस्त्रपूतञ्च तदा सप्ताष्टावेव विशिष्टफलदा भवन्तीत्युपदिशन्ति वृद्धा'। प्रतिपुट पेषणमाह प्रतीति—एतेन पेषणवक्ष्यमाणवस्त्रपूतत्वाभ्या भस्मीभूतपुटार्थदत्तभेषजनिरासोऽपरदेयभेषजद्रव्यसस्काराधानञ्चेति भाव । कोमलाशिलासु पेषण न कार्य्यमिति भाव, पिष्ट्वा च वस्त्रपूत कार्य्यमित्याह तदय इत्यादि—घन निविड, सूक्ष्मञ्च यद्वास, तत्र घृष्ट पूतमित्यर्थ । इदानीमातुरस्य प्रकृत्यादिक निरूप्य उक्तभेषजेषु यदनुचित तस्यापकर्ष कार्य्य । अनुक्तस्याप्युचितस्यादान कार्य्यमित्याह पुटन इत्यादि । आधिकृतेति अधिकृतपुरुषाश्चिकित्स्यत्वेन प्राकृत इत्यर्थ ॥३३।

इति पुटपाकविधि ।

## पाकविधिः

**अभ्यस्तकर्मविधिभिर्बालकुशाग्रीयबुद्धिभिरलक्ष्यम् ।**
**लौहस्य पाकमधुना नागार्जुनशिष्टमभिदध्म ॥३४॥**

इदानीं लौहस्य प्रधाननिष्पत्तिपाकमाह अभ्यस्तेत्यादि—अभ्यस्तकर्मविधिभि दृष्टकृतलौहपाकै । बालकुशाग्रमिति तीक्ष्ण सूक्ष्मञ्च तेन कुशाग्रमिव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषा, दुरूहस्यार्थस्य तीक्ष्णसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यलक्ष्य ज्ञातुमशक्यम् । नागार्जुनशिष्ट नागार्जुनेन कथितम् । लौहपाकारम्भेऽपि मङ्गल कार्य्यम् । उक्त हि पातञ्जले—"मातृका पूजयेत् सर्वा नायिकाश्च विनायकम् । अन्यत् स्वस्त्ययनं कुर्य्यात् सदा हितमना' सुधी । पच एव भवेदेव त्रिवर्गफलदो नृणाम्" इति ॥३४॥

**लोहारकूटताम्रकटाहे दृढमृण्मये प्रणम्य शिवम् ।**
**तदयः पचेदचपल' काष्ठेन्धनेन वह्निना मृदुना ॥**

निक्षिप्य त्रिफलाजलमुदितं यत् तद् घृतञ्च दुग्धञ्च ।
सञ्चाल्य लोहमय्या दर्व्या लग्नं समुत्पाट्य ॥३५॥

लौहपाकार्थं पात्रमाह लोहेत्यादि—आरकूट' पित्तलम् । काष्ठेन्धनेनेति काष्ठ पद तृणतुषादिव्युदासार्थम् । वह्निनेत्यधोवह्निना । उक्त हि—"मृदुनाधो हुताशेन पक्तव्यमवधानत." इति । स्थापितत्रिफलाभागद्वयकृतकाथादिप्रक्षेपार्थमाह निक्षिप्येत्यादि—उदितमित्युक्तपरिमाणम् । घृतादिदानक्रमश्च भोजराजेनोक्त ; यथा—"घृतेन लौहमालोड्य क्षीरेण तमनन्तरम् । तत क्वाथेन सयोज्य मन्देऽग्नौ शनकै पचेत् । तत सञ्चालयेल्लौह लौहदर्व्यातिदीर्घया" इति ॥ ३५ ॥

मृदुमध्यखरभावै पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम् ।
पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्तु समः ।
अभ्यक्तदर्वि लौहं सुखदुःखस्खलनयोगि मृदु मध्यम् ।
उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्य्याः ॥
अन्ये विहीनदर्वीप्रलेपमाखूत्कराकृतिं ब्रुवते ।
मृदु मध्यमर्द्धचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥ ३६ ॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह मृद्वित्यादि—मध्यमपाको वात प्रकृतौ हित एव, किन्तु प्रकृत्यन्तरेऽपि योज्य इत्याह मध्यमस्तु सम इति । सर्वप्रकृति सेव्यत्वेन सर्वास्वेव प्रकृतिषु उचित इत्यर्थ । अमोघोऽप्याह—"दर्वीमाश्लिष्यते यत्तु तच्च स्खलति वा न वा । मृदुपाक विजानीयात् पित्ते तु विहित सदा ॥ सितापुञ्जोपम यत्तु मूषिकोत्करसन्निभम् । तदय: खरपाक स्यात् श्लेष्मण्येव प्रकीर्त्तितम् । एकैक गुणयोगित्वान्न तमिच्छन्ति तद्विद । सर्वप्रकृतिसेव्यत्वान्मध्यम बहुपूजितम्" इति । एकीयमते मृदुमध्यखरपाकाणा क्रमाल्लक्षणमाह अभ्यक्तेत्यादि—अभ्यक्ता घनपङ्कवत सश्लिष्टा दर्वी येन ईदृश लौह मृद्विति मृदुपाक ब्रुवते । अभ्यक्तदर्वीत्यपि पाक. तथा सुखदु खस्खलनयोगी कदाचित् दर्वी त्यजति कदाचित् न त्यजति इत्यर्थ । एतादृश यल्लौह तन्मध्यममिति मध्यमपाक ब्रुवते । तथा उज्झितदर्वीति यल्लौह कदाचिदपि दर्व्या न सन्त्यज्यते, तत् खरपाक ब्रुवते इति । तथा अन्यतममतमाह अन्य इत्यादि—विशेषेण विहीनस्त्यक्तो दर्वीप्रलेपो येन ईदृश, यथा आखूत्कराकृति इन्दुरमृत्तिकासदृशञ्च यल्लौह तन्मृद्विति मृदुपाक ब्रुवते । तथा अर्द्धचूर्णलौह मध्यमिति मध्यपाक ब्रुवते अर्द्ध-चूर्णमिति अर्द्ध चूर्णम् अपरमर्द्धञ्च आखूत्कराकारमित्यर्थ । तथा सिकतापुञ्जोपम

वालुकाराशिसदृश यल्लौह चक्षुष्य गृह्यते न तु स्पर्शेन,तत् खरपाक ब्रुवते। पातञ्जले तु स्पर्शादिनापि पाकज्ञानमुक्त—" तावल्लौह पचेद्वैद्यो यावद्वर्णेण पीडितम्। समग्र जायते व्यक्त न नि सरति सन्धिभि.। अङ्गुलिभ्या निघृष्टन्तु यदा चूर्णत्वमागतम्। तदा सिद्ध विजानीयाल्लौह लौहविशारदः।,वर्त्तितो वर्त्तितो वर्त्तिस्वरूपत्व व्रजेदिति। ताभ्यामेव शनैर्घृष्ट सिद्ध विद्याच्चिकित्सक"। मन्दमाहुस्तथा लौहमलब्धाखिललक्षणम्। अतिपाकेन तज्ज्ञेय खरमुज्झितलक्षणम्" इति। जीवनाख्योप्याह— " अञ्जनाभ घन स्निग्ध श्लथमूलमथोद्धरेत्। अक्लिन्नमम्भसि क्षिप्त सम्यक् पाकस्य लक्षणम्" इति॥ ३६॥

**त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः।**
**प्रकृतिविशेषे सूक्ष्मौ गुणदोषौ जनयत्यल्पम्॥**
**विज्ञाय पाकमेवं द्रागवतार्य्य क्षितौ क्षणान् कियतः।**
**विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम्॥ ३७॥**

त्रिविधोऽप्यय पाको न विफल इत्याह त्रिविध इत्यादि—लौहपाकानन्तर त्रिफलादिचूर्णप्रक्षेपमाह विज्ञायेत्यादि—द्राक् शीघ्र, क्षितौ, नाकाशे। कियत्-क्षणात् विश्राम्येत्यनेन सर्वथा निवृत्तिर्न प्रतिपद्यते, किन्तर्हि, मनाक् तप्तत्वम्, यदाह पतञ्जलि —'अवतार्य्य मनाक् तप्त' इति। इतिकर्त्तव्यता त्विह योगरत्नाकरसमुच्चयोक्तानुसर्त्तव्या। यदुक्त तत्रैव—" अवतार्य्य ततो दर्व्या परिघट्टय पुन पुनः। यदा पाणिसहो भूतो निक्षिपदौषध तदा। स्तोक स्तोक न दातव्य परिघट्टय निरन्तरम् इति॥ ३७॥

**यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे।**
**चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः॥**
**पक्कं तदश्मसारं सुचिरघृतस्थित्यभाविरूक्षत्वे।**
**गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम्॥३८॥**

लाभे सति सौगन्ध्यार्थं कान्तक्रामकीयदोषहरणार्थञ्च कर्पूरप्रक्षेपमाह यदीत्यादि—विगलित इति अपगते। अनुरूप इत्यनेन यावतानुत्कटगन्धस्वादूपलम्भो भवति तावन्मानमित्यर्थ। न वा न यदि तल्लाभ इति—यदि कर्पूरलाभो न स्यात् तदा न वा क्षिपेदित्यन्वय। पक्कलौह दिनान्तरे वारत्रयमिति श्लक्ष्ण पेष्टव्यम्। उक्त हि योगरत्नाकरे—" विश्राम्य रजनीमेका पेष्टव्य शीतलीकृत.। त्रिधा

शिलातले श्लक्ष्णे शिलापुत्रेण तादृशा " इति । अथ सिद्धस्य लौहस्य स्थापनार्थं पात्रमाह पक्कमित्यादि—सुचिरकाल घृतस्थित्या अभावि रुक्षत्व यस्य तादृशे, बहुदिन व्याप्य घृतभावित यत् पात्रम्। तस्मिन्नित्यर्थ । गोदोहनादिभाण्ड दधि-दुग्धादिभावित लौहभाण्डाभाव इति कान्तादिलौहपात्राभावे, तदुक्त—" कान्तादि-लौहभाण्डे तु तद्वत् ताम्रमये शुभे । चिराज्यभाविते मार्दे लौहताम्राद्यसम्भवे " इति ॥ ३८ ॥

यदि तु परिप्लुतिहेतोर्घृतमीक्षेताधिकं ततोऽन्यस्मिन् ।
भाण्डे निधाय रक्षेद्भाव्युपयोगो ह्यनेन महान् ॥
अयसि विरूक्षीभूते स्नेहस्त्रिफलाघृतेन सम्पाद्यः ।
एतत् ततो गुणोत्तरमित्यमुना स्नेहनीयं तत् ।
अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति ॥
केवलमपीदमशितं जनयत्ययसो गुणान् कियतः ॥ ३९ ॥

इदानीमय पाकार्थ दत्त घृतमधिक यद्युपलभ्यते, तदा तदाकृष्य भाविलौहरूक्ष-त्वनिवृत्त्यर्थ पात्रान्तरे स्थाप्यमित्याह यदि त्वित्यादि—घृतस्याधिक्यमेव कथ ज्ञातव्यमित्याह परिप्लुतिहेतोरिति । परिप्लुति पात्रादुच्छलितत्वम् । ईक्षेत उप-लभेत । किमर्थ तद्घृत रक्षणीयमित्याह भाव्युपयोग इत्यादि । हि यतोऽनेन लौह-पात्रोच्छलितघृतेन महान् उपयोगो महत् प्रयोजन भावि वर्त्तते, स च रूक्षीभूत-लौहस्नेहनादिरूप । उक्त हि—" भवेद् यदि क्वचिल्लौहे प्लवनादधिक हविः । पृथक्पात्रेऽपि तत् स्थाप्य स्नेहनार्थ विरूक्षिते । अथवा मर्दन लौहे यन्मधुसर्पि-षेष्यते । तदनेनैव कर्त्तव्यमिति केचिद्व्यवस्थिता ।" यदि पुनर्लौहपाकोच्छलित घृत न लभ्यते, तदा त्रिफलाक्वाथकल्काभ्यामन्यद् घृत पक्त्वा रूक्षितलौहस्य स्नेहन कार्य्यमित्याह अयसीत्यादि । किन्तु उक्तत्रिफलाघृताद् लौहपाकोच्छलित घृतमेवोत्-कृष्टगुणमित्याह एतदित्यादि—एतदिति लौहपात्रोच्छलित घृतम् । तत इति त्रिफलाघृताद् गुणोत्तरमुत्कृष्टगुणमिति । अमुना घृतेन तदय स्नेहनीयमिति । तस्यैव घृतस्य प्रयोजनान्तरमाह अत्यन्तेत्यादि—अमुनैवेति लौहपात्रोच्छलितघृतेने-त्यर्थ । लौहोच्छलितघृतस्योत्कृष्टगुणत्वमप्याह केवलमित्यादि—केवल लौहपात्रो-च्छलितघृतम् । जनयत्यसौ गुणान् कियत इति लौहसम्बन्धेन लौहगुणानुविधाना-दिति भाव ॥ ३९ ॥

अथवा वक्तव्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थार्द्धसमद्वित्रिचतु पञ्चगुणभागम् ॥
प्रक्षिप्याय प्राग्वत् पचेदुभाभ्यां भवेद्रजो यावत् ॥
तावन्मानानुस्मृते' स्यात् त्रिफलादिद्रव्यपरिमाणम् ।
इदमाप्यायकमिदमतिपित्तनुदिदमेव कान्तिवलजननम् ।
स्तभ्नाति तृदक्षुधौ परमधिकाधिकमात्रया क्षिप्तम् ॥४०॥

इति पाकविधि ।

इदानीं पित्तदुष्टिं प्रति अत्रैव लौहे चतुर्थार्द्धसमादिमानतोऽभ्रकप्रवेशेन लौहाभ्रक पक्तु विधिमाह अथवेत्यादि—वक्तव्यविधिनेति कृष्णाभ्रकमभेकवपुरित्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरविधिश्च वक्तव्यस्तेन विधिना संस्कृतमभ्रकचूर्णं निश्चन्द्रीकृतमादाय अयो लौहचूर्णं प्रक्षिप्य पचेदिति । कियन्मानं अभ्रकचूर्णं ग्राह्यमिति जिज्ञासायामभ्रस्यैव भागक्रममाह लौहचतुर्थेत्यादि—लौहचूर्णमपेक्ष्य निश्चन्द्रीकृताभ्रचूर्णस्य चतुर्थो भाग पादिक इत्यर्थ. । तथा पचनीयैकपलादित्रयोदशपलान्तलौहचूर्णस्य द्वयन्तु अभ्रस्य पुनरेको भागः, तेन लौहस्य भागद्वयम्, अभ्रस्य तदर्द्धमेको भाग इति अभ्रस्यार्द्धभागत्वम् । तथा एको भागो लौहस्य अपर एको भागोऽभ्रस्येति लौहसमत्वमभ्रस्येति । एवमेको भागो लौहस्य, द्वयन्तु अभ्रस्येति द्विगुणत्वम् । तथा एवमेको भागो लौहस्य, अभ्रस्य भागत्रयमिति अभ्रस्येति त्रिगुणत्वम् । लौहस्यैकोभाग भागचतुष्टयन्तु अभ्रस्य, तथा एको भागो लौहस्य, पञ्चभागस्तु अभ्रस्येति ज्ञेयम् । एव क्रमेण लौहाभ्रकाभ्या मिलित्वा एकपलादित्रयोदशपलान्तमानव्यवस्थया पाक. कार्य्यं इत्याह प्राग्वदित्यादि । एवञ्च सति अभ्रकप्रवेशेन प्रधाननिष्पत्तिपाकार्थं त्रिफलाक्वाथदुग्धघृतप्रक्षेप्यचूर्णपरिमाण कीदृशमिति निर्णयार्थमाह उभाभ्या भवेदित्यादि—अयमर्थ उभाभ्या लौहाभ्रकाभ्या मिलित्वा यावद्रजो भवेत्, तावदेव लौहमान परिकल्प्य तन्मानानुसारेण त्रिफलादिमान कल्पनीयम् । पूर्वं केवललौहपाके त्रिफलादीना यावन्मानमुक्तं इदानीं मिलितलौहाभ्रकेऽपि तावदेवेत्यर्थ । अतएव लौहरमाभ्रकयोगमपेक्ष्य योगरत्नाकरेऽप्यभिहित—" यावल्लौहरजस्तस्मात भवेदर्द्धेन पारद । तदर्द्धेन घन प्रोक्त मतमेतत्पतञ्जले· ॥ मानेन त्रितयस्यास्य नित्य ग्राह्य पलत्रयम् " इति । ननु किमर्थं पुनरुत्तरोत्तरमधिकाधिकमात्रया लौहे क्षिप्तमभ्रकमित्यत आह इदमित्यादि—इदमभ्रक लौहे अधिकाधिकमात्रया समुपयुक्त साद्दोधिना आप्यायकत्वादिगुणविशि-

ष्ट भवतीत्यर्थः । आप्यायकरणं अमृतमिक्तमिव पुरुषं बलोत्कर्षं करोतीत्यर्थः । स्तम्नाति तृट्क्षुधाविति तृट्क्षुधौ पुरुषस्य बाधां न जनयत इत्यर्थः । किंवा आहार-जातमविकलमाखिलं परिणमत्येव, एषा बुभुक्षा च न पुरुषमरणं करोतीत्यर्थः ॥४०॥

इति पाकविधिः ।

## अभ्रकविधिः

कृष्णाभ्रमभेकवपुर्वज्राख्यञ्चैकपत्रकं कृत्वा ।
काष्ठमयोदूखलके चूर्णं मुसलेन कुर्वीत ॥
भूयो दृशदि च पिष्टं वास सूक्ष्मावकाशतलगालितम् ।
मण्डूकपर्णिकाया प्रचुररसे स्थापयेत् त्रिदिनम् ॥
उद्धृत्य तद्रसादथ पिष्याद्धैमन्तिकधान्यभक्तस्य ।
अक्षोदात्यन्ताम्लस्वच्छजलेन प्रयत्नेन ॥
मण्डूकपर्णिकायाः पूर्वरसेनैव लोडनं कुर्य्यात् ॥
स्थालीपाकं पुटनञ्चाद्यैरपि भृङ्गराजाद्यैः ॥ ४१ ॥

वक्ष्यविधिसंस्कृतकृष्णाभ्रकचूर्णमित्युक्तम्, अतस्तामेवाभ्रकशुद्धिमाह कृष्णाभ्रमित्यादि—अभेकवपुरिति भेकस्य वपुः हरितपीतादिवर्णं भवति तेन यदधिकवर्णेन भेकस्य वपुरिव एकदेशोऽपि न भवति तदेव च वज्राख्यं वज्रोति तस्य प्रसिद्धिः तदुक्तं योगरत्नाकरे—"अप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम् । यत्र शब्दायते वह्नौ नैवोच्छून भवेदपि । सदाकारमनुद्भूतं वज्रोति प्रथमं घनम्" इति । तदभ्रकं नखादिभिरेकपत्रं कर्त्तव्यम्, भूयः पुनः दृशदि शिलायां पिष्टं चूर्णीकृत्य घनतरवाससा छानयित्वाऽधो यद्गलितं तदग्राह्यम् । मण्डूकपर्णी थानकुनीति ख्याता, तद्रसादिति मण्डूकपर्णी स्वरसात् । अक्षोदिति क्षोदोऽत्र शीर्णभक्तमिकथकम्, अक्षोदश्च तद्विरहात् । पेषणानन्तरं यत् कर्त्तव्यं तदाह मण्डूकपर्णिकाया इत्यादि । पूर्वरसेनेति यत्रैव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विमृज्य मोदकाकारं कुर्य्यात्, मोदयतीति मोदनं इति मोदनशब्दोऽपि मोदकार्थे द्रष्टव्यः । क्वचित्तु मोदकमिति पाठः । स एव तत्पदाकारपुस्तकेषु न दृश्यते । मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा शुष्कीकुर्य्यादित्युपदेशो बोद्धव्यः । अयमभ्रकशोधनप्रकारः अघोराचार्य्यमतानुसारेण निबद्धः । तत्र मण्डूकपर्णीरसेन यद्यपि पुनर्मोदककरणं नास्ति तथापि षट्कर्मणा प्रतिसंस्कृत्योपदेशादिदं लिखितमिति बोध्यम् । तदनु चास्य अभ्रस्य चूर्णीकृतस्य स्थालीपाकपुटपाके कर्त्तव्ये तदर्थं

इत्याहयाह स्थालीपाकमित्यादि—आर्द्रभृङ्गराजाद्यैरिति लौहपुटनविधौ भृङ्गराजकेशराजशतावरीकन्दमाणादिरसैरित्यर्थ । आर्द्रैरित्यत्र अन्यैरपि पाठ. । किन्तु पूर्वपाठ एव टीकाकारसम्मत ॥ ४१ ॥

ताडादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्त्राग्नौ ।
तावद्धृद्दृश यावन्नीलोऽग्निर्दृश्यते सुचिरम् ॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु ।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात् ॥ ४२ ॥

## इति अभ्रकविधि ।

एव पुटादिशोधितस्याभ्रस्य वह्नौ ध्मापनं कार्य्यं, ततस्तद्विधिमाह ताडादि-पत्रेत्यादि—ताड स्वनामख्यात, आदिशब्दात् केतुकादिपत्र बोध्यम् । किन्त्वि-दानीं ताडादिपत्रपिहितस्याभ्रस्य ध्मापन व्यवहरन्ति । पिण्डीकरणञ्च भृङ्गराजादि-द्रवालोडनादधिगन्तव्यम् । दुग्ध प्रक्षाल्येति दुग्धनिर्वापितोत्थापिताभ्रकसलग्न यद् दुग्धम् । यद्यपीदानीं ताडादिपत्रपिहितस्य ध्मापनमभ्रस्य न व्यवहरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्व क्रियते, तथाप्यसात् बहुधा कृतत्वात् आ सम्यक् निश्चन्द्र-कत्वमनेनास्य भवत्येव । ध्मापित यतोऽभ्रस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तच्च येन केनापि भेषजेन भवतु । अपरापरेऽभ्रकमारणप्रकारा नाना-चार्य्योक्ता सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्या । तत्रैक प्रसिद्धमतं यथा—"आशुभक्तोदकैः पिष्टमभ्रक तत्र सस्थितम् । कन्दमाणास्थिमद्धारखण्डक-गोरभैरथ । वृद्धदारकपिण्टेन कालमारिपजेन च । घृक्षीरघृष्टीभृङ्गलघणाकेशरा-जजै. । पेषण भावन कुर्य्यात् पुटपाकमनेकधा । यावन्निश्चन्द्रकत्व स्यात् ततो गोचरसेन च । कालमारिपजेनापि स्थालीपाक प्रदापयेत् । यावद् भसत्वमायानि शुद्धिरेव विदायस "अत्र घृक्षीर श्वेतपुनर्नवा, लघणा स्वनामख्याता; मोचा रम्भा, ध्यक्तमन्यत् । किन्त्वय वृद्धैर्पयै प्राय न क्रियते ॥ ४२ ॥

इत्यभ्रकविधि. ।

## लौहभक्षणविधिः

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य ।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम् ॥

दशकृष्णलपरिमाणं शक्तिवयोभेदमाकलय्य पुनः।
इयदधिकं तदधिकतरमियदेव न मातृमोदकवत् ॥४३॥

इदानीं निष्पन्नलौहस्य भक्षणविधिमाह नानेत्यादि—नानाविधव्याधय पुराणज्वरातीसारग्रहणीरक्तपित्तराजयक्ष्मप्रभृतय । अमृतमिति अमृतमिवामृतम्। तच्च कियन्मानमुपयोज्य तत्राह दशेत्यादि—कृष्णला रक्ति, तेन चरकमानमाषक- मित्यर्थ । अयन्च दशरक्तिपरिमाणारम्भ उत्तमपुरुषबलवयोऽभिहित, तेन मध्य- माधमपुरुषशक्तिवयोऽपेक्षया इद दशरक्तिपरिमाण यथाक्रम मध्यमाधमयोरधिकमधि कतरञ्च भवतीति। बलाद्यपेक्षया उक्तपरिमाणादल्पाल्पतरपरिमाणेनाप्यारम्भ । वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाण युक्तमिति कृत्वा तावत्परिमाणमेवकर्त्तव्यमिति मातृमोदकवन्निबन्धो न कार्य्यं इत्यर्थ । तेन "आरम्भो वर्द्धनञ्चापि पञ्चद्वित्र्येक- गुञ्जया।" तथापि पञ्चसप्तनवरक्तिका प्रथमदिने, तथा—"रक्तिमेकामुपक्रम्य यावत् स्युर्नव रक्तिका" इत्यादि । यत् तन्त्रान्तरे उक्त, सर्वमनेन तत् सगृहीतम् ॥ ४३ ॥

सममसृणामलपात्रे लौहे लौहेन मर्दयेद् गाढम्।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम्।
बन्धं गृह्णाति यथा मध्वपृथक्त्वेन पङ्कमविशिषत् ॥४४॥

लौहमर्दनार्थं पात्रमाह समेत्यादि—उत्तानवामकरतलस्थापनार्थं तत् पात्र भाजनाकार करणीयम्। लौहेनेति लौहदण्डेन। मधु तदुचित दत्त्वा, अधिकमिति मध्वपेक्षया किञ्चिदधिक घृत मिश्रणीयम्। मर्दनविध्यर्थं लक्षणमाह बन्धमित्यादि— अविशिषदिति स्वतन्त्र मधु अपृथक्त्वेन एकत्वेनाविशिषत् विशेषमकुर्वत् अतएव पङ्कमिति ॥ ४४ ॥

इदमिह दृष्टोपकरणमेतद् दृष्टन्तु मन्त्रेण।
स्वाहान्तेन विमर्दो भवति फडन्तेन लोहबलरक्षा।
सनमस्कारेण वलिर्भक्षणमयसो हुमन्तेन ॥

ॐ अमृतोद्भवाय स्वाहा।" "ॐ अमृते हूं फट्" "ॐ नमश्चण्डवज्रपाणये। महायक्षसेनाधिपतये सुरगुरुविद्यामहा- बलाय स्वाहा" "ॐ अमृते हूं" ॥ ४५ ॥

दृष्टादृष्टाभ्या हि कार्य्यसिद्धिरिति दृष्टमुक्त्वा मन्त्रनमस्यादृष्टार्थमाह इदमि-

त्यादि—तत्र प्रथम लौहरक्षणमन्त्रमाह ॐ अमृतोद्भवायेत्यादि—अथ स्वाहान्तो मर्दनमन्त्रः ।,लौहरक्षणमन्त्रमाह ॐ अमृते हू फट् इति । बलिदानमन्त्रमाह ॐ नम इत्यादि—भक्षणमन्त्रमाह ॐ अमृते हूमिति ॥ ४५ ॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत् ।
कान्तक्रामकममलं सञ्चूर्ण्य रसं पिबेद्दिने न तु तत् ।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम् ॥४६॥

लीढभेषजपाकार्थमनुपानमाह जग्ध्वेत्यादि—नीरञ्चामल आकाशगुणत्रयभूयिष्ठभूभागाश्रय, क्षीर च गव्य सर्वत्र, उक्तञ्च—"सर्वत्र गव्यमेवेति मतमाह पतञ्जलिः" इति । अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणम् । तदुक्त योगरत्नाकरे—"अनुपान चतुःषष्टिगुण प्राहुः सदा बुधाः"। तथा अन्यत्रोक्तम्—अनुपान प्रयोक्तव्य लौहात् पञ्चगुण पय" इति। अनुपान कृत्वा लौहदोषनिरासाय निस्त्वच॰ कान्तक्रामकस्य स्वरसमात्र पेयमित्याह कान्तक्रामकमित्यादि—आचम्येति—आचमनञ्च शृतशीतजलेन इसोदकेन वा । यदुक्त—"कृत्वानुपानमाचम्य शृतशीतजलेन वा । यद्वा इसोदकेनैव" इत्यादि ॥ ४६ ॥

नात्युपविष्टो नाप्यतिभाषी नातिस्थितस्तिष्ठेत् ।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥
जह्याच्च दिवानिद्रामहितञ्चाकालभुक्तञ्च ।
वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान् ।
तत्क्षणविनाशहेतून् मैथुनकोपभ्रमान् दूरे ॥ ४७ ॥

अनुपानादिक कृत्वा यथा स्थातव्य तदाह नात्युपविष्ट इत्यादि—नातिस्थित इति तूष्णीभूत दण्डायमान सन् अति न तिष्ठेत् चिर न तिष्ठेदित्यर्थ । अपर परिवर्जनीयमाह अत्यन्तेत्यादि—अत्यन्तेति वातादिभि सम्बध्यते, यानमश्वादियानम्, आदिशब्दादीर्ष्याचिन्ताविषण्णाभ्यासादीना ग्रहणम् । अकालभुक्त अजीर्णादौ भोजनम् । वर्जनीयरसानाह वातकृत इत्यादि—वातकृत इत्यादिक हेतुगर्भमेव विशेषणं, किंवा वातकृत. पित्तकृत इत्यनेन कट्वम्लतिक्तकषाया पिप्पल्यामलकगुडूचीहरीतक्यादयो वातपित्ते न कुर्वन्ति, तेषामुपयोगो न विरुध्यत इति दर्शयति । विशेषेण वर्जनीयविधानमाह तत्क्षणेत्यादि—अत्रापि जह्यादिति पूर्वोक्त सम्बध्यते ॥ ४७ ॥

अशितं तदयः पश्चात् पततु न वा पाटवं छुड्ड प्रथताम् ।
आर्त्तिर्भवतु न वान्त्रे कूजति भोक्तव्यमव्याजम् ॥ ४८ ॥

प्रातरुपयुक्त लौहश्चेत्तत कस्यामवस्थाया भोक्तव्यमित्याह अशितमित्यादि— अशित तदय पश्चादिति गुदेन पततु प्रवर्त्ततां, न वा, तथा आर्त्तिरिति बुभुक्षा पीडा भवतु वा न वा, तथापि पाटवम् आलस्यादिराहित्य छुड्ड भवतु तथा लौह-सम्भावितदेहे सम्यग् वायो सञ्चरणेनान्त्र कूजनञ्च छुड्ड भवतु तदैव अव्याज नि शङ्क भोक्तव्यम् । छुड्ड इत्यङ्गीकाराविश्रामे । एतेन पाटवमन्त्रकूजनमेतदुभयमेव भोजन प्रति प्रयोजकमित्यर्थ ॥ ४८ ॥

प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिद्धमक्लिन्नम् ।
घृतसंप्लुतमश्नीयान्मांसैर्वैहङ्गमैः प्रायः ॥
उत्तमसूपरभूचरविष्किरमांसं तथाजमैणादिकम् ।
अन्यदपि जलचराणां पृथुरोमापेक्षया ज्याय· ॥
मांसालाभे मत्स्या अदोपला स्थूलसद्गुणा ग्राह्याः ।
मद्गुररोहितशकुला दग्धास्तु पललान्मनाङ्न्यूनाः ॥
शृंगाटकफलकशेरु कदलीफलतालनारिकेलादि ।
अन्यदपि यच्च वृष्यं मधुरं पनसादिकं ज्यायः ॥
केवुकताडकरीरान् वार्त्ताकुपटोलफलदलशमठान् ।
मुद्गमसूरेक्षुरसान् शंसन्ति निरामिषेष्वेतान् ॥ ४९ ॥

इदानीं भोजन येन विधिना कर्त्तव्य तदाह प्रथममित्यादि—विशदं शुभ्रम्, अक्लिन्नमिति नान्योन्यमलग्नम् । दुग्धमिति जीवद्वत्सशुक्लाया: कृष्णाया वा प्रवृद्धवत्साया वा ग्राह्यम् । वैहङ्गमैरिति तित्तिरादिविहङ्गमसम्भूतै· । प्रायःशब्दादाजैणादिक बोद्धव्यम् । एतदेवाह उत्तममित्यादि—ऊपरभूचरजाङ्गलदेशचरा. लावतित्तिरिशशकादय·, विष्किराः कुक्कुटादय·, एषा मांसमुत्तममिति बालस्थविरव्याधितादिवर्जितानाम् । आदिशब्दात् कृष्णसारगोधादयः । अन्यदपीति विष्किरादिव्यतिरिक्तमित्यर्थः । जलचरा हंसादय· । पृथुरोमापेक्षया ज्याय इति मत्स्यापेक्षया श्रेष्ठमित्यर्थ । अन्ये तु पृथुरोमा शकुल्यामित्याहुः । मांसाप्राप्तौ मत्स्यविशेषोपयोगमाह मांसालाभ इत्यादि । के ते सद्गुणा इत्याह मद्गुरेत्यादि—एतेन मद्गुरादयो दग्धा· सन्तः पललादिति मांसात् मनाङ्न्यूना किञ्चि-

द्धीना इत्यर्थः। इदानीमत्रोचित फलकन्दमाह शृङ्गाटकेत्यादि—आदिशब्दादाम्र-खर्जूरादिकम्। निरामिषव्यञ्जनार्थमाह केवुकेत्यादि—ताडकरीरास्ताडाङ्कुरा॰। फलदलेति पटोलस्य फलदलम्॥ ४९॥

शाकं प्रहेयमखिलं स्तोकं रुचये तु वास्तुकं दद्यात्।
विहितनिषिद्धादन्यन्मध्यमकोटिस्थितं विद्यात्॥५०॥

शाक पुन सकलमेव वर्जनीयमित्याह शाकमित्यादि—प्रहेयमित्यवश्यत्या-ज्यम्, रुच्यर्थं पुनर्वास्तूकमेवाल्पप्रमाण दद्यात्। विहितनिषिद्धव्यतिरिक्तं यद्द्राव्य तत् साधारणं ज्ञेयमित्याह विहितेत्यादि॥ ५०॥

तप्तदुग्धानुपानं प्राय सारयति बद्धकोष्ठस्य।
अनुपीतमम्बु यद्वा कोमलशस्यनारिकेलस्य॥
यस्य न तथा सरति सयवक्षारं जलं पिबेत् कोष्णम्।
कोष्णं त्रिफलाक्काथं क्षार सनाथं ततोऽप्याधिकम्॥५१॥

इदानीं बद्धकोष्ठ प्रति अनुपानविशेषमाह तप्तेत्यादि—तप्तक्षीरानुपानेन व्यव-हरन्ति वृद्धा.। नारिकेलोदकञ्च प्रचरति। एवमपि कृते यदा न प्रवृत्तिस्तदा तस्य किं कर्तव्यमित्याह यस्येत्यादि। उष्णजले कोष्ठानुरूप यवक्षार प्रक्षिप्य पिबेदित्यर्थ.। प्रयोगान्तरमाह त्रिफलेत्यादि—क्षार यवक्षार, सनाथमिति सहितमित्यर्थ। यवक्षार प्रक्षेपश्च "प्रक्षेप. पादिक क्वाथ्यात्" इति परिभाषयैव। तत इत्युक्तयोगात्॥५१॥

त्रीणि दिनानि समं स्यादह्नि चतुर्थे तु वर्द्धयेत् क्रमशः।
यावच्चाष्टममाषं न वर्द्धयेत् पुनरितोऽप्याधिकम्॥
आदौ रक्तिद्वितयं द्वितीयवृद्धौ तु रक्तिकात्रितयम्।
रक्तिपञ्चकं पञ्चकमत ऊर्द्ध्वे वर्द्धयेन्नियतम्॥ ५२॥

लौहप्रमाणवृद्धिर्हि क्रमेणैव कार्य्या अतस्तमेव वृद्धिक्रम दर्शयति त्रीणि दिनानीत्यादि—येन परिमाणेन लौहभक्षणारम्भ कृत, तेनैव परिमाणेन दिनत्रय कार्य्यम्, चतुर्थदिनादारभ्य पुनरपि दिनत्रय यावत् समवृद्धौ वर्द्धयेत् त्रीणि दिनानि सम स्यादित्युक्ते, ततोऽपि सप्तमदिने या रक्तिवृद्धि कृता तयैव वृद्ध्या पुनरपि दिनत्रय यावत् वर्द्धयेत् त्रीणि दिनानि सम स्यादित्युक्तेरित्यादि बोध्यम्। एव क्रमेणाष्टमाषकपर्य्यन्त वृद्धि कार्य्या, इतोऽधिकवृद्धिर्न कार्य्येत्याह यावदष्टमसाष-मित्यादि—क्रमशो वर्द्धयेदित्युक्तमतस्तमेव क्रममाह आदावित्यादि—आदौ लौह-

प्रयोगारम्भे रक्तिद्वय कृत्वा त्र्यहमुपयोज्यम्, तत. प्रथमवृद्धौ चतुर्थदिनमारभ्य रक्तिद्वय कृत्वा त्र्यह वृद्धि कार्य्या, तेन द्वितीयत्र्यहे प्रतिदिन रक्तिकाचतुष्टय भवति, ततो द्वितीयवृद्धौ रक्तित्रय कृत्वा त्र्यह वृद्धि, तेन तृतीयत्र्यहे प्रतिदिन-सप्तरक्तिका भवन्ति, अत ऊर्ध्व चतुर्थपञ्चमादित्र्यहेषु त्रीणि दिनानि सम स्यादित्युक्तरीत्या क्रमेण रक्तिपञ्चम कृत्वा अष्टमाषक यावद् वर्द्धयेत् । तेन चतुर्थत्र्यहे द्वादशरक्ति., पञ्चमत्र्यहे सप्तदशरक्ति, षष्ठे द्वाविंशतिरित्यादि ज्ञेयम्, तेन पञ्चदिनादधिक सप्तसप्ताहे दशरक्तिकमाषेण द्विरक्तिकाधिका अष्टौ माषकौ भवन्ति, अत्र च तत्र चतूरक्तिकावृद्धि त्यक्त्वा यथोक्तवृद्धौ वृद्धास्तथा कुर्वन्तीत्येव सिद्धान्त ॥ ५२ ॥

**वात्सरिककल्पपक्षे दिनानि यावन्ति वर्द्धितं प्रथमम् ।**
**तावन्ति वर्षशेषे प्रतिलोमं ह्रासयेत् तदय. ॥**
**तेष्वष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात् ।**
**सायञ्च तावदह्नो मध्ये माषद्वयं शेषम् ॥ ५३ ॥**

**इति भक्षणविधिः ।**

—:o:—

इदानीं सवत्सर यावद् यदि कर्त्तव्यमिद रसायन स्यात् तदा वर्षावशेषदिनानि यावन्ति भवन्ति तावन्त्येव प्रतिलोम रक्तकादिक्रमेण ह्रास कार्य्य इत्याह वात्सरिकेत्यादि—इदानीं पञ्चदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते सति वत्सराभ्यन्तर एव केन प्रकारेण तल्लौहमुपयोज्यमित्याह तेष्वित्यादि—अष्टमाषकेषु मध्ये माषकत्रय प्रात । तावदिति माषकत्रय सायाह्ने, अह्नो मध्ये भोजनसमये शेष माषकद्वयम् । अन्यत्राप्युक्त—"प्रातर्माषत्रय कार्य्य मध्याह्ने माषकद्वयम् । माषत्रय दिवाशेषे 'माषकाष्टकभक्षणम्" इति । इदानीन्तु रक्तिकाद्वयमारभ्य योगिन प्रति रक्तिकाद्वयवृद्ध्यैव त्रिसप्ताहपञ्चसप्ताहादिभि किञ्चिदधिकमाषकद्वय यावद् वृद्धिः । ततो द्विसप्ताहादिभि रक्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः । उत्तरक्रिया चात्र द्विगुणा कार्य्या; तदुक्त पातञ्जले—"इति मुख्यक्रियाया. स्याद् द्विगुणा चोत्तरक्रिया ।" उत्तरक्रियात्र नात्युपविष्टो नात्यतिभाषी नातिस्थितस्तिष्ठेदित्यादिना उक्तैव ॥ ५३ ॥

इति भक्षणविधि ।

—.o—

एवं तदमृतमश्नन् कान्ति लभते चिरस्थिरं देहम् ।
सप्ताहत्रयमात्रात् सर्वरुजो हन्ति किं बहुना ॥
आर्य्याभिरिह नवत्या सप्तविधीनां यथावदाख्यातम् ।
अमतिविपर्य्ययसंशयशून्यमनुष्ठानमुन्नीतम् ।
मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य ।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा ॥५४॥
अमृतसारं लौहं समाप्तम् ।

इदानीमस्य लौहस्य फलमाह एवमित्यादि—उपसंहरति आर्य्याभिरित्यादिना । सप्तविधयश्च—साध्यसाधनपरिमाणविधि, स्थालीपाकविधि, पुटनविधि, प्रधाननिष्पत्ति, पाकविधिरभ्रविधिर्भक्षणविधिश्चेति । एषामनुष्ठान नवत्या आर्य्याभि. कोऽपीष्टकर्मा अमतिविपर्य्ययसशयशून्य यथा स्यात् तथा निबबन्ध इत्यर्थः । कोऽपीत्यनिर्दिष्टनामधेय पुरुष उत्कृष्टरूप. । षट्कर्मा श्रोत्रिय, उक्त हि—"याजन यजन दान ग्रहश्चैव परिग्रहः । अध्यापनमध्ययन श्रोत्रिय षड्भिरेव च", इति । अमति. सर्वथा ज्ञानाज्ञानराहित्य तस्मिंस्तद्बुद्धिर्भ्रम., स च द्विधा—एककोटिकोऽनेककोटिकश्च, तत्राद्यो विपर्य्यय, द्वितीयश्च सशय इति । अनुष्ठीयत इत्यनुष्ठान ग्रन्थसन्दर्भ एव । यथावदाख्यातमित्यत्र पूर्वाचार्य्यैरिति शेषः । उन्नीतमिति गुरुपरम्परया उपदेशपूर्वक कथितमित्यर्थ । मुनिरचितेत्यत्र मुनिर्नागार्जुन । बान्धवानामिति मनुष्याणाम् । एषां चतुर्द्धाश्रयत्वेनावश्योपकर्त्तव्यता च बन्धुत्वम्, एतेनास्य निबन्धस्य अमतिविपर्य्ययसशयनिरासः सदेपश्चेति गुणद्वयमुक्तम् ॥ ५४ ॥

अमृतसारलौह समाप्तम् ।

## दासरसायनलौहम्

यत्र तत्रोद्भवं लौहं निःशेषं मारितं यदि ।
त्रिफलाव्योषसंयुक्तं भक्षयेद् बलिनाशनम् ॥
सामान्याद् द्विगुणश्चौड्रं कलिङ्गोऽष्टगुणस्ततः ।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविंदशभिर्गुणैः ।
तत. कोटिसहस्रं वा अयस्कान्तं महागुणम् ॥ ५५ ॥

इदानीं नागार्जुनोक्त दासरसायनलौहमाह यत्र तत्रेत्यादि—यत्र तत्र भव-

मिति ओड्कलिङ्गादि यत् किञ्चिद्देशभव वजपाण्ड्यादिकमेव नि शेषमिति सर्वथैव मृतम्। निःशेषमित्यत्र निरुत्थमिति पाठे टङ्कणादियोगेनापि वह्नौ ध्मापनात् यदुपतिष्ठते पुनर्लौहभाव नापद्यत इत्यर्थं । त्रिफलेत्यादि—व्योष त्रिकटु। त्रिफलात्रिकटुचूर्णञ्च मिलित्वा लौहसम बोध्यम्। सयुक्त सम्यक् युक्तम्, तेन मधुघृताभ्या लौहपात्रे लौहदण्डेन विमर्द्य भक्षणीयम्। रक्तिकादिक्रमेणेति वदन्ति वृद्धा। अन्ये त्वादौ माषकमेकमुपयोज्यमित्याहु। वृद्धौ मध्ये वा अग्निबलमपेक्ष्य यथाशक्ति कुर्वन् सार्द्धसवत्सरात् वलीं नाशयेदिति दासरसायनवटिकायामुक्तम्। लौहाना गुणमाह सामान्यादित्यादि—दण्डभक्तिपर्य्यन्तदेशदक्षिणोत्तरदिक्सम्भव लौह सामान्यम्, द्विगुणमिति सामान्यलौहात् द्विगुणगुणकारकम्। औड्रमिति ओड्रदेशोद्भवम्, भद्रमिति भद्रदेशोद्भवम्। एषाञ्च भक्षणलक्षणञ्च टीकायामनुसन्धेयम्, इह तु विस्तारभयान्न लिखितम्॥ ५५॥

## ताम्रयोगः

रसतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम्।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा॥
पत्रीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः।
अर्के ध्मापितताम्रे निर्गुण्डीकल्ककाञ्जिकामग्ने॥
यत् पतति गैरिकाभं तत्पिष्टमर्द्धगन्धकं तदनु।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः॥
हिलमोचिमूलपिण्डे क्षिप्तं तदनु मार्दसम्पुटे लिप्ते।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधु चन्द्रिकाविरहितम्॥
रेचितताम्रेण रस. खल्वशिलायां घृष्ट. पिण्डिका कार्य्या।
उत्स्वेद्य गृहसलिलेन निर्गुण्डीकल्केऽसकृच्छुद्धौ।
एतत् सिद्धं त्रितयं चूर्णितताम्रार्द्धिकैः पृथग् युक्तम्॥
पिप्पलीविडङ्गमरिचैः श्लक्ष्णं द्वित्रिमाषिकं भक्ष्यम्।
शूलाम्लपित्तश्वयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु।
रसायनं महदेतत् परिहारो नियमतो नात्र॥ ५६॥

सम्प्रति ताम्रयोगमाह रसत इत्यादि—शोधितात् पारदात् ताम्र भक्ष्यमाण-

क्रमेण मारितचूर्णीभूतस्य द्विगुणं ग्राह्यम्, कृष्णाभ्रकं वक्ष्यमाणरीत्या शोधितं चूर्णीभूतस्य ताम्राद् द्विगुणं ग्राह्यम्। कृष्णेति अभ्रकविशेषणात् भेकवपुषो निरासः। एषां रसादीनां पृथगेव शुद्धिः। तत इति तेषु मध्ये ताम्रशुद्धिं द्विधा आह। किं तत्प्रकारद्वयमित्याह पत्रीकृतस्येत्यादि—मारणमिति छेदः। एतच्च तनुपत्रीकृतम्। द्वितीयां शुद्धिमाह तथा लवणैरित्यादि—लवणैः सैन्धवादिभिः पञ्चभिरेव। आवृत इति लिप्ते। निर्गुण्डी सिन्दुवारः, तदीयमूलपत्रकल्कयुक्तकाञ्जिकमध्ये इत्यर्थः। अतः द्रुतरूपं यत् ताम्रं पतति तद्गैरिकवल्लोहितमित्यर्थः। ताम्रादर्द्धं गन्धकं दत्त्वा तावदेकीकृत्य पेष्टव्यम्, ततः स्थाल्यामारोप्य तुषमृत्तिकया लिप्त्वा लौहवत् पुटो देयः। अभ्रकशुद्धिमाह अभ्रकन्त्वित्यादि—अम्लाम्भसा काञ्जिकेन पिष्टं सत् छिलमोचिकापिण्डे कृत्वा एकमृत्पात्रे निधाय अपरेण पिधाय तीक्ष्णमिति बहुलं यथा स्यात् तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति, तदनु पुटादाकृष्य शिलायां पिष्ट्वा चूर्णीकृत्य तत् ग्राह्यमित्यर्थः। अथ जारितताम्रचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह रेचितेत्यादि—रेचितताम्रेण सह रसं खल्वशिलायां मेलयित्वा घृष्ट्वा पिण्डिका कार्य्या। तदनु निर्गुण्डीकल्कमिश्रिते गृहसलिले काञ्जिके सा पिण्डिका असकृदित्यनेकवारमुत्स्वेद्य, शुद्धाविति शुद्ध्यर्थम्। उत्स्वेदनप्रकारश्चाय सूतनियामकभार्ग्यादिगणान्यतमद्रवे रसपिण्डितं मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीकल्केन मिश्रितकाञ्जिकेनाधो ज्वालया ताप्यमानेन उत्स्वेदनीयमसकृदित्यर्थः। सूतनियामकश्च भार्ग्यादिगणो योगरत्नाकरे यथा—"भार्गी शरपुङ्खा कुठारच्छिन्ना ब्रह्मी मूषिकपर्णिका पुनर्नवा अपराजिता अवाक्पुष्पी भेकाण्डा रुदन्ती मयूरशिखा चेति। भार्ग्यादिरेव विख्यातो गणः सूतनियामकः।" इति। अग्नितापेनापि रसः क्वचिदपि न यातीत्यर्थः। सूतनियामकौषधमध्यगं रसं सकाञ्जिकदोलायन्त्रे पचेत्। तदनु त्रितयमिदं रसाभ्रताम्रचूर्णं पिप्पल्यादित्रयञ्च प्रत्येकं ताम्रचूर्णादर्द्धमानं गृहीत्वा प्रयोजनीयं, ततः एकीकृत्य अग्निबलाद्यपेक्षया द्वित्रिमाषिकादिकमुपयोज्यम्। आदिशब्देन दशप्रसृतयः। कुक्षिरोगेष्विति अग्निमान्द्यादिष्वपीत्यर्थः॥ ५६॥

## ताम्रयोगः

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम्।
दत्त्वा चोर्द्ध्वमधो मध्ये स्थालिकामध्यसंस्थितम्॥
कृत्वा स्वल्पशरावेण स्थालिमध्ये पिधाय च।
शर्कराभक्तलेपेन लिप्त्वा सन्धिं तदूर्द्ध्वतः॥

वालुकापूरितस्थाल्यां पिहितायां पुनस्तथा ।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ।
अथ कर्ष गन्धकस्य वह्निस्थलौहपात्रगम् ॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनः पुनः ।
कृत्वा देयं मृतं ताम्रं कर्षमाणं तत. पुनः ॥
रसोऽम्लमथितः शुद्धस्तावन्मात्रः प्रदीयते ।
ततस्थैवं संमर्द्य पुनराज्यं प्रदापयेत् ॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्छितं तथा ।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम् ॥
संहृत्यालम्वुषरसप्रसृतेन विलोडितम् ।
पुनस्तथैव वह्निस्थलौहपात्रे विमर्दयेत् ॥
यावद् द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम् ।
अलम्वुषरसेनैव गुडकं सम्प्रकल्पयेत् ॥
तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः ।
वसनान्तरितं दत्त्वा पोट्टलीं कारयेद् बुधः ॥
ततस्तां पोट्टलीमाज्यमग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥
यदा निष्फेनता चाज्ये पुटिका च दृढा भवेत् ।
तदा पक्कं तमाकृष्य पञ्चगुञ्जातुलाधृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु अम्लपित्तोच्छ्रये पुन. ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्तिवृद्धिस्ताम्रात्तु मापकम् ॥
यावत् प्रयोगश्च तथैवापकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्मपित्तशूलाम्लपित्तहा ॥

रसायनश्चैतदिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारोऽस्ति विहाराहारकर्मणि ॥ ५७ ॥

इति ताम्रयोग. ।

ताम्रयोगान्तरमाह तनुपत्रीकृतमित्यादि—नेपालमिति नेपालदेशोद्भव ताम्रम् । तनुपत्रीकृतमिति पत्तल यथा स्यात् तथा पत्रीकृतम्, पत्तलता कण्टकवेध्यावस्थोपादानेन लभ्यत इति । तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा जम्बीराम्लरसेन सम्मर्द्य प्रक्षाल्य संशोध्य, तदनु ताम्रसममेव शोधितगन्धक सञ्चूर्ण्य, तदनन्तर स्थालिकाया कियदपि गन्धकचूर्णं दत्त्वा तदुपरि कियदपि ताम्रपत्र निवेश्य पुनस्तदुपरि गन्धकचूर्णं देयमित्येवक्रमेण सर्वाणि ताम्रपत्राणि गन्धकचूर्ण सहितानि उपर्य्यधोभावेन निवेश्य, ततोऽल्पशरावेण स्थाल्यन्तरनिवेशयोगेन तत् ताम्रपत्र पिधाय, तच्छरावप्रान्तञ्च शर्करासहितभक्तलेपेन लिप्त्वा तस्य शरावस्योपरिभागे वालुकापूर्ण तत् स्थालीपात्र कृत्वा शरावेण तस्याः स्थाल्या मुख पिधाय तत्रैव भक्तलेपेन लिप्त्वा प्रहरमेवमविच्छेदेनाधो ज्वाला प्रदापयेत् । इति ताम्रमारणम् । ततस्तत् मृतताम्र स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभि सह योजनीयमित्याह तत इत्यादि—कथ योजना कर्त्तव्येत्याह अथेत्यादि—अथ ताम्रामारणानन्तर शोधितगन्धकस्यापरचूर्णकर्षमेक ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौन पुन्येन घृष्ट्वा द्रवीभूते तस्मिन् मृतताम्रचूर्णं कर्षमान दत्त्वा तथैव शिलापुत्रेण घर्षणीयम् । तत. पुनरिति ततोऽनन्तर अग्नितापद्रुत एव अस्मिन् रस' पारदोऽपि तावन्मान कर्षमान एव देय । पुनस्तेनैव मर्दनीय, किन्तु शिष्टो रस अम्लमथित' सन् शुद्ध, चाङ्गेरीजम्बीराद्यम्लरसमथनाच्च शुद्ध । तदनु अष्टबिन्दुपरिमित घृत दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव । तथा तेन प्रकारेण सर्वं गन्धकताम्रादिक समूर्च्छितमेकीभूत स्यात् । ततस्तस्माल्लौहपात्रात् नि शेषमाकृष्य तथा शिलापुत्रादिसङ्गत शिलापुत्रादिग्रथित सुदृढमपि भूत सहृत्य पलद्वयेनालम्बुषरसेन विलोड्य रसक्षयपर्य्यन्त पुनर्वह्निस्थलौहपात्रे मर्दयेत्, तत आकृष्य अलम्बुषरसेनैव शिलाया पिष्ट्वा गुटिका कल्पयेत् । तदनन्तर किं विधेयमित्याह तत् पिण्डमित्यादि—तत कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूप त्रिकटुक दत्त्वा विस्तार्य्य तदुपरि अपरावितताऽतिनिर्मलवस्त्रखण्डे त ताम्रौषधगुटक निधाय ततो दृढा पोट्टलिका बद्ध्वा, घृतपूर्णस्थालीपात्रे सूत्रेण दण्डसलग्नतया दोलापाकविधिना ता पोट्टलीं तत्रारोप्य घृतनिमग्ना कृत्वा पचेत् । पाकज्ञानार्थमाह यदेत्यादि—पुटिका च दृढा

भवेदिति पुटिका पोट्टलिका, तस्या दृढता च दण्डिकयाताड्य ज्ञेया। त्रिकटुत्रिफला-याश्च मिलित्वैव पञ्चगुञ्जेति ताम्रतुल्य, प्रातरित्यर्द्धप्रहरे। अनुपानमाह तक्रमित्यादि। अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव ताम्रतुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह अम्लपित्तोच्छ्रय इत्यादि—त्रिफलैव समा देया त्रिफलैव ताम्रतुल्या देयेत्यर्थ । तथा कोष्णजलम् अनुपिबेदिति । वृद्धिक्रममाह सप्तम इत्यादि । सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धि' कार्य्या, माषकमान यावदय प्रयोग कार्य्य । तेन माषकादूर्द्ध्वं वृद्धिर्न कर्त्तव्येत्यर्थ । येनैव क्रमेण वृद्धि कार्य्या तेनैव ह्रासोऽपीत्याह तथैवापकर्ष. पुनर्भवेदिति । केचिच्च वृद्ध वैद्यास्त्रिफलान्यातिरिक्तेन द्विरिरक्तिकमिदमौषध मधुना समालोड्य ददति । तेनैव महान् विशेषो दृश्यते । गुदकीलादिनाशनमित्यादि शब्दात् पाण्डुरोगादय ॥५७॥

## शिलाजतुप्रयोगः

हेमाद्या सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥
अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥
हेम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि ।
मधुरञ्च सतिक्तञ्च जवापुष्पनिभञ्च यत् ॥
विपाके कटु तिक्तञ्च तत् सुवर्णस्य निःस्रवम् ।
राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते ॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु ।
यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम् ॥
विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम् ।
गोमूत्रगन्धः सर्वेषां सर्वकर्मसु यौगिकः ॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते ।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु ॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः ॥५८॥

इदानीं चरकोक्तशिलाजतुरसायनमाह हेमाद्या इत्यादि—गिरिगता धातवो

गिरिधातव , हेमाद्या इति तद्विशेषणम्। आद्यशब्दात् लौहरूप्यताम्रसीसकगैरिकमन शिलादीनामपि ग्रहणम् । अतएवोक्त हारीते—" सुवर्णरूप्यत्रपुसीसताम्रम् " इत्यादि । अम्लानम्लामित्यादि विशिष्टप्रतिषेधस्य शेषाद्यनुज्ञाफलकम्, तस्माद्रस-चतुष्टयस्यात्र विधिः धातुभ्यश्चतुर्भ्यं इति रसायनाधिक्यात् तेन सुवर्णरूप्यत्रपुसीसे-त्यादिना हारीतेन यदेव विविधधातुसम्भवत्वमुक्त तेन सम न विरोध । नात्युष्ण-शीतमिति शीतोष्णयोर्बलवत्त्व निषिध्यते, तेन किञ्चिदुष्ण किञ्चिच्छीतल शिलाजतु भवतीति । ते के चत्वारो धातव इत्याह हेम्न इत्यादि । क्रमेण हेमादिसम्भवाना चतु-र्णा लक्षणमाह मधुरामित्यादि । चकारात् स्निग्धत्वादिक बोध्यम् । यदाह हारीत — "स्निग्ध घन काञ्चनगैरिकाभ सतिक्तशीत मधुर सुवर्णात्" इति । अत्र शिलाजतु-सामान्यगुणकथने अम्लकषायव्यतिरिक्तरसचतुष्टयमुक्तम्, तथा कटुपाकीत्यप्युक्तम्, तेन विशेषगुणकथने पुनर्यो रसोऽभिधीयते तत्रोत्कर्षवानिति ज्ञेय , सामान्यगुणो-क्तरसोऽनुक्तोऽपि लभ्यते एव । यस्तु रौप्यभवे कटुपाकविरुद्धो मधुरक उक्तः, स उत्सर्गापवादन्यायेन समर्थनीय । अन्ये तत्तु समधुरविरुद्ध पच्यत इत्याहु , अतएव हारीते विदाहित्वमस्य यदुक्त तदप्युपपद्यते, यथा—"रौप्याकरोत्थन्तु मृणालवर्ण सक्षारक तत् कटुक विदाहि" इति युक्तिमुपवर्णयन्ति । अत्र वीर्य्य ताम्रभवस्यो-ष्णमुक्तम्, तथाऽऽयसानाञ्च शीतमुक्तम्, तेन नात्युष्णशीतवीर्य्ययो सामान्य-गुणोक्तयोरवकाशो नास्तीति केचिदाहु , तन्न युक्तम्, यतो नात्युष्णशीतत्व विधीयते, किन्तु शीतोष्णयोर्बलवत्त्वमात्र निषिध्यते, तेन किञ्चिच्छिलाजतु शीतम्, उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातम् । ताम्रभवशिलाजतुगुण-कथने तिक्तोष्णमित्यत्र तीक्ष्णोष्णमिति केचित् पठन्ति, तन्मते ताम्रजे यद्यपि रसो नोक्तस्तथापि सामान्योक्तचतूरसत्वमेव सानुभवरसभावेन ज्ञेयमित्यर्थमाहु , पश्चिम-मित्यायसम् । यथाक्रममिति वातपित्ते सौवर्णम्, श्लेष्मपित्ते रौप्यजम्, कफे ताम्रजम्, त्रिदोषजे लौहजमित्यर्थ ॥५८॥

लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि ।
तृणाद्यग्रे कृतं सर्वमधो गलति तन्तुवत् ॥
मलिनं यद्भवेत् तच्च क्षालयेत् केवलाम्भसा ।
लौहपात्रेषु विधिना उद्‌र्ध्वीभूतञ्च संहरेत् ॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥

प्रक्षिप्योद्धृतमावानं पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥
तुल्यं गिरिजेन जले चतुर्गुणे भावनौषधं क्वाथ्यम् ।
तत क्वाथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ॥
पूर्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह ।
तत् पीतं पयसा दद्याद् दीर्घमायुः सुखान्वितम् ॥
जराव्याधिप्रशमनं देहदार्ढ्यकर परम् ॥
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत् ।
प्रयोग सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः ॥
निर्द्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा ।
मात्रा पलन्त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी ॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च ।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत् ॥
पयांसि शुक्तानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः ।
आलोडनार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम् ॥ ५६ ॥

चरकोक्तशिलाजतुविधानं सोपस्कारमेतत् ।

श्रेष्ठशिलाजतुनो लक्षणमाह लौहकिट्टायत इत्यादि—यत् शिलाजतु वह्नौ विगतधूम सत् दह्यते लौहमलवच्च भवति तच्छ्रेष्ठम् । परीक्षान्तरमाह अम्भसीति—अम्भसि अग्रे कृत जले क्षिप्त सत् प्रथमतस्तृणाति सवते, तन्तुवत् गलति अधस्तात् तन्तुवल्लम्बते, तत् शिलाजतु श्रेष्ठमित्यर्थे । शिलाजतुशोधनमाह मलिनमित्यादि । अम्भसा उष्णोदकेन,लौहपात्रेषु विधिनेति हारीतोक्तशिलाजतुशोधनविधिना ।ऊर्द्ध्वी-भूत यत् तत् महरेत् मगृह्णीयात्, काचादिनिर्मलपात्रे स्थापयेदित्यर्थः । तत्राय शोधनविधि. । प्रथम केवल शिलाजतु जले धौत कृत्वा तदनु कीटादिदुष्टौषधिदोष-विनाशाय अगुरुतुवरीनिम्बपत्रयवगुडूचीधूपैर्धूपयित्वा, तदनु शुष्कं चूर्णीकृत्य तदनु

भाजनाकारलौहपात्रे कृत्वा दशमूलकषाय त्रिफलाक्काथ वा केवलोष्णोदक वा प्रक्षिप्य विमर्द्य लौहमूषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयम् । अत्र च प्रचण्डातपावस्थानेन सरवदूर्द्ध्वे यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्मलपात्रे स्थाप्यम्, एव शिलाजतु भावनाया योज्यम्, उक्त हि हारीते—"तद्ग्राहयित्वा क्रमशो विभज्य देशे शुचौ मङ्गलसिद्धियुक्ते । तिथौ च पुण्ये सुदिने च युक्ते नक्षत्रयोगेन शिवेन चापि । लौहाढकीनिम्बगुडूचिसर्पिर्येर्नैर्यथावत् परिधूपयेच्च । सन्तालिकाकीटपतङ्गदशादुष्टौपधीदोषविनाशनम् तत्" इति । इदानीं चरकोक्तभावनाविधि- वातपित्तेत्यादि—निर्य्यूह. क्काथ । सुभावितिमिति सप्ताहम् । सर्वैरिति वातघ्नादिक्काथ । भावनात किं स्यादित्याह वीर्य्योत्कर्षमित्यादि । प्रक्षिप्येत्यादि—रसे वातघ्नादिक्काथे कोष्णे तच्छिलाजतु प्रक्षिप्य पश्चादावान तपने शुष्कपर्यन्त कृत्वा पुनरपि तद्रसे प्रक्षिपेत् । वान शुष्कम्, " शुष्के वानमुभे त्रिपु " इत्यमर । इदानीं भावनार्थद्रव्यादिकमाह तुल्यमित्यादि—तन्त्रान्तरस्य । गिरिजेन शिलाजतुना तुल्य भावनौषध दशमूलादिद्रव्य क्काथ्यम् । तत समरसता यातमिति तच्छिलाजतु क्काथेन सह समरसतामिति आलोडनेन एकीभूय तुल्यता यातमित्यर्थ । एव सिद्ध भावित शिलाजतु लौहचूर्णेन सार्द्धमेकीकृत्य दुग्धेन पातव्यमित्याह पूर्वोक्तेनेत्यादि—चरकस्य । पूर्वोक्तेनेति चरक एव चिकित्सिते रसायनपादे पूर्वोक्तविधि । अत्र भागानुक्त्या शिलाजतुलौहयो. समत्व कश्चिदाह, तन्न, शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लौहचूर्णस्य न्याय्यत्वात्, हारीतेऽप्येवमेवोक्तम् । क्षीराशी क्षीरप्रधानभोजनकारी । इदानीमेतत्प्रयोगस्य कालभेदेन त्रैविध्यमाह प्रयोग इत्यादि—सप्तसप्ताहा एकोनपञ्चाशद्दिनानि तद्व्यापकप्रयोग इत्यर्थः । एव त्रयश्चैकश्च सा.क इति बोध्यम् । भक्षणार्थ त्रिविधा मात्रामाह मात्रेत्यादि । अस्मिन् प्रयोगे वर्ज्यमाह शिलाजतुप्रयोगे त्वित्यादि—विदाहीनि वशकरीरमरिचराजिकादीनि । शिलाजतुप्रयोगे गुरुद्रव्यनिषेधेपि गुरुक्षीरप्रयोगाभिधानम्, उत्सर्गापवादन्यायेन न विरुद्धमिति । केचित्तु कुलत्थानिति कुलत्थादीन्, तेन काकमाचीकपोतयोरपि ग्रहणम् । उक्त हि वाग्भटे—"कुलत्थ काकमाचीञ्च कपोतञ्च सदा त्यजेत्" इत्याहु । सर्वकालमिति यावद्रसायनहिता गुणास्तिष्ठन्ति । केचित्तु यावज्जीवन कुलत्थवर्जनमाहु । कुलत्थस्य वर्जने सर्वकालीनत्वस्योपपत्तेश्चरकेणैव तेषा प्रयोग. प्रतिषिध्यत इति । यैर्द्रव्यैरालोड्य शिलाजतु पेय तान्याह पयासीत्यादि—चरकस्य । सोपस्कारमिति चरके परीक्षादिक नोक्तम्, अत्र पुनर्लौहकिट्टायत इत्यादिना तदप्युक्तमिति सोपस्कारत्वम् ॥ ५६ ॥

## शिवागुडिका

काले तु रवितापाढ्ये कृष्णायसजं शिलाजतुप्रवरम्।
त्रिफलारससंयुक्तं त्र्यहञ्च शुष्कं पुनः शुष्कम्॥
दशमूलस्य गुडूच्या रसे वलायास्तथा पटोलस्य।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः॥
एकाहं क्षीरेण तु तत् पुनर्भावयेच्छुष्कम्।
सप्ताहं भाव्य स्यात् क्राथैरेषां यथालाभम्॥
काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा।
ऋद्धियुगर्षभवीरामुण्डितिका जीरकेऽशुमत्यौ च।
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्गचव्याश्च।
कटुका शृङ्गी पाठे तानि पलांशिकानि कार्य्याणि॥
अन्द्रोणे साधितानां रसेन पादांशिकेन भाव्यानि।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च॥
द्विपलञ्च विश्वमागधिकाकटुककर्कटाख्यमरिचानाम्।
चूर्णं पलञ्च विदार्य्यास्तालीशपलानि चत्वारि॥
षोडश सितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ।
तिलतैलस्य द्विपलं चूर्णार्द्धपलानि पञ्चानाम्॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां मिश्रयित्वा तु।
गिरिजस्य षोडशपलैर्गुडिकाः कार्य्यास्ततोऽक्षसमाः।
ता शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः॥
तासामेका काले भक्ष्या पेयापि वा सततम्॥
क्षीररसदाडिमरसा सुरासवं मधु च शिशिरतोयानि।
आलोडनानि तासामनुपाने वा प्रशस्यन्ते॥
जीर्णे लघ्वन्नपयोजाङ्गलनिर्य्यूहयूषभोजी स्यात्।
सप्ताहं यावदत परं भवेत् सर्वं सामान्यम्॥
भुक्त्वापि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित्।

निरुपद्रवा प्रयुक्ता सुकुमारकैः कामिभिश्चैव ॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम् ।
बहुवार्षिकमपि गाढं यक्ष्माणञ्चाढ्यवातञ्च ॥
ज्वरयोनिशुक्रदोषप्लीहार्शः पाण्डुग्रहणीरोगान् ।
व्रध्नवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥
जठरं श्वित्रं कुष्ठं पाण्ड्यं क्लैव्यं मदं क्षयं शोषम् ।
उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान् ।
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च ।
यकृदर्बुदानि विद्रधिभगन्दरं रक्तपित्तञ्च ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति ।
दंष्ट्राविषं समौलं गराणि बहुप्रकाराणि ॥
मन्त्रौषधियोगान् विप्रयुक्तान् भीतिकांस्तथा भावान् ।
पापालक्ष्म्यौ चेयं शमयेद् गुडिका शिवा नाम्ना ॥
बल्या वृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च ॥
श्रीमान् प्रकृष्टमेधःस्मृतिबुद्धिबलान्वितोऽतुलशरीरः ।
पुष्ट्योजाऽतिविमलेन्द्रियतेजोबलसम्पदुपेत ॥
बलिपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरप्रयोगात् द्वाभ्यां शतानि चत्वारि ।
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम् ॥
समुद्भूवामृतमन्थनोत्थ स्वेदः शिलाभ्यो मृतवद्गिरेः प्राक् ।
यो मन्दरस्थात्मभुवा हिताय न्यस्त स शैलेषु शिलाजरूपी ॥
शिवागुडिकेति रसायनमुक्तं गिरीशेन गणपतये ।
शिवावदनविनिर्गता यस्मान्नाम्ना तस्माच्छिवा गुडिका ॥६०॥

इति शैवसिद्धान्तोक्ता शिवागुडिकेयम् ।

इति शिलाजतुविधानम् ।

चरकोक्तशिलाजतुविधिमभिधाय शैवतन्त्रोक्तप्रसिद्धशिलाजतुप्रयोग शिवगुडिका माह काल इत्यादि—रवितापाढ्ये इति विशेषणाद् ग्रीष्म इति यावत्, अन्ये तु शरद्यप्याहुः। शिलाजतुनोऽत्र षोडशपलमात्रा; वक्ष्यति न पलानि दश षट् चेति। तेन तन्मानसम मिलितत्रिफलाद्रव्य गृहीत्वा क्वाथयित्वा त्र्यह भावना कर्तव्येत्याह त्रिफलेत्यादि-अत्र तुल्य गिरिजेन जलमित्यादि पूर्वोक्तवचनानुसारेण त्रिफलाक्वाथ कृत्वा त्र्यह भावना कार्य्येत्यर्थः। एव दशमूलक्वाथादिभिर्गोमूत्रान्तैरिति त्र्यह त्र्यह क्रमेण भावयेदित्यर्थ। क्षीरेण पुनरेकाह परमिति क्षीरेण एकाहमेव भावये-दित्यर्थः। वक्ष्यमाणकाकोल्यादिक्वाथेन पुन॰ सप्ताह भावना कर्त्तव्येत्याह सप्ताह भाव्य स्यादिति। एषामिति वक्ष्यमाणकाकोल्यादीनाम्। यथालाभमिति वचनात् इन्द्रयवकटुरोहिण्यादिव्यतिरेकेणापि। विदारीयुग्ममिति विदारी-क्षीरविदार्य्यौ। क्षीरविदार्य्याश्च लक्षण—"क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी इति, भग्न-चिकित्सोक्तगन्धतैलव्याख्याया गदाधरेणोक्तम्। ऋद्धियुग ऋद्धिवृद्धी। वीरा मासीति त्रिविक्रमः। जलजशाकमिति रत्नप्रभा। जीरके इत्यादि—कृष्णशुक्लजीरके, अशु-मत्यौ शालपर्णीपृश्निपर्ण्यौ, इभकणा गजपिप्पली, कटुकी कटुरोहिणी; एतान्यष्टा-विंशतिद्रव्याणि लिखितानि। वाग्भटे तु रसायनतन्त्रपठितगुडिकापाठे ऋद्धि-ऋषभकादिषट्द्रव्याणि पठ्यन्ते तद् यथा—ऋद्धि ऋषभकौ मुण्डरीन्द्रयवौ कटु-रोहिणी कर्कटशृङ्गी चेति। तदेतमुभयाचार्य्यप्रामाण्यादुभयथैव प्रयोगप्रकृतिरम्यु-पेया। अस्या पिप्पल्यादिवत् गणत्वविवक्षाया यथालाभवचनादेतानि षोडश-द्रव्याणि न गृह्यन्तेऽपीति केचित्। एषाञ्चाष्टाविंशतिद्रव्याणा प्रत्येक पलिकाना क्वथनार्थदेयजलद्रोणसाधितशेषक्वाथशरावे सप्तधा विभक्तै॰ सप्तदिनानि भावना सप्त कर्त्तव्याः। किन्तु सप्तदिने क्वाथस्याम्लता भवति। ततश्चैषामष्टाविंशतिद्रव्याणा प्रत्येक पलिकाना सप्तदिनविभागेन पलचतुष्टय मिलित्वा ग्राह्य, तेन प्रतिदिन पलचतुष्टयविभागेन काकोल्यादीना प्रत्येक माषा ६, रक्तिका २ ग्राह्यम्, एव जल-द्रोणस्यापि सप्तदिनविभागेन देयजलशराव ९ पल १, माषा ६, रति १, अस्य पादावशिष्टतया स्थाप्य जल श २, कर्ष १, माषा २, अस्मिन् क्वाथे पूतोष्णे प्रतिदिन शिलाजतुभावना, एव सप्ताह कर्त्तव्यम्। दश षट् चेति षोडशेत्यर्थः यद्यपि निर्देशस्य मानप्रधानत्वात् विश्वादीना मरिचान्ताना मिलित्वैव पलद्वय युज्यते तथापि वाग्भटप्रामाण्यात् प्रत्येकमेव द्विपल ग्राह्यम्। पञ्चानामिति—त्वक्-क्षीरी वशलोचना। गिरिजस्य षोडशपलैर्मिश्रयित्वेति योज्यम्। इह सर्वेष्वेव शिला-जतुप्रयोगेषु कर्त्तव्येषु प्रथम शोधन विधाय तिक्तकघृत त्र्यह त्र्यह वापि वलानु-

रूपप्रमाणं दातव्यं यथा स्निग्धो भवति, तदुक्तं तन्त्रप्रदीपे—"सशुद्धकायो विमले-न्द्रियश्च प्रशस्तनक्षत्रमुहूर्त्तयोगे । पिवेद् घृतं तिक्तकषायसिद्धं त्र्यहं त्र्यहं वापि बला-नुरूपम् " इति । अक्षसमा च्चात्युत्तममात्रा, अतस्तदनुसारेण मध्यमाधमपुरुषा-पेक्षया मात्रोह्या । यदृच्छया इत्यनियमेन, तेन कदाचित् भुक्तापि भक्षिता सती विकारं न जनयेदित्यर्थः । आढ्यवात ऊरुस्तम्भः सहजहेतुजक्लैव्यद्वयपरिग्रहार्थं षाण्ढ्यं क्लैव्यामित्युभयपदोपादानं बोध्यम् । यद्यपि बीजदोषोत्पन्नसहजक्लैव्यमसाध्य-त्वेनोक्तम्, तथापि प्रयोगमाहात्म्यसूचनार्थमिदमुक्तम् । गराणि संयोगविषाणि, भौतिकान् भावानीति भूतकृताः पीडाः । संवत्सरप्रयोगादिति पूर्वेण सम्बध्यते, द्वाभ्या-मिति संवत्सरद्वयेनेत्यर्थः । शिलाजतुनः प्रागुत्पत्तिमाह समुद्भूवेत्यादि—अमृतमन्थ-नोत्थ इति अमृतमन्थनसमयजः । द्वितीयेत्यादि—द्वितीयेऽस्यत्र जगतामिति शेषः ॥६०॥

इति शिवागुडिका ।

इति शिलाजतुविधानम् ।

## अमृतभल्लातकी

सुपक्वभल्लातफलानि सम्यग् द्विधा विदार्य्याढकसम्मितानि ।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥
पुनः पचेत् क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात् ।
सितोपलाषोडशभिः पलैस्तु विमिश्र्य संस्थाप्य दिनानि सप्त ॥
ततः प्रयोज्याग्निबलेन मात्रां जयेद्गुदोत्थानखिलान् विकारान् ।
कचान् सुनीलान् घनकुञ्चिताग्रान् सुपर्णदृष्टिं सुकुमारताञ्च ॥
जवं हयानाञ्च मतङ्गजं बलं स्वरं मयूरस्य हुताशदीप्तिम् ।
स्त्रीवल्लभत्वं लभते प्रजाञ्च नीरोगमब्दद्विशतानि चायुः ॥
न चान्नपाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च ।
प्रयोगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम् ॥

भल्लातकशुद्धिरिह प्रागिष्टचूर्णगुण्डनात् ।
घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते ॥ ६१ ॥

इति अमृतभल्लातकी ।

इति रसायनाधिकारः ।

———

अमृतभल्लातमाह सुपक्केत्यादि—भल्लातकान्यत्र हारीतोक्तामृतभल्लातकीघृतोक्त-रीत्या ग्राह्याणि, यथा—"भल्लातकानां पवनोद्धतानां वृन्तच्युतानामिह चाढकं स्यात्। तच्चेष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य धीरो विधिवत् प्रवाते । शुष्कं पुनस्तद्‌द्विदली-कृतञ्च ततः पचेदप्सु चतुर्गुणासु । पादावशिष्टं परिपूतशीतं घृतेन तुल्येन पचेत् सुशीतम् । तदर्द्धया शर्करयावकीर्णं ततः खजेनोन्मथितं विधाय । भाण्डे विशुद्धे त्वथ धान्यराशौ संस्थापयेत् सप्त दिनानि चेति । तत्सप्तरात्रात् परिजातवीर्य्यम्, इत्यादि । अत्र भल्लातकानां चतुःषष्टिपलानि, तदपेक्षया चतुर्गुणं जलं ग्राह्यमाणं द्रवद्वैगुण्याच्चतुःषष्टिशरावपरिमितं यद्यपि, तथापि वक्ष्यमाणतन्त्रान्तरीयवाक्यैकवाक्यतानु-रोधात् आढके पलविवक्षां विधाय पलोल्लेखगतत्वेन द्वैगुण्यं न विधेयम्, तथा क्वचित् पलोल्लेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यतानुरोधात् पलोल्लेखगते द्रव्येऽपि कुडवादि-विवक्षाया द्वैगुण्यं भवति । तथापि चरके क्षतक्षीणचिकित्सिते मधुकाष्टपलं द्राक्षा-प्रस्थक्वाथ इत्यादिना यः प्रयोग उक्तः स जतुकर्णे द्राक्षाप्रस्थं मधुकार्द्धप्रस्थं इत्यादि ग्रन्थेन पठितः, तेन जतुकर्णे मधुकस्यार्द्धप्रस्थोल्लेखपाठात् कुडवद्वैगुण्यमेव जलं भवति, तत्प्रत्ययाच्चरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि क्वाथ्ये कुडवद्वयविवक्षया कृतद्वैगुण्यमेव जलं दीयते। तद्वदत्रापि आढके पलविवक्षां विधाय द्वैगुण्यं न कार्य्यम्। तदेव तन्त्रान्तरीयवाक्यं यथा—'भल्लातकाढकं क्षुण्णं जलाढकद्वये शृतम् । पादशेषे रसे तस्मिन् घृतप्रस्थमथान्विते । क्षीराढकं ततो दत्त्वा सितायाः प्रस्थमेव च । तावच्च साधयेद्धीमान् यावल्लेहत्वमागतम् । अर्शसां नाशनं श्रेष्ठं दीपनं कुष्ठनाशनम् । अम्लपित्तापहं प्रोक्तं वाजीकरणमुत्तमम् । अग्निवृद्धिकरञ्चैव बलकृत् पुष्टिवर्द्धनम्' इति । केचित्तु क्षीराढकं ततो दत्त्वेत्यत्र क्षीरप्रस्थमिति पठित्वा अस्य प्रयोगस्य योगान्तरत्वं मन्यमानाः सुपक्वभल्लातकेत्यादिचक्रमग्रन्थोक्तयोगे जलस्य द्वैगुण्यमिच्छ-न्ति, किन्तु परमेश्वररक्षितादिग्रन्थे क्षीराढकमित्येव पाठो दृश्यते एकवाक्यता च तदैव सङ्गच्छते । वृद्धवैद्यव्यवहारश्चाद्वैगुण्येन दृश्यते तेनायमेव पाठः साधीयान् । हारीतमतन्तु मतान्तरमेवेति न्याय्यम्, यतस्तत्र परिमाणे इतिकर्त्तव्यतायाञ्च महदेवान्तरम् । घृतांशमिति घृतप्रस्थम् । चतुर्भागावशिष्टं क्वाथमपेक्ष्य घृतस्या-र्द्धांशताम्, उक्तेन क्वाथेन घृतस्यार्द्धांशं पचेदिति योज्यम् । क्षीरस्य चातुर्गुण्यञ्च घृतापेक्षया, अतएव वक्ष्यति घृताच्चतुर्गुणं क्षीरमित्यादि । क्षीरचतुर्गुणेनेति चतु-र्गुणेन क्षीरेणेत्यर्थः । पूर्वनिपातः प्रत्यनियमात्। ततश्च शुक्तेनेति न पाठः, सम्बन्धा-

भावात् । ततश्च घृत पक्त्वा च पूत्वा च शर्कराप्रक्षेप इत्यर्थ । किन्तु लेहोऽपि पच्यते, तदा क्वाथशर्करादिकमेकीकृत्य पक्तव्यम् ॥ ६१ ॥

इत्यमृतभल्लातकी ।

इति रसायनाधिकार ।

# अथ वृष्याधिकारः ।

**पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा ।**
**साधितौ भक्षयेद् यस्तु स गच्छेत् प्रमदाशतम् ॥ १ ॥**

सुस्थस्यौजस्करसामान्याद्रसायनानन्तर वाजीकरणमुच्यते, वाजीकरणशब्दार्थस्तु चरकेणोक्तो यथा—"येन नारीषु सामर्थ्य वाजिवल्लभते नरः । व्रजेच्चाभ्यधिक येन वाजीकरणमेव तत् " इति । व्रजेच्चाभ्यधिकमिति पुन पुनर्गच्छेत् । व्यज्यत इति पादे नारीषु पुस्त्व येन व्यज्यत इत्यर्थः । शब्दसिद्धिस्तु पृषोदरादित्वात् । अन्ये तु वाज' शुक्र सोऽस्यास्तीति वाजी, अवाजी वाजी क्रियते येन तद्वाजीकरणमित्याहु । किंवा वाजी मैथुनम् । उक्त हि हारीते—"वाजो नाम प्रकाशत्वात् तच्च मैथुनसंज्ञितम् । वाजीकरणसंज्ञाभि पुस्त्वमेव प्रचक्षते ।" तच्च त्रिधा, यदुक्त चरके-"शुक्रस्रुतिकर किञ्चित् किञ्चिच्छुक्रविवर्द्धनम् । स्रुतिवृद्धिकर किञ्चित् त्रिविध वृष्यमुच्यते ॥ यथा कामिनीस्पर्शादिक स्रुतिकरम् , क्षीरादि वृद्धिकरम् , माषादि स्रुतिवृद्धिकरामिति । वृष्ययोगानाह पिप्पलीत्यादि—सुश्रुतस्य । तत्र पिप्पलीलवणयोः सस्कारत्वादल्पमानता । वस्ताण्डौ छागाण्डकोषौ । क्षीरसर्पिषा क्षीरोत्थसर्पिषा, न तु क्षीरञ्च घृतञ्चेत्येकवद्भाव', क्षीरपक्कलवणस्य-सयोगविरुद्धत्वात् । प्रमदाशतमिति वनितावहुत्वोपलक्षणम् । भक्षणप्रकारो यथा—छागाण्डद्वय जल दत्त्वा उत्स्विद्य क्षीरोत्थघृतेन भर्जयित्वा अनुरूपसैन्धवपिप्पलीचूर्णाभ्या सस्कार्य्य उपयोज्यम् ॥१॥

**वस्ताण्डसिद्धे पयसि भावितानसकृत् तिलान् ।**
**य. खादेत् स नरो गच्छेत् स्त्रीणां शतमपूर्ववत् ॥ २ ॥**

वस्ताण्डसिद्ध इत्यादि—क्षीरपरिभाषया वस्ताण्डेन क्षीरसाधनम्, तेन भावितान् । यद्यपि उक्ताधिकमासेत्यादिना वस्तमासस्य क्षीरेण सह विरोधो दर्शितस्तथापि तत्सामान्यवचनम्, इद पुनरपवादरूप विशिष्टवस्ताण्डविषयतया न विरोधमावहति । असकृदिति सप्तधा, पूर्ववदिति अकृतपूर्वस्त्रीसङ्गमवत् ॥ २ ॥

चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम् ।
सर्पिःक्षौद्रयुतं लीढ्वा शतं गच्छेद्वराङ्गनाः ॥
एवमामलकं चूर्णं स्वरसेनैव भावितम् ।
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत् ॥
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते ॥ ३ ॥

चूर्णमित्यादि—सुश्रुतस्य । स्वरसोऽपि विदार्य्या एव । एवमित्यादि—अत्र स्वरसभावितत्वाप्युक्तत्वात् एवमित्यतिदेशस्य वैशद्य वैयर्थ्यं स्यात्, तेन विदारीचूर्णवत् क्षौद्रघृताभ्यामामलकस्य तत्स्वरसभावितस्य प्रयोग इति कश्चित्, तेन आमलकचूर्णस्य द्विधा प्रयोगः, एकः घृतक्षौद्राभ्याम्, अन्यश्च शर्करामधुघृतैः पयोऽनुपानेनेति । अन्ये तु एवमित्यतिदेशेन शुष्कत्वविधानार्थमित्याहुः ॥ ३ ॥

विदारीकन्दकल्कन्तु शृतेन पयसा नरः ।
उडुम्बरसमं खादन् वृद्धोऽपि तरुणायते ॥ ४ ॥

विदारीत्यादि—सुश्रुतस्य । अत्र घृतेनेत्यत्र शृतेनेति पाठे केवलजलशृतेनेत्यर्थः ॥ ४ ॥

स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते ।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥ ५ ॥

स्वयमित्यादि—सुश्रुतस्य । उच्चटेत्याद्यपि तस्यैव । सुखार्थिनेत्यत्र बलार्थिनेति सुश्रुते पठ्यते । एवमित्यनेन पयसेति बुध्यते । कर्षमित्यादि—चरकस्य । मधुक यष्टिमधु । नित्यवेग इति नित्यशुक्रवेगाभिभूतः ॥ ५ ॥

गोक्षुरकक्षुरकः शतमूली वानरिनागबलातिबला च ।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति ॥
घृतभृष्टो दुग्धमाषपायसो वृष्य उत्तमः ॥ ६ ॥

गोक्षुरक इत्यादौ—क्षुरक कोकिलाक्ष, वानरी शूकशिम्बी । शतमूली च वानरी चेति समाहारद्वन्द्वः, अत्र पक्षे बहुवचनान्त पाठ एव साधुः । एव क्षुर-

कगोक्षुरवानरीणां फलबीजं प्राह्यम् । यदुक्तममृतवल्ल्या—"गोकण्टकुरकपिकच्छु-फलवरीकुशीबलाचूर्णमृतेन । पयसा रात्रिसमये" इत्यादि—अत्र कुशी गोरक्षत-ण्डुला । घृतेत्यादौ माषपायसो माषविदलैर्दुग्धेन कृत पायसः, स च भृष्टो घृतेन सन्तालित ॥ ६ ॥

दध्नः सरं शरच्चन्द्रसन्निभं दोषवर्जितम् ।
शर्कराक्षौद्रमरिचैस्तुगाक्षीर्य्या च बुद्धिमान् ॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे ।
मार्जिते प्रक्षिपेच्छीतं घृताढ्यं षष्टिकौदनम् ॥
दद्यात्तदुपरिष्टाच्च रसालां मात्रया पिबेत् ।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ ७ ॥

दध्न इत्यादि—चरकस्य । दोषवर्जितमिति मलिनत्वादिदोषवर्जितम् । युक्त्या युक्तमिति यथातिमाधुर्य्यं न स्यात्, कटुत्वञ्चाधिक न भवति, तथा शर्करामरिचादि योज्यमित्यर्थ । मार्जितमिति पाठे पटे घृष्ट तमिति षष्टिकौदनम् । निश्चलस्तु मार्जिते प्रक्षिपेच्छीते घृताढ्य षष्टिकौदनमिति पठ्यते । तस्मिन् मार्जिते पूते रस इत्यर्थात् ततोऽत्र शीते शीतवीर्य्ये षष्टिकभक्त प्रक्षिपेत्, ततोऽद्यादिति । उपरिष्टादिति भुक्त्वे-त्यर्थः । रसालालक्षणं यथा—"सचतुर्जातकाजाजीसगुडार्द्रकनागरम् । रसाला स्याच्छिखरिणी सुघृष्ट ससर दधि" इति । अन्यत्र यथा—"अर्द्धाढक सुचिरपर्य्यु-षितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य । सर्पिःपल मधुपल मरिचार्द्ध-कर्ष शुण्ठ्यास्तथार्द्धपलमर्द्धपल चतुर्णाम् ॥ शुभ्रे पटे ललनया मृदुपाणिघृष्टा कर्पू-रगन्धसुरभिर्नवभाण्डसस्था । एपा वृकोदरकृता सुरसा रसाला या स्वादिता भगवता मधुसूदनेन" ॥ ७ ॥

आर्द्राणि मत्स्यमांसानि शफरीश्चाज्यभर्जिताम् ।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम् ॥८॥

आर्द्राणीत्यादि—चरकस्य । आर्द्राणि सद्यस्कानीत्यर्थ । मत्स्योऽत्र प्रधा-नकल्पनया रोहित ॥ ८ ॥

## नारसिंहचूर्णम्

शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च ।
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः ॥

भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु।
तिलानां शोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम् ॥
त्र्यूपणस्य पलान्यष्टौ शर्करायाश्च सप्तति.।
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम् ॥
शतावरीसमं देयं विदारीकन्दजं रजः।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत् ॥
पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम्।
मासैकमुपयोगेन जरां हन्ति रुजामपि ॥
वलीपलितखालित्यमेहपाण्ड्वाद्यपीनसान्।
हन्त्यष्टादश कुष्ठानि तथाष्टावुदराणि च ॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम्।
क्षयञ्चैव महाश्वासान् पञ्च कासान् सुदारुणान् ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ॥
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥

स काञ्चनाभो मृगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगत.।
स्त्रीणां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्ग.॥

पुत्रान् सञ्जनयेद्वीरान् नरसिंहनिभांस्तथा।
नारसिंहमिदं चूर्णं सर्वरोगहरं नृणाम् ॥
वाराहीकन्दसंज्ञस्तु चर्मकारालुको मतः।
पश्चिमे गृष्टिशब्दाख्यो वराहलोमवानिव ॥ ६ ॥

शतावरीत्यादि—चन्द्राटस्य। वाराह्या इति वराहकन्दस्य। तल्लक्षण यथा—"ताम्बूलसदृशै पत्रैर्ग्रन्थिभि समलङ्कृतम्। सर्जार्जुननिभै पुष्पै शोभते च सुगन्धिभि। वराहस्कन्धविवर्णेन पिच्छिलेन सुवर्चसा। कन्देन कटुतिक्तेन नीलोत्पलसुगन्धिना। जायते सा गिरौ रम्ये विन्ध्ये श्रीपर्वते तथा॥" वृन्दे तु—वराहमूर्द्धवत् कन्दो वाराहीकन्दसंज्ञित.। भिषजा तदलाभे च चर्मकारालुको मत." इत्युक्तम्। किन्तु वाराहीकन्दापेक्षया चर्मकारालुकस्यातिहीनगुणत्वेन नास्य तद्-

प्रतिनिधित्व मुक्तम् । गुडूच्या. पञ्चविंशतिरित्यपपाठ । तन्त्रान्तरे—"भल्लातक-प्रस्थयुग्म तत् सप्तपलोन गुडूच्याश्च" इत्युक्तत्वात्, यतः प्रस्थयुगमेव सप्तपलोन सत् पञ्चविंशतिपलानि भवन्ति । त्र्यूषणस्य मिलित्वा पलान्यष्टौ । विदारी भूमि-कूष्माण्ड । पलार्द्धमिति पूर्वयुगाभिप्रायेण, इदानीमष्टमापकेण व्यवहार. । आढ्य इति आढ्यमारुत ; यथा भीमो भीमसेन । वाराहीकन्दस्य दुर्लभतया चर्मकारालुक-मेव गौडीयैर्वाराहीकन्दसञ्ज्ञया गृह्यते । वस्तुतस्तु वाराहकन्दकाच्चर्मकारालुक द्रव्या-न्तर तल्लक्षणाभावात् ॥ ६ ॥

## गोधूमाद्यं घृतम्

गोधूमाच्च पलशतं निःक्वाथ्य सलिलाढके ।
पादावशेषे पूते च द्रव्याणीमानि दापयेत् ॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम् ।
काकोली क्षीरकाकोली जीवन्ती सशतावरी ॥
अश्वगन्धा सखर्जूरं मधुकं त्र्यूषणं सिता ।
भल्लातकमात्मगुप्ता समभागानि कारयेत् ॥
घृतप्रस्थं पचेदेकं क्षीरं दत्त्वा चतुर्गुणम् ।
मृद्वग्निना च संसिद्धे द्रव्याण्येतानि निक्षिपेत् ॥
त्वगेलापिप्पलीधान्यकर्पूरं नागकेशरम् ।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥
दग्धेक्षुदण्डेनालोड्य विधिवद्विनियोजयेत् ।
शाल्योदनेन भुञ्जीत पिवेन्मांसरसेन वा ॥
केवलस्य पिवेदस्य पलमात्रां प्रमाणतः ।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥
बल्यं परं वातहरं शुक्रसञ्जननं परम् ।
मूत्रकृच्छ्रप्रशमनं वृद्धानाञ्चापि शस्यते ॥
पलद्वयं तदश्नीयाद्दशरात्रमतन्द्रितः ।
स्त्रीणां शतञ्च भजते पीत्वा चानुपिवेत् पयः ॥
अश्विभ्यां निर्मितञ्चैतद्गोधूमाद्यं रसायनम् ।

जलद्रोणे तु गोधूमक्वाथे तच्छेषमाढकम् ॥
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम् ॥
कल्कद्रव्यसमं मानं त्वगादेः साहचर्य्यतः ॥ १० ॥

गोधूमादित्यादि—गोधूमो धवलसारो ग्राह्य उत्कृष्टत्वात् । नलिलाढके पादावशेष इति योज्यम्, अतो गोधूमगतपले जलद्रोणो देय इति चक्र । वकुलस्तु त्रि.क्वाथेत्यनेनैव सम्बध्यते, तथैव निर्दिष्टत्वात् पादशेषश्च प्रस्थ इति व्याचष्ट । किन्तु चक्रपक्ष एव प्रचरति । मुञ्जातकफल ओत्तरपथिकम् । तत्प्राप्तौ तालमस्तकम् । छागवल्यान्तु तालमस्तकामित्येवास्ति । परूषक फल० खजू पिण्डखर्जूर, मधूक यष्टिमधु, अन्ये तु मधूकमिति पठित्वा मधूकस्य फलमाहु । सिता शर्करा । आत्मगुप्ताया मूलमिति निश्चल, फलमित्यन्ये । मांसिद्ध इत्यनन्तर पूते चेति शेष. । त्वगादीनाञ्च मान कल्कतुल्य वक्ष्यति । तत्र शीतीभूते शर्करामधुनोर्मिलित्वाऽष्टौ पलानि । पूर्व पलमात्रा पिबेदिति यदुक्त तत् प्रथमत, अनन्तर सात्म्यभावे सति पलद्वय, न पुनरितोऽधिकमिति ॥ १० ॥

## शतावरीघृतम्

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्रयुक्तं तद् वृष्यमुच्यते ॥ ११ ॥

घृतमित्यादि—चरकस्य । विगतमिदं "प्रक्षेप पादिक कल्क्याद्यत्रेह कल्कसमो तत" इत्युक्ते शर्करापिप्पलीक्षौद्राणा कल्कत्व ज्ञेयम् ॥ ११ ॥

## गुडकूष्माण्डकम्

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत् ॥
त्वक्पत्रधान्यकव्योषजीरकैलाद्वयानलम् ।
ग्रन्थिकं चव्यमातङ्गपिप्पलीविश्वभेषजम् ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् ।
चूर्णीकृतं पलांशञ्च गुडस्य च तुलां पचेत् ॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत् ।
कफपित्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥

कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् ।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥
क्षयेण च गृहीतानां परमेतद्भिषग्जितम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम् ॥
गुडकूष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकूष्माण्डवत् पात्रं स्विन्नकूष्माण्डकद्रवः ॥ १२ ॥

कूष्माण्डकादित्यादि—घृततैलयोर्मिलित्वा प्रस्थम् । अत्र खण्डकूष्माण्डवत् त्वग्बीजादिवर्जितसुस्विन्नगालितपिण्डकूष्माण्डभर्जनं कार्य्यं यावन्मधुनिभ पाको भवति । ततो द्रवार्थमेव गालितपिण्डकूष्माण्डद्रवमेव प्रस्थचतुष्टय गृहीत्वा तेन द्रवेण पुराणगुडपलशतमेकीकृत्य पूत्वा कूष्माण्ड पचेत । ततोऽवतारिते कोष्णे त्वक्पत्रादिचूर्णप्रक्षेप. । जीरकैलाद्वयेति जीरकद्वयमेलाद्वयञ्चेति । मातङ्गपिप्पली गजपिप्पली । प्रलम्ब तालाङ्कुर', तालखण्ड इत्यन्ये, आर्ध एव पचो युक्त वृष्यत्वात् । मन्दाग्नीनामल्पमात्रयेति शेष । प्रमदासु प्रसक्तानां वाजीकरणमित्यन्वयः । तथा ये क्षीणरेतसस्तेषामुत्तम तद्भिषग्जितमिति योज्यम् । पात्रमित्याढक खण्डकूष्माण्डकञ्च रक्तपित्तोक्त गुडकूष्माण्डके द्रव इति पाठे द्रव स्विन्नकूष्माण्डस्यैव ज्ञेय ॥ १२ ॥

यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद् वृष्यमुच्यते ॥ १३ ॥

अनुक्तवाजीकरणसंग्रहार्थमाह यत्किञ्चिदित्यादि ॥ १३ ॥

भल्लातकबृहतीफलदाडिमफलवल्कसाधितं कुरुते ।
लिङ्गं मर्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥
कनकरसमसृणवर्त्तितहयगन्धामूलमत्रपर्य्युषितम् ॥
माहिषमिह नवनीतं गतबीजं तच्च फलमध्ये ॥
गोमयगाढोद्वर्त्तितं पूर्वं पश्चादनेन संलिप्तम् ।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादर्थितम् ॥१४॥

इदानीं लिङ्गमूलत्वादपत्यस्य तद्वृद्धियोगानाह भल्लातकेत्यादि—अय योगो भल्लातकासह्याय न देय । जलञ्चात्र चतुर्गुण बोध्यम् । कनकेत्यादि—कनक धुस्तूर, तस्य पत्रस्वरस. । तत्फलमिति धुस्तूरमेव । गोमयेन सद्यस्केन लिङ्गे

गाढमुद्वर्त्तन कृत्वा ततोऽनेन लेप इति । कठिनाङ्गना इति कठिनाङ्गना, प्रायेण द्राविडनाटमालवदेशजा । तास्तु प्रायशो बहुतरसुरतैर्नैव तुष्यन्तीति कठिनत्वम् ॥ १४॥

## अश्वगन्धातैलम्

अश्वगन्धावरीकुष्ठं मांसीसिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥
स्तनलिङ्गकर्णपालिवर्द्धनं म्रक्षणादिदम् ॥ १५ ॥
मेदसा क्षौद्रयुक्तेन वराहस्य प्रलेपितम् ।
सम्यक् स्निग्धं रतान्तेऽपि स्तब्धतां न विमुञ्चति ॥१६॥
बीजं बृहत्करञ्जस्य कृतमन्तः सपारदम् ।
हेम्ना सुवेष्टितं न्यस्तं वदने वजिधृड्मतम् ॥ १७ ॥
आजन्तूष्ट्रीक्षीरं गव्यघृत चरणयुगलपेन ।
स्तम्भयति पुरुषवीजं योगोऽयं यामिनीं सकलाम् ॥१८॥

अश्वगन्धातैले फल बृहतीफलम् । कर्णपालि कर्णनालिका ॥ १५–१८ ॥

भल्लातकबृहतीफलनलिनीदलसिन्धुजन्मजलशूकैः ।
माहिषनवनीतेन करम्बितैः सप्तदिनमुषितैः ॥
मूलेन हयगन्धाया महिषीमलमथितं पूर्वमथ लिप्तम् ।
भवति लघुकृतरासभलिङ्गं ध्रुवं पुंसाम् ॥ १९ ॥

भल्लातकेत्यादौ—करम्बिता मिश्रितास्तै । अनन्तर हयगन्धाया मूले विवर कृत्वा सप्तदिनमुषितैर्भल्लातकादिभिर्लिप्त लिङ्गमित्यन्वय । कीदृश लिङ्गम् ?—महिषीमलेन मथित पूर्व मर्दित पूर्वम् । एतेनादौ महिषीमलेन लिङ्ग सम्मर्द्य पश्चात् भल्लातकादिभिर्लिप्त लिङ्ग लघुकृतगर्दभलिङ्ग भवतीति ॥ १९ ॥

नीलोत्पलसितपङ्कजकेशरमधुकशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढलिङ्गो भवति नाभिविवरेण ॥२०॥

इदानीं वाजीकरणप्रसगात् वीर्य्यस्तम्भनमाह नीलोत्पलेत्यादि—नीलोत्पल-श्वेतपद्मयो केशरम् । एभि सर्वै पिष्टैर्नाभिं लिप्त्वा चिरकाल कामुको रमत इत्यर्थ. । नातिविवरेणेति पाठे अतिक्रान्तच्छिद्रेण ॥ २० ॥

सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रतेर्बीजस्तम्भाद् दृढं लिङ्गम् ॥ २१ ॥

सिद्धमित्यादौ—भूमिलता किञ्चुलुकः, तया मिश्रित कुसुम्भबीजस्य तैल सिद्धमिति पक्वमित्यर्थः ॥ २१ ॥

सप्ताह छागसलिलसंस्थं करभवारुणीमूलम् ।
गाढोद्वर्त्तनविधिना लिङ्गस्तम्भं रते कुरुते ॥ २२ ॥

सप्ताहमित्यादि—छागभवसलिल छागमूत्र, करभवारुणी उष्ट्रकण्टकः, गङ्गापालङ्कृति केचित् ॥ २२ ॥

गोरेकोन्नतश्रृङ्गत्वग्भवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भजन् ललनां नैकाण्डो भवति हर्षार्त्तः ॥२३॥

इदानीं कुप्रयोगकृतध्वजभङ्गचिकित्सामाह गोरित्यादि—यस्या धेनोरेक श्रृङ्ग-मुन्नत भवति तत्त्वक्चूर्णेन धूपित वस्त्र परिधायेत्यर्थः । यः पुरुषो नियमेन एकस्त्री-गामी स्त्र्यन्तरगमने तु ध्वजोत्थान न भवति स एकाण्ड उच्यते ॥ २३ ॥

समतिलगोक्षुरचूर्णं छागीक्षीरेण साधितं समधु ।
भुक्तं क्षपयति पाण्ड्यं यज्जनितं कुप्रयोगेण ॥ २४ ॥

समेत्यादि—अत्र निस्तुषतिलगोक्षुरबीजचूर्णच्छागदुग्धैरुत्कारिका साधयित्वा शीते मधु दत्त्वा भक्षयेत् । पाण्ड्य लिङ्गानुत्थानम् ॥ २४ ॥

योगजवराङ्गवद्धं मथितेन खालित्यं हरति ।
उन्मुखगोश्रृङ्गोद्भवलेपो योगो ध्वजभङ्गहरः ॥ २५ ॥

कुप्रयोगेण लिङ्गानुत्थान यत् तच्चिकित्सामाह योगजेत्यादि—मथितेन घोलेन उन्मुखेत्यादि—ऊदर्ध्वं मुख यद्धेनोः श्रृङ्गम्, न तु वलीवर्दस्य । ऊर्द्ध्वमुखस्त्री-गवीश्रृङ्गेण लेपन लिङ्गस्य ॥ २५ ॥

कुष्ठैलवालुकैलामुस्तकधन्याकमधुककृतः कवलः ।
अपहरति पूतिगन्धं रसोनमदिरादिजं गन्धम् ॥
क्षौद्रेण बीजपूरत्वग्लीढाधोवातगन्धनुत् ॥ २६ ॥

इति वृष्याधिकारः ।

वमन्तं शोधनं प्रति" इति । अत्र साधारणा इत्यनुद्भूतोष्णशीतवर्षा इत्यर्थः । शुक्र-नभाविलाषाढश्रावणौ, प्रावृडित्युक्तम्, अतएव निर्देशात् शुक्रशब्द आषाढवचनोऽपि ज्ञेय । किंवा शुचिर्नभाविति पाठ । ऊर्जसहौ कार्त्तिकमार्गशीर्षौ, तपस्य फाल्गुन, मधुश्चैत्र इति । वर्षान्त इति शरदि । अन्त्यौ वसामज्जानौ । माधव इति वैशाखो न साधारणऋतुमध्ये पठित किन्तु फाल्गुनचैत्ररूपो वसन्त एव, तथापि प्रभूतकफतया स्नेहपानविषयत्वेनात्र नोक्त , वैशाखस्तु बलक्षयधातुक्षयकारक इति । अत्र वल्यो धातुकारक. वसामज्जप्रयोगो युक्त एवेत्यर्थ. । अन्त्याविल्यपि पाठ । कुत पुनरुक्तमेमय एव स्नेह पिबेदित्यत आह कार्य्यवशात् तु तदिति सशोधनरूपप्रयोजनवशात् । सशोधन साधारण ऋतौ उत्सर्गतो विधीयते तेन तदङ्गविशेष स्नेहपानमपि तत्रै-वेत्यर्थ ॥५॥

**वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः ।**
**श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥६॥**

इदानीमात्ययिकावङ्गगृहीतेनात्युष्णशीतेऽपि यथा स्नेहपान विधेय तथा दोष-विशेषे च यथा स्नेहपान तदाह वातपित्ताधिक इत्यादि—वातश्च पित्तञ्च वातपित्त तदधिको वातपित्ताधिक । रात्राविति सायम्, उष्णे ग्रीष्मे, श्लेष्माधिकग्रहणमित्यत्र शीतविकारवमामज्जगृहीतपुरुषोपलक्षणा, तेन वातश्लेष्माधिक श्लेष्माधिकश्च गृह्यते । अतएव सुश्रुतेऽप्युक्तम्—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" इति । केवलवाताधिकस्य तथा पित्ताधिकस्य तथा श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव । पानकालो वक्ष्यमाणः । वक्ष्यति हि—पिबेत् सशमन स्नेहमन्नकाले प्रकाङ्क्षित इत्यादि । व्याख्यान्तरञ्च अस्मदीयचरकतत्त्वप्रदीपिकायामनुसन्धेयम् । अमलभास्कर इति दुर्दिनव्युदासार्थं मध्याह्नग्रहणार्थं वा ॥६॥

**स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।**
**वृद्धाः बालाबलकृशा रूक्षाः क्षीणास्ररेतस ॥**
**वातार्त्तस्यन्दतिमिरदारुणप्रतिबोधिनः ।**
**स्नेह्या न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥**
**ऊरुस्तम्भातिसारामगलरोगगरोदरैः ।**
**मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामाद्यैश्च पीडिताः ।**
**आमप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥७॥**

इदानीं स्नेहार्हानाह स्वेद्येत्यादि—वाग्भटस्य । स्नेह्या इति छेद । स्नेह्या इति

स्वेदार्दाः। एव मशोध्या इति वमनादिसशोधनयोग्याः, मद्या इति मद्यादिष्वासक्ता, चिन्तकाश्चिन्ताबहुला। अबल इत्यकृशोऽपि यो बलरहित। कृश इति मासोपचयहीनः। क्षीणास्त्ररेतस, क्षीणे रक्तशुक्रे येषा ते क्षीणास्त्ररेतस, वातार्त्ता वातरोगिण.। स्यन्द्रोऽभिष्यन्द म च पुराणोऽभिप्रेत। दारुणो दुःसाध्य', प्रतिबोधो जागरणम् अत्यन्तजागरणशील इत्यर्थः। अन्ये तु कृच्छ्रोन्मीलनयुक्त इत्यर्थ। अस्नेहनाह न त्वित्यादि—अतिशब्दो, दुर्बलान्तेषु प्रत्येक योज्यः। अतएवाल्पबला. स्नेह्या न त्वतिदुर्बला इति न पूर्वापरविरोध। आमप्रसूता इत्यपरिणतगर्भस्रावयुक्ता इत्यर्थ.। वाग्भटे त्वपप्रसूतेत्यरुण. पठति व्याचष्ट च स्रुतगर्भेति, सुश्रुतेन अकाले च प्रसूता स्त्रीत्युक्तम्। युक्त इति तत्कालप्रयुक्ते ॥ ७ ॥

**स्नेहसात्म्य' क्लेशसहो दृढः काले च शीतले।**
**अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम् ॥ ८ ॥**

अच्छस्नेहपानविषयमाह स्नेहेत्यादि—सुश्रुतस्य। दृढ इति बलवान्, काले च शीतल इति यद्यपि पूर्वोक्तसाधारणकाल एव स्नेहविषयस्तथाप्यात्ययिकविकारवशात् यदि शीतले काले स्नेहोपयोग कर्त्तव्यः स्यात्, तदाच्छमेव पिबेदित्यर्थ। अन्ये तु दृढ इति पदं दूरीकृत्य काले चानतिशीतल इति पठन्ति। अच्छ इत्यादिनास्य सम्बन्ध.॥ ८ ॥

**पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः।**
**शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः॥**
**अहोरात्रमहः कृत्स्नं दिनार्द्धञ्च प्रतीक्षते।**
**उत्तमा मध्यमा ह्रस्वः स्नेहमात्रा जरां प्रति ॥**
**उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे।**
**जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौपधेषु च ॥ ६ ॥**

सम्प्रति सशमनस्नेहस्य सशाधनार्थस्नेहस्य च पानकालमाह पिबेदित्यादि—सशमनमिति न शोधयति यद्दोपान्, तथा सशोधनमिति सशोधयति यद्दोपानित्याद्युक्तलक्षणम्। अन्नकाले द्विप्रहरादिवसे तत्र वुभुक्षा कदाचिन्न स्यादिति तदर्थं प्रकाङ्क्षित इति विशेषणम्, शुद्ध्यर्थन्तु स्नेह विन्दुघृतादिकम्, नैशे निशान्तरकृते चाहारे जीर्णे सति प्रातरेव पिबेदित्यर्थ.। अयमत्राभिसन्धि, सशमनार्थ. स्नेहो यदि जरणान्ते प्रातरेव क्रियते तदा कोष्ठोपलेपकदोपस्याक्षयात् तेन दोषेण सह स्नेह उत्क्लेश कुर्य्यात् न तु दोपमशमनम्, अतएव संशमनोऽन्नकालेऽभिहित.। सशोधना-

र्थस्तु स्नेहो दोषोत्क्लेशकर एवापेक्षित इति दोषशेषावस्थायामेव प्रातःकाले तत्पानं युक्तमिति। एतच्च कालकथनमुत्सर्गतः, तेन वातपित्ताधिको रात्राविथ्यपवादविषयव्यतिरिक्त एवास्य विषयो ज्ञेयः। स्नेहमात्रायास्त्रैविध्यमाह—अहोरात्रमित्यष्टप्रहरोपलक्षणम्, एवमह कृत्स्नमिति तत्प्रहरचतुष्टयं दिनार्द्धमिति तत् प्रहरद्वयमुपलक्षयति, अतएवोक्तं वाग्भटे 'द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्य्यन्ति याः क्रमात्' इत्यादि। तेन प्रहराद्यतीतेऽपि दिने मात्रा पीता यथोक्तप्रहरादिकालप्राप्त्या दिनान्तरे रात्रौ वा जीर्य्यमाणा मन्तव्या यदा पुनरहोरात्रपरिणामिनी मात्रा क्रियते तदहराहारो न कार्य्यः। अतएव चरके उत्तममात्रा स्नेहपानविषयपुरुषमभिप्रेत्योक्ता। क्षुत्पिपासासहा इति। अनया तु चरकपरिभाषया प्रायो न व्यवहरन्ति वृद्धाः। तेन उत्तमादिपुरुषाणां स्नेहमात्रां प्रति वृद्धव्यवहारसिद्धमतमाह उत्तमस्येत्यादि ॥ ९ ॥

जलमुष्णं घृते पेयं यूषस्तैलेऽनुशस्यते।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ॥
भल्लाते तौवरे स्नेहे शीतमेव जलं पिबेत्।
स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ॥
एवञ्चानुप्रशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ १० ॥

अनुपानमाह जलमित्यादि—अन्विति अनुपाने। सर्वेषूष्णमथाम्बु वेति यदुक्तं तदपवादमाह भल्लातेत्यादि—भल्लाततुवरयोः स्नेह इति विग्रहः। तुवरो वृक्षविशेषः तत्फलभवस्नेहः इत्यर्थः, उक्तं हि सुश्रुते—" पत्रैस्तु केशराकारैः फलैः सर्षपसन्निभैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः" इति। पीतस्नेहे यदि तृष्णा स्यात् तदा तत्र प्रतीकारमाह स्नेहपीत इत्यादि—पीतस्नेह इत्यर्थः। उद्धरेदिति वमेत् ॥ १० ॥

मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति।
विष्टभ्य वापि जीर्य्येत्तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने।
जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ॥
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत् प्रति ॥ ११ ॥

अविधिपीतस्नेहजव्यापदः प्रतिकारमाह मिथ्याचारादित्यादि—सुश्रुतस्य। मिथ्याचारादिति शीततोयादिसेवनाद् यथाविध्यनुपयोगाद् बहुत्वादित्यतिमात्रत्वात्

विदभ्य मलादिरोध कृत्वा, जीर्णाजीर्णशङ्का चाल्पस्नेहावशेषेण ज्ञेया ॥ ११ ॥

**भोज्योऽन्नं मात्रया पास्यन् श्वः पिवन् पीतवानपि ।**
**द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥१२॥**

इदानीं स्नेहमपेक्ष्य कालत्रयहितमाहारमाह भोज्य इत्यादि—वाग्भटस्य । श्वः स्नेहमिति शेष. । श्व इत्यागामिदिने स्नेह पास्यन् तथा तस्मिन्नेव दिने स्नेह पिवन्, तथा पीतवानपि य पुरुष' स मात्रया अन्न भोज्य. भोजयितव्य इति । कीदृशमन्न भोजयितव्यमित्याह द्रवोष्णमित्यादि—अनभिष्यन्दीति न स्रोतोऽवरोधक असङ्करमिति न सयोगविरुद्धम् । निश्चलस्तु पास्यन्नित्यत्र पाय्यमिति पठित्वा पाययितव्य स्नेहमिति शेष इत्याह, किन्तु चरके—द्रवोष्णमनभिष्यन्दि भोज्यमन्नप्रमाणतः । नातिस्निग्ध न सङ्कीर्ण सस्नेह पातुमिच्छति" इति ॥ तथा वाग्भटपुस्तकेष्वपि बहुशः पास्यन्नित्येव पाठः टीकाकृद्भिश्च व्याख्यात इति ॥१२॥

**त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः ।**
**नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत्सप्तदिनात् परन्तु ॥**
**मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ॥**
**स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥१३॥**

पञ्चकर्माङ्गस्नेहप्रयोगावधिकालमाह त्र्यहावरमित्यादि—त्र्यहेण त्र्यह व्याप्य क्रियमाणस्नेहनेनावरम् अधम यथा स्यात् तथा स्निग्धो नर स्वेदयितव्यो भवति । एतच्च मृदुकोष्ठविषयकम्, उक्तञ्च—मृदुकोष्ठस्त्रिरात्रेण स्निह्यतीति । तथा सप्तदिन व्याप्य पर सप्तदिनरूप वा अपरमुत्कृष्ट यथा स्यात् तथा स्निग्धो नर. स्वेदयितव्यः । एतच्च मृदुक्रूरकोष्ठविषयकम्, उक्तञ्च—स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानव इति । मध्यकोष्ठ प्रति तु स्नेहनप्रकर्षकालो यद्यपि नोक्तस्तथापि चतुरहादिना मध्यकोष्ठस्य स्नेहन ज्ञेयम् । यदाह सुश्रुत —"पिबेत् त्र्यह चतुरह पञ्चाह वा" इति उक्तसप्तदिनरूपस्नेहनकालानतिक्रम सोपपत्तिकमाह नातःपरमित्यादि—अत परमिति सप्तदिनात् परम्, कुतो नोपदिशन्तीत्यत आह सात्म्यीभवेदिति । सुश्रुतेऽप्युक्त—"सप्तरात्रात् पर स्नेह सात्म्यीभावाय कल्पते" इति सप्तरात्रात् परेण क्रियमाण स्नेह सप्तरात्रप्रयोगेण सात्म्यीभूतत्वात् न स्नेहनमाधिक करोतीत्यर्थ । तेन यावन्मात्रस्नेहप्रयोगेण सप्ताहोपयुक्तेन स्नेहन न भूत मात्रयाऽल्पत्वात्,सा मात्रा सप्तदिनात् पर न प्रयोक्तव्यैव तस्याः स्नेहमात्रायाः सात्म्यीभूतत्वात् । या पुनराधिका मात्रा सात्म्यता न गता सा सप्ताहात्

परमपि स्नेहनार्थं कर्त्तव्यैव। वृद्धास्तु यदि सप्तरात्रेणापि पुरुष स्निग्धो न भवति तदा किञ्चिद् विश्राम कृत्वा पुनरधिकमात्रया स्नेह प्रयुञ्जते। ननु यदि क्रूरकोष्ठ' सप्तरात्रेण स्निह्यतीति व्यवस्था तत् कथमिह नात पर स्नेहनमादिशन्तीत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यत इति ? भ्रम। क्रूरकोष्ठ सप्तरात्रेणैव स्निह्यति, परन्तु क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीनमात्रा प्रयुज्यते तदा सप्तरात्रेणापि न स्निह्यतीति। यत् तु तन्त्रान्तरे—"तत् त्रिंशन्नवरात्राणि स्नेहपान विधीयते" इत्यनेन सप्तरात्रादूर्द्ध्वमपि स्नेहन विहितम्, तदपि सात्म्यीभूतहीनमात्रापेक्षयैवाधिकमात्राभिप्रायेण ज्ञेयम्। अत्र च सप्तरात्रादूर्द्ध्वं स्नेहप्रयोगस्य निषेधात् त्र्यहादर्वाक् प्रयोगस्य चानिषेधात् स्थ स्नेहप्रयोगे एकदिनेनापि स्नेहनमनुजानाति। यस्तु कश्चिन्मृदुकोष्ठ प्रति त्र्यहादूर्द्ध्वं न स्नेहन कर्त्तव्य सात्म्यीभावादिति चार्थोऽत्र लभ्यत इति, यद्व्याख्यानयन्ति तन्न, यत सात्म्यीभाव सप्तदिननिर्वर्त्त्यतयैवाचार्य्येणोक्त। तेनाल्पमात्राप्रयुक्तेन स्नेहेन त्र्यहाद् यदि न स्निह्यति मृदुकोष्ठस्तदाधिकदिनान्यपि तत्र स्नेह कर्त्तव्य एवेत्यर्थ। मृदुकोष्ठादिलक्षणमाह मृदुकोष्ठेत्यादि—यस्त्रिरात्रेण स्निह्यति स मृदुकोष्ठ इत्यादि व्याख्येयम्। मध्यकोष्ठलक्षणन्तु यद्यपि नोक्त तथापि मध्यविधया चतुरहादिना य स्निह्यति स मध्यकोष्ठ इति ज्ञेय ॥१३॥

**स्निग्धस्त्र्यहं स्थित कुर्य्याद्विरेकं वमनं पुन।**
**एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः॥**
**स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्नेहमाचरन्॥१४॥**

इदानीं सशोधनस्नेहपाने कर्त्तव्ये यद्विधेय तदाह स्निग्धेत्यादि—वाग्भटस्य। स्निग्धस्त्र्यह स्थित इति स्निग्धो भूत्वा त्रिदिन परित्यक्तस्नेहपान सन् विरेक कुर्य्यात् विरेचनौषध पिबेदित्यर्थ। एकाहमित्यत्रापि स्थित इति योज्य, तेन स्निग्धो भूत्वा एकाह स्थित इति परित्यक्तस्नेहपान• सन् दिनान्तरञ्च कफकरैर्ग्राम्यानूपरसादिभि कफमुत्क्लेश्य प्रवृत्त्युन्मुख कारयित्वा वमन कुर्य्यादित्यर्थ। इदानीं स्नेहोपरमत्रिरात्र एव यद्विधेयस्तदाह स्निग्धद्रवोष्णेत्यादि—स्नेहमाचरन्नित्यत्र स्वेदमारभन्नित्यपि पाठ'। स्नेहोपरमत्रिरात्रे स्नेहपाननिषेधस्योक्तत्वात् चरकेऽप्युक्त—"स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरत पिबेत्। स्नेहञ्च द्रवमुष्णञ्च त्र्यह भुक्त्वा रसौदनम्। एकाह' परतस्तद्वद्भुक्त्वा प्रच्छर्दन पिबेत्" इति॥१४॥

**वातानुलोम्यं दीप्ताग्निर्वर्च्च स्निग्धमसंहतम्।**
**स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्य्ययः॥**

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम्॥
श्यामाककोरदूषान्न-तक्रपिण्याकशक्तुभि ॥१५॥

सम्यक्स्निग्धस्य तथा रूक्षस्य तथातिस्निग्धस्य च लक्षणान्याह वातानुलोम्य-मित्यादि—वाग्भटस्य। असंहतमित्यकाठिनम्। स्नेहोद्वेगोऽनिच्छा, क्लमो ग्लानि। सुश्रुते—ग्लानिः सदनमङ्गानामित्युक्तम्। रूक्षण श्यामाकादिभिरित्यन्वय ॥१५॥

बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत्॥ १६॥

इदानीं विषयाभिधानपूर्वकं सद्य स्नेहयोगानाह बालेत्यादि—वाग्भटस्य। अनुद्वेगानित्यवैराग्यजनकानित्यर्थः॥ १६॥

भृष्टे मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥
सर्पिस्तैलवसामज्जतण्डुलप्रसृतैः शृता।
पाञ्चप्रासृतिकी पेया पेया स्नेहनमिच्छता॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥
शर्कराघृतसंसृष्टे दुह्याद्गां कलसेऽथवा।
पाययेद्रूक्षमेतद्धि सद्यः स्नेहनमुच्यते॥ १७॥

भृष्ट इत्यादि—सुश्रुतस्य। भृष्ट इति सन्तलिते, मासरस इत्यनन्तर सिद्ध इति शेष। स्वल्पतण्डुलेत्यत्र सुकल्पितेति पाठान्तरम्। सर्पिरित्यादि—प्रसृत पलद्वय, पेयेति पातव्या। सर्पिष्मतीत्यादि—सुश्रुतस्य। बहुतिलेत्यनेन निस्तुषतिलाना त्रयो भागाः, एकस्तण्डुलानामिति। इयञ्च सुखोष्णा योज्या सुश्रुते तथैवोक्तत्वात् चक्रेण प्रतिसंस्कृत्य लिखितमेतत्। तत्र हि तथैवेत्यत्र यवागूरिति पठ्यते। शर्करेत्यादि—सुश्रुतस्य। रूक्षमिति पुरुषविशेषणम्॥ १७॥

ग्राम्यानूपौदकं मांसं गुडं दधि पयस्तिलान्।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत्॥
स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह॥

स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरम् ।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम् ॥ १८ ॥
इति स्नेहाधिकारः ॥

---

येषु व्याधिषु स्नेहनार्थं यानि द्रव्याणि न प्रयोज्यानि तान्याह ग्राम्येत्यादि— स्नेहन इति स्नेहननिमित्तम् । तर्हि ते कै स्नेह्या इत्याह स्नेहैरित्यादि—यथास्वमिति यो यत्र स्नेहो युज्यते सर्पिरादि, सिद्धैरिति तत्तद्व्याधिहरत्वेन प्रसिद्धै, सिद्धैरिति पिप्पल्यादिभि. प्रत्येक योज्यम्, पिप्पल्यादिसिद्धा स्नेहा कुष्ठादिषु यथासङ्ख्य-मिति केचित्, तन्न, वाग्भटे व्यतिक्रमेणाभिधानात् यथा—"गुडानूपामिषक्षीरतिल-माषसुरादधि । कुष्ठशोथप्रमेहेषु स्नेहनार्थं न कल्पयेत् । त्रिफलापिप्पलीपथ्यागुग्गु-ल्वादिविपाचितान् । स्नेहान् यथास्वमेतेषां योजयेदविकारिणे" इति । स्नेहादिषु स्नेहस्य प्राग्भावमाह स्नेहमित्यादि—स्पष्टम् ।

इति स्नेहाधिकार ॥

---

# अथ स्वेदाधिकारः ।

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते ।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः ।
व्याधौ शीते शरीरे च महान् स्वेदो महाबले ।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः ॥
आमाशयगते वाते कफे पक्वाशयाश्रये ।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च ॥ १ ॥

स्नेहमग्रे प्रयुञ्जीत तत स्वेदनमन्तरमित्युक्ते स्नेहानन्तर स्वेदमाह—तत्र दोषविशेषापेक्षया स्वेदस्य कल्पनाभेदमाह वातेत्यादि—अत्र यथासङ्ख्यमन्वय । स्निग्धरूक्ष इति स्निग्धरूक्षद्रव्यकृतत्वात् । रोगाद्यपेक्षयापि स्वेदस्य कल्पनाभेदमाह व्याधावित्यादि—व्याधौ महाबले महाशीते शीतलकृते महाशीतले तथा शरीरे च महाबले महानिति मृदुमध्यस्वेदापेक्षया प्रचण्डतापत्वेन कालबाहुल्येन च । एव दुर्बल

इति मध्यम इति च व्याख्येयम्। वाते स्निग्ध कफे रूक्ष इति यदुक्त तस्य देश-विशेषापेक्षया व्यभिचारमाह आमाशयेत्यादि—वाग्भटस्य। आमाशय इति कफ-स्थानोपलक्षणम्, अत्रापि यथासङ्ख्यमन्वय, तेन कफस्थानपेक्षया पूर्वं रूक्षस्वेद कृत्वा पश्चाद्वातापेक्ष स्निग्धस्वेद कार्य्य। तदुक्त स्थान जयेद्धि पूर्वमिति। एव पक्काशयगते स्नेहपूर्वं इति व्याख्येयम्॥ १॥

**वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा।**
**मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः॥ २॥**

अस्वेद्यदेशानाह वृषणावित्यादि—यदि वृषणे स्वेदः क्रियते तदा तत्र प्रत्यासन्नशुक्रवहस्रोतस उपघातात् क्लीवत्व स्यात्। हृदयस्याप्योजःक्षयप्रसङ्गात्। दृष्ट्या तर्पणश्लेष्मक्षयात् तिमिरमान्ध्य वा भवेदिति। मृदु वा न वेति स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदु स्वेदयेत्। स्वेदव्यतिरिक्तोपायान्तरसम्भवे तु न वेति बोध्यः। इष्टत इत्यातुरेच्छातो वैद्येच्छातश्च। 'इष्टत इति भावे क्त॥ २॥

**न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान्।**
**स्तम्भनीयक्षतक्षीणविषमद्यविकारिणः॥**
**तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः।**
**पीतदुग्धदधिस्नेहमधून् कृतविरेचनान्॥**
**भ्रष्टदग्धगुदग्लानिक्रोधशोकभयार्दितान्।**
**क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान्॥**
**गर्भिणीं पुष्पितां सूतां मृदुर्वात्ययिके गदे॥ ३॥**

अस्वेद्यानाह न स्वेदयेदित्यादि—वाग्भटस्य। अतिस्थूलरूक्षदुर्बलक्षणिनां स्वेदासहत्वात् प्राणोपरोधः, मूर्च्छितानां पित्तवृद्ध्या मूर्च्छैव भवति। स्तम्भनीया वम्यतिसारपीडितादय एषा स्वेदात् पित्तवृद्ध्या रोगवृद्धि स्यात्। क्षतस्य स्वेदाद्रक्तातिप्रवृत्ति, विषमद्यविकारिणामपि पित्तवृद्ध्या तयोरपि महान् वेग, तिमिरे तर्पकश्लेष्मक्षय, उदरे अत्युष्णादिनिदानत्वेन तद्वृद्धिरेव, विसर्पकुष्ठयो रक्तदुष्टिः एवमाढ्यरोगे, आढ्यरोगो वातरक्त, शोषे रसादिक्षय.। पीतदुग्धादौ उत्क्लेशादय, कृतविरेके पित्तवृद्ध्या तदतियोग, भ्रष्टगुदो गुदभ्रंशी दग्धगुद क्षाराग्न्यादिभि गुदभ्रंशदाहयो पित्तवृद्ध्या सरत्वेन क्रमेण तयोरेव वृद्धि, क्षुधाया वह्निवृद्ध्या धातुपाकः तृष्णाया पित्तवृद्धि., कामलापाण्ड्वोश्च पित्तवृद्ध्या तद्वृद्धि., गर्भिण्याः गर्भन्यापत्ति, पुष्पिताया रजोऽतियोगः। सूतामित्यपसूता प्रसूतगर्भामिति यावत्। अस्या-

न्तु स्वेदात् रक्तातिप्रवृत्तिः स्यादिति भावः । सम्यक्प्रसूतायास्तु स्वेदविधानमग्रे वक्ष्यति । एषु च मेदःप्रभृतिषु यदि स्वेदैकसाध्य मन्याद्यादिर्भवति तदा महाप्रत्यवायमयाऽल्पप्रत्यवायमुपेक्ष्यापि मृदुस्वेदो विधेय इत्याह मृदुर्वास्वित्यादि गद इति ॥३॥

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।
निर्वातं गृहमायासो गुरुप्रावरणं भयम् ॥
उपनाहाहवक्रोधभूरिपानक्षुधातपाः ।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥ ४ ॥

अनाग्नेयस्वेदस्य विषयमाह स्वेदो हित इत्यादि—वाग्भटस्य । अनाग्नेयस्वेदानाह निवातमित्यादि—वाग्भटस्य । उपनाहो बहलो लेपः, स हि बहुलत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति । भूरिपानं मद्यस्य ॥ ४ ॥

शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ ५ ॥

स्वेदस्य सम्यग्योगलक्षणमाह शीतेत्यादि—स्वेदे घर्मे, स्वेदनादिति प्रस्वेदद्रव्यात् । अत्र शीताद्यपहारस्य स्वेदस्य सम्यग्योगलक्षणत्वेन शीतादेरर्थतोऽनुपरमस्य स्वेदासम्यग्योगलक्षणत्वमुक्तं भवति । सुश्रुतेऽप्युक्तं—" स्वेदस्रावो व्याधिहानिर्लघुत्वं शीतादीनां मार्दवञ्चातुरस्य । सम्यक्स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेन भवेत्तत् " इति ॥ ५ ॥

स्फोटोत्पत्तिः पित्तरक्तप्रकोपो
मदो मूर्च्छा भ्रमदाहौ क्लमश्च ।
अतिस्वेदे सन्धिपीडा तृषा च
क्रियाः शीतास्तत्र कुर्य्याद्विधिज्ञः ॥
सर्वान् स्वेदान् निवाते तु जीर्णान्ने चावचारयेत् ॥ ६ ॥

स्वेदातियोगलक्षणं चिकित्सितञ्चाह स्फोटेत्यादि—सुश्रुतस्य । स्वेदा यत्र यथा प्रयोज्यास्तानाह सर्वानित्यादि—सुश्रुतस्य । जीर्णेऽन्न इत्युत्सर्गन्तेन विष्टम्भाजीर्णादौ यत् स्वेदविधानं विष्टम्भे स्वेदनं कार्य्यमित्यादिनोक्तं तदपवादतया न दुष्यतीति ॥६॥

येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम् ।
शोधनीयास्तु ये केचित् पूर्वं स्वेद्यास्तु ते मताः ॥
पश्चात् स्वेद्या हृते शल्ये मूढगर्भानुपद्रवाः ।

**सम्यक् प्रजाताः काले च पश्चात् स्वेद्या विजानता ।**
**स्वेद्याः पश्चाच्च पूर्वञ्च भगन्दर्य्यर्शसस्तथा ॥ ७ ॥**

इदानीं ये च स्वेदविषयास्तथा पश्चाद् ये स्वेदविषया ये कालद्वयेऽपि स्वेदविषयास्तान् क्रमेणाह येषामित्यादि—सुश्रुतस्य । शल्य इति गर्भरूपशल्ये, अनुपद्रवा गर्भस्रावाद्युपद्रवादिरहिता । सम्यक्प्रजाता सम्यक्प्रसूता । स्वेद्या इति भगन्दरेऽर्शसि च पूर्वं स्वेदस्तप्तलौहशलाकया दाहरूपः, पश्चात् स्वेदस्तु दाहानन्तरमुष्णोदकोपवेशनरूपो ज्ञेयः ॥ ७ ॥

**तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथवाङ्गारकै-**
**र्लेपाद्वातहरैः सहाम्ललवणस्नेहैः सुखोष्णैर्भवेत् ।**
**एवं तप्तपयोऽम्बुवातशमनक्काथादिसेकादिभि-**
**स्तप्तैस्तोयनिषेचनोद्भवबृहद्वाष्पैः शिलाद्यैः क्रमात् ॥**
**तापोपनाहद्रववाष्पपूर्वाः स्वेदास्ततोऽन्त्यप्रथमौ कफे स्तः ।**
**वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः ॥८॥**

**इति स्वेदाधिकारः ।**

---

सुश्रुते तापवाष्पोपनाहद्रवभेदेन चतुर्विधस्वेद उक्तस्तानाह—तप्तैरित्यादिना अङ्गारैरित्यन्तेन तापस्वेदः । सिकतैव सैकतम् । सुश्रुतेऽप्युक्तं "तत्र तापस्वेदो नाम यः पाणिकांस्यकन्दकपालवालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैः" इति । लेपेत्यादिना सुखोष्णैरित्यन्तेन उपनाहस्वेदः । वातहरैर्वराहमांसैर्भद्रदार्वादिभिश्च काञ्जिकादियुक्तैः सुखोष्णैर्लेपात् यः स्वेद उक्तः स उपनाह इत्यर्थः । एवमित्यादि—स्वेदादिभिरित्यन्तेन द्रवस्वेदः, पयो दुग्धम् । सुश्रुतेऽपि "द्रवस्वेदस्तु वातहरद्रव्यक्काथपूर्णे कोष्णकटाहे द्रोण्यां वावगाह्य स्वेदयेत् । एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत सुखोष्णैः कषायैः परिषिञ्चेदिति । तप्तैरित्यादिना शिलाद्यैरित्यन्तेन वाष्पस्वेदः । शिलाद्यैरित्याद्यशब्दात् कपालेष्टकालोहपिण्डादीनां ग्रहणम्, अस्यैव विशेषणं तोयेत्यादि । सुश्रुते तु वाष्पस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिञ्चेदित्याद्युक्तम् । एषां स्वेदानां विषयमाह तत इत्यादि । सप्तम्यन्तात् तसिः । तेषु स्वेदेषु मध्ये आद्यन्तस्वेदौ वाष्पस्वेद-तापस्वेदौ कफे स्तः । द्वितीय इत्युपनाहो वायौ, तृतीय इति द्रव-

स्वेद, पित्तोपसृष्टे वाते कफे च भवति । सुश्रुतेऽप्युक्तं "तत्र तापोष्मस्वेदौ विशेषेण श्लेष्मघ्नौ उपनाहस्वेदो वातघ्नः अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद" इति। ननु पित्तोपसृष्टे कथं स्वेदो वातश्लेष्मणि वाते वेत्यनेनैव विरोधात् ? उच्यते, पित्तयुक्तेऽपि द्रवस्वेदविधानात् वातश्लेष्मणीत्यादिवचनं प्रायिकं ज्ञेयमिति ॥ ८ ॥

इति स्वेदाधिकार-विवृतिः ।

---

# अथ वमनाधिकारः ।

स्निग्धस्विन्नं कफे सम्यक् संयोगे वा कफोल्बणे ।
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमांसतिलादिभिः ॥
यथाविकारं विहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥
"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयः सौषधिग्रामा भूतसङ्घास्तु पान्तु ते ॥
रसायनमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥"
पूर्वाह्णे पाययेत् पीतो जानुतुल्यासने स्थितः ।
तन्मना जातहृल्लासप्रसेकश्छर्दयेत्ततः ॥
अङ्गुलीभ्यामनायस्तनालेन मृदुनाथवा ॥ १ ॥

इदानीं स्नेहस्वेदानन्तरीयत्वात् पञ्चकर्माणि वक्तव्यानि । तत्र यद्यपि पञ्चकर्मसु वस्तेरेव प्राधान्यं, यदुक्तम्—"उपक्रमाणां सर्वेषां सोऽग्रणी" इति तथापि पञ्चकर्मणामौत्सर्गिकप्रवृत्तौ वमनविरेचनपूर्विकैव वस्तिप्रवृत्तिर्भवतीति कृत्वा वमनविरेचने एव प्रथममभिधातव्ये, तत्रापि वमनपूर्वकत्वात् विरेचनस्य विरेचनात् प्राक् वमनमाह स्निग्धेत्यादि—सम्यक्स्निग्धस्विन्नं पुरुषं भैषज्यमात्रां पूर्वाह्णे पाययेदिति वक्ष्यमाणेनान्वयः । वमनस्य विषयमाह कफ इत्यादि—कफे केवलकफे, कफोल्बणे संसर्गे कफप्रधाने । श्वो वम्यमित्यादि—श्वः इत्यागामिदिवसे । यदि पुरुषो वम्यो वमनार्हो भवति, तदा तत्पूर्वदिवसे मत्स्यादिभिः कफ उत्क्लेशनीय इत्यर्थः । उत्क्लि-

अतिप्रपीडितो वस्तिरतिक्रम्याशयं ततः ।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥
छर्दिहृल्लासमूर्च्छादीन् प्रकुर्याद्दाहमेव च ।
तत्र चूर्णं गलापीडं कुर्य्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥ ११ ॥

वस्तेरतिपीडनेन दोषमाह अतिप्रपीडित इत्यादि—सुश्रुतस्य । आशयमिति पक्काशयादिकम् । नासिकाभ्यामिति नासापुटाभ्याम् । आदिशब्दादाध्मानादय । अत्र यत् प्रतिविधेयं तदाह तत्रेत्यादि—गलापीडमिति गलपीडनम्, एतच्च तथा कार्य्यं यथा न म्रियते । उक्तं हि—"वक्रपाणिग्रहं कण्ठ रुन्ध्यान्न म्रियते यथा" इति । अवधूननमित्यत्र केशेष्वाकृष्येति शेष । उक्तं हि—"केशेष्वालम्ब्य वा केशे धुनुयात्" इति । एतच्च वस्तिव्यापच्चिकित्सितं लेशत एवोक्तम्; विस्तरस्तु चरकादावनुसन्धेय इति ॥ ११ ॥

सुनिरूढमथोष्णाम्बुस्नातं भुक्तरसौदनम् ।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२ ॥

निरूहसम्यग्योगानन्तरं यद्विधेयं तदाह सुनिरूढमित्यादि—सुश्रुतस्य । उष्णाम्बुस्नानमिति शिरो विहाय ज्ञेयम्, शिरसि तु शीतलजलेनेति वृद्धा व्यवहरन्ति । अत्र केचित् षडङ्गविधिना नागरसाधितमुष्णोदकं पानार्थमुपदिशन्ति । यदुक्तं—तत. प्रत्यागते वस्तौ वार्य्युष्णं नागरैः शृतम् । पाययेत् कृतशौचञ्च स्नापयेदुष्णवारिणा" इति । स्नेहवस्तिनेति—स्नेहवस्तिदानन्तु दृढबलेनोक्तं यथा—" प्रत्यागते कोष्णजलाभिषिक्तं शाल्यन्नमद्यात् तनुलावकेन । जीर्णे तु सायं लघु चाल्पमात्रं भुक्त्वानुवास्यं परिवृंहणार्थम् । निरूहपादांशसमेन तैलेनाम्लानि लघ्वौषधसाधितेन" इति । निरूहपादांशसमेनेति निरूहपादप्रमाणेन, चतुर्विंशतिपलं षट्पलेन स्नेहेनेत्यर्थे । इयञ्चोत्तममात्रानुवासनस्य, उक्तञ्च—"उत्तमा षट्पली मात्रा मध्यमा त्रिपली भवेत् । कनीयसी त्वर्द्धपला त्रिधा मात्रानुवासने" इति । एषाञ्च षट्पली मात्रा प्रबलाग्नि प्रत्येव बोध्या । अन्ये त्वाहु निरूहदानदिने य. स्नेहवस्तिर्दीयते सोऽल्पमात्र एव, न तु षट्पल, निरूहव्याकुलिताग्नित्वात् अतएवाह भोज —"सम्यङ् निरूढं तैलाक्तं जलेनोष्णेन सेचितम् । योजयेदल्पमात्रेण तत्क्षणं स्नेहवस्तिना " इति । अत्र तत्क्षणमिति तद्दिनोपलक्षणम्, तेन सायं दीयते स्नेहवस्ति । तस्मादत्र सार्द्धपलरूपा वरमात्रा स्नेहस्य ज्ञेया । न चैवं चरकविरोध , चतुर्विंशतिपलस्य

पाद षट्पल तस्याश्चतुर्थो भागः सार्द्धैकपल तत्सम तैलमिति हि तदर्थ. । वृद्धास्तु सार्द्धपलेन स्नेहनानुवासन कुर्वन्ति ।निरूहस्य मन्दाग्नित्वात् ॥ १२ ॥

**तदहस्तस्य पवनाद्भयं बलवदिष्यते ।**
**रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥ १३ ॥**

कुतो मासरस' स्नेहबस्तिश्च तत्रोपदिश्यत इत्यत आह तदहरित्यादि—निरूढकृतमलदोषस्य रूक्षत्वेन वातात् भीतिरिति भावः ॥ १३ ॥

## अर्द्धमात्रिकः

**दशमूलीकषायेण शताह्वाक्षं प्रयोजयेत् ।**
**सैन्धवाक्षञ्च मधुनो द्विपलं द्विपलं तथा ॥**
**तैलस्य फलमेकन्तु फलस्यैकञ्च योजयेत् ।**
**अर्द्धमात्रिकसंज्ञोऽयं बास्तिर्देयो निरूहवत् ॥**
**न च स्नेहो न च स्वेदः परिहारविधिर्न च ।**
**आत्रेयानुमतो ह्येष सर्वरोगनिवारणः ॥**
**यक्ष्मघ्नश्च शूलघ्नश्च क्रिमिघ्नश्च विशेषतः ।**
**शुक्रसञ्जननो ह्येष वातशोणितनाशनः ॥**
**बलवर्णकरो वृष्यो बास्तिः पुंसवन परः ॥ १४ ॥**

**इत्यर्द्धमात्रिकः ।**

इदानीं निरूहयोगा वाच्या., तत्र प्रथम प्रसिद्धत्वादर्द्धमात्रिकबस्तिमाह दशमूलीत्यादि—चन्द्राटोक्तः तन्त्रान्तरस्य । उत्सर्गसिद्धचतुर्विंशतिपलनिरूहापेक्षया मात्रार्द्धमस्येति कृत्वा द्वादशपलोऽय निरूहो ज्ञेय अर्द्धमात्रिक इत्युक्तः । अतएव मधुस्नेहकाथ्येत्यादिपरिभाषया यद् द्रव्यमानमुक्त तदर्द्धमानमेवात्र ज्ञेयम् । तेन द्वादशभि. पलैरेकः पुटक , एव त्रयः पुटका देया. । अत्र पुटकत्रयार्थ दशमूलस्य प्रत्येक कर्षत्रयम्, अत. सार्द्धसप्तपलानि, तत्र क्वाथपरिभाषया जलस्यापि सार्द्धसप्तशरावाः, एभिश्च षष्टिपलानि भवन्तीति एषा चतुर्थांशशेषात् पञ्चदश पलानि दशमूलकषायस्य भवन्ति । तत्रैकपुटकार्थं पञ्च पलानि ग्राह्याणि, अपरपुटकयोर्द्वयोरपि दशपल विभज्य देयम् । शताह्वा शतपुष्पा, तस्या अक्ष. कर्षः । एतत्पेषणमपि दशमूलक्वाथेनैव विधेयम् । वृद्धास्तु जलेनापि पेषण कुर्वन्ति । एतच्चाक्षमानमेकैकपुटक प्रत्येव बोध्यम्, एव सैन्धवाक्षाद्रिकमप्येकस्मिन्नेकस्मिन् पुटके देयम् । तैलस्यापि द्विपल-

निरूहेषु यथालाभ एव वर्गो विधीयते" इति। सैन्धवमदनफलयोर्मेलितानयतमनि- माह लवणमित्यादि—फलमेकमित्याकृतिमानात् ॥१५॥

**वाते गुडः सिता पित्ते कफे सिद्धार्थकादयः ॥१६॥**

दोषभेदेन गुडिकादीना प्रक्षेप्यत्वमाह वात इत्यादि—आदिशब्दात् सुश्रुतोक्त- वचात्रिकटुकादीना ग्रहणम्। अत्रान्तरे चरकोक्त एरण्डवस्तिर्दृष्टफलो बोध्य। सोऽप्यर्द्धमात्रिकोक्तकल्पनानुसारेणार्द्धमात्रिकथैव वृद्धै. प्रयुज्यते। स चात्र विस्तर- भयान्न विवृत इति तन्त्रैवानुसन्धेय ॥१६॥

## अथ क्षारवस्तिः।

**सैन्धवाक्षं समादाय शताह्वाक्ष तथैव च।**
**गोमूत्रस्य पलान्यष्टावम्लिकायाः पलद्वयम् ॥**
**गुडस्य द्वे पले चैव सर्वमालोड्य यत्नतः।**
**वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः ॥**
**शूलं विट्सङ्गमानाहं मूत्रकृच्छ्रञ्च दारुणम्।**
**क्रिम्युदावर्त्तगुल्मादीन् सद्यो हन्यान्निषेवितः ॥१७॥**

**इति क्षारवस्तिः।**

क्षारवस्तिमाह सैन्धवाक्षमित्यादि—वस्तिरयमेतावन्मात्र एव दीयते, इयञ्च- मात्रा एकपुटकस्य। अम्लिकाया इति मास्थितिन्तिडीफलस्य। निरूहयोगे मदनात् फलञ्चेत्युक्तत्वात् एव मदनफलमप्यत्र वृद्धैर्दीयते। अतएव चन्द्राटोऽप्याह— "गोमूत्रस्य पलान्यष्टौ द्वे गुडाम्लिकयोः पले। कर्षञ्च शतपुष्पायास्तथाक्ष सैन्धवस्य च। मदनस्य फलञ्चैक खजेन सुविलोडितम्। वस्त्रपूत सुखोष्णञ्च वस्तिं दद्या- द्विचक्षणः। वातविट्सङ्गमानाह मूत्रकृच्छ्रञ्च दारुणम्। शूलोदावर्त्तगुल्मादीन् सद्यो हन्यात् प्रयोजित। गोमूत्रवस्तिरित्येष विशेय. शोधन पर। क्षितः साधारणे रूक्ष शुद्धे तु तैलसयुत.। बलवर्णकरः पुसामग्निसन्दीपनः परम्" इति अस्मादेव वचनात् गोमूत्रवस्तिरित्यपि नामान्तरमस्य बोध्यम्। तथा निरावरणे तु तैलमपि देय तैलञ्च पलमान बोध्यम्। तदुक्तमायुर्वेदसारे—"अष्टौ पलानि मूत्रस्य गुडस्य तु पलद्वयम्। तद्वदम्लीफल दत्वा मिश्रयन्न सैन्धवस्य च। रूक्ष सामेऽनिले युञ्ज्याच्छुद्धे तैलपलान्वितम्। क्षारवस्तिमिम सिद्ध वातोदावर्त्तनाशनम्" इति। इदानीं क्षारवस्ते पत्रिका लिख्यते, सैन्धवचूर्ण क १, शलुफा (सोये) कल्क क १, गोमूत्र पल ८,

सुपिष्टास्थिसहितपक्वतिन्तिडीफल पल २, पुराणगुड पल २, सुपक्वमदन गो १, निरामवाते पक्वतैल पल १ । एतत् सर्वं पूर्ववन्मर्दयित्वा वस्त्रपूत कृत्वा कदुष्णीकृत्य देयम् । इति क्षारवस्तिः ॥१७॥

## अथ वैतरणवस्तिः

पलशुक्तिकर्षकुडवैरम्लीगुडसिन्धुजन्मगोमूत्रैः ।
तैलयुतोऽयं वस्तिः शूलानाहामवातहरः ॥
वैतरणः क्षारवस्तिर्भुक्ते चापि प्रदीयते ॥१८॥
इति वैतरणवस्तिः ।

वैतरणवस्तिमाह पलशुक्तीत्यादि—शुक्तिरर्द्धपलम् । अम्लीति तिन्तिडीफलम् पलादिमानञ्च क्रमात् अम्लीगुडादिषु योज्यम् । कुडवोऽत्र द्रवद्वैगुण्यादष्टौ पलानि, ईषत्तैलपलमिति व्यवहरन्ति वृद्धा । अत्रापि मदनफलमेकं देयमित्याहु । इयमपि वैतरणोक्तमात्रा एकपुटकस्यैव ज्ञेया । अत्यन्तशूलपीडाया वस्तिद्वयमिदं भुक्तेऽपि दीयत इत्याह वैतरण इत्यादि—अत्यन्तशूलावस्थाया पीडायामावस्थिकमिदं विधान *ज्ञेयं न तु सार्वकालिकं भुक्ते निरूहस्यातिदोषलत्वात् ।* किन्तु भुक्ते क्षारवस्तिर्न प्रचरति, वैतरणस्तु चरत्येव । एतदपि दुर्बलविषयमेव ज्ञेय, तदुक्त—"भोजयित्वाथ सायाह्ने दुर्बलस्य प्रशस्यते। अथ चेद् बलवान् जन्तुरभुक्त्वापि तदा क्वचित्, इति । इति वैतरणवस्ति ॥१८॥

## अथ पिच्छिलवस्तिः

वदर्य्यैरावतीशेलुशाल्मलीधन्वनाङ्कुराः ।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्राः पिच्छिलसंज्ञिताः ॥
वाराहमाहिषौरभ्रवैडालैणेयकौक्कुटम् ।
सद्यस्कमसृगाजं वा देयं पिच्छिलवस्तिषु ॥ १९ ॥
चरकादौ समुद्दिष्टा वस्तयो ये सहस्रशः ।
व्यवहारो न तैः प्रायो निवद्धा नात्र तेन ते ॥ २० ॥
वस्तिर्वयःस्थापयिता सुखायुर्बलाग्निमेधास्वरवर्णकृच्च ।
सर्वार्थकारी शिशुवृद्धयूनांनिरत्ययः सर्वगदापहश्च ॥२१॥
इति निरूहाधिकारः ॥

पिच्छिलबस्तिमाह बदरीत्यादि—सुश्रुतस्य। ऐरावती नागबला, शेलुर्बहुवारः; धन्वनो धामनीरिति प्रसिद्धस्तरु। एषामङ्कुरा अभिनवपल्लवा। अत्र दुग्धस्याप्येको भाग। त्रयो भागा जलस्येत्याहुः। सास्रा. सरक्ता। रक्तञ्च येषा आम तानाह वाराहेत्यादि—एतच्च शोणित मृदित्वैव वस्तौ देय, सद्यस्कैर्मृदितैर्बस्तिरिति चरकवचनात्। अयञ्च बस्तिर्यथोक्तद्रव्यमानेनैव कार्य्य। मात्रा चास्यार्द्धमात्रिकबस्तिवत्, माधुतैलिकबस्तिवद्वेत्याहु। इति पिच्छिलबस्ति इदानीं चरकाद्युक्तानामन्येषा वस्तीनामभिधान उपपत्तिमाह चरकादावित्यादि—प्राय इति वचनात् तेऽप्यवस्थाया प्रयोज्या इति सूचयति बस्तिसामान्यगुणानाह बस्तिरित्यादि—सवगदापह इति मिलितसर्व दोषापह किं वा त्रैदोषिकव्याधिहर इति चरकव्याख्या, अन्यथाव्याख्याने तु श्लेष्मपित्तानिलाकर्षीत्यनेन, तथा सर्वान् विकारान् शमयेदित्यनेन च न पौनरुक्त्य स्यात्। इदमप्यत्र सुश्रुतवचन बोध्य—"नरस्योत्तमसत्त्वस्य तीक्ष्णबस्तिं प्रयोजयेत्। मध्य मध्यमसत्त्वस्य हीनसत्त्वस्य वै मृदुम्। अपि हीनक्रम कुर्य्यान्न तु कुर्य्यादतिक्रमम्। विशेषात् सुकुमाराणा हीन एव क्रमो हित" इति ॥ १६–२१ ॥

इति निरूहाधिकारविवृतिः।

# अथ नस्याधिकारः

**प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा।**
**शिरोविरेचनञ्चेति नस्तः कर्म च पञ्चधा ॥**
**ईषदुच्छिङ्घनात् स्नेहो यावान् वक्त्रं प्रपद्यते।**
**नस्तो निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ॥ १ ॥**

पञ्चकर्मपारिशेष्यान्नस्यमाह प्रतिमर्ष इत्यादि। प्रतिमर्षलक्षणमाह ईषदित्यादि—सुश्रुतस्य। ईषदुच्छिङ्घनादिति ऊर्द्ध्वश्वासक्षेपणात्। ननु चरके न चोच्छिङ्घेदित्युक्तम्, अत्र तु ईषदुच्छिङ्घनम्, उक्तमतो विरोध? अत्र केचिदीषदुच्छिङ्घनमनुच्छिङ्घनमेवेति समादधति, अन्ये तु चरकोक्तप्रतिमर्ष स्वल्पप्रमाणोऽनुच्छिङ्घन सार्वकालिको ज्ञेय., अतएव तत्र प्रातर्निशि च सर्व देयमुक्तम्, यस्तु सुश्रुतोक्त स भूरिमात्रो, नासौ सार्वकालिक इत्यभिधेयः प्रतिमर्ष

ईषदुच्छिङ्घन इत्याहुः । नस्तो निषिक्त इति नासापुटद्वये निषिक्तः, प्रमाणत इति परिमाणेन, परिमाणद्वारकमेतल्लक्षणमित्यर्थः ॥ १ ॥

प्रतिमर्षन्तु नस्यार्थं करोति न च दोषवान् ।
नस्तः स्नेहाङ्गुलिं दद्यात् प्रातर्निशि च सर्वदा ॥
न चोच्छिङ्घेदरोगाणां प्रतिमर्षः स दार्ढ्यकृत् ॥ २ ॥

प्रतिमर्षकर्माह प्रतिमर्षस्त्वित्यादि—चरकस्य । नस्यार्थमिति नस्यस्य स्नेहनशोधनरूपप्रयोजनद्वयम् । उक्तं हि—"स्नेहनं शोधनञ्चैव द्विविधं नस्यमुच्यते ।" न च दोषवानिति व्यापच्चिकृत् । प्रकारान्तरेणापि प्रतिमर्षमात्रामाह नस्त स्नेहाङ्गुलीमित्यादि—चरकस्य । नस्त इति नासाया, स्नेहाङ्गुलीमिति स्नेहपूरिताङ्गुलीं दद्यात्; एतेन स्नेहमग्नाङ्गुलीतो यावान् स्नेह पतति सैव प्रतिमर्षमात्रा । सर्वदेति सर्वष्वेव ऋतुषु । न च नावनादिवदत्रोच्छिङ्घन कर्त्तव्यमित्याह नचोच्छिङ्घेदित्यादि—अरोगाणामित्यनेन सुस्थविषयत्वमस्योक्तम् । दार्ढ्यकृदिति दन्तशिर कपालादिदार्ढ्यकृत् ॥ २ ॥

निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ।
शिरोऽभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् ॥
दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥३॥

सर्वदेत्यस्यार्थमाह निशेत्यादि—वाग्भटस्य । असौ प्रतिमर्ष बिन्दुद्वयपरिमितो निशादीनामन्ते समाप्तौ वैद्येन योज्य । निशान्त इति प्रात, अहोन्त इति सायम् । सुश्रुतेऽपि कल्योत्थित इत्यनेन प्रात.काल उक्त । अध्वेति पथादिश्रम: । श्रमशब्देनाध्वव्यतिरिक्तो व्यायाम उच्यते । सुश्रुतेऽपि व्यायामाध्वपरिश्रान्तेनेत्युक्तम् । रेत. शब्देन रेत सर्गोपलक्षितव्यायाम उच्यते । प्रस्राव इति मूत्रोत्सर्ग., वर्च पुरीषोत्सर्ग । एषु पञ्चदशसु कालेषु प्रतिमर्षदानप्रयोजन वाग्भटेनैवोक्तमनुसर्त्तव्य तद्यथा—"निशाहर्भुक्तवान्ताह स्वप्नाध्वश्रमरेतसाम् । शिरोऽभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् । दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुक । पञ्चसु स्रोतसा शुद्धिः क्लमनाशस्त्रिषु क्रमात् । दृग्बल पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ॥" निशाहर्भुक्तवान्ताह स्वप्नेषु पञ्चसु प्रतिमर्षदानात् स्रोतसा शुद्धिर्भवति । त्रिष्विति अध्वश्रमरेतःसु क्लमनाश स्यात् । शिरोभ्यञ्जनादिषु वर्चोऽन्तेषु तु प्रतिमर्षदानात् दृग्बल स्यात्, ततोऽनन्तर दन्तकाष्ठस्य हास्यस्य चान्ते योजित प्रतिमर्षः क्रमात् दन्तदार्ढ्यं, मरुतो वायो प्रशमन करोतीत्यर्थः ॥ ३ ॥

शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः।
अवपीड्य दीयते यस्मादवपीडस्ततस्तु सः ॥ ४ ॥

अवपीडमाह शोधन इत्यादि—चरकस्य अत्र सशमनामित्यवपीडस्य कर्मेच्छन्ति, तत् पुनरिह स्तम्भन एवान्तर्भवति ॥ ४ ॥

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा।
बलार्थं दीयते स्नेहो नस्तशब्दोऽत्र वर्त्तते ॥ ५ ॥

नस्यमाह स्नेहार्थमित्यादि—ग्रीवास्कन्धोरसां रक्षणार्थमित्यन्वय । नस्तशब्दो नस्यपर्य्याय , नासाभ्या दीयत इति नस्यम्, नासाशब्दात् शरीरावयवत्वात् यत् प्रत्ययेन । अतएवाह सुश्रुत·—"औषधमौषधपक्वो वा स्नेहो नासिकाभ्या दीयत इति नस्यम् ।" अनया च निरुक्तया यद्यपि सामान्यवचन एवाय नस्यशब्दस्तथापि नस्तशब्दोऽत्र वर्त्तत इत्यभिधानात् विशेषवृत्तितामपि नस्यशब्दस्य बोधयति । एतेन यथा निदानशब्दो निदानपञ्चके तथा निदानविशेषे च वर्त्तते, तथाय नस्यशब्दोऽपि नस्यशिरोविरेचनप्रतिमर्शावपीडप्रधमनेषु तथा नस्यविशेषे च स्नेहार्थं शून्यशिरसामित्यादिनोक्ते वर्त्तते । सुश्रुतेनापि "ततो नस्यशब्द पञ्चधा निपातित" इत्यादिनायमर्थ उक्तः । एतेन नासास्रोतसि दोषोपशमनार्थं यद्दीयते तन्नस्यमिति नस्यादिपञ्चकसामान्यलक्षणम्; तथा प्रतिमर्शादिभिन्नत्वे सति स्नेहनार्थं यद्दीयते तन्नस्यमिति तु नस्यविशेषलक्षण बोध्यमित्याहुः ॥ ५ ॥

नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः ॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः।
द्वात्रिंशद्बिन्दवश्चात्र शुक्तिरित्यभिधीयते ॥
द्वे शुक्ती पाणिशुक्तिश्च देयात्र कुशलैर्नरैः ॥ ६ ॥

स्नैहिकनस्यार्थे स्नेहस्य मानमाह नस्यस्येत्यादि—स्नेहाप्लुतप्रदेशिनीपर्वद्वयात् यावान् स्नेहः स्रवति तावान् स्नेहो बिन्दुरित्युच्यते । उक्त हि वाग्भटे—"प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् । यावान् पतत्यसौ बिन्दु." इति । नस्तकयोरिति नासापुटयो· एषा प्रथममात्रा । द्वितीया तृतीयाञ्च मात्रामाह शुक्तिश्च पाणिशुक्तिश्चेति—शुक्तिर्द्वितीया, पाणिशुक्तिस्तृतीयेत्यर्थ. । एताश्च तिस्रो मात्रा यथाबल

प्रयोज्या इति। सुश्रुतेऽप्युक्तं—"तस्याः प्रमाणमष्टौ बिन्दवः प्रदेशिनीपर्वद्वयनिःसृता प्रथमा मात्रा द्वितीया शुक्तिस्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्या इति। शुक्तिपाणिशुक्तिशब्दयोरर्थमाह द्वात्रिंशद्बिन्दव इति। द्वे शुक्ती इति चतुःषष्टिबिन्दव इत्यर्थः। इदञ्च शुक्ति-पाणिशुक्त्याख्यमात्राद्वयं मिलित्वैव नासापुटाभ्यां प्रयोज्यम्, न तु प्रथममात्रावत् प्रत्येकशः इत्याहुः। एतच्च स्नेहनस्यं न गिलेत् किन्तु त्यजेदेव। उक्तं हि सुश्रुते—"स्नेहनस्यं न चोपगिलेत् कथञ्चिदपि" इति॥ ६॥

**तैलं कफे च वाते च केवले पवने वसाम्।**
**दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जा समारुते॥ ७॥**

इदानीं तस्मिन् दोषे यः स्नेहः प्रयोज्यस्तमाह तैलमित्यादि—चकारात् वातकफसंसर्गे च तैलं देयमित्यर्थः। केवल इति निरावरणे वाते; मज्जा तु समावृते वाते॥ ७॥

**ध्मापनं रेचनश्चूर्णो युञ्ज्याच्च मुखवायुना।**
**षडङ्गुलद्विमुखया नाड्या भेषजगर्भया॥**
**स हि भूरितरं दोषं चूर्णत्वादपकर्षति॥ ८॥**

प्रधमनमाह ध्मापनमित्यादि—वाग्भटस्य। रेचन इति शिरोविरेचनद्रव्यकृतः किंवा देहस्रोतोविशोधन इत्यर्थः। स इति चूर्णः। चूर्णत्वादिति सूक्ष्मस्रोतोऽनुसारित्वादित्यभिसन्धिः। एतच्च प्रधमनं चूर्णं प्रतनु वस्त्रे बद्ध्वा जिघ्रेदित्यपि वृद्धव्यवहारसिद्धो विधिर्बोध्यः॥ ८॥

**शिरोविरेचनद्रव्यैः स्नेहैर्वा तैः प्रसाधितैः।**
**शिरोविरेचनं दद्याद् रोगेषु तेषु बुद्धिमान्॥**
**गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये।**
**शोथगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे॥ ६॥**

शिरोविरेचनमाह शिरोविरेचनेत्यादि—शिरोविरेचनद्रव्यैरिति अपामार्गबीजादिभिस्तैः कल्कीकृतैर्द्रव्यमिश्रितैरेतत्साधितैः स्नेहैर्वा इत्यर्थः। अस्य च मात्रार्थं सिद्धसारो यथा—"चत्वारो बिन्दवः षड् वा तथाष्टौ वा यथाबलम्। शिरोविरेचने योज्या ऊर्ध्वजत्रुविकारिणाम्" इति। जाड्यं ग्रीवादिस्तम्भः, स्यन्दोऽभिष्यन्दरोगः। पीनस इति पुराणपीनसे॥ ६॥

स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च।
निवातशयनस्थस्य जत्रूदूर्ध्वं स्वेदयत् पुनः॥
अथोत्तानोद्र्ध्वदेहस्य पाणिपादे प्रसारिते।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते॥
नासापुटं पिधायैकं पर्य्यायेण निषेचयेत्।
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुना तथा॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत्।
शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः।
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत्॥ १०॥

येन विधिना तच्छिरोविरेचन कर्त्तव्य तदाह स्निग्धेत्यादि—वाग्भटस्य। प्राक् कृतावश्यकस्य चेति प्राक् पूर्वं कृतमावश्यकम् अवश्यकरणीय मलमूत्रविसर्ग-मुखधावनादिक येन तस्य। जत्रूदूर्ध्वमिति ग्रीवामूलादिक स्वेदयेत् पुनरित्यनेन उत्सर्गसिद्धपञ्चकर्माङ्गभूतस्वेदापेक्षया भिन्न एव नस्याव्यवहितपूर्वकाले पुन स्वेद कर्त्तव्य इति बोधयति। किञ्चिदुन्नतपादस्येति चरकेऽपि पादोन्नतस्येत्युक्तम्। पर्य्यायेणेति क्रमेण न स्वेकदा। उष्णाम्बुतप्तमिति उष्णाम्बुयोगादुष्णाम्बुवाष्पेण वा तप्तम्। प्रणाड्येति नरयनलिकया; पिचुनेति तूलकेन। आदिशब्दात् ग्रीवाननादीना ग्रहणम्। पार्श्वयोरिति वामदक्षिणनासापुटयोः; आभेषजक्षयादिति छेदः; भेषजनि सरणपर्य्यन्त शनैरुच्छिङ्घ्य निष्ठीवेदित्यर्थः। एवमुक्तपरिपाट्या वारद्वय त्रय वा दोषापेक्षया अधिकमपि नस्य कुर्य्यादित्यर्थः। नस्ये क्रियमाणे यदि नस्यस्य सम्यक्प्रयोगेण मूर्च्छा स्यात् तदा शिरः परित्यज्य शीततोयेन सेचन कार्य्यम्। अतएवैतदनन्तर वाग्भटे यथा—"मूर्च्छायां शीततोयेन सिञ्चेत् परिहरन् शिर." इति॥ १०॥

स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया।
त्र्यहात् त्र्यहाच्च सप्ताहं स्नेहकर्म समाचरेत्॥
एकाहान्तरितं कुर्य्याद्रेचनं शिरसस्तथा॥ ११॥

शिरोविरेचनस्यानन्तरीयविधिमाह स्नेहमित्यादि—वाग्भटस्य। स्नेहमिति स्नेहनस्यम्। स्नेहनस्य रेचननस्यञ्च कियन्त काल कया परिपाट्या कुर्य्या-दित्याह त्र्यहात् त्र्यहादित्यादि—एकैकदिनमन्तरीकृत्य सप्ताहमन्तरितदिनानि

वर्जयित्वा स्नेहनस्यम्, शिरसो विरेचनन्तु एकाहान्तरितं कुर्य्यात्। तेन यस्मिन् यस्मिन् दिने स्नेहनस्यं न दीयते तस्मिन् तस्मिन्नेव दिने रेचननस्यं देयमित्यर्थः। एतेनैकस्मिन् दिने स्नेहम्, अपरस्मिन् दिने शिरोविरेचनमेव, सपरत्वापरत्वे सति शिरोविरेचनानन्तरं स्नेहनस्यं भवति। एकाहान्तरितं शिरोविरेकः कार्य्य इत्युत्सर्गस्तेन द्व्यन्तरमपि ज्ञेयम्, तथा सप्ताहमित्युपलक्षणं तेन त्र्यहादिकमपि दोषाद्यपेक्षया ज्ञेयम्। उक्तं हि—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः। सप्ताहन्तु परं ज्ञेयं विश्रान्तस्य पुनः पुनः। त्र्यहं पञ्चाहमथवा सप्ताहं वा सुयन्त्रितम्। परं नवाहमूर्द्ध्वन्तु नवाहात् सात्म्यतां व्रजेत्" इति॥ ११॥

सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षिपाटवम्॥ १२॥

सम्यक्स्निग्धलक्षणमाह सम्यगित्यादि—वाग्भटस्य। सुखशब्द उच्छ्वासादिना बोधान्तेन सम्बध्यते। अक्षीतीन्द्रियोपलक्षणम्, अक्षिपाटवमिति वा पाठः, तन्त्रान्तरे प्रसादश्चेन्द्रियाणामित्युक्तम्॥ १२॥

रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्द्धशून्यता।
स्निग्धेऽतिकण्डूर्गुरुता प्रसेकारुचिपीनसाः॥ १३॥

असम्यक्स्निग्धलक्षणमाह रूक्ष इत्यादि—वाग्भटस्य। रूक्ष इत्यसम्यक्स्निग्धे। अतिस्निग्धलक्षणमाह स्निग्ध इत्यादि—वाग्भटस्य। अतिस्निग्ध इत्यन्वयः। प्रसेक इति कफप्रसेकः॥ १३॥

सुविरिक्तेऽक्षिलघुतावक्त्रस्वरविशुद्धयः।
दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते॥ १४॥

स्नैहिकनस्यस्य सम्यग्योगादीनभिधाय रेचननस्यस्यापि तानाह सुविरिक्त इत्यादि—वाग्भटस्य। क्षामता शुष्कद्रवधातुता॥१४॥

तोयमद्यगरस्नेहपीतानां पातुमिच्छताम्।
भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम्॥
नवपीनसरोगार्त्तसूतिकाश्वासकासिनाम्।
शुद्धानां दत्तवस्तीनां तथानार्त्तवदुर्दिने।
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत्॥१५॥

येषां नस्यं न विधेयं तानाह तोयेत्यादि—वाग्भटस्य। तोयादिकं पीतं यैस्ते तथेति आहिताग्न्यादित्वात् परनिपातः। अनार्त्तवदुर्दिने हेमन्तशिशिरयोर्मेघव्याप्ते-

ऽद्दि। अन्यत्रात्ययिके व्याधाविति आत्ययिके च व्याधौ नस्यैकसाध्ये निषिद्धनस्यानामपि नस्य विधेयमेवेत्यर्थ.। नैषा नस्य प्रयोजयेदिति श्लोकपादश्चक्रेण प्रतिमस्कृत्य दत्तः ॥१५॥

न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ।
आजन्ममरणं शस्तः प्रतिमर्षस्तु बस्तिवत् ॥१६॥

इति नस्याधिकारः।

समाप्तश्च पञ्चकर्माधिकारः॥

---

इदानीं यस्मिन् वयसि नस्य न विधेय तदाह न नस्यमित्यादि—वाग्भटस्य। ऊनसप्ताब्द इति एकवर्षमारभ्य षष्ठवर्षपर्यन्तम् इति प्रतिमर्षव्यतिरिक्त नस्य न प्रयोज्य सप्तमवर्षात् प्रभृति तु विधेयमेवेत्यर्थः। उक्त हि कृष्णात्रेयेण—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम्" इति। अतीताशीतिवत्सर इति एकाशीतीत्यादौ निषेध्य, प्रस्तावात् निषेध्यधूमकवलादीनप्याह न चोनद्वादश इत्यादि—ऊनद्वादश इति एकवर्षमारभ्य एकादशावर्षपर्यन्तम्; एव वक्ष्यमाणेऽपि ज्ञेयम्। शुद्धिरिति वमनविरेचने। प्रतिमर्षस्तथा बस्तिरिति सर्वकालमेव विधेय इत्याह आजन्मेत्यादि।

इति नस्याधिकार-विवृति।

समाप्ता च पञ्चकर्माधिकार-विवृतिः।

# अथ धूमपानाधिकारः।

प्रायोगिकः स्नैहिकश्च धूमो वैरेचनस्तथा।
कासहरो वामनश्च धूमः पञ्चविधो मतः ॥१॥

नस्यवच्छ्वासाप्रयोज्यत्वसाधर्म्यात् पञ्चसंख्यासामान्याच्च नस्यानन्तरविधेयत्वाच्च नस्यानन्तर धूममाह प्रायोगिक इत्यादि—प्रायोगिक इति नित्यपेयधूमस्य संज्ञा। प्रयोगः सतताभ्यास, तद्विषयको धूमः प्रायोगिक॰। स्नेहाय प्रभवतीति स्नैहिक। दोषविरेचनाद्वैरेचनिक.। कास हरतीति कासहरः। वामयतीति वामनः। यद्यपि चरके प्रायोगिकस्नैहिकवैरेचनिकभेदात् त्रिविध एव धूम उक्तस्तथापि प्रायोगिके कासहरम्, वैरेचनिके च वामनीयमन्तर्भाव्य चरकसुश्रुतयोर्विरोधः परिहरणीय.॥१॥

ऋजुत्रिकोशाफलितं कोलास्थ्यग्रप्रमाणितम्।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते॥
सार्द्धस्त्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु।
नेत्रे कासहरे त्र्यंशहीनः शेषे दशाङ्गुलः॥२॥

धूमपानार्थं नलिकाविधानमाह ऋज्वित्यादि—चरकस्य। त्रिकोषाफलितमिति त्रिभिः पर्वभिर्भिन्नं समन्वितं किंवा त्रिकोषस्त्रिभङ्गः, तेन यस्मिन् नेत्रे स्थानत्रये भङ्गः कार्य्यः, स च नलिकात्रयेण घटनीयः इत्याहुः। कोलास्थ्यग्रप्रमाणितमिति अस्य नेत्रस्याग्रं कोलास्थिप्रवेशयोग्यं कार्य्यमित्यर्थः। मूलञ्चास्याङ्गुष्ठप्रवेशयोग्यम्। यदाह वाग्भटः—"मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम्" इति। वस्तिनेत्रसमद्रव्यमिति वस्तिनेत्रेण समं तुल्यं यद् द्रव्यं सुवर्णरूप्यताम्रादिकम्। धूमभेदेन नेत्रमानभेदमाह सार्द्ध इत्यादि—हस्तोऽत्र चतुर्विंशत्यङ्गुलपरिमितः, तेन प्रायोगिके धूमे सार्द्धो हस्तः षट्त्रिंशदङ्गुलः। त्र्यंशयुत इति चतुर्विंशत्यङ्गुलस्य तृतीयोऽंशोऽष्टाङ्गुलम्, तेन सयुक्तो हस्त इत्यर्थः, एतेन स्नैहिके द्वात्रिंशदङ्गुलं नेत्रमित्यर्थः। वैरेचने तु पूर्णो हस्तश्चतुर्विंशत्यङ्गुलमित्यर्थः। कासहरे धूमे त्र्यंशहीनो हस्तः षोडशाङ्गुलमित्यर्थः। शेष इति वामके॥२॥

औषधैर्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम्।
विगर्भामग्निसंप्लुष्टां कृत्वा धूमं पिबेन्नरः॥
वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन्।
उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत्॥
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये॥३॥

इदानीं धूमपानार्थं नलिकामभिधाय धूमपानं यथा विधेयं तदाह औषधैरित्यादि। औषधैरिति गन्धैरकुष्ठतगरैरित्यादिना वक्ष्यमाणैरोषधैर्वर्त्तिकां कृत्वा धूमं पिबेत्। वर्त्तिकाकरणप्रकारमाह शरीगर्भामित्यादि—शरी शरपुष्पस्य नालिका सा गर्भे अभ्यन्तरे यस्याः ताम्, एतेन पिष्टैर्भेषजैः शरीं प्रलिप्य वर्त्तिः कार्य्येत्यर्थः। विगर्भामिति तां वर्त्तिं विशोष्य ततः शरीमाकृष्य विगर्भां कुर्य्यादित्यर्थः। अग्निसम्प्लुष्टामिति तां विगर्भां वर्त्तिं नेत्राग्रे समारोप्य अग्निसम्प्लुष्टां कृत्वा धूमं पिबेदित्यर्थः। एषा वर्त्तिरष्टाङ्गुला यववन्मध्यस्थूला परिणाहेनाङ्गुष्ठसम्मिता कर्त्तव्या। उक्तञ्च—" पिष्ट्वा

लिम्पेच्छरेषीका ता वर्त्ति यवसन्निभाम्। स्थूलाङ्गुष्ठिका कुर्य्याद्द्वादशाङ्गुलसमा भिषक्" इति। धूमं पीत्वा धूमं कथं वमेदित्याह वक्त्रेणेत्यादि—नस्त इति नासिकया सार्वविभक्तिकस्तसि.। एवं प्रकारेण नासिका निषिध्येत, वक्त्रेणैव धूमं वमेत् न तु नासयेत्यर्थः। अत्र हेतुश्चरकेणोक्तो यथा—प्रतिलोमं गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी" इति। वक्त्रधूमपान-नासाधूमपानयोर्विषयावाह उर इत्यादि॥ ३॥

**गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिके मता।**
**स्नैहिके तु मधूच्छिष्ट स्नेहगुग्गुलुसर्जकैः॥**
**शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचने मता।**
**कासघ्नैरेव कासघ्नी वामनैर्वामनी मता॥ ४॥**

औषधैर्वर्त्तिका कृत्वेत्युक्तम्, अतो वर्त्त्यर्थमौषधान्याह गन्धैरित्यादि—गन्धैरिति अगुर्वादिसुगन्धिद्रव्यैः। अकुष्ठतगैररिति कुष्ठतगरवर्जितैः। कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात्। उक्तञ्च शालाक्ये—"नतकुष्ठे स्रावयतो धूमवर्त्तिप्रयोजिते। मस्तुलुंगं विशेषेण तस्मात् ते नैव योजयेत्" इति। मधूच्छिष्टं सिक्थकं, स्नेहोऽत्र घृतं वसा च, वसाघृतमधूच्छिष्टैरिति वचनात्। शिरोविरेचनैर्द्रव्यैरिति श्वेताज्योतिष्मत्यादिभिश्चरकोक्तैः। कासघ्नैरिति बृहतीकण्टकारीकटुकामममर्दादिभिः सुश्रुतोक्तैः। वामनैरिति स्नायुचर्मखुरशृङ्गादिभिः सुश्रुतोक्तैः॥ ४॥

**योज्या न पित्तरक्तार्त्तिविरिक्तोदरमेहिषु।**
**तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु॥**
**मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु।**
**शिरस्यभिहते पाण्डुरोगे जागरिते निशि॥**
**रक्तपित्तान्ध्यबाधिर्य्यतृण्मूर्च्छामदमोहकृत्।**
**धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः।**
**एतद्धूमविधानन्तु लेशतः सम्प्रकाशितम्॥ ५॥**

इति धूमपानाधिकारः।

---

येषु धूमो न विधेयस्तानाह योज्या इत्यादि—वाग्भटस्य। दत्तवस्तिष्विति कृतनिरूहेषु। अकालातिपीतधूमयोर्दोषमाह रक्तपित्तेत्यादि—अत्र पीतो वेति छेदः।

धूमपानविधिश्चरकसुश्रुताभ्यामतिप्रपञ्चतयोक्तः, इह तु ग्रन्थगौरवभयात् सङ्क्षेपेणैवोक्त इत्याह एतदित्यादि ॥ ५ ॥

इति धूमपानाधिकारविवृतिः ।

---

# अथ कवलगण्डूषाधिकारः ।

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ।
पित्ते कट्वम्ललवणै रूक्षैः संशोधनः कफे ॥
कषायस्वादुतिक्तैश्च कवलो रोपणो व्रणे ॥ १ ॥

ऊर्द्ध्वगतदोषहरत्वसामान्यात् धूमाधिकारानन्तरं कवलगण्डूषाधिकारः प्रारभ्यते । तत्र कवलश्चतुर्विधो भवति यदाह सुश्रुतः—"चतुर्द्धा कवलः स्नेही प्रसादी शोधिरोपिणौ" इति । अतस्तेषां स्वरूपं विषयञ्चाह स्निग्धोष्णैरित्यादि—सुश्रुतस्य । यद्यपि तन्त्रान्तरे वैरेचनस्तम्भनाभ्यां सह षड्विधत्वमेवोक्तं तथाप्यत्र संशोधने वैरेचनस्य, प्रसादने च स्तम्भनस्यान्तर्भावान्न विरोधः । वाग्भटे तु कवलगण्डूषयोरवलम्ब्य चतुर्विधत्वमुक्तं, यथा—"चतुःप्रकारो गण्डूषः स्निग्धः शमनशोधनौ । रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु । अन्त्यो व्रणघ्नः" इति ॥ १ ॥

सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता ।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता ॥
तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम् ।
पुनश्चान्योऽपि दातव्यस्तथा क्षौद्रघृतादिभिः ॥ २ ॥

मात्राभेदेन कवलगण्डूषयोर्भेदमाह सुखमित्यादि—सुश्रुतस्य । असौ कवलः कियन्तं कालं मुखे धारणीय इत्याह तावदित्यादि—अत्र क्षौद्रं कफे कफपित्ते च । आदिशब्देन दुग्धादिकम् । यदाह सुश्रुतः—"एवं स्नेहपयःक्षौद्ररसमूत्राम्लमधुना । कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः" इति ॥ २ ॥

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ ३ ॥

कवलस्य सम्यग्योगलक्षणमाह व्याधेरित्यादि—सुश्रुतस्य। अयोगातियोगलक्षणमित्यतोऽनन्तरं यथा—"हीने जाड्यकफोत्क्लेशावरमज्ञानमेव च। अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः" इति। एतच्च सामान्ययोगातियोगलक्षणं शोधनकवलस्येति भानुमतीप्रभृतयः। चक्रेण सम्यग्योगलक्षणविपर्य्ययेणैव असम्यग्योगलक्षणं सुधीभिरूहनीयमित्यभिप्रायेण अयोगातियोगलक्षणं नोक्तमिति॥ ३॥

दाहतृष्णाव्रणान् हन्ति मधुगण्डूषधारणम्।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम्॥
तदेवालवणं शीतं मुखशोषहरं परम्।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्।
सुखं हितं वातहरं तैलगण्डूषधारणम्॥ ४॥
इति कवलगण्डूषाधिकारः।

---

दाहेत्यादि—वाग्भटस्य। आशु शीघ्रम्, क्षाराम्बु यवक्षारजलम्। तैलमिति तिलतैलम्॥ ४॥

इति कवलगण्डूषाधिकारविवृतिः।

---

# अथाऽऽश्च्योतनाञ्जनतर्पण-पुटपाकाधिकारः

सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम्।
रुक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम्॥
उष्णं वाते कफे चोष्णं तच्छीतं रक्तपित्तयोः॥
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम्।
शुक्तौ प्रलम्बयान्येन पिचुवर्त्या कनीनिके।
दश द्वादश वा बिन्दून् द्व्यंगुलादवसेचयेत्॥

**ततः प्रमृज्य मृदुना चैलेन कफवातयोः ।**
**अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ १ ॥**

पूर्वोक्तसङ्गत्यैवाश्च्योतनाधिकारमाह सर्वेषामित्यादि । दोषभेदेन तदाह उष्णमित्यादि—वाग्भटस्य । उष्णमितीषदुष्णम् । निवातस्यस्येत्यादौ—शुक्ताविति निर्मलपात्रोपलक्षणम् अन्येनेति दक्षिणपाणिना । प्रलम्बयेति लम्बमानयेत्यर्थः । पिचुवर्त्या तूलवर्त्या । कनीनिके नासिकादेशसन्निहितचक्षुषः कोणे । द्व्यङ्गुलादिति नेत्रकर्नीनिकस्योपरि । पिचुवर्त्तिं द्व्यगुलमुत्तोल्य निवातप्रदेशस्थातुरस्य वैद्यो वामेन पाणिना लोचनमुन्मील्य मृदु यथा भवति तथा लोचनं स्वेदयेत् । कफवातयोरिति वातकफयोः ॥ १ ॥

**अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।**
**अतिशीतन्तु कुरुते निस्तोदस्तम्भवेदनाः ॥**
**कषायवर्त्मतां घर्षं कृच्छ्रान्दुन्मेषणं बहु ।**
**विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ २ ॥**

अत्युष्णतीक्ष्णाश्च्योतनस्य तथा अतिशीतस्य च दोषमाह अत्युष्णेत्यादि । इदानीं बहुमात्रस्य तथाल्पमात्रस्य तथा वस्त्रापूताश्च्योतनस्य दोषमाह कषायेत्यादि—वाग्भटस्य । कषायवर्त्मतामिति रक्तवर्त्मता रूक्षवर्त्मता वा । घर्षमिति करकरिकाम् । बहु इति बहुपरिमाणाश्च्योतनं कषायवर्त्मतादिकं कुरुते इति शेषः । अत्याश्च्योतनं विकारवृद्धिं कुरुते । तथा अपरिस्रुतमित्यपूतमाश्च्योतनं संरम्भं शोथं कुरुते । यद्यपि सुश्रुते आश्च्योतनवत् सेकोऽप्युक्तः, यथा—"तर्पणं पुटपाकश्च सेकश्चाश्च्योतनाञ्जनम्" इति तथापि वाग्भटमते आश्च्योतन एव सेकस्यान्तर्भावादविरोधः ॥२॥

**अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रिते मले ।**
**पक्वलिङ्गेऽल्पशोथार्त्तिकण्डूपैच्छिल्यलक्षिते ॥**
**मन्दघर्षास्रुरागेऽक्ष्णि प्रयोज्यं घनदूषिके ॥ ३ ॥**

आश्च्योतनानन्तरमञ्जनमाह अथेत्यादि—अथेत्यानन्तर्य्ये । शुद्धतनोरिति कायशिरोविरेकाभ्याम् । नेत्रमात्राश्रिते मल इति नेत्र एव स्थिते दोष इत्यर्थः । एतेन प्रदेशान्तरस्थदोषापहन्तृत्वमञ्जनस्योक्तम् । नेत्रावस्थिते दोषप्राप्तमञ्जनमाचरेदिति । तथा पक्वलिङ्गे पक्वाक्षिरोगलक्षणे सत्येवाञ्जनं प्रयोज्यम् । तदेव पक्वलक्षणं कथं ज्ञातव्यमित्यत आह अल्पशोथेत्यादि—अल्पशब्दस्य शोथादिभिः प्रत्येकमन्वयः, एवं मन्दशब्दस्यापि घर्षादिभिः । लक्षित इति ज्ञापिते । दूषिका नेत्रपिञ्जोटका ॥ ३ ॥

लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा।
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः॥
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम्॥ ४॥

अञ्जनस्य त्रैविध्यमाह लेखनमित्यादि—वाग्भटस्य। अञ्जनमिति शेषः। एषां स्वरूपमाह लेखनम्। तत्रेत्यादि—तत्रेति त्रिषु लेखनादिषु मध्ये, पटु लवण, पटुपिप्पल्यम्लादिकषायादिभिर्द्रव्यैर्यदञ्जन तल्लेखनमित्यर्थः॥ ४॥

दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना॥ ५॥

अञ्जनदानार्थं शलाकामाह दशाङ्गुलेत्यादि—तस्यैव। मुकुलानना कुन्द-जातीमल्लिकामुकुलमुखी॥ ५॥

प्रशस्ता लेखने ताम्री रोपणे काललोहजा।
अङ्गुलीव सुवर्णोत्था रूप्यजा च प्रसादने॥
पिण्डो रसक्रिया चूर्णं त्रिधैवाञ्जनकल्पना।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत्॥
अथानुन्मीलयन् दृष्टी अन्तः सञ्चारयेच्छनैः।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम्॥
अपेतौषधसम्बन्धं निर्वृतं नयनं यदा।
व्याधिदोषर्त्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा।
ऊर्द्ध्वे वर्त्मनि संगृह्य शोध्यं वामेन चेतरत्॥ ६॥

अञ्जनभेदेन शलाकाभेदमाह प्रशस्तेत्यादि—काललोहः पाण्ड्यादिः। प्रसादने तु अङ्गुल्येव शरीरशलाका, तथा सुवर्णजा रूप्यजा च शलाका प्रशस्तेत्यर्थ॥६॥

निशि स्वप्नेन मध्याह्ने पानाच्चोष्णगभस्तिभिः।
अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीडितद्रुताः॥
प्रातः सायञ्च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत् सदा॥७॥

निशीत्यादि—ननु विरेकदुर्बल चक्षुरादित्य प्राप्य सीदतीति सत् कथ सर्वदेत्युक्तम्? नैव, यतः विरेकदुर्बल चक्षुरादित्य प्राप्य सीदतीत्युच्यते

सुश्याभिप्रायादिदं वाक्यं, किंवा अत्युद्रिक्तकफापेक्षया दिवाञ्जनं बोध्यम्, उक्तं हि—"अत्युद्रिक्तबलासे तु लेखनीयेऽथवा गदे । काममह्न्यपि नात्युष्णे तीक्ष्णाञ्जनं प्रयोजयेत्" इति लेखनीये गदे इति लेखनीयशुक्लार्मादौ । ननु विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदतीति वचनमनुपपन्नं यतो नेत्रस्य तैजसत्वादादित्यं प्राप्य तेजोवृद्धिरेव युक्त्या तैजसं सामान्यवृद्धिकारणमिति सिद्धान्तः । नैवं कालस्यौष्ण्यादञ्जनस्य च तीक्ष्णत्वादतियोगेन दृष्ट्युपघातः स्यादिति ॥ ७ ॥

कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ।
तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हिमम् ॥ ८ ॥

अञ्जने दत्तेऽपि यदि कण्डूजाड्यादिकं तिष्ठति तदा पुनरपि तीक्ष्णमञ्जनं धूमं वा योजयेदित्यत आह कण्डूजाड्य इत्यादि—वाग्भटस्य । यदि पुनस्तीक्ष्णाञ्जनविधानेन दाहः स्यात् तदा दृष्टिप्रसादमञ्जनं कार्य्यमित्याह तीक्ष्णाञ्जनेत्यादि—अस्यैव अभितप्त इति सदाहे प्रत्यञ्जनमिति तीक्ष्णाञ्जनप्रत्यनीकमञ्जनं मृदुशीतलस्निग्धमित्यर्थः ॥ ८ ॥

नाञ्जयेद्भीतवमितविरिक्ताशितवेगिते ।
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।
अजीर्णेऽप्यर्कसन्तप्ते दिवास्वप्ने पिपासिते ॥ ९ ॥

अञ्जनं येषु न विधेयं तानाह नाञ्जयेदित्यादि—वाग्भटस्य । अशिते सद्योभुक्ते । वेगित इति दोषवेगोदये । सुश्रुतेऽप्युक्तं—"दोषवेगोदयेऽप्युक्तं कुर्य्यात् तांस्तानुपद्रवान्" इति । ज्वरिते नवज्वरिते । तान्ताक्ष इति सूक्ष्मभास्वरादिरूपवर्णदर्शनात् तान्ते अक्षिणी यस्य तस्मिन् । अदृष्टेऽर्के इत्यनुदिते जलादिच्छन्न इत्याह, सुश्रुतेऽप्येवमेवोक्तम् ॥ ९ ॥

निर्वाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः ।
काले साधारणे प्रातः सायं वोत्तानशायिनः ॥
यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम् ।
द्व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ।
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ॥१०॥

एकाश्रयत्वादस्मिन्नधिकारे तर्पणमाह निवात इत्यादि—वाग्भटस्य। पालीमित्यालवालम्। यवलोच्छ्रयां दृढामिति यवलोच्छ्रया दृढा निबिडा यथा स्नेहो न स्रवतीत्यर्थः। यथास्वं सिद्धं सर्पिरिति तत्तद्दोषप्रत्यनीकद्रव्यपक्वमित्यर्थः। पात्रस्थं घृतं तप्तजलस्योपरि स्थापयित्वा प्रविलायितं द्रवीकृतमित्यर्थः। आवपेत् पूरयेत्। व्याधिविशेषे स्नेहविशेषमाह नक्तान्ध्येत्यादि—वाग्भटस्य। अत्रापि यथास्वं सिद्धमित्यादि योज्यमित्यरुणः ॥१०॥

आपक्ष्माग्रादथोन्मेषं शनकैस्तस्य कुर्वतः।
मात्रां विगणयेत्तत्र वर्त्मसन्धिसितासिते ॥
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च।
शतानि सप्त चाष्टौ च दश मन्थेऽनिले दश।
पित्ते षट् सुस्थवृत्ते च बलासे पञ्च धारयेत्।
कृत्वापाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत्।
पिबेच्च धूमं नेक्षेत व्योम रूपञ्च भास्वरम् ॥
इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे।
सुस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम्।
तृप्ते विपर्ययोऽतृप्ते तृप्तेऽतिश्लेष्मजा रुजः ॥११॥

पूरणविधिमाह आपक्ष्माग्रपर्य्यन्तं पूरयेदित्यर्थः। अथ स्नेहेन चक्षुः पूरयित्वा कियन्तं कालं व्याप्य सस्नेहं स्थातव्यमिति जिज्ञासायामाह अथेत्यादि—अथ घृतावापानन्तरं शनकैरुन्मेषं कुर्वतस्तस्य आवर्त्तस्य मात्रां विगणयेत्। मात्रा च लघ्वक्षरोच्चारणम्। तत्र वर्त्मस्थे व्याधौ शतमात्रा धारयेत् लघ्वक्षरशतोच्चारणकालममकालं व्याप्य स्नेहं धारयेत्। सन्धिगते तु व्याधौ त्रीणि शतानि। शुक्लमण्डलगते पञ्च शतानि। कृष्णमण्डलगते तु सप्त शतानि। दृष्टिमण्डले चाष्टौ। मन्थे इत्यधिमन्थे दश, इत्यादिक्रमेण धारयेत्। धारणानन्तरञ्च यत् कार्य्यं तदाह कृत्वेत्यादि। द्वारमित्यालवाले छिद्रं कृत्वा। व्योमेत्याकाशं नेक्षेत। भास्वरं रूपमग्न्यादि। अयञ्च क्रमो यस्मिन् दोषे यावद्दिनं कार्य्यस्तदाह इत्थमित्यादि—अयञ्च दिनक्रमं चक्षुस्तृप्तिपर्य्यन्तं योज्यं आतृप्तेरित्यादि। विपर्य्यय इत्यादि—विपर्य्ययः प्रकाशक्षमतादिवैपरीत्यम्। अतितृप्ते तु श्लेष्मजा रुजः कण्डूपैच्छिल्यादयः ॥११॥

पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव पक्ष्मसु ।
स वाते स्नेहनः श्लेष्मसहिते लेखनो मतः ।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ॥१२॥

पुटपाकमाह पुटपाकमित्यादि—वाग्भटस्य । पूर्वोक्तेष्विति तर्पणोक्तेषु रोगेष्वित्यर्थः । स्नेहादिभेदेन त्रिविधस्य पुटपाकस्य पृथक् पृथक् विषयमाह स वात इत्यादि—स इति पुटपाक स्नेहनो वाते हित. । श्लेष्मसहिते तु वाते लेखन पुटपाको हित इति । दृग्दौर्बल्यादौ प्रसादन॰ पुटपाको हित इत्यर्थं । इदञ्च पुटपाकत्रय यैर्द्रव्यैर्विधेय तद्वाग्भटेनोक्तम्, इह तु ग्रन्थविस्तारभयाच्चक्रेण न लिखितम्, किन्तूपयुक्तमिति मया लिख्यते यथा—"भूयश प्रमहानूपमेदोमज्जवमामिषै । स्नेहन पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् । मृगपक्षियकृन्मासमुक्तायस्ताम्रसैन्धवै । स्रोतोजराङ्खकदलैर्लेखनो मस्तुकल्पितै॰ । मृगपक्षियकृन्मज्जवसान्त्रहृदयामिषै । मधुरैः सघृतै स्तन्यक्षीरपिष्टैः प्रसादन इति ॥१२॥

विल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ।
उरुबूकवटाम्भोजपत्रैः स्निग्धादिषु क्रमात् ॥
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ।
पचेत् प्रदीप्तैरग्न्याभं पक्कं निष्पीड्य तद्रसम् ॥
नेत्रे तर्पणवद्युञ्ज्याच्छतं द्वे त्रीणि धारयेत् ।
लेखनस्नेहनान्त्येषु कोष्णौ पूर्वौ हिमोऽपरः ॥
धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥१३॥

पुटपाकत्रयस्य कल्पनामाह विल्वेत्यादि—मासयुक्त भेषजश्चानन्तरोक्तजीवनीयादिक तयोः कल्करूपयो पिण्ड । पृथग्विल्वमात्रमिति पलमात्रम् । एरण्डादिपत्रै क्रमेण स्निग्धादिषु स्नेहादिपुटपाकेषु वेष्टयित्वा अनन्तर मृदा लिप्त प्रदीप्तैर्धवधन्वनगोमयै पचेत् । क्रमादिति धवधन्वनगोमयैरित्यत्रापि योजयन्ति केचित् । तेन स्नेहनपुटपाके एरण्डपत्रेण वेष्टनम्, धवकाष्ठाङ्गारेण च पाक । लेखने वटपत्रेण वेष्टनम्, धन्वनकाष्ठाङ्गारेण च पाकः । प्रसादने तु अम्भोजपत्रैर्वेष्टनम्, गोमयाग्निना च पाक इति । अग्न्याभमित्यग्निवर्णम्, एतच्च सम्यक्पाकज्ञानार्थमुक्तम् । तर्पणवद् युञ्ज्यादित्यनेन निर्वाते तर्पणोक्तविधिमत्राप्यतिदिशति । एतद्रमश्च कियन्त काल नेत्रे धारयेदित्याह शतं द्वे

त्रीणि धारयेत् लेखनस्नेहनान्त्येष्विति । एतच्च यथाक्रम योज्यम्, तेन लेखनपुटपाके शतमिति मात्राशत धारयेत् । स्नेहने तु द्वे मात्राशते, अन्त्य इति प्रसादने त्रीणि मात्राशतानि धारयेदित्यर्थः । पूर्वौ स्नेहलेखनौ कोष्णौ, अपर इति प्रसादनो हिमः शीतलो योज्यः । धूमपोऽन्ते तयोरेवेति पूर्वयो स्नेहनलेखनयोरेव अन्ते धूमप स्यात्, न तु प्रसादनान्त इत्येवशब्दार्थ । योगास्तत्र च तृप्तिवदिति तर्पणवदित्यर्थः ॥१३॥

तर्पणं पुटपाकञ्च नस्यानर्हे न योजयेत् ।
यावन्त्यहानि युञ्जीत द्विगुणो हितभाग्भवेत् ॥ १४ ॥
इत्याश्च्योतनाञ्जनतर्पणपुटपाकाधिकारः ।

---

तर्पणपुटपाकौ येषा न कार्य्यौ तानाह तर्पणमित्यादि—नस्यानर्हे इति निषिद्धनस्यपुरुषे । इदानीं तर्पणपुटपाकविधानानन्तर यावन्ति दिनानि हितसेवन कर्त्तव्य तदाह यावन्तीत्यादि—यावन्ति दिनानि व्याप्य तर्पणपुटपाकविधि कृत तद्द्विगुणानि दिनानि हितसेवी भूत्वा तिष्ठेदित्यर्थ ॥ १४ ॥

इत्याश्च्योतनाञ्जनतर्पणपुटपाकाधिकारविवृति. ।

# अथ शिराव्यधाधिकारः ।

अथ स्निग्धतनुः स्निग्धरसान्नप्रतिभोजितः ।
प्रत्यादित्यमुखं स्विन्नो जानूच्चासनसंस्थित. ॥
मृदुपट्टात्तकेशान्तो जानुस्थपितकूर्परः ।
अङ्गुष्ठगर्भमुष्टिभ्यां मन्ये गाढं निपीडयेत् ॥
दन्तसम्पीडनोत्कासगण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नर ॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एवमुत्थाप्य विधिना शिरां विध्येच्छिरोगताम् ॥ १ ॥

पूर्वन्तु नेत्ररोगे स्निग्धस्य उष्णेन कौम्भेन शिराव्यधैः शम नयेदित्युक्तम्, अत आश्च्योतनादिवत् शिराव्यधस्यापि नेत्ररोगहरत्वादनन्तर शिराव्यधविधिर्वाच्य । तत्र प्राधान्यात् प्रथम शिरोगतशिराव्यधे कर्त्तव्ये शिरोत्थापनप्रकारमाह अथेत्यादि—

वाग्भटस्य। आदित्याभिमुख लक्ष्यीकृत्य, जानूच्चासनसंस्थित इति उपविष्ट इत्यर्थः। मदुना पट्टेनाक्तो गृहीतो बद्ध इति यावत् केशान्तो यस्य स तथा। जानुनि स्थापित कूर्पर कफोणिद्वय येन स तथा। मुष्टिभ्यां मन्ये ग्रीवाधमन्यौ प्रपीडयेत् तथा दन्तसम्पीडनादीनामन्यतममाचरेत्, आर्त इति शेषः। दन्तैर्दन्तानां पीडन दन्तपीडनम् उत्कास काम एव, गण्डाध्मान वायुना मुखपूरण, सुश्रुतेऽप्युक्त—कर्मपुरुषश्च वायुना मुख पूरयेत्" इति तथा नर परिचारकजन. पृष्ठत इति पृष्ठदेशे स्थित्वा एनमातुर यन्त्रयेत्। किं कुर्वन् यन्त्रयेदित्याह—वस्त्र कन्धराया ग्रीवाया परिक्षिप्य तस्य मध्ये स्वकीयवामतर्जनीं न्यस्यारोप्य वस्त्रमावेष्टयन् पीडयेदिति ॥ १ ॥

विध्येद्धस्तशिरां बाह्यावनाकुञ्चितकूर्परे।
बद्ध्वा सुखोपविष्टस्य मुष्टिमंगुष्ठगर्भिणम्।
ऊर्द्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरंगुले ॥ २ ॥

विध्येदित्यादि—वाग्भटस्य। अनाकुञ्चित. कूर्पर. कफोणिर्यस्य। किं कृत्वा विध्येदित्याह—सुखोपविष्टस्यातुरस्य अङ्गुष्ठगर्भिण मुष्टिं बद्ध्वा बन्धयित्वा। पुन किं कृत्वा? वेध्यप्रदेशादुपरि चतुरङ्गुले यन्त्रपट्टिका शिरायन्त्रणार्थं पट्टिकां वस्त्रादिपट्टीं बद्ध्वा ॥ २ ॥

पादे तु सुस्थितेऽधस्तात् जानुसन्धेर्निपीडिते।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ॥
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः।
बद्ध्वा विध्येच्छिरामित्थमनुक्तेष्वपि कल्पयेत् ॥
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित्।
ततो व्रीहिमुखं व्यध्यप्रदेशे न्यस्य पीडयेत् ॥
अंगुष्ठतर्जनीभ्यान्तु तलप्रच्छादितं भिषक् ॥ ३ ॥

पादगतशिराव्यधप्रकारमाह पादे त्वित्यादि—वाग्भटस्य। सुस्थित इत्यनेन विषमपादन्यास निरस्यति। किंविशिष्टे पादे? जानुसन्धेरधस्तात् वैद्यस्य कराभ्यामागुल्फ गुल्फपर्य्यन्त गाढ निपीडित इत्यर्थः। द्वितीये तु चरणे तस्य सुस्थितपादस्योपरि आरूढे सति। किंविशिष्टे द्वितीये चरणे?—किञ्चित् कुञ्चिते। हस्तवत्ततो बद्ध्वेति—यथा हस्ते यन्त्रादिक बद्ध्वा शिरा विध्येत् तथात्रापीत्यर्थः एवमुक्तरीत्या अनुक्तप्रदेशविषयेऽपि यन्त्र स्वबुद्ध्या कल्पयेदित्याह इत्थमित्यादि

व्रीहिमुखादिशस्त्रेण यथा शिराव्यधो विधेयस्तदाह तत इत्यादि । न्यस्यारोप्य अंगुष्ठतर्जनीभ्यां पीडयेदित्यन्वयः । करतलप्रच्छादितिमिति पीडनक्रियाविशेषणम्, एतेन रक्तधारा नोर्द्ध्वमुत्तिष्ठति इत्यभिसन्धिः ॥ ३ ॥

**वामहस्तेन विन्यस्य कुठारीमितरेण तु ॥**
**ताडयेन्मध्यमाङ्गुल्याङ्गुष्ठविष्टब्धमुक्तया ॥ ४ ॥**

कुठारिकया वेधनप्रकारमाह वामहस्तेनेत्यादि—इतरेण दक्षिणहस्तेन ताडयेदित्याह मध्यमांगुल्येति । अंगुष्ठविष्टब्धमुक्तयेति आदौ वृद्धांगुष्ठेन विष्टभ्य मुक्तयेत्यर्थः ॥ ४ ॥

**मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।**
**यवार्द्धमस्थ्नामुपरि शिरां विध्यन् कुठारिकाम् ॥ ५ ॥**

इदानीमुक्तशस्त्रद्वय यस्मिन् प्रदेशे योज्य तदाह मासल इत्यादि—मासल प्रदेशे शिरा विध्येदिति योज्यम् । व्रीह्यास्यमिति व्रीहिमुख शस्त्रम् एकव्रीहिमात्रक निक्षिपेत् प्रवेशयेत् । अस्थ्नामुपरि शिरा विध्यन् कुठारिका यवार्द्धमात्रां निक्षिपेदित्यर्थः ॥ ५ ॥

**असम्यगस्रे स्रवति बिल्वव्योषनिशानतैः ।**
**सागारधूमलवणतैलैर्दिह्याच्छिरामुखम् ॥**
**सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥**
**अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात् स्रावयेत् परम् ॥**
**अतिस्रुतौ हि मृत्युः स्याद्दारुणा वानिलामयाः ॥**
**तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ॥ ६ ॥**
**स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ।**
**प्रक्षाल्य तैलप्रोताक्तं बन्धनीयं शिरामुखम् ॥**
**अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ।**
**रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ॥**
**लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ।**
**मृत्कपालाञ्जनक्षौममसीक्षीरित्वगङ्कुरैः ॥**
**विचूर्णयेद् व्रणमुखं पद्मकादि हिमं पिबेत् ।**

तामेव वा शिरां विध्येद्व्यधात्तस्मादनन्तरम् ॥
शिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ७ ॥

अयोगे चिकित्सामाह असम्यगित्यादि—असुद्धाविति, असम्यक् शुद्धौ। प्रस्थादिति—प्रस्थोऽत्र सार्द्धत्रयोदशपलम् । परमित्यूर्द्ध्वम् । अत्रैव हेतुमाह अतिस्रुतावित्यादि—तत्रेति रक्तादिस्रुतौ । रसं मांसरसं । प्रक्षाल्येति शिरामुखमित्यन्वयः । तैलप्रोताक्तमिति तैलाप्लुतवस्त्रमित्यर्थः । स्तम्भनीमिति वक्ष्यमाणाम् । तामेव स्तम्भनीं क्रियामाह लोध्रेत्यादि—पत्तङ्ग रक्तचन्दनम्; अञ्जनं रसाञ्जनम्, क्षौममसी दग्धवस्त्रभस्म, क्षीरिणो वटोडुम्बरादयः, तेषां त्वक् अङ्कुरश्च । पद्मकादि पद्मकादिगणम् । हिममिति शीतकषायं पिबेदिति । तामिति पूर्वविद्धाम् । व्यधात् तस्मादनन्तरमिति पूर्वव्यधसमीपोर्द्ध्वभागे । शिरामुखमिति विद्धशिराव्रणमुखम् ॥ ६ ॥ ७ ॥

सशेषमप्यसृग्धार्य्यं न चातिस्रुतिमाचरेत् ।
हरेच्छृङ्गादिना शेषं प्रसादमथवा नयेत् ॥
मर्म्महीने यथासन्नप्रदेशे व्यधयेच्छिराम् ॥ ८ ॥

दुष्टमपि रक्तं न निःशेषं स्रावयेदित्याह सशेषमपीत्यादि—सशेषमिति दुष्टशोणितशेषम् । प्रसादमथवा नयेदिति प्रसादनलेपनादिना । शिरा हि दुष्टा एव वेध्या, उक्तं हि—"अदुष्टा न वेध्या." इति । यत्र प्रदेशे तु वेध्यशिरा न दृश्यते कथं तत्र शिराव्यधं कार्य्यं इत्याह मर्म्महीन इत्यादि—वाग्भटस्य । अत्र व्यध्यशिराणामदर्शने इति शेषः । अतएवैतस्मात् पूर्वं वाग्भटे यथोक्तानामदर्शने इत्युक्तम् । यथासन्नदेशे इति यत्र देशे व्यध्यशिरा न दृश्यते तत्र मर्म्मापदेशे वा अन्या शिरा या दृश्यते ता एव वेध्या इत्यर्थः । मर्म्महीने इति मर्म्मवर्जिते ॥ ८ ॥

न तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥
गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्म्मसु ॥
नायन्त्रितां शिरां विध्येन्न तिर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्यायिकाद्गदात् ॥ ९ ॥

येषां शिराव्यधो न कार्य्यस्तानाह न त्वित्यादि—वाग्भटस्य । अन्यत्रात्य-

यिकाद् गदादिति—आत्ययिके तु व्याधौ एष्वपि कालेषु शिरा व्यध्यैवेत्यर्थः ॥९॥

नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृग्वह्निर्विशेषेण च रक्षणीयः ।
नरो हिताहारविहारसेवी मासं भवेदाबललाभतो वा ॥१०॥

रक्तस्रावानन्तर यद्विधेय तदाह नात्युष्णेत्यादि—अनवस्थितासृगिति प्रचुर-रक्तम् ॥ १० ॥

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतशक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥११॥

इति शिराव्यधाधिकारः ।

---

इदानीं शोणितादर्शनेऽपि विशुद्धरक्तज्ञानार्थं लक्षणमाह प्रसन्नेत्यादि—वेग. पुरीषादीनाम् ॥११॥

इति शिराव्यधाधिकारविवृति ।

---

# अथ सुस्थाधिकारः ।

## दिनाचारविधिः

ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् सुस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥
नाद्यादजीर्णवमथुश्वासकासज्वरार्दितः ।
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ।
ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥१॥

इदानीमातुरहितचिकित्सामभिधाय सुस्थवृत्तमाह ब्राह्म इत्यादि—ब्राह्मो मुहूर्त्तो

गत्रे. पश्चिमयामस्य शेषनाडिकाद्वयम्। शरीरचिन्ता मूत्रपुरीषोत्सर्गादिकरूपाम्। नत इति शौचविधेरनन्तर दन्तपवन मक्षयेदिति। दन्ता· पूयन्ते अनेनेति दन्तपवन दन्तकाष्ठम् भुक्त्वा चेति भोजनानन्तरमपीत्यर्थ। दन्तकाष्ठ येन विधेय तदाह नाद्यादिति—दन्तपवनमित्यन्वयः। सुवीरा नाम नदी तद्भवमञ्जन सौवीराञ्जनम्। तल्लक्षण यथा—"वल्मीकशिखराकार भङ्गे नीलोत्पलद्युति। सौवीराञ्जनमिच्छन्ति आयुर्वेदार्थचिन्तकाः" इति। नित्य प्रत्यहम्। अत्र पञ्चरात्राष्टरात्रग्रहणमदूरान्तरकाले नियमदर्शनार्थम्, तेन दोषकालमपेक्ष्य अर्वाक्मध्ये ऊर्द्ध्वञ्च कर्त्तव्य स्रावणाञ्जनमिति। रसाञ्जनमिति दार्वीक्वाथसमुद्भव इत्यरुण. ॥१॥

ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम्।
विषमूर्च्छामदार्त्तानामपथ्यञ्चापि शोषिणाम्॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत्॥
वाह्याभ्यङ्ग कफग्रस्तकृतसंशुद्ध्यजीर्णिभि ॥२॥

निषिद्धताम्बूलानाह ताम्बूलमित्यादि—तमित्यभ्यङ्गम्॥२॥

शरीरचेष्टा या चेष्टा स्थैर्य्यार्था वलवर्द्धनी।
देहव्यायामसंख्याता मात्रया तां समाचरेत्॥३॥

शरीरेत्यादौ—देहेत्यनेन मनोव्यायाम मनश्चिन्तनादिक निरस्यति। सख्याता इति सञ्ज्ञिता या च चेष्टाभिमता, एतेन भारवहनाद्या अनिष्टादिकार्य्यवशात् क्रियमाणा चेष्टा निरस्यति। मात्रया ता समाचरेदिति मात्रा चार्द्धशक्ति·। यदाह वाग्भटः—अर्द्धशक्त्या निषेव्यस्तु वलिभि. स्निग्धभोजिभि." इति। अर्द्धशक्तिलक्षण यथा—"कक्षे ललाटे ग्रीवायां स्कन्धे नासाङ्गसन्धिषु। स्वेद मञ्जायने यत्र वलार्द्ध त विनिर्दिशेत्॥३॥

वातपित्तामयी वालो वृद्धोऽजीर्णी च तां त्यजेत्।
उद्वर्त्तनं तथा कार्य्यं तत. स्नानं समाचरेत्॥
उष्णाम्बुनाधःकायस्य परिषेको वलावहः।
तेनैव तूत्तमाङ्गस्य वलहृत् केशचक्षुषोः॥४॥

निषिद्धव्यायामानाह वातेत्यादि—तेनैवेति उष्णाम्बुना उत्तमाङ्गस्य मस्तकस्य सेक केशचक्षुषोर्वलं हरतीति वलहृत्॥४॥

स्नानमर्द्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥५॥
नीचरोमनखश्मश्रुनिर्मलांघ्रिमलायन‌ः ।
स्नानशीलः ससुरभिः सुवेशो निर्मलाम्बर ॥
धारयेत् सततं रत्नं सिद्धमन्त्रमहौषधीः ।
सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ।
निशि चात्ययिके कार्य्ये दण्डी मौली सहायवान् ॥
जीर्णे हितं मितश्चाद्यान्न वेगानीरयेद्बलात् ।
न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम् ॥
दशधा पापकर्माणि कायवाङ्मानसैस्त्यजेत् ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।
नक्तन्दिनानि मे यान्ति कथम्भूतस्य सम्प्रति ।
दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः ॥ ६ ॥

इति दिनाचारविधिः ॥

निषिद्धस्नानानाह स्नानमित्यादि—अङ्घ्री पादौ, मलायनानि गुदोपस्थानि, तानि निर्मलानि यस्य। निर्मलाम्बर इत्यत्र अनुल्वणोज्ज्वल इति वाग्भटे पठ्यते; अनुल्वणोऽनुद्धत इत्यर्थः। युग हस्तचतुष्टयम्। आत्ययिक इत्यवश्यकर्त्तव्ये। वेगानिति मूत्रपुरीषवेगान्, ईरयेदित्युदीरयेत्। वेगित इति सञ्जातमूत्रपुरीषादिवेगः। दशधा पापकर्माणीति। उक्तञ्च—"अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्। पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वश। असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुष्टयम्। परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम्" इति। अविसंवादीति न पूर्वापरविरुद्धम्, पेशलं मधुरम्, काल इति यथोचितसमये। आत्मन इत्यादौ—परेषां न समाचरेदिति परेषां प्रतिकूलानि अनिष्टानि न समाचरेत्। कुतो न आचरेदित्याह आत्मन इत्यादि—आत्मनः प्राणभूतामेव आत्मसम्बन्धादित्यर्थः। किंवा आत्मनो यानि प्रतिकूलानि अनिष्टानि

तानि परेषामपि नाचरेदिति । नक्तमित्यादि—कथम्भूतस्य कीदृशस्य मम पाप पुण्य कुर्वतो वा द्रय परिहरतो वा सम्प्रति नक्तं दिनानि यान्ति एव नित्य सन्निहितस्मृतिर्यं पुरुषो भवति स दुःखभाक् न स्यात्, यस्मादेव सर्वदा स्मरन् पुरुषो दुःखहेतुतया दुष्कृतं त्यजति, सुखहेतुतया च सुकृतमन्विच्छति इत्यर्थ ॥५-६॥

इति दिनाचारविधि-विवृति ।

## ऋतुचर्य्या

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड़ृतवः स्मृताः ।
शिशिरश्च वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥
बलिन शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।
सेवेतातो हिमे स्निग्धस्वाद्वम्ललवणान् रसान् ॥
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः सुरा ।
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम् ॥
युक्त्यार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा ॥ ७ ॥

पारिशेष्यादृतुचर्य्यारूप सुस्थहितमाह मासैरित्यादि—षट्टृतव इति शिशिरवसन्तग्रीष्म-वर्षा-शरद्धेमन्ता इत्यर्थ । यद्यपि शिशिरादिऋतुत्रयमुत्तरायणत्वेन प्रशस्तत्वादग्रे चोद्दिष्ट तथापि बलवृद्धिप्रकर्षत्वेन प्राशस्त्यात् प्रथम हेमन्तविधिमाह बलिन इत्यादि—बलिन इत्यनेन प्राणिबलस्याग्निबलहेतुत्व दर्शयति । उक्त हि पालकाप्ये—'अभ्याहतादभिप्रायात् प्रीत. प्रीतेर्बल बलात् । अग्निरग्नेश्च धातूना नाश्य नाशास्ततो रुजाम् ' इति । किंवा बलिन इत्युपचयवतः । शीतसंरोधादिति कुम्भकारपचनपङ्कलेपन्यायात् शीतेन बहिरनिर्गच्छच्छरीरोष्मणो रोधात् । रसानिति औदकानूपमामरसान् । कीदृशान् ? स्वाद्वम्ललवणद्रव्यसंस्कारात् स्वाद्वम्ललवणान् । उक्त हि चरके—" तस्मात् तुषारसमये स्वाद्वम्ललवणान् रसान् । औदकानूपमामाना मेध्यानामुपयोजयेत् " इति । माषस्थाने मासेति पाठो वाग्भटपुस्तके नास्ति, टीकायाञ्च न व्याख्यात इति ॥ ७ ॥

प्रावाराजिनकौषेयप्रवेणीरौरवास्तृतम् ।
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥
अंगारतापसन्तप्तगर्भभूवेश्मनि प्रियाम् ।
पीवरोरुस्तनश्रोणीमालिंग्यागुरुचर्चिताम् ॥ ८ ॥

प्रावारेत्यादि—वाग्भटस्य । प्रावारो गुरुप्रावरण कम्बलादि अन्ये तु प्रावारः कार्पासलोमबहुत्तरीयम् । आजिन सुखस्पर्शलोमश चर्म । कौपेय क्रिमिकोषोद्भववस्त्रम् । प्रवेणी गोणी, अन्ये तु प्रवेणीं सूचीवारणाख्यो वस्त्रविशेष इत्याहु. । रौरवो वस्त्रभेद इति केचित् अन्ये तु कार्पासवस्त्रमेवेत्याहु', चरके रौरवस्थाने कुथकेति पठ्यते, कुथकस्तु चित्रकम्बल । उष्णस्वभावैर्लघुभिरिति नेपालकम्बलप्रचुरतूलकपट्टादिभि । किं कृत्वा शयन भजेदित्याह अङ्गारेत्यादि—अङ्गारतापेन सन्तप्त यत् गर्भगृह गृहकोष्ठक तथा भूगृहञ्च । चरकेऽप्युक्त—"सेवेत भूगृहञ्चोष्णमुष्ण गर्भगृह तथा" इति ॥ ८ ॥

अयमेव विधिः कार्य्यं शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यञ्चादानकालजम् ॥ ९ ॥

उक्तविधिं शिशिरेऽतिदिशति अयमेवेत्यादि । अत्रैव हेतुमाह तदेत्यादि ॥९॥

कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।
हत्वाग्निं कुरुते रोगांस्ततस्तत्र प्रयोजयेत् ॥
तीक्ष्णं वमननस्यादिं कवलग्रहमञ्जनम् ।
व्यायामोद्वर्त्तनं धूमं शौचकार्य्ये सुखोदकम् ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुंकुमैः ।
पुराणयवगोधूमक्षौद्रजांगलशूल्यभुक् ॥
प्रपिबेदासवारिष्टसीधुमाध्वीकमाधवान् ।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥
गुरूष्णस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ १० ॥

वसन्तविधिमाह कफ इत्यादि—शूल्य भटित्र शूलपाचितमित्यर्थ । आसवारिष्ट सुराकृतसन्धानम्, सीधु गुडासव. । माध्वीक मधुकृत मद्यम्, अरुणस्तु मार्द्वीकेति पठित्वा मृद्वीकारसोद्भव मद्यमिति व्याचष्टे । माधवो मधुरीकृत आसवः । अनुभवेदित्यनेन श्लेष्मक्षयार्थं स्तोक मैथुनमनुजानाति, वसन्तस्यादानमध्यत्वादिति भावः । गुर्वित्यादौ—अम्लस्थाने उष्णेत्यपपाठ ॥ १० ॥

मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥
शीतं सशर्करं मन्थं जांगलान् मृगपक्षिणः ।

घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
मध्याह्ने चन्दनार्द्राङ्गः स्वप्याद्धारागृहे निशि ॥
निशाकरकराकीर्णे प्रवाते सौधमस्तके ।
निवृत्तकामो व्यजनैः पाणिस्पर्शैः सचन्दनैः ।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषितः ॥
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत् ॥ ११ ॥

ग्रीष्मविधिमाह मधूकैरित्यादि—मधूकैरिति किंरूपैः स्नेह पेयीयते अत्यर्थं स्निग्धमिति। ग्रीष्मेऽत्युष्णत्वादुष्णत्वान्मद्यं न पेयमित्युक्तम्। यदपि तान्यास्वादितानि [illegible] स्यन्ति अत किं प्रतिविधेयमित्याह अल्पं वा सुबहूदकं वा पेयमिति। मध्याह्न इत्यादि—धारागृह इति छेदः। निशीति पदं सम्बध्यते। वर्जनीयमाह लवणेत्यादि ॥ ११ ॥

भूवाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥
भजेत् साधारणं सर्वमूष्मणस्तेजनञ्च यत् ।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं कृतान् रसान् ॥
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम् ।
दिव्यं कौपं शृतं वाम्भो भोजनन्त्वतिदुर्दिने ॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥ १२ ॥

वर्षाविधिमाह भूवाष्पेत्यादि—भूवाष्पं प्रभावादेव दोषप्रकोपणम्। अन्ये तु निर्गमं इत्याहुः। मेघनिष्यन्दः मेघदातृजलकणः, अल्पपाकता च स्वभावतः पित्तकृत्। अग्निदौर्बल्ये [illegible] अनेन अग्निमान्द्यमपि त्रिदोषकोपनमिति दर्शयति। अग्निमान्द्यं [illegible] सर्वदोषकारित्वाद्धातुदोषकरत्वादुत्पादनाच्च धातुवैषम्य करोति। एतेन वर्षासु अग्निमान्द्येन वातादिकोपः, वातादिकोपेन च वह्निमान्द्यं दर्शितम्। उक्तं हि चरके—'भूवाष्पेणाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेषु' इत्यन्योन्यं दुष्यन्ति। पवनादय इति पवनप्रधानाः। साधारणमिति त्रिदोषघ्नमविदाहीत्यर्थः। आस्थापनं निरूहणम्, कृतान् रसा-

निति संस्कृतमासरसान्, मध्वरिष्ट मधुकृतमरिष्ट, चिरन्तन पुरातनम् । दिव्यमित्या-काशजलम्, भोजनमित्यादि परेण सम्बध्यते । सशुष्कमिति नातिद्रवम् । चौद्रवदिति मधुयुक्तम् । एतच्च वार्षिकदेहक्लेशे शोधनार्थं ज्ञेयम् । वर्जनीयमाह नदीत्यादि । उदकमन्थः उदकप्रधानो मन्थ, अह.स्वप्न दिवास्वप्नः ॥ १२ ॥

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।
तिक्तं स्वादु कषायञ्च क्षुधितोऽन्नं भजेल्लघु ॥
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः ।
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥
शारदानि च माल्यानि वासांसि विमलानि च ।
तुषारक्षारसौहित्यदधितैलरसातपान् ॥
तीक्ष्णमद्यदिवास्वप्नपुरोवातातपांस्त्यजेत् ।
शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत् ॥
स्वादून् निदाघे शरदि स्वादुतिक्तकषायकान् ।
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥
अन्नपानं समासेन विपरीतमतोऽन्यथा ।
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥१३॥

शरद्विधिमाह वर्षेत्यादि—उचित समवेतम्, उच समवाये इत्यस्य रूपम् । समवायोऽत्र सतताभ्यासरूप. सम्बन्ध., तेन शीतसमवेताङ्गानामित्यर्थ । सहसा इत्य-क्रमेण । आचितमिति सञ्चित वर्षासु । प्राय इति वचनात् कदाचित्, वर्षासु शीतमधुरादिसेवया पित्तचयभयात् शरदि कोपो न भवत्येवेति दर्शयति । तिक्त घृत पञ्चतिक्तघृतादिकम् । क्वथित पय इति शृत दुग्धम् । प्रदोषे चेति चकारोऽवधारणे प्रदोष एवेत्यर्थः । वर्जनीयमाह तुषारेत्यादि । ऋतुभेदे रसानाह शीत इत्यादि—वाग्भटस्य । शीत इति हिमशिशिरयोः । आद्यान् त्रीनिति स्वाद्वम्ललवणरसान् । अन्त्यानिति कटुतिक्तकषायानिति । शरद्वसन्तयोरित्यादौ भजेदित्यनेन पूर्वोक्ते-नान्वय· । अत. अन्यथेति—हेमन्तशिशिरयोस्तु विपरीतमिति स्निग्धम्, उष्णानुपान भोजयेदित्यर्थः । नित्यमिति सर्वदा सर्वेषा षण्णा रसानामभ्यासः कार्य्य. । एवञ्च

सति शीते वर्षासु चार्द्राम्लमित्यादि यदुक्तं तद्विरुध्यत इत्यत आह स्वस्वाधिक्य-मित्यादि—यस्मिन् यस्मिन् ऋतौ यो रसः सेव्यत्वेनोक्तः तस्याधिक्यमात्रे तद्वचनस्य तात्पर्य्यमिति भावः ॥१३॥

ऋतोराद्यन्तसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥
इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम् ।
उपशेते यदौचित्यादोकसात्म्य तदुच्यते ॥
देशानामामयानाञ्च विपरीतगुणं गुणैः ।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाद्यमेव च ॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते ।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत् ॥
नगरी नगरस्येव रथस्येव रथी यथा ।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥१४॥

इत्यृतुचर्य्या सुस्थाधिकारश्च ।

---

ऋतोरित्यादि—पूर्वऋतोरन्त्यमासस्यान्तिमसप्ताह तथा परऋतोराद्यमासस्य प्रथमसप्ताहमिति सप्ताहद्वय ऋतुसन्धिरित्यर्थः । क्रमादिति न सहसा त्यागशीलने विधेये । अत्र हेतुर्वाग्भटेनैवोक्तो यथा—"असात्म्यजा हि रोगाः स्यु सहसा त्यागशीलनात्" इति । सात्म्यत्यागादसात्म्यमेव नाचरेदित्यर्थः । उपसंहरति इत्युक्तमित्यादि । ऋतुसात्म्यप्रसङ्गेनाभ्यासमात्म्यमप्याह उपशेते इत्यादि—उप-शेते सुखयति अपथ्यमपि विकार न जनयति । कुत इत्याह औचित्यादित्यभ्या-सात् । अपथ्यमपि हि निरन्तराभ्यासात् विषमिवाशीविषस्य नोपघातक भवतीति भाव । ओकोऽभ्यास , तेन सात्म्यमोकसात्म्यम् । देशसात्म्य रोगसात्म्यञ्च दर्शयति देशानामित्यादि—देशानामानूपादीनां गुणै स्नेहगौरवादिभि सह विपरीतगुण स्नेहगौरवविपरीतरौक्ष्यलाघवयुक्त मुद्गजाङ्गलमासमध्वादि । आद्यमदनीयमद्यम्, चेष्टितञ्च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः । एवमामयविपरीतञ्च शीतविकारे उष्णमित्यादि रोगसात्म्यमित्यर्थः । गुणशब्देनात्र विपरीतप्रभावाणामपि ग्रहणम्, ततश्च प्रभाववैपरीत्यात् तद्विपर्य्ययार्थकारिणाञ्च ग्रहणम्, आमयशब्देन चामयहेतुरपि ग्रहीतव्य , तेन हेतुविपरीतस्यापि सात्म्यस्य ग्रहणम् । इदानीं मन्थ-

विस्तरभयात् सङ्क्षेपेण स्वास्थ्यपरिपालनोपायमाह तच्चेत्यादि—स्वास्थ्यमिह उद्वेजकधातुवैषम्यविरहितधातुसाम्यम् । तच्च स्वास्थ्यमुभय परिपाल्यते । विशुद्धाहाराचाराभ्या सदा क्षीयमाणशरीरपोषणेन, प्रत्यवायहेतुपरिहारेण च, यथा दीपपरिपालन स्नेहवर्त्तिदानात् पोषणेन क्रियते, तथा निर्वापकहेतुवातादिपरिहारेण च । तत्र श्लोकपूर्वार्द्धेन स्वास्थ्यपोषकहेतुरुक्त , उत्तरार्द्धेन तु स्वास्थ्यविघातकहेतुपरिहारोऽभिधेय इति न पौनरुक्त्यम् । अनुत्पत्तिरिह उत्पादकसामग्रीविघट्टनम् । इदानीमुक्तस्यानुक्तस्य सुस्थविधेरनेन कर्त्तव्यतामाह नगरीत्यादि—नगरी रथी चेति नगररथयोरधिकृत., कृत्येषूक्तेष्वनुक्तेषु च ॥१४॥

इत्यृतुचर्य्या सुस्थाधिकारश्च ॥

---

**गौडाधिनाथरसवत्यधिकारिपात्र-**
**नारायणस्य तनयः सुनयोऽन्तरंगात् ।**
**भानोरनु प्रथितलोध्रबलीकुलीनः**
**श्रीचक्रपाणिरिह कर्त्तृपदाधिकारी ॥ १५ ॥**

इदानीं ग्रन्थपरिसमाप्तौ पित्रादीनामुत्कीर्त्तनपूर्वक स्वनाम निवेशयन्नाह गौडाधिनाथेत्यादि—गौडाधिनाथो नयपालदेव., तस्य रसवती महानसम् , तस्याधिकारी तथा पात्रमिति मन्त्री, ईदृशो यो नारायणस्तस्य तनय., सुनय इति नीतिमान् , अन्तरङ्गादिति लब्धान्तरङ्गपदविकात् भानोरनु नारायणस्य तनय इति योज्य. तेन भानोरनुज इत्यर्थ । विद्याकुलसम्पन्नो हि भिषगन्तरङ्ग इत्युच्यते । लोध्रबलीसञ्ज्ञकदत्तकुलोत्पन्न ॥ १५ ॥

**यः सिद्धयोगलिखिताधिकसिद्धयोगा-**
**नत्रैव निक्षिपति केवलमुद्धरेद्वा ।**
**भट्टत्रयत्रिपथवेदविदा जनेन**
**दत्तः पतेत् सपदि मूर्द्धनि तस्य शापः ॥ १६ ॥**

**समाप्तोऽयं ग्रन्थः ॥**

य इत्यादौ—सिद्धयोग इति वृन्दकृतसङ्ग्रहस्य सञ्ज्ञा, तल्लिखितयोगमपेक्ष्याधिका ये च सिद्धयोगा अत्र सङ्ग्रहे उक्तास्तानधिकयोगान् तत्रैव सिद्धयोगे निक्षिपति, तथा यो वा तानधिकसिद्धयोगानित संग्रहादुद्धरेत् दूरीकुर्य्यात् , तस्य मूर्द्धनि ईदृशेन